इति एवंप्रकारेण लक्ष्म्या विपक्षश्रिया जयलक्ष्म्या वा स्वयंग्राहस्याभिसारस्य [नवे] प्रदोषे शरदि जातायां रामस्य क्षीणापि तनुः क्षीयत इति वक्ष्यमाणस्कन्धकेनान्वयः। प्रदोषे यथा कान्ताभिसरति तथा लक्ष्मीरपि शरदीति प्रदोषत्वेन शरदो निरूपणम्। शरत्-प्रदोषयोः साम्यमाह। प्रहसितं विकसितं कुमुदसरो यत्र शरदि प्रदोषे च। शरत्काले यद्वा भटानां देशान्तरगमनात् तद्विरहेण भटीनां मुखपङ्कजेषु विरुद्धश्चन्द्रालोको यत्र। प्रदोषपक्षे एतन्मुखपङ्कजप्रायेषु पङ्कजेषु विरुद्धश्चन्द्रालोको यत्र। मेघावरणाभावात् स्फुरन्ती दीप्यन्ती तारा यत्र ॥३४॥

## [1]झिज्झइ [2]झीणा वि तणू अट्ठिअ-बाहं पुणो परुण्णं व[3]मुहं।
## रामस्स अईसन्ते आसा-बन्धे व्व चिर-गए हणुमन्ते ॥३५॥

**[ क्षीयते क्षीणा अपि तनुः अस्थित-बाष्पं पुनः प्ररुदितं इव मुखम्।**
**रामस्य अदृश्यमाने आशा-बन्धे इव चिर-गते हनूमति ॥ ]**

कार्यसाधनक्षमत्वात् सीताप्राप्तिरूपाया आशायाः स्थिरीकरणाद्बन्ध इव, सीतोद्देशाय चिरगते हनूमति, अदृश्यमाने सति, रामस्य क्षीणापि तनुः क्षीयते। अस्थितबाष्पमपि मुखं पुनः प्रकृष्टं रुदितं यत्र तादृशं दृश्यते, बाष्पधाराया अविश्रामादुत्तरोत्तरवर्द्धमानरोदनमिव दृश्यत इत्यर्थः। प्ररुदितमिव रोदितुमारब्धमिवेति **कुलनाथः**। कार्यसाधनार्थेऽयमिति प्रत्याशा यत्रोपाये बध्यते स आशाबन्धः ॥३५॥

## णवरि अ जहा-समत्थिअ-णिव्वत्तिअ-कज्ज-णिव्वडन्त[4]-च्छाअं।
## पेच्छइ मारुअ-तणअं मणोरहञ्चेअ[5] चिन्तिअ-सुहोवणअं ॥३६॥

**[ अनन्तरं च यथा-समर्थित-निर्वर्तित-कार्य-निर्बलच्छायम्।**
**प्रेक्षते मारुत-तनयं मनोरथं एव चिन्तित-सुख ..... ॥ [**

अनन्तरं च यथा समर्थितं निश्चितं तथा निर्वर्तितं यत् कार्यं सीतान्वेषणरूपं तेन

---

1 छिज्जइ B. 2 झिएणा B. 3 ०रुणम्व Ms.
4 ०व्वल० GB. 5 ०हं चेअ GB.

निर्वलन्ती[1] निष्पाद्यमाना पूर्वावस्थातोऽपि विलक्षणा छाया शोभा यस्य तं मारुततनयं सीताप्राप्तिरूपमेव मनोरथमेव, चिन्तितं[2] सुखेनानायासेन, शुभेन कर्मणा च, उपनतमुपगतं प्रेक्षते साक्षादमीक्षते अर्थाद्रामः । णवरिशब्द आनन्तर्ये, च्चेअ-शब्दोऽवधारणे देशी ॥३६॥

[3]पढुमच्चिअ मारुइणा हरिस-भारेज्जन्त-लोअ[F 4b]णेण मुहेण ।
जणअ-तणआ-पउत्ती पच्छा वाआइ णिरवसेसं सिट्ठा ॥३७॥

**[ प्रथमं एव मारुतिना हर्ष-भ्रियमाण-लोचनेन मुखेन ।
जनक-तनया-प्रवृत्तिः पश्चात् वाचा निरवशेषं शिष्टा ॥ ]**

[F 4b] प्रथममेव मारुतिना हर्षेण भ्रियमाणे पूर्यमाणे लोचने यत्र तादृशेन मुखेन जनकतनयायाः[4] प्रवृत्तिर्वार्ता शिष्टा कथिता पश्चाद्वाचा निरवशेषं सपरिकरं कथिता । प्रथममुत्फुल्ललोचनं मुखं विलोक्यैव सीतायाः कुशलं ज्ञातमित्यर्थः ॥३७॥

दिट्ठ त्ति ण सद्दहिअं झीण त्ति सबाह-मन्थरं णीससिअं ।
सोअइ तुमं त्ति[5] रुण्णं पहुणा जिअइ[6] त्ति मारुई [7]अवऊढो ॥३८॥

**[ दृष्टा इति न श्रद्धितं क्षीणा इति सबाष्प-मन्थरं निश्वसितम् ।
शोचति त्वां इति रुदितं प्रभुणा जीवति इति मारुतिः अवगूढः ॥ ]**

दृष्टेति, अर्थान्मारुतिना उक्ते, प्रभुणा रामेण न श्रद्धितं न संप्रतीतं, यस्या जीवनेऽपि सन्देहस्तस्याः सन्दर्शनस्यास्मिन्नसंभाव्यत्वात् सम्यक् प्रतीतिं तस्या न जानातीत्यर्थः । सबाष्पमन्थरं निश्वसितं, पूर्वं कण्ठस्य बाष्पावरुद्धतया निश्वासस्य मन्थरता । शोचते त्वामित्युक्ते रुदितं तस्यामप्यवस्थायां मामेव शोचते नात्मानमित्यश्रूणि मुक्तानि । एव-

---

1 निवडन्ती MS. 2 अचिन्तितं MS. 3 पढमं चिअ G, पढमं विअ B.
4 ०तनया MS 5 ति GB. 6 जी० MS.
7 उ० GB.

मुत्तरोत्तरं प्रतीतेर्दार्ढ्यात् प्रिया मे [1]जीवतीति [2]मारुतिरुपगूढः । अस्मद्गमनं यावज्जीवतीति न वेति पृष्टेन मारुतिना जीवतीत्युक्ते जातहर्षेण प्रभुणा मारुतिरुपगूढ इति **कुलनाथः** । **कश्चित्तु** न श्रद्धितं सुग्रीवेण, निश्वसितं लक्ष्मणेन, रुदितमङ्गदेन[3], प्रभुना रामेण तु जीवतीति निश्चित्य मारुतिरुपगूढ इति व्याचष्टे ॥३८॥

**चिन्ता-हअ-प्पहम्मिव[4] तञ्च[5] करे खेअ-णीसहं[6] व णिसण्णं ।**
**वेणी-बन्धण-मइलं सोअ-किलिन्तं[7] व से पणामेइ मणिं ॥३९॥**

**[ चिन्ता-हत प्रभं इव तं च करे खेद-निःसहं इव निषण्णम् ।**
**वेणी-बन्धन-मलिनं शोक-क्लान्तं इव अस्य प्रणमयति मणिम् ॥ ]**

तं रामपरिचितश्च मणिं तस्य रामस्य प्रणमयति उपनयति अर्थान्मारुतिः । कीदृशं, वेणीबन्धनेन मलिनम्, अतएव सीतानवलोकजनितया चिन्तया हतप्रभमिव, तथा खेदेनार्थादागमनजन्येन निःसहमिवायासितमिव, करेऽर्थान्मारुतेर्निषण्णं कृतविश्रामं, सीतापरित्यागशोकेन क्लान्तमिव । चकारो वार्ताकथनापेक्षया समुच्चये ॥३९॥

**सो कर-अलञ्जलि-गओ[8] बाह-त्थवअ-पहओसिअन्त[9]-मऊहो ।**
**णअणेहि[10] दासरहिणा दिट्ठो पीओ णु पुच्छिओ णु पउत्तिं ॥४०॥**

**[ स करतलाञ्जलि-गतः बाष्प-स्तवक-प्रहतावसीदन्-मयूखः ।**
**नयनाभ्यां दाशरथिना दृष्टः पीतः नु पृष्टः नु प्रवृत्तिम् ॥ ]**

करतलाञ्जलिगतो हनूमतः करतलाद्रामस्याञ्जलिगतः कथाबाष्पस्तवकेन प्रहताश्च सन्तोऽवसीदन्तो मयूखा यस्य स मणिर्दाशरथेर्नयनाभ्यां दृष्टो नु दर्शनजन्यप्रीतिलाभादिति

---

1 मेव MS. 2 ०तीरु० MS. 3 ०गोन० MS.
4 ०हं मिव GB. 5 तं च GB. 6 ०हम्व MS.
7 ०न्तम्व MS. 8 ०गलिओ MS. 9 ०हन्त० GB. 10 ०हिँ B.

भावः। पीतो नु सीताभिज्ञानदर्शनपिपासयेति भावः। वार्तां पृष्टो नु तस्य दर्शनेन सीतायाः कुशलनिश्चयादिति भावः। अस्मिन्नर्थे दृष्ट इत्यत्र नुशब्दस्य न्यूनता स्यादिति कृत्वा नयनाभ्यां दृष्टो मणिः पीतो नु वार्तां पृष्टो नु इति **केचिद्व्या**चक्षते। अत्र मयूखावसादेन स्तवकत्वरूपणेन च बाष्पघातस्यातिशयत्वं ध्वन्यते। अत्र हनूमतः सकाशाद् ग्रहणकाले रामस्य करतलं पश्चात् प्रियागौरवेणाञ्जलिं गत[1] इति **कुलनाथः** ॥४०॥

**सोअइ अ णं रहु-वई विरलङ्गुलि-गलिअ-किरण-धारा-वअरं।**
**वअणे विमलुज्जोअं दर रोत्तूण सलिलञ्जलि[2] व णिमन्तो[3] ॥४१॥**

**[ शोचति च एनं रघु-पतिः विरलाङ्गुलि-गलित-किरण-धारा-प्रकरम्।**
**वदने विमलोद्योतं दरं रुदित्वा सलिलाञ्जलिं इव स्थापयन्॥ ]**

शोचति च[4] एनं रघुपतिः, अर्थान्मणिं, दरं रुदित्वा रघुपतिर्वदने सलिलाञ्जलिमिव 'णिमन्तो' विन्यस्यन् शोचति चेति योज्यम्। विमलोद्योतमिति विमलोद्योतभृत्करयुग्मत्वात् सलिलाञ्जलिसादृश्यं सूचितम्। खेदश्लथत्वाद्विरलाभ्योऽङ्गुलीभ्यो गलिताः किरणानां धाराप्रकरा इव यस्य तम्॥४१॥

**तं दइआहिण्णाणं जम्मि वि अङ्गम्मि राहवेण ण निमिअं।**
**सीआ-परिमट्ठेण व वूढो तेण वि णिरन्तरं रोमाञ्चो ॥४२॥**

**[तत् दयिताभिज्ञानं यस्मिन् अपि अङ्गे राघवेण न स्थापितम्[5]।**
**सीता-परिमृष्टेन इव व्यूढः तेन अपि निरन्तरं रोमाञ्चः॥ ]**

तद्दयिताभिज्ञानं रत्नं यस्मिन्नङ्गे राघवेण न निहितं सीतया परिमृष्टेनेव व्यूढस्तेनापि निरन्तरं रोमाञ्चः ॥४२॥

---

1 गतः MS. 2 ॰लिम्व MS. 3 ॰मेन्तो GB. 4 नं MS.
5 णिमिअं (=स्थापितं) is included by Hemacandra under 8.4. 258.

बाह-मइलम्पि[1] तो से दहमुह-चिन्ता-विअम्भमा[F5a]णामरिसं ।
जाअं दुक्खालोअं [2]जरठाअन्त-रवि-मण्डलम्मिव[3] वअणं ॥४३॥

**[वाष्प-मलिनं अपि ततः तस्य दशमुख-चिन्ता-विजृम्भमाणामर्षम् ।
जातं दुःखालोकं जरठायमान-रवि-मण्डलं इव वदनम् ॥ ]**

[F5a] ततः सीतापहारश्रवणानन्तरं तस्य रामस्य बाष्पमलिनमपि वदनं दशमुखचिन्तया विजृम्भमाणो वृद्धिं गच्छन्नमर्षो यत्र ईदृशं चेत् ततो जरठायमानं प्रौढतया देदीप्यमानं रविमण्डलमिव दुःखालोकं दुर्निरीक्ष्यं जातम् । अमर्षे[4] विजृम्भमाणे एव मुखमीदृशं दुर्निरीक्ष्यमभूत् पूर्णे पुनस्तस्मिन् कीदृशं भविष्यतीति भावः ॥४३॥

तो से चिर-मज्झत्थे [5]कुविअ-कअन्त-भुमआ-लआ-पडिरूवे[6] ।
दिट्ठी दिट्ठ-त्थामे कज्ज-धूर व्व णिअए धणुम्मि णिसण्णा ॥४४॥

**[ततः तस्य चिर-मध्यस्थे कुपित-कृतान्त-भ्रू-लता-प्रतिरूपे ।
दृष्टिः दृष्ट-स्थाम्नि कार्य-धुरा इव निजके धनुषि निषण्णा ॥ ]**

ततो दशमुखचिन्तानन्तरं तस्य रामस्य दृष्टिश्चिरं मध्यस्थे निर्व्यापारतया उदासीने कुपितकृतान्तभ्रूलताप्रतिरूपे, तथा दृष्टं स्थाम बलं यस्य तादृशे धनुषि कार्यधुरेव कार्यभार इव निषण्णा । विशेषणत्रयेण यथाक्रमं चिरविश्रान्ते भारारोपणस्यौचित्यं धनुषो दुर्निरीक्ष्यत्वं पराक्रमशालित्वञ्च कथितम् । दृष्टिर्निषण्णा न तु रामेण दत्तेत्यनेन धनुषि दृष्टिपातस्य रामप्रयत्ननैरपेक्ष्यं कार्यसिद्धिहेतुः सूचितम् । भ्रूशब्दस्य 'भुमआ' इत्यादेशो दाढादित्वात् सिद्धः ॥४४॥

खण-मूलाबद्धाए णिव्वण्णन्त-मसिणं समारूढाए ।
सज्जीअम्मिव[7] जाअं अणोणमन्तम्पि[8] राम-दिट्ठीअ धनुं ॥४५॥

**[क्षण-मूलाबद्धया निर्वर्ण्यमान-मसृणं समारूढया ।
सजीवं इव जातं अनवनम्यमानं अपि राम-दृष्ट्या धनुः ॥]**

---

1 ०लं पि GB. 2 जरढा० GB. 3 लं मिव 4 अमर्षे Ms.
5 णिहुअ० CK. 6 ०रूए GB. 7 ०अं मिव GB. 8 ०न्तं पि GB.

दृणं मूले अधःकोटौ सम्यगाबद्धया तथा निर्वर्णयन्ती निभालयन्ती चासौ मसृणं समारूढा चेति तथा अर्थादुपरिकोटिप्राप्तया रामदृष्ट्या, अनवनम्यमानमपि धनुः सज्यमिव आरोपितमौर्वीकमिव जातम्। रामेणादत्तेऽपि गुणे स्वयमेव धनुर्युद्धाय सज्यञ्जातमिति भावः। परनिपातान्मसृणनिर्वर्ण्यमानां यथा स्यादिति **श्रीनिवासः**, तच्चिन्त्यम् ॥४५॥

**सुग्गीवस्स[1] वि हिअअं राहव-सुकअ-पडिमोअणा-सत्तण्हं।**
**अगणिअ-दहमुह-दप्पं णिव्वूढ-भरं व[2] तक्खणं ऊससिअं ॥४६॥**

**[सुग्रीवस्य अपि हृदयं राघव-सुकृत-प्रतिमोचना-सतृष्णम्।**
**अगणित-दशमुख-दर्पं निर्व्यूढ-भरं इव तत्क्षणं उच्छ्वसितम्॥]**

राघवस्य सुकृताद्राज्यदानरूपोपकारादात्मनः प्रत्युपकारेण प्रतिमोचनाभ्यः सतृष्णं, तथा सीताप्रवृत्तिलोभोत्साहेनागणितदशमुखदर्पं सुग्रीवस्य हृदयं [3]निर्व्यूढभरमिव निर्वर्तित-रामकार्यमिव तत्क्षणं सीताकथाश्रवणकालमेव[4] उच्छ्वसितं सोच्छ्वासमभूत ॥४६॥

**चिन्तिअ-लद्धत्थम्मिअ[5] भुमआ-सञ्चार[6]-सूइआमरिस-रसं।**
**गमणं राहव-हिअए रक्खस-जीविअ-हरं विसं व[7] णिहित्तं ॥४७॥**

**[चिन्तित-लब्धार्थं इव भ्रू-सञ्चार-सूचितामर्ष-रसम्।**
**गमनं राघव-हृदये राक्षस-जीवित-हरं विषं इव निहितम्॥]**

चिन्तितः सन्नुत्साहातिशयेन लब्ध इवार्थो रावणवधसीतानयनरूपो यत्र, 'भुमआ'-सञ्चारेण भ्रुकुटिरचनया सूचितोऽमर्षरसो रसतां प्राप्तः क्रोधो यत्र तादृशं गमनं, [राक्षस]-जीवितहरं विषमिव राघवहृदये निहितं लग्नमिति यावत्। अन्यहृदये लग्नं अन्यजीवित-हरणाद्विषस्य वैलक्षण्यमुक्तम् ॥४७॥

---

1 °अस्स GB. 2 °रम्व Ms. 3 निवूढं Ms. 4 °चालमेव Ms.
5 °त्थं मिव GB. 6 °विकखेव° GB. 7 °सम्ब Ms.

सोह व्व लक्खण-मुहं वण-माल व्व विअडं हरि-वइस्स उरं।
कित्ति व्व पवण-तणअं आण व्व [बला]इ[1] से विलग्गइ दिट्ठी ॥४८॥

**[शोभा इव लक्ष्मण-मुखं वन-माला इव विकटं हरि-पतेः उरः।
कीर्तिः इव पवन-तनयं आज्ञा इव बलानि तस्य विलगति दृष्टिः ॥ ]**

तस्य रामस्य दृष्टिः शोभेव लक्ष्मणमुखं विलग्ना, वार्तां श्रुत्वा किमेष व्यवस्यतीति ज्ञानाय यत्तस्य मुखं दृष्टं ततः मुखप्रसादोदयात् सा दृष्टिः शोभेव जातेत्यर्थः। हरिपतेः सुग्रीवस्य विकटं[2] विशालम् उरो वक्षःस्थलं वनमालेव लग्ना, सपल्लवकुसुमस्रगिव दृष्टेः सानुरागत्वा-त्तथोपमा। कीर्तिरिव पवनतनयं लग्ना, अन्यदुष्करं कर्मानेन कृतमिति प्रसादविशदया दृष्ट्या तस्य गुणोत्कर्षख्यापनात्। गमनाय सज्जीभवतेत्याज्ञेव बलानि लग्ना, दृष्टिपातानन्तरं तेषां गमनोद्यमदर्शनात्। कार्यमिदमनेन कृतं करिष्यते चेति प्रसादविशदा गुणोत्कर्षं ख्यापयन्ती कीर्तिरिव पवनतनयमिति **कुलनाथः** ॥४८॥

संखोहिअ-महि-वेढो तो सो कइ-सेण्ण-विलुलिअ-वणाहोओ।
[F5b] खुहिअ-समुद्दाहिमुहो महणारम्भम्मि मन्दरो विअ
चलिओ ॥४९॥

**[संक्षुभित-मही-वेष्टः ततः सः कपि-सैन्य-विलुलित-वनाभोगः।
क्षुभित-समुद्राभिमुखः मथनारम्भे मन्दरः इव चलितः ॥ ]**

[F 5b] ततो लक्ष्मणाद्यालोकनानन्तरं सैन्यभरेण संक्षोभितमहीवेष्टो[3], तथा कपिसैन्यै-र्विलुलितो वनाभोगो येन स रामो महीवलयसंक्षोभेण क्षुभितस्य सागरस्याभिमुखः सन्मथना-रम्भे मन्दर इव चलितः। मन्दरेऽपि चलति निजकायचलनेन महीक्षोभ आश्रितैः कपिभि-र्वनाभोगविमर्दः स्यात् ॥४९॥

---

1 ०इं MS, ०इँ B. 2 This word is placed after विशालं in Ms.
3 After this Ms. has येन which seems superfluous; or the commentator probably meant 'संक्षोभितं महीवेष्टं येन'.

चलिअञ्च[1] वाणर-बलं चलिए तम्मि चल-केसर-[2]सडोज्जोअं ।
गहिअ-दिसा-परिमाणं[3] मऊह-जालं व[4] दिणअरस्स फुरन्तं ॥५०॥

[चलितं च वानर-बलं चलिते तस्मिन् चल-केसर-सटोद्योतम् ।
गृहीत-दिक्-परिमाणं मयूख-जालं इव दिनकरस्य स्फुरत् ॥ ]

तस्मिन् रामे चलिते चलो विससारुः केसरसटायाः स्कन्धरोमनिवेशस्य उद्योतो यत्र तादृशं वानरबलं चलितं दिनकरस्य मयूखजालमिव । उभयसाम्यमाह—गृहीतो दिशां परिणाहः सन्निवेशो येन, तथा उत्साहातिशयेन भास्वरत्वेन च स्फुरत्[5] । परिमाण-पाठे परिमाणं पर्यन्तः ॥५०॥

वेरारणि-पज्जलिओ तो सो रोस-पवणाहउद्धअ-मुहलो ।
वड्ढइ मग्गाणुगओ लङ्का-वण-राइ-वण-दओ कइ-लोओ ॥५१॥

[वैरारणि-प्रज्वलितः ततः सः रोष-पवनाहतोद्धत-मुखरः ।
वर्धते मार्गानुगतः लङ्का-वन-राजि-वन-दवः कपि-लोकः ॥ ]

ततः प्रस्थानानन्तरं स कपिलोको वर्द्धते उपचीयते नानादिग्भ्यः कपीनां प्रसरणात्[6] । लङ्कैव वनराजिस्तस्या वनदवः दवत्वरूपणे हेतुमाह—पूर्वं वैरमेवारणिरग्न्युत्पत्तिकाष्ठं तस्मात् प्रज्वलितः, अनन्तरं रोष एव पवनस्तेनाहतः सन्नुद्धतो मुखरः । मार्गमर्थात् समुद्रगामिनमनुगतः । पक्षे मृगस्येदं मार्गं विपिनमित्यर्थः । **केचित्तु** ततः कपिलोको वर्धते प्रसरति रोषेण पवनेनाहतः, अतएवोद्धतोऽसौ मुखरः सशब्दश्चेति, एकः समुद्रगामिनं मार्गमन्यः पवनस्य मार्गमनुगतः । दवशब्देनैवार्थसिद्धौ किं वनग्रहणेनेति न दूष्यं कविजुष्टत्वात् ॥५१॥

वच्चइ अ चडुल-केसर-सडुज्जलालोअ-वाणर-परिक्खित्तो ।
[7]सो सव्व-दिसा-अड्ढिअ-पलअ-पलित्त-गिरि-संकुलो व्व समुद्दो ॥५२॥

[व्रजति च चटुल-केसर-सटोज्ज्वलालोक-वानर-परिक्षिप्तः ।
सः सर्व-दिक्-कृष्ट-प्रलय-प्रदीप्त-गिरि-संकुलः इव समुद्रः ॥ ]

---

1 ०अं च GB. 2 ०सडुज्जोअं Ms. 3 परिणाहं GB.
4 ०लम्ब Ms. 5 स्फुर Ms. 6 प्रक० Ms.
7 सव्व-दिसा-आअड्ढिअ-GB.

चटुलानां केसरसटानां उज्ज्वल आलोको येषु तैर्वानरैः परिक्षिप्तः परिवृतः, सर्वाभ्यो दिग्भ्य आकर्षिताः प्रलयप्रदीप्ता ये गिरयस्तैः संकुलो व्याप्तः समुद्र इव व्रजति च। पिङ्गलोज्ज्वलसटोद्योताः प्रलयाग्निदीप्तगिरय इव वानराः, रामः समुद्र इवेत्यर्थः ॥५२॥

घोलन्ति णिम्मलाओ फुरन्त-दिअसअर-पाअडिअ-सोहाओ[1] ।
दाविअ-मग्गम्मि[2] वि से हिअए सोअन्धआरिअम्मि दिसाओ ॥५३॥

[घूर्णन्ते निर्मलाः स्फुरद्-दिवसकर-प्रकटित-शोभाः ।
दर्शित-मार्गे अपि तस्य हृदये शोकान्धकारिते दिशः ॥ ]

घनापायान्निर्मलाः स्फुरता दिनकरेण प्रकटिताः शोभा यासां ता दिशस्तस्य रामस्य दर्शितमार्गेऽपि उपलब्धदिग्विभागेऽपि हृदये घूर्णन्ते स्थैर्यं न लभन्ते ; अस्थैर्यहेतुं हृदयविशेषणमाह शोकान्धकारित इति, सीताशोकेन तस्य दिङ्मोहो जात इत्यर्थः । अत्र परमज्ञानात्मकस्य भगवतो दिग्भ्रमोऽनुचित इति शोकान्धकारिते तस्य हृदये पतिताः सत्यो दिश एव भ्रमन्तीति दिक्षु तद्धर्मारोपणात् [3]समाधिरलङ्कारः । घूर्णतेर्घोल इति घोलादेशः ॥५३॥

आलोएइ अ विञ्झं धणु-संठाणस्स साअरस्स भर-सहं ।
सन्धिअ-णइ-सोत्त-सरं [4]उहओवास-घडिअं व[5] जीआ-बन्धं ॥५४॥

[ आलोकयति च विन्ध्यं धनुः-संस्थानस्य सागरस्य भरसहम् ।
संहित-नदी-स्रोतः-शरं उभयावकाश-घटितं इव जीवा-बन्धम् ॥ ]

वक्रत्वेन धनुःसमानस्य सागरस्य भरसहं पीडासहम् उभयपार्श्वघटितं पूर्वपश्चिमसमुद्रपर्यन्तयोरटनीद्वययोजितं ज्याबन्धमिव [6]गुणबन्धमिव संहितानि नदीस्रोतांसि शरा इव यत्र तं विन्ध्यमालोकयति च अर्थाद्रामः ॥५४॥

---

1 ०रूवाओ GB 2 ०म्म MS. 3 ०द्धर्म्म० MS.

4 अवहो० GB ; Ms has in the original text अहओ०, but it marginally corrects अ into उ. 5 ०अम्व Ms. 6 गुणा० Ms.

मसिणि[F 6a]अ-सिहरुच्छङ्गो[1] विहुअ-णिअम्ब-[वण[2]]-
पाअडिअ-तुङ्ग-अडो ।
विञ्झेण भरिअ-कुहरो हेला-वाओ वि वाणराण[3] ण सहिओ ॥५५॥

[ मसृणित-शिखरोत्सङ्गः विधुत-नितम्ब-वन-प्रकटित-तुङ्ग-तटः ।
विन्ध्येन भृत-कुहरः हेला-पातः अपि वानराणां न सोढः ॥ ]

[F 6a] विमर्दान्मसृणित आमर्दाद्विलुलितः शिखरमुत्सङ्गश्च येन, विधुतेन नितम्ब-चलनेन प्रकटिता आवरणशून्यीकृतास्तुङ्गास्तटा येन, भग्नतरुशिलादिभिर्भृतानि पूरितानि कुहराणि येन तादृशो वानराणां हेलापातो यदृच्छयावपतनं विन्ध्येन न सोढः । येन सागरस्यापि भरः सोढस्तेन विन्ध्येनाप्यसहनादवपतनस्य महिमावगम्यते ॥५५॥

पत्ता अ सीभराहअ-धाउ-सिला-अल-णिसण्ण-राइअ-जलअं ।
सज्झं ओज्झर-पहसिअ-दरि-मुह-णिवडन्त[4]-वउल-मइरामोअं ॥५६॥

[ प्राप्ताः च शीकराहत-धातु-शिलातल-निषण्ण-राजित-जलदम् ।
सह्यं निर्झर-प्रहसित-दरी-मुख-निपतत्-वकुल-मदिरामोदम् ॥ ]

प्राप्ताश्च सह्यं नाम गिरिमर्थाद्वानराः । कीदृशं, शीकराहते धातुशिलातले निषण्णाः सन्तो रञ्जिता जलदा यत्र । धवलतया निर्झरः प्रहसितं यत्र तादृशाद्दरीमुखान्निर्गतो वकुलकुसुमानां मदिरेवामोदो यत्र । एतेन मदरञ्जितस्य प्रहसन्मुखस्य निर्गतमदिरा-मोदस्य पुंसः साम्यं पर्वते समाहितमिति समाधिरलङ्कारः ॥५६॥

बोलेन्ति[5] अ पेच्छन्ता पडिमा-संकन्त-धवल-घण-संघाए ।
फुड-फलिह[6]-सिला-सङ्कुल-[7]खलिओवरि-पत्थिए [8]गिरि-णइ-
प्पवहे ॥५७॥

[ व्यतिक्रामन्ति च प्रेक्षमाणाः प्रतिमा-संक्रान्त-धवल-घन-संघातान् ।
स्फुट-स्फटिक-शिला-सङ्कुल-स्खलितोपरि-प्रस्थितान् गिरि-नदी-प्रवाहान् ॥]

---

1 Ms has Sanskritised form ०रुत्सङ्गो. 2 Ms omits ०वण० 3 ०णँ B.
4 ०णिक्कन्त० GB. 5 बोल० GB. 6 ०फडि० GB. 7 Ms has a superfluous 'उ' before ०खलिओ० 8 विअ णइ० GB.

प्रतिमया संक्रान्तो धवलो घनसंघातो येषु तान् गिरिनदीप्रवाहान् स्फुटं व्यक्तं स्फटिक-शिलानां संकटेषु[1] गहनेषु स्खलितानुपरिप्रस्थितान् प्रेक्षमाणा व्यतिक्रामन्ति च। प्रतिविम्बितधवलघनसंघातस्य[2] स्फटिकशिलासाम्यमनेन दर्शितम् ॥५७॥

तड-पब्भार-भरन्ता दलन्त-पाआल-गलिअ-जल-पइरिक्का।
आवाअ[3]च्चिअ जाआ पहअ-महावह-णिहा महाणइ-सोत्ता ॥५८॥

[ तट-प्राग्भार-भ्रियमाणानि दलत्-पाताल-गलित-जल-प्रतिरिक्तानि।
आपाते एव जातानि प्रहत-महापथ-निभानि महानदी-स्रोतांसि ॥ ]

आपात एव कपीनामापतनमात्र एव आक्रमणभरविशीर्णैस्तटप्राग्भारैस्तीरोच्चदेशै-[4]र्भ्रियमाणानि, दलता भिदां गच्छता पातालेन नितम्बभागाधोभागेन गलितैर्जलैः प्रतिरिक्तानि तुच्छानि, अथवा गलितजलत्वाद् विस्तीर्णानि, प्रहतः क्षुण्णो यो महापथस्तन्निभानि महानदीनां स्रोतांसि जातानि। महापथपदस्य श्मशानवाचकत्वेऽपि प्रहतपदसमभिव्याहारान्न दोष इति **कश्चित्**। प्रहतपदस्य परनिपातान्महाप्रहतपथनिभानीति **केचित्** ॥५८॥

जलहर-णिद्दाअन्तं पाअव-गहणेसु सिसिर-णिद्दाअन्तं।
सइ दुद्दिण-सामलअं पत्ता भग्ग-धुअ-चन्दण-रसा मलअं ॥५९॥

[ जलधर-निर्दावान्तं पादप-गहनेषु शिशिर-निद्रापयन्तम्।
सदा दुर्दिन-श्यामलकं प्राप्ताः भग्न-धूत-चन्दन-रसाः मलयम् ॥ ]

जलधरैर्निर्दावो वनाग्निशून्योऽन्तो यस्य तं, पादपानां गहनेषु शिशिरः शीतलश्चासावतएव निद्रात्मकान्तश्चेति तथा तं, अथवा निद्रापयन्तम्। सदा दुर्दिनत्वेन श्यामलकं स्वार्थे कण्। भग्नाश्चन्दना, धूता रसा भूमिश्च यैस्ते भग्नधूतचन्दनरसा मलयं प्राप्ताः ॥५९॥

चन्दण-पाअव-लग्गे खुडिउव्वेल्लि[5]अ-लआ-परिमल-च्छाए।
सन्दाणिअ-णिम्मोए पेच्छन्ति महाभुअङ्ग-वेढ[F6b]ण-मग्गे ॥६०॥

[चन्दन-पादव-लग्नान् खण्डितोद्वेष्टित-लता-परिमल-च्छायान्।
सन्दानित-निर्मोकान् प्रेक्षन्ते महाभुजङ्ग-वेष्टन-मार्गान् ॥ ]

---

1 K also has संकट for सङ्कुल. 2 °संहातस्य Ms. 3 आवाए GB.
4 °स्तिरोच्च° Ms. 5 °व्वेलिअ° GB.

चन्दनपादपलग्नान् सन्दानितनिर्मोकान् महाभुजङ्गवेष्टनमार्गान् खण्डिताः सत्य उद्वेष्टिता उन्मोचिता या लतास्तासां परिमलस्य छायेव छाया शोभा येषां तान् प्रेक्षन्ते ॥६०॥

**सेवन्ति तीर-वड्ढिअ-णिअअ-भरोवत्त-चन्दण-लआलिद्धे ।**
**[1]रम्मत्तण-इप्प[2]-वहे वण-गअ-दाण-कडुए गिरि-णइ-प्पवहे ॥६१॥**

[सेवन्ते तीर-वर्धित-निजक-भरापवृत्त-चन्दन-लतालीढान् ।
रम्यत्व-दीप्र-पथान् वन-गज-दान-कटुकान् गिरि-नदी-प्रवाहान् ॥ ]

[F6b] तीरे वर्धिता निजभरेणापवृत्ता आवर्जिता याश्चन्दनलतास्ताभिराश्लिष्टान्, वनगजानां दानेन मदेन कटुकान् सुगन्धीन्, रम्यत्वेनाथवा रम्यैस्तृणैर्दीप्रः पन्था अवतारणमार्गो येषु तान् गिरिनदीप्रवाहान् सेवन्ते ॥६१॥

**तो तरुण-सिप्पि-संपुट-दर-दाविअ-[3]दर-णिहित्त-मोत्ता[4]-वअरं ।**
**पत्ता पत्तल-वउलं गअ-दाण-सुगन्धि[5]-रअ-णवेलं वेलं ॥६२॥**

[ततः तरुण-शुक्ति-संपुट-दर-दर्शित-दर-निहित-मुक्ता-प्रकराम् ।
प्राप्ताः पत्नल-वकुलां गज-दान-सुगन्धि-रजो-नवैलां वेलाम् ॥ ]

ततस्तरुणैः शुक्तिसंपुटैस्तरुणत्वेन निविडाङ्गसम्बन्धित्वात् सहसा निःशेषं मुक्ताजालमुग्वद्भिर्दरदर्शितो दरनिहितो मुक्ताप्रकरो यस्यां तस्यां, जलसेकात् पत्नलाः पत्नयुक्ता वकुलवृक्षा यस्यां, गजदानवत् सुगन्धिरजसो नवा एला यस्यां, तां वेलां समुद्रकूलं प्राप्ताः। ततो गिरिनदीसेवानन्तरं तरुणैः शुक्तिसंपुटैर्दरेण वानरामर्दभयेन दर्शितो दरनिहित ईषन्निष्पन्नो मुक्ताप्रकरो यस्यां, तरुणत्वेन कर्कशसन्धितयेषद्दर्शित ईषन्निहित इति **कुलनाथः**। सर्वदा जलसंपर्कात् पत्नलाः प्रशस्तपत्नशालिनो वकुला यस्याम् ॥६२॥

---

1 रम्य-त्तण॰ G (=रम्य-तृण॰) 2 ॰दिप्प॰ GB.
3 ॰जल॰ GB. 4 ॰मुत्ता॰ GB. 5 ॰सुअन्धि॰ GB.

विअसिअ-तमाल-णीलं पुणो पुणो चल-तरङ्ग-कर-परिमट्ठं ।
फुल्लेला-वण-सुरहिं उअहि-गइन्दस्स दाण-लेहं व[1] ठिअं ॥६३॥

[विकसित-तमाल-नीलां पुनः पुनः चल-तरङ्ग-कर-परिमृष्टाम् ।
फुल्लैला-वन-सुरभिं उदधि-गजेन्द्रस्य दान-लेखां इव स्थिताम् ॥ ]

विकसितैस्तमालैर्विकसिततमालवच्च नीलां, पुनः पुनश्चलेन तरङ्गेण करेणेव परिमृष्टां, फुल्लैलावनैः फुल्लैलावनवच्च सुरभिमुदधेर्गजेन्द्रस्य दानलेखामिव स्थिताम् ॥६३॥

फेण-विसमङ्गराअं विद्दुम-दन्त-व्वणाणिअ-मुह-च्छाअं ।
मलिअ-वण-केस-कुसुमं परिवुत्थ[2]-समुद्द-परिमलं व[3] वहन्तिं ॥६४॥

[फेन-विषमाङ्गरागां विद्रुम-दन्त-व्रणानीत-मुख-च्छायाम् ।
मृदित-वन-केश-कुसुमां पर्युषित-समुद्र-परिमलं इव वहन्तीम् ॥ ]

सम्भोगाय परिवर्तितो यः समुद्रनायकस्तस्य परिमलं सुरतविमर्दमिव वहन्तीं, स्थाने स्थाने स्थितः फेन[4] एव विषमोऽङ्गरागो यस्यां प्रवालमालाभिर्दन्तव्रणैरिवानीता मुखच्छाया यस्यां, मृदितं वनस्य केशस्येव कुसुमं यस्यास्ताम् । एतेन संभुक्तनायिकाधर्मा वेलायां समाहिताः । पर्युषितस्य रात्रौ सम्भोगार्थमुपस्थितस्येव नायकस्येव समुद्रस्य परिमलं सुरतविमर्दचिह्नमिव वहन्तीमिति **लोकनाथः** ॥६४॥

सिप्पिउड-मउलिअच्छिं लआहराब्भन्तरेसु परिवड्ढन्तं ।
अणुराअ-परिट्ठविअं आअण्णन्तिं व[5] किण्णरुग्गीअ-रवं ॥६५॥

[शुक्तिपुट-मुकुलिताक्षीं लतागृहाभ्यन्तरेषु परिवर्धमानम् ।
अनुराग-परिस्थापितं आकर्णयन्तीं इव किन्नरोद्गीत-रवम् ॥ ]

---

1 ०हम्व MS. 2 परिहुत्त० GB. 3 ०लम्ब MS.
4 फेण MS. 5 ०न्तिम्व MS.

लतागृहाभ्यन्तरेषु परिवर्धमानमनुरागेण परिस्थापित[1] किन्नरोद्गीतरवमाकर्णयन्तीमिव श्रवणरसेन, शुक्तिसंपुटमेव मुकुलितमक्षि यस्यास्ताम्, अतएव शब्दस्य मण्डूकादिध्वनि-प्रसिद्धावपि उद्गीतादिपदसमभिव्याहारान्न दोष इति **केचित्** ॥६५॥

राअ-सिरि-पवरसेणस्स एत्थ रावण-वहे महाकव्वम्मि ।
साअर-तड-प्पत्थाणं [णामो *] प [F7a] ढमो आसासओ परिसमत्तो

[राज-श्रीप्रवरसेनस्य अत्र रावणवधे महाकाव्ये ।
सागर-तट-प्रस्थानं नाम प्रथम आश्वासकः परिसमाप्तः ॥]

---

5 परिष्ठा० MS.

# बिइओ आसासओ

अह पेच्छइ रहु-तणओ चडुलं दोस-सअ-दुक्ख[1]-वोलेअव्वं ।
अमअ-रस-सार-गरुअं कज्जारम्भस्स जोव्वणं व समुद्दं ॥१॥

[अथ प्रेक्षते रघु-तनयः चटुलं दोष-शत-दुःख-व्यतिक्रमणीयम् ।
अमृत-रस-सार-गुरुकं कार्यारम्भस्य यौवनं इव समुद्रम् ॥ ]

[F7a] अथ समुद्रप्राप्त्यनन्तरं रघुतनयः समुद्रं प्रेक्षते कार्यारम्भस्य यौवनमिव यथा यौवनं कामक्रोधादिदोषसंकुलं पुनर्दुस्तरत्वात् पुरुषार्थसिद्धेरन्तराय एवं त्रैलोक्यकल्याणहेतु-रावणवधारम्भस्य दुर्लङ्घ्यत्वात् समुद्रोऽप्यन्तरायः । चटुलं वीचिविलासेनाविनयेन च चञ्चलं दोषशतैर्ग्राहमकरव्यालवडवादिभिः कामक्रोधादिभिश्च दुरतिक्रमणीयम्, अमृतं जलं रसो बीजं तस्य साराः सुधासुधांशुकौस्तुभादयस्तैर्गुरुकं, पक्षे अमृतमिव यो रसः शृङ्गाररस-स्तेन गुरुकमथवामृतस्य रसो माधुर्यं स एवोत्कृष्टत्वात् सारस्तेन गुरुकं, यौवनं विरूपा-दीनपि विषयान्मधुरीकरोतीति मधुरमित्याशयः । "सारो बले मज्जने च स्थिरे न्याय्ये धनेऽपि च" "सारं श्रेष्ठे चे"ति **विश्वः** । "दोषः स्याद्दूषणे पापे दोषा रात्रौ भुजेऽपि चे"ति च । "अमृतं यज्ञशेषे स्यात् सुधायां वाचि सूक्तिषु । घृते जले गोरसे चामृतो धन्वन्तरौ सुरे" इति **हेमसूत्रम्** । **केचित्तु** कार्यारम्भस्य सीतोद्धारस्य बाल्यं वालिवधः यौवनं समुद्र-तरणं परिणामो रावणवध[2] इति व्याचक्षते तन्न समुद्रतरणस्य हि यौवनत्वेन समुद्र-यौवनयोः साम्यमाह ॥१॥

गअणस्स व पडिबिम्बं धरणीअ व णिग्गमं दिसाण व णिलअं ।
[3]भुवणस्स व मणि-तलिमं[4] पलअस्स व सावसेस-जल-विच्छड्डं ॥२॥

[गगनस्य इव प्रतिबिम्बं धरण्याः इव निर्गमं दिशां इव निलयम् ।
भुवनस्य इव मणि-तडिमं प्रलयस्य इव सावशेष-जल-विच्छर्दम् ॥ ]

1 ०क्क० Ms. 2 रावण इति Ms.

3 भुअ० GB. 4 ०तडि० GB.

गगनस्य प्रतिबिम्बमिव यद्दर्शनाद् गगनबुद्धिर्भवति निर्गच्छत्यस्मादिति निर्गमः विस्तारातिशयाद्धरण्या निर्गम इव सर्वासामेव दिशां तत्रैवोपलम्भान्निलयमिव भुवनस्य भुवननिवासिसकलजनस्य युगपच्च क्रमणोचितं मणितलमिव नीलमणिकुट्टिममिव प्रलयस्य सावशेषं समग्रं जलविच्छर्दमिव[1] जलनिवहमिव यद्वा नीलीयतेऽस्मिन्निति निलयः तत्रैव दिशामस्तमनात्। नानारत्नमयत्वान्मणिकुट्टिममिवेति **केचित्**। प्रलयस्य सावशेषं जलसमूहमिवेति प्रलये जगतामेभिरेव जलैराप्लावनात्। प्रलयस्येति तादर्थ्यचतुर्थ्यां षष्ठीविधानात्। प्रेक्षत इति सर्वत्र सम्बध्यते ॥२॥

[2]ठाणे वि ठिइ-प्पहुत्तं पलए महि-मण्डलम्मि वि अमाअन्तं।
पणअन्त-वामण-तणुं कमन्त-देह-भर-भरिअ-लोअं व[3] हरिं ॥३॥

**[स्थाने अपि स्थिति-प्रभूतं प्रलये मही मण्डले अपि अमान्तम्।**
**पणयद्-वामन-तनुं क्रममाण-देह-भर-भृत-लोकं इव हरिम् ॥]**

स्थानेऽपि प्रतिनियतदेशेऽपि स्थित्या मर्यादया प्रभूतमलंघितमर्यादमित्यर्थः प्रलये महीमण्डले अमान्तं[4] अप्राप्तपरिमाणमत ईदृशं हरिमिव कीदृशं पणयन्ती याचनार्थमुपतिष्ठमाना वामनतनुर्यस्य। अर्थिभ्यो दत्तिप्रतिज्ञातोऽर्थः पणः। पणाय पणग्रहणाय कान्ता[5] दातृमनोहरा वामनतनुर्यस्य इति **कुलनाथः**। प्रणयो याचना। तथा कामता देहस्य भरेणातिशयेन भृतलोकं हरिमिव प्रार्थ्यमानवामनशरीरमिति **श्रीनिवासः** ॥३॥

दीसन्तं अहिरामं सुव्वन्तम्पि[6] अविअण्ह[7]-सोअव्व-गुणं।
सुकअस्स व परिणामं परिभुज्जन्तम्पि[8] सासअ-सुह-प्फलअं ॥४॥

**[दृश्यमानं अभिरामं श्रूयमाणं अपि अवितृष्ण-श्रोतव्य-गुणम्।**
**सुकृतस्य इव परिणामं परिभुज्यमानं अपि स्वाश्रय-शुभ(शाश्वत-सुख)-फलदम् ॥]**

---

1 ०विच्छड्ड० Ms.
2 Vv 3-6 in our Ms are numbered as Vv 9-12 in GB.
3 ०अम्व Ms. 4 अमन्ति Ms. 5 कान्तो Ms.
6 ०न्तं पि GB. 7 ०इण्ह० GB. 8 ०ज्ज० Ms; but GB have the reading उअहुज्जन्तं पि

दृश्यमानमभिरामं यावद्यावद् दृश्यते तावत्तावद्रत्नादिसम्पदा मनोहरोऽनुभूयत इत्यर्थः। श्रूयमाणमप्यवितृष्णं यथा स्यात्तथा श्रोतव्यः श्रवणार्हो गुणो गाम्भीर्यादिर्यस्य। परिभुज्यमानमपि परिभोगार्थं मृग्यमाणमपि स्वाश्रयशुभफलदं शोभत इति कप्रत्ययाच्छोभमान-मुक्तादिफलप्रदमतएव सुकृतस्य पुण्यकर्मणः परिणामं परिपाकमिव। सोऽपि पुत्रपौत्रादि-सम्पदर्थमभिरामदर्शनः सतृष्णश्रूयमाणधैर्यविनयादिगुणपरिभोगे नित्यस्वरूपफलप्रदश्च[1] ॥४॥

**उक्खअ-दुमं व सेलं हिम-हअ-कमलाअरं व लच्छि-विमुक्कं।**

**पीअ-मइरं व चसअं बहुल-पओसं व मुद्ध-अन्द[2]-विरहिअं ॥५॥**

**[उत्खात-द्रुमं इव शैलं हिम-हत-कमलाकरं इव लक्ष्मी-विमुक्तम्।**

**पीत-मदिरं इव चषकं बहुल-प्रदोषं इव मुग्ध-चन्द्र-विरहितम् ॥]**

उत्खातो द्रुमः पारिजातो यस्मात्तं शैलं मेरुमिव मेरुरपि कृष्णेन इन्द्रं जित्वा उन्मूलित-पारिजातः कृतः। हिमहतकमलाकरमिव लक्ष्मीविमुक्तमेकलोद्धृतत्वात् पीतेव मदिरा यस्य अन्यत्र पीता मदिरा यस्मिन् तं [3]चषकमिव पानपात्रमिव। मुग्धेन मनोहरेण कलामात्राव-शेषेण चन्द्रेण विरहितं बहुलप्रदोषमिव कृष्णपक्षरजनीमुखमिव। हीनोपमत्वमाशङ्क्योत्-खातपारिजातं, वशा इला पृथ्वी यस्य, हिमहयकमलानां चन्दनोच्चैःश्रवो-लक्ष्मीणामा-करः, बलं छिनत्तीति बलच्छित् कालकूटं तेन विमुक्तं, [3]वचषकं वरुण-चषकं[3], प्रकृष्टा दोषा राक्षसादयो यत्र, प्रमुग्धचन्द्रविरहितमिति **केचिद्व्याख्यान्ति**[4] च। वस्तुतस्तु हीनोपमा न दोषाय तेषां तद्रूपत्वेन प्रसिद्धत्वात्। "हिमं शीते औषधे च चन्दने च हिमं विदुः" इति **विश्वः**[5] ॥५॥

**णिप्फण्ण-सुहालोअं विमल-जलब्भन्तर-ट्ठिअं वहमाणं।**

**दर-कड्ढिअं व [F7b]रइणा करालम्बिअ-करं रअण-संहाअं[6] ॥६॥**

**[निष्पन्न-सुखालोकं विमल-जलाभ्यन्तर-स्थितं वहमानम्।**

**दर-कृष्टं इव रविणा करालम्बित-करं रत्न-संघातम् ॥ ]**

---

1 ०श्च Ms. 2 ०चन्द० GB. 3 चस० Ms.

4 In this interpretation the Sanskrit transcription of the verse should be—

उत्खात-द्रुमं वशैलं हिमहय-कमलाकरं बलच्छिद्-विमुक्तम्।

पीत-मदिरं वचाशयं बहुल-प्रदोषं व-मुग्ध-चन्द्र-विरहितम् ॥

5 ०श्व Ms. 6 ०संघा० GB.

[F7b] विमलजलाभ्यन्तरस्थितत्वात् पृथग्भूतशुभालोकं निकटमिवोपलक्ष्य[1]माणत्वाद्-रकृष्टमिव रविणा करैरवलम्बिताः करा यस्य तं रत्नसंघातं[2] वहमानमन्योऽपि जलमग्नो बलयुक्तेन पुंसा हस्तावलम्बितहस्तमाकृष्यते सुखदर्शनश्च भवति ॥६॥

**भमिरुब्भड-कल्लोलं थोर-कराहअ-दिसा-मुहोत्थअ-सलिलं ।**
**सासअ-मएण बहुसो खोहिज्जन्तं दिसा-गएण व ससिणा ॥७॥**

**[भ्रमणशीलोद्भट-कल्लोलं स्थूल-कराहत-दिङ्-मुखावस्तृत-सलिलम् ।**
**स्वाश्रय-मृगेण बहुशः क्षोभ्यमाणं दिग्गजेन इव शशिना ॥ ]**

भ्रमिरा भ्रमणशीला दिक्पर्यन्तमनुधाविन इति यावदीदृशाः कल्लोला यत्र एवं यथा स्यात्तथा । स्थूलेन पुञ्जीभूतेन, पक्षे पीवरेण करेण रश्मिना शुण्डादण्डेनाहतं सद्दिङ्-मुखेष्ववस्तृतं व्याप्तं सलिलं यत्र, यद्वा दिङ्मुखान्यवस्थगयतीति दिङ्मुखावस्थगं सलिलं यत्र एवमपि यथा स्यात्तथा । दिग्गजेनेव भुज्यमानं क्षोभ्यमाणम् । शशिगजयोः साम्यमाह—स्वाश्रयो मृगो यस्य, पक्षे शाश्वतो मदो यस्य । आद्यविशेषणद्वयं समुद्रस्येति **कुलनाथ-श्रीनिवासौ । केचित्तु** भ्रमणशीलोद्भटाः कल्लोला यस्य भ्रमणशीलोद्भटेन केन जलेन लोलमिति वा ॥७॥

**अप्फुण्ण-विदुम[3]-वणे गुप्पन्त[4]-पवित्थिए[5]सलिल-कल्लोले ।**
**मन्दर-मूल[6]-प्पहरे अज्ज वि संखाअ-लोहिए व्व वहन्तम् ॥८॥**

**[आक्रान्त-विद्रुम-वनान् गुप्यमान-प्रविस्तृतान् सलिल-कल्लोलान् ।**
**मन्दर-मूल-प्रहारान् अद्य अपि संस्त्यान-लोहितान् इव वहन्तम् ॥ ]**

आक्रान्तं विद्रुमवनं यैस्तान् विद्रुमस्थलाद् गुप्यमानप्रविस्तृतान् व्याकुलीभवत्प्रविततान् विस्तृतत्वेन स्वच्छतायां सत्यां प्रकटविद्रुमालोकत्वात् संस्त्यानलोहितान् पिण्डितरुधिरान्

1 ०लक्ष्य० Ms. 2 ०हातं Ms. 3 ०दुम० Ms.
4 'गुप (१२३५) व्याकुलत्वे' इति पाणिनीय-दिवादिप्रकरणस्थे धातुपाठे
5 ०पडित्थिरे GB. 6 ०गूढ० GB ; K reads मूढ०

मन्दरमूढप्रहारोऽस्फुटितो घातस्तानिव वहन्तम्[1]; केचित्तु आक्रान्तविद्रुमवनान् गुप्यन्तो व्याकुलीभवन्तोऽस्थिरा इति यावत् तादृशाश्च ते विस्तृताश्चेति तान् सलिलकल्लोलान् संस्त्यान-लोहितान् मथनाय क्षिप्तस्य मन्दरस्य गूढान् बहिरलक्ष्यमाणान् प्रहारानिवाद्यापि वहन्तम्। गूढप्रहारा अपि गोप्यमाना रक्ष्यमाणा अदूरीक्रियमाणा इति यावत्तादृशाः सन्तः प्रविस्तृताः ॥८॥

मुहल-घण-विप्पइण्णं जल-णिवहं भरिअ-सअल-णह-महि-विवरं।
णइ-मुह-पल्हत्थन्तं अप्पाण-विणिग्गअं जसं व पिबन्तं[2] ॥९॥

[मुखर-घन-विप्रकीर्णं जल-निवहं भृत-सकल-नभो-मही-विवरम्
नदी-मुख-पर्यस्यन्तं आत्म-विनिर्गतं यशः इव पिबन्तम् ॥]

मुखरैः सशब्दैर्घनैर्विप्रकीर्णमतः पूरितसकलनभोमहीविवरं नदीमुखेन पर्यस्यन्तं जल-निवहमात्मविनिर्गतं यश इव पिबन्तं, पक्षे आस्वादयन्तं तज्जन्यसुखमनुभवन्तमित्यर्थः। यशोऽपि मुखरैर्वैतालिकैर्घनं यथा स्यात्तथा विप्रकीर्णं पूरितनभोमहीविवरं नतिमुखेन स्तुति-पाठकेन पर्यस्यमानं क्षिप्यमाणं प्रकटीक्रियमाणमित्यर्थः ॥९॥

जोण्हाए व्व मिअङ्कं कित्तीअ व्व सुउरिसं पहाए व्व रविं।
सेलं महा-णईअ व सिरीअ चिर-णिग्गआइ वि अमुच्चन्तं ॥१०॥

[ज्योत्स्नया इव मृगाङ्कं कीर्त्या इव सुपुरुषं प्रभया इव रविम्।
शैलं महानद्या इव श्रिया चिर-निर्गतया अपि अमुच्यमानम् ॥]

ज्योत्स्नयेव मृगाङ्कं, कीर्त्येव सुपुरुषं, प्रभयेव रविं, शैलं महानद्येव श्रिया चिरनिर्गतया-प्यमुच्यमानमद्यापि तथैव रत्नसम्पत्तेरविच्छेददर्शनादिति भावः। अत्र दृष्टान्तचतुष्टयेन यथाक्रमं श्रीसमुद्रयोराह्लादकत्व-देवोपकर्तृत्वे, उपादेयत्वाहरणीयत्वे जगदुपकारित्वानभिभवनी-यत्वे, प्रभायमाणत्व-स्थिरत्वे प्रकाशिते ॥१०॥

1 हन्ति Ms. 2 ०अ० GB.

कालन्तर-जीअ-हरं गओणिअत्तन्त-पवण-घट्टिज्जन्तं[1] ।
सल्लं व देह-लग्गं विअडं वलआ[2]-मुहाणलं वहमाणं ॥११॥

[कालान्तर-जीव-हरं गतापनिवर्तमान-पवन-घट्यमानम् ।
शल्यं इव देह-लग्नं विकटं वडवा-मुखानलं वहमानम् ॥ ]

कालान्तरे प्रलये जीवान् प्राणिनः, अथवा जीवनं जलं हरतीति तथा तं, पक्षे मरणकाले प्राणहरं, गतापवृत्ताभ्यां गमनागमनाभ्यां श्वासप्रश्वासाभ्यां पवनेन[3] प्राणवातेन वायुना च घट्यमानमस्थिरीक्रियमाणं शल्यमिव देहे पाताले शरीरे च लग्नं विकटं विशालं वडवामुखानलं वहमानम् ॥११॥

धुअ-वण-राइ-कर-अलं मलअ-महिन्द[F8a]-त्थणोर-सोल्लण-सुहिअं ।
वेलालिङ्गण-मुक्कं छिविओसरिएहि वेलवन्तं व महिं ॥१२॥

[धुत-वन-राजि-कर-तलां मलय-महेन्द्र-स्तनोर-आर्द्रीकरण-सुखिताम् ।
वेलालिङ्गन-मुक्तां स्पृष्टापसृतकैः व्याकुलयन्तं इव महीम् ॥ ]

महीसागरयोर्नायिकानायक[4]धर्मान् समादधदाह धुअ इति । महीं कुपितनायिकामिव स्पृष्टापसृतकैः स्पृष्टापसर्पणैर्महीं व्या[F8a]कुलयन्तं वाम्योपदर्शनाद् धुता कम्पिता वनराजिः करतलमिव यया । मलयमहेन्द्रौ स्तनाविव यत्र, ईदृशस्य उरसः 'सोल्लणेन' आर्द्रीकरणेन सुखितां, वेलायास्तीररेखायाः सख्या इव आलिङ्गनेन मुक्तामर्थात् समुद्रेण । केचित्तु महीं नायिकामिव कुपितापसृतैः स्पृष्टावसृतैर्व्याकुलयन्तमिव इत्यर्थः । स्त्रीस्वभावेन वाम्योपदर्शनार्थं धुतवनराजिकरतलां रागजननार्थं वेलाम्बुविकृतिस्तया, भुजलतयेव यदालिङ्गनं तेन मुक्तां, रागवृद्धिं सूचयन्नाह-मलयमहेन्द्रौ स्तनाविव ताभ्यामुरसि 'सोल्लणेन' सुखितं, सुखितां महीं वा ॥१२॥

---

1 घट्टि॰ Ms ; B having superfluous word ॰रअ॰( =॰रय॰ ) after ॰पवण॰, which causes the metre to be defective. 2 वडवा॰ GB.
3 वप॰ Ms. 4 Ms. apparently omits the word ॰नायक॰ here.

महणाआस-विमुक्कं [1]ऊसित्तामअ-[2]विसंखलाणल-णिवहं ।
वासुइ-मुह-णीसन्दं वलआ-मुह-कुहर-पुञ्जिअं व वहन्तं[3] ॥१३॥

[मथनायास-विमुक्तं उत्सिक्तामृत-विशृङ्खलानल-निवहम् ।
वासुकि-मुख-निस्यन्दं वडवा-मुख-कुहर-पुञ्जितं इव वहन्तम् ॥ ]

मथनायासेन विमुक्तमुद्गीर्णं, समुद्रस्योद्धृतामृतत्वाद् विशृङ्खलो निर्यन्त्रणोऽनलनिवहो विषाग्निसमूहो यस्य तं, मन्दररज्जुभूतस्य वासुकेर्मुखनिस्यन्दं मुखप्रच्युतविषं, वडवामुख-कुहरे पुञ्जितमिव वहन्तं वडवाग्निव्याजाद्वासुकिविषकूटमिव वहन्तमित्युत्प्रेक्षा ॥१३॥

धीरं व जल-समूहं तिमि-णिवहम्मिव सवक्ख[4]-पव्वअ-लोअं ।
णइ-सोत्ते व्व तरङ्गे रअणाइ व गरुअ-गुण-सआइ वहन्तं ॥१४॥

[धीरं इव जल-समूहं तिमि-निवहं इव सपक्ष-पर्वत-लोकम् ।
नदी-स्रोतांसि इव तरङ्गान् रत्नानि इव गुरुक-गुण-शतानि वहन्तम् ॥]

[5]धैर्यमिव जलसमूहं तिमिनिवहमिव सपक्षपर्वतलोकं नदीस्रोतांसीव तरङ्गान् रत्नानीव गुरुकगुणशतानि वहन्तम्, अन्योन्यसाहचर्यात् सहोपमेयम् । केचित्तु तिमिनिवहमिव सपक्ष-पर्वतलोकमभेदेन निजोत्सङ्गे विहाराद् अभ्यागतगिरिनिजतिमिकुलयोः [6]समत्वात् सम-दर्शित्वं सूचितम् ॥१४॥

पाआलोअर-गहिरे महि-पतिरिक्क[7]-विअडे णह-णिरालम्बे ।
तेल्लोक्के व्व महुमहं अप्पाणे[8] च्चिअ गआगआइ[9] करेन्तं ॥१५॥

[पातालोदर-गभीरे मही-प्रतिरिक्त-विकटे नभो-निरालम्बे ।
त्रैलोक्ये इव मधुमथनं आत्मनि इव गतागतानि कुर्वन्तम् ॥ ]

---

1 उच्छि॰ GB. 2 ॰सङ्ख॰ GB.
3 वहमाणं GB. which omits the preceding word व 4 सप॰ GB.
5 Ms inadvertently placed the commentary of this verse before that of the preceding one and corrected the verse-number 13 into 14.
6 ॰तात् Ms. 7 ॰पङ्क॰ GB. 8 ॰णा GB.
9 Ms reads mistakenly गाग॰ ; B reading ॰इँ

पातालोदरवद्गभीरे महोवद्विस्तीर्णे बृहति नभसि इव निरालम्बे त्रैलोक्ये मधुमथनमिव आत्मन्येव गतागतानि कुर्वन्तम्। त्रैलोक्यमपि विष्णोरात्मा, त्रैलोक्यमपि पातालोदरे गभीरं, महोविस्तारे विकटं, नभसि निरालम्बमिति ॥१५॥

**[1]अहिलिण-[2]परंमुहीहि छिविओसरिएहि अणुसअ-विलोलाहिं।**
**[3]अणुइज्जमाण-मग्गं वेवन्त-णिअत्त-पत्थिआहि णईहिं ॥१६॥**

**[अभिलीन पराङ्मुखीभिः स्पृष्टापसृताभिः अनुशय-विलोलाभिः।**
**अन्वीयमान-मार्गं वेपमान-निवृत्त-प्रस्थिताभिः नदीभिः ॥]**

प्रथमं वेगान्नदीभिः स्त्रीभी रागादभिलीनाभिः पश्चात् समुद्राम्बुप्रतीघातात् स्वयमभिगमव्रीडया च पराङ्मुखीभिः, स्पृष्टाश्च ता अपसृताश्चेति तथा ताभिः, वेपमानाश्च ता निवृत्ताः प्रस्थिताश्चेति तथोक्तास्ताभिः, अतो दयितावधीरणादनुशयेन पश्चात्तापेन विलोलाभिः, पुनरागमनकाङ्क्षिनीभिर्नदीभिरन्वीयमानम्। एतेन कलहान्तरिता नायिका लक्ष्यते। तथोक्तं—"चाटुकारमपि जीवितनाथं क्षेपतः समवधीर्य गता या। ताप्यते विरहवह्निवितानैः कथ्यतेऽत्र कलहान्तरिता सा" ॥ इति। नदीनामेष स्वभावो यत् समुद्रे निपतन्त्यो वर्धमानतदम्बुभिः प्रतीघातात् प्रतीपगामिन्यो भवन्ति, पुनश्च निवर्तमाने समुद्राम्बुनि वेगवशाद्वेपमानास्तत्र निपतन्ति ॥१६॥

**[4]जीव-गरुईहि अज्ज वि इच्छा-पज्जत्त-सुह-रसाहि मएन्तं।**
**धण-रिद्धीअ सिरीअ अ [5]महणुप्पण्णाइ वारुणीअ अ लोअं ॥१७॥**

**[जीव-गुर्वीभिः अद्य अपि इच्छा-पर्याप्त-शुभ-रसाभिः मदयन्तम्।**
**धनर्द्ध्या श्रिया च मथनोत्पन्नया वारुण्या च लोकम् ॥]**

मथनोत्पन्नया धनर्द्ध्या श्रिया वारुण्या च लोकं देवासुरमनुष्याख्यम्। अद्यापि इदानीमपि मदयन्तम्। मदो मत्तता हर्षः। एताभिः कीदृशीभिर्जीववद्गुर्वीभिः। जीवादपि

1 अहिलीअ० GB. 2 पर० GB. 3 अणुणि० GB. 4 जीअ० GB.
5 सलिलुप्प० GB ; Rvi CKS having the reading of our Ms.

गुर्वीभिरिति **केचित्** । इच्छया पर्याप्त इच्छानुरूपलाभेन पर्याप्तः । शुभः शोभमानो रसोऽनुरागो यत्र । वारुणीपक्षे सुखजनको रसः ॥१७॥

**चडुलम्पि थिईअ थिरं तिअसुक्खित्त-रअणम्पि सारब्भहिअं ।**
**महिअम्पि अणोलुग्गं असाउ-सलि[F8b]लम्पि अमअ-रस-णीसन्दं ॥१८॥**

**[चटुलं अपि स्थित्यां स्थिरं त्रिदशोत्क्षिप्त-रत्नं अपि साराभ्यधिकम् ।**
**मथितं अपि अनवरुग्णं अस्वादु-सलिलं अपि अमृत-रस-निस्यन्दम् ॥ ]**

चटुलमपि स्थित्यां मर्यादायां स्थिरं, त्रिदशैरुद्धृतरत्नमप्यनन्तरत्नत्वात् सारैरभ्यधिकं, मथितमप्यनवरुग्णम्, अस्वादुसलिलमप्यमृतरसनिस्यन्दम्[1] । अमृतरसाः स्यन्दन्तेऽस्मादिति । सर्वत्रापिविरोधे ॥१८॥

**पज्जत्त-रअण-गब्भे णह-अरु-पल्हत्थ-चन्द-अर-पारोहे ।**
**[2]सलिलब्भन्तर-सेले सुर-वइ-डिम्ब-णिहिए णिहि व्व वहन्तं ॥१९॥**

**[पर्याप्त-रत्न-गर्भान् नभस्तरु-पर्यस्त-चन्द्र-कर-प्ररोहान् ।**
**सलिलाभ्यन्तर-शैलान् सुरपति-डिम्ब-निहितान् निधीन् इव वहन्तम् ॥ ]**

[F8b] पर्याप्तानि निभृतानि रत्नानि गर्भे येषां शैलानां निधीनाञ्च ते तथा तान्, नभस्तरुरिव ततः पर्यस्ताः पतिताश्चन्द्रकराः प्ररोहा इव येषु तान् । यत्र निधिस्तत्र प्ररोहो लम्बत इति श्रुतिः । सलिलाभ्यन्तरस्थितान शैलान् सुरपतेः सकाशाड्डिम्बेन विप्लवेन निहितान् निधीनिव वहन्तम् । निधयोपि बहुरत्नगर्भा वसतिदेशोपरितरुप्ररोहाश्च भवन्तीति ॥१९॥

**परिअम्भिअं उवगए वोलीणम्मि अ णिअत्त-चडुल-सहाव ।**
**णव-जोव्वणे व्व कामं दइअ-समागम-सुहम्मि चन्दुज्जोए ॥२०॥**

**[परिजृम्भितं उपगते व्यतिक्रान्ते च निवृत्त-चटुल-स्वभावम् ।**
**नव-यौवने इव कामं दयित-समागम-सुखे चन्द्रोद्योते ॥ ]**

---

1 ०न्दः Ms. 2 उब्भर० GB.

नवयौवन इव चन्द्रोद्द्योत उपगते सति, काममिव प्रविजृम्भितं[1] वर्धितं, पक्षे धृतनानाविध विकारं, व्यतिक्रान्ते च यौवन इव निवृत्तचटुलस्वभावं प्रकृतिमापन्नं, पक्षे निवृत्तविषयोपभोग-लौल्यं, तस्मिन् कीदृशे, आह्लादकत्वेन दयिते साभिलाषं[2] समागमसुखं यस्य, पक्षे दयितस्य वल्लभस्य समागमसुखजनके ॥२०॥

दर-भिण्ण[3]-सिप्पि-संपुड-पलोट्ट-सङ्ख-मुह-भरिअ-मुत्ता-वअरं[4] ।
मारुअ-दूरुच्छालिअ[5]-जल-भरिअद्ध-वह-पडिणिअत्त-जलहरं ॥२१॥

[दर-भिन्न-शुक्ति-संपुठ-प्रलुठित-शङ्ख-मुख-भृत-मुक्ता-प्रकरम् ।
मारुत-दूरोच्छारित-जल-भृतार्द्ध-पथ-प्रतिनिवृत्त-जलधरम् ॥ ]

ईषद्भिन्नात् शक्तिसंपुटात् प्रगलितः शंखमुखे भृतः पूरितः शंखमुखे वृतो वा मुक्ताप्रकरो यत्र, मारुतेन दूरोच्छारितैर्जलैर्भृताः पूरिताः सन्तः कृतार्था इवार्धपथात् पानाभिलाषिणो जलधरा यस्मात् । विशेषणद्वयेन एकस्यापि विभवे सर्वसाधारणत्वं याचकं प्रत्यविलम्बित-समीहितसम्पादकत्वं सूचितम ॥२१॥

मरगअ-मणि-प्पहाहअ-हरिआअन्त-जरढ[6]-प्पवाल-किसलअं ।
सुर-गअ-गन्धुद्धाइअ-करि-मअरासण्ण-दिण्ण-मेह-मुह-वडं ॥२२

[मरकत-मणि-प्रभाहत-हरितायमान-जरठ-प्रवाल-किसलयम् ।
सुर-गज-गन्धोद्धावित-करि-मकरासन्न-दत्त-मेख-मुख-पटम् ॥ ]

मरकतमणिप्रभाहतत्वाद्धरितायमानो जरठः प्रौढः प्रवालाङ्कुरो यत्र तं, प्रौढत्वेन द्युतिमत्ता सूचिता । सुरगजस्य मदगन्धेन उद्धावितस्य करिमकरस्य चासन्ने मध्ये दत्तो मेघ एव मुखपटो येन । **केचित्तु** सुरगजानां गन्धेन उद्धावितस्य करिमकरस्य जलहस्तिन आसन्ने सुरगजानां स्वच्छन्दपानाय दत्तो मेघ एव मुखपटो येन ॥२२॥

1 Cf. K's version (प्रविजृम्भितं) in G (fn. 20a) 2 ०सं Ms.
3 Also CK, ०फुडिअ० GB. 4 ०णिअर० GB. 5 ०च्छन्दिअ० Ms.
6 ०ठ० Ms.

मणिवालअं तीर-लआहर-प्पहोहासिअ-रम्म-णिवालअं ।
घण-वारिअं वेलालिङ्गणेण चडुलं महि-लङ्घण-वारिअं ॥२३॥

। [1]उवगलिअअं ।

[मणि-पालकं तीर-लता-गृह-प्रभावहसित-रम्य-नृपालयम् ।
घन-वारिदं वेलालिङ्गनेन चटुलं मही-लङ्घन-वारितम् ॥ ]

। उपगलितकम् ।

उपगलितकद्वयमाह मणिवालअमिति । मणीन् पालयति संवर्धयतीति मणिपालकं, अथवा मणीन् पान्तीति मणिपा यक्षास्तेषामालयं तीरलतागृहप्रभयाऽवहसितो रम्यो नृपालयो हर्म्यादिर्येन तं, घना एव तावद्वारिदास्तेभ्योऽपि वारि ददातीति अहो महिमेत्यर्थः । चटुलं चञ्चलमतो वेलालिङ्गनेन जलोल्लासनेन मह्या यल्लङ्घनमाक्रमणं ततो वारितं स्थितिकारिणा हरिणेति श्रुतिः । अथवा वेलायास्तीररेखायाः प्रियाया इवालिङ्गनेन महीलङ्घनवारितम् ॥२३॥

समि-मऊह-[2]पडिवेल्लण-पक्खुब्भन्तअं
सञ्च[F9a]रन्त-धरणीहर-पक्खुब्भन्तअं ।
धीरअं [3]सआ मुहल-[4]जलअअ-विज्जन्तअं
अट्ठिअञ्च वलआणल[5]पअविज्जन्तअं ॥२४॥

। गलिअअं ।

[शशि-मयूख-प्रतिप्रेरण-प्रक्षुभ्यमाणं, सञ्चरद्-धरणीधर-पक्षोद्भ्रान्त-कम् ।
धीरकं सदा मुखर-जलदक-पीयमानं, अस्थितं च वडवानल-प्रताप्यमानम् ॥ ]

। गलितकम् ।

---

1 Name of the metre of this verse. 2 ०पेल्लण० CB.
3 सइ GB. 4 ०घण-पअ० GB. 5 बलआमुहाण० Ms ; वलवाणल० GB.

तरङ्गोल्लासप्रेरितानां शशिमयूखानां प्रतिप्रेरणेन क्षुभ्यमाणं, सञ्चरतां धरणीधराणां पक्षैरुद्भ्रान्तम् उद्गतं कं जलं यस्य तं, मुखरैर्गर्जद्भिर्जलदैः सदा पीयमानम्, अस्थितश्चानवरतश्च वडवानलेन प्रताप्यमानं, तथापि धीरं धैर्याधिकमित्यहो महिमेत्याशयः ॥२४॥

णिअअ-विसाणल-पअविअ-मुत्ता-णिअर-परिघोलमाण-विसहरं ।
मीण-गइ-मग्ग-पाअड-सेआलोमइल-मणि-सिला-संघाअं ॥२५॥

[निजक-विषानल-प्रतप्त-मुक्ता-निकर-परिघूर्णमाण-विषधरम् ।
मीन-गति-मार्ग-प्रकट-शैवालावमलिन-मणि-शिला-संघातम् ॥ ]

[F9a] निजकविषानलेन प्रतप्तास्तापशान्तये मुक्तानिकरेषु परिघूर्णमाना[1] विषधरा यत्र तं, मीनानां गतिमार्गैः प्रकटः शैवालावमलिनो मणिशिलासंघातो यत्र तम् ॥२५॥

सरि-संकुलं[2] महुमह-वल्लहाइ लच्छीअ सार-सरिसं कुलं ।
महि-लाइअं णइ-मुह-पत्थिओणिअत्तन्त[3]-वेला-महिलाइअं ॥२६॥

[सरित्-संकुलं मधुमथन-वल्लभायाः लक्ष्म्याः सार-सदृशं कुलम् ।
मही-लागितं नदी-मुख-प्रस्थितापनिवर्तमान-वेला-महिलायितम् ॥ ]

गलितकद्वयमाह । सरिद्भिः संकुलं व्याप्तं मधुमथनवल्लभाया लक्ष्म्याः सारसदृशमुत्कर्षानुरूपं कुलमभिजनं सम्पदनुरूपं वा कुलं, सन्धारणार्थं मह्यां लागितं मह्यां लग्नमित्यर्थः । नद्याः सख्या इव प्रस्थितया निवृत्तया च वेलया महिलायितं नायिकयेवाचरितं, यत्र शब्दच्छलेन नदीति सखी सूच्यते तन्मुखेन प्रस्थिता पश्चादपनिवृत्ता वेलेति वेलाया महिलासाधर्म्यम् ॥२६॥

1 ॰माणा Ms. 2 ॰सङ्कु॰ Ms. 3 ॰त्तिअ॰ GB.

णइ-सहस्स-परिउम्बण[1]-णाअ-रसन्तअं
पलअ-मेह-सम-दूसह-णाअ-रसन्तअं ।
पेलवेण पवणेण[2] महुर-संचारिअं
मउअ-मअ-क्खलन्तं व महु-रसं चारिअं ॥२७॥

[नदी-सहस्र-परिचुम्बन-ज्ञात-रसान्तकं, प्रलय-मेघ-सम-दुःसह-नाद-रसत्-कम् । पेलवेन पवनेन मधुर-संचारितं, मृदुक-मद-स्खलन्तं इव मधु-रसं चारितम् ॥]

नदीसहस्रपरिचुम्बनेन ज्ञातोऽनुभूतो रसस्य कृत्याकृत्यस्यान्तो येन, ज्ञातो रसस्यान्तोऽवधिर्येन, यद्वा नदीचुम्बनाज् ज्ञातरसं ततं विस्तृतम् । प्रलयमेघसमं यथा स्यात्तथा दुःसहैर्नादै रसच्छब्दायमानं कं जलं यस्य । पेलवेन मृदुना पवनेन मधुरं मसृणं चारु वा यथा स्यात्तथा सञ्चारितं तरलीकृतम्, अतो मधुरसं मदिरारसं चारितं पायितं सन्तं, मृदुकेन मन्देन मदेन मत्ततया स्खलन्तमिव । अन्योऽपि मधुपानशाली स्त्रीनिवहं चुम्बति, उच्चैः शब्दायते, स्खलति च । भक्षणेऽपि चरधातुः ॥२७॥

कसण-मणि-च्छाआ-रस-रज्जन्तोवरि-परिप्पअन्त[3]-प्फेणं ।
हरि-णाहि-पङ्कज-क्खलिअ-सेस-णीसास-जणिअ-विअडावत्तं
॥२८॥

[कृष्ण-मणि-च्छाया-रस-रज्यमानोपरि-परिप्लवमान-फेनम् ।
हरि-नाभि-पङ्कज-स्खलित शेष-निःश्वास-जनित-विकटावर्तम् ॥]

कृष्णमणीनां छाया द्युतिः सैव रसो नीलिकाद्रव इव तेन रज्यमानः परिप्लवमानः फेनो[4] यत्र तम् । एतेन कृष्णमणीनां प्राचुर्यमुक्तम् । अतिपृथौ हरेर्नाभिपङ्कजे स्खलितेन शेषस्य निश्वासेन जलमुच्छ्रियोत्तिष्ठता जनितो विकट आवर्तो यत्र तम् ॥२८॥

---

1 पडि० GB. 2 पणवेण Ms.
3 ०प्पवन्त० GB. 4 ०ण Ms.

सअरङ्ग-अं विद्दुम-पल्लव-प्प[F9b]हा-घोलिर-सासअ-रङ्गअं ।
रवि-राइअं धरणि-अलं व[1] मन्दराअड्ढण-दूर-विराइअं ॥२९॥

[सतरङ्ग-कं विद्रुम-पल्लव-प्रभा-घूर्णनशील-शाश्वत-रङ्गकम् ।
रवि-रञ्जितं धरणी-तलं इव मन्दराकर्षण-दूर-विलीनायितम् ॥]

गलितकद्वयमाह । सतरङ्गं कं पानीयं यस्य तं सतरङ्गत्वादेव विद्रुमपल्लवप्रभया घूर्णनशीलः प्रसृमरः शाश्वतोऽनश्वरो रङ्गो रागो यस्य तम्, उदयरागरक्तेन रविणा रञ्जितं रश्मिना करेण विसारिणा भरितविवरं, मन्दरस्याकर्षणेनोत्कटेन इव दूरं 'विरायितं' विलीनीकृतं धरणीतलमिव । लीनसमानार्थो विरशब्दो देशीयः । तरङ्गैः सहितं धरणीतलमिव मन्दरस्याकर्षणेनोत्पाटनेन[2] दूरं विलीनायितं निखातम् ॥२९॥

चिर-परूढ-[3]सेवाल-सिला-हरिअन्तअं
पअण[4]-भिण्ण-रअ[5]-दारुण-णीहरिअन्तअं ।
महुमहणस्स णिद्दा-समए वीसामअं
पलअ-दड्ढ-विज्झाअ-तलुव्वी-सामअं ॥३०॥

[चिर-प्ररूढ-शैवाल-शिला-भरितान्तं, पवन-भिन्न-रव-दारुण-निह्रादितं ततम् ।
मधुमथनस्य निद्रा-समये विश्रामदं, प्रलय-दग्ध-विध्मात-तलोर्वी-श्यामकम् ॥]

[F5a] चिरप्ररूढानि शैवालानि यासु शिलासु ताभिर्भरितोऽन्तो यस्य तं, पवनेन भिन्नरवं विस्तारितध्वनिं दारुणं निह्रादितं, ततं विस्तृतं, मधुमथनस्य विष्णोर्निद्रासमये विश्रामदं, प्रलयदग्धा विध्माततला निर्वाणा या उर्वी तद्वत् श्यामं [6]मसीमलिनोर्वीसदृशमित्यर्थः ॥३०॥

---

1 ०लम्व Ms. 2 ०वर्षणोत्पा० Ms. 3 ०श्राल० GB.
4 पवण० GB. 5 ०रव० GB. 6 ०मलिनउर्वी० Ms.

असुरोवडण-विहाडिअ[1]-जल-विवरुट्ठिअ-रसाअलुम्हा-णिवहं ।
महण-वस-भिण्ण-भामिअ-दीवन्तर-लग्ग-मन्दर-अड-क्खण्डं ॥३१॥

[असुरावपतन-विघाटित-जल-विवरोत्थित-रसातलोष्म-निवहम् ।
मथन-वश-भिन्न-भ्रमित-द्वीपान्तर-लग्न-मन्दर-तट-खण्डम् ॥]

असुराणामधः पतनेन विघटितस्य जलस्य विवरेणोत्थितो रसातलस्योष्मनिवहो[2] यत्र तं, मथनस्य वशेन मथ्यमानजलावर्तनेन भिन्नानि विदीर्णानि भ्रमितानि द्वीपान्तरेषु लग्नानि मन्दरतटखण्डानि यत्र तम् ॥७१॥

[3]मुत्तालअं तिअस-विइण्ण-जीविअ-सुहामअ-जम्मुत्तालअं ।
वित्थिण्णअं पलउव्वेल्ल-सलिल-हेलामलिउव्वि-त्थिण्णअं ॥३२॥

[मुक्तालयं त्रिदश-वितीर्ण-जीवित-सुखामृत-जन्मोत्तालकम् ।
विस्तीर्ण-कं प्रलयोद्वेल-सलिल हेला-मृदितोर्वी-स्त्यानकम् ॥ ]

गलितकद्वयमाह । मुक्तानामालयं त्रिदशेभ्यो वितीर्णं दत्तं जीवितसुखं येनामृतेन तस्य जन्मना उत्तालकमुद्भटं प्रख्यातमित्यर्थः, विस्तीर्णकं प्रलये उद्वेलैरुल्लसितैः सलिलैर्हेला-मृदितया उर्व्या स्त्यानं घनीभूतं कर्दमितं कं पानीयं यस्य तम् । **केचित्तु**—मुक्तानामालय-माकरं त्रिदशेभ्यो वितीर्णं यज्जीवितसुखममृतं तस्य जन्मना उत्तालं ख्यातं, यद्वा त्रिदशेभ्यो वितीर्णं दत्तं जीवितसुखं चिरजीवित्वरूपं येनामृतेन तस्य जन्मना ख्यातम् ॥३२॥

एस अमअ-संभवो[4]त्ति संभाविअं
णह-णिहं तमेण व चउद्दिसं भाविअं ।
गुण-महग्घ-सारं वसुहा-रक्खाणिअं
णिअ-जस-णिहाणं मिव[5] सअर[6]-क्खाणिअं ॥३३॥

---

1 ०विहट्टिअ० GB. 2 ०तलस्य ऊ० Ms. 3 This verse is placed as verse No. 30 in GB. as in R. 4 सम्भ० Ms. 5 ०म्मिव Ms. 6 सअ० omitted in Ms.

[एष अमृत-रस-संभव इति संभावितं, नभो-निभं तमसा इव चतुर्दिशं भावितम् ।
गुण-महार्घ-सारं वसुधा-रक्षानीतं, निज-यशो-निधानं इव सगर-खानितम् ॥]

एष अमृतरसस्य संभव इति संभावितं सादरं ख्यापितं, स्वच्छश्यामविततत्वान्न[1]भोनिभम्, अतएव तमसेव चतुर्दिशं समन्ततो भावितं रञ्जितं गुणैर्महार्घसारं वसुधारक्षार्थमानीतं प्रजापतिनेत्यर्थात् । निजयशोनिधानमिव सगरेणाश्वमेधिकतुरगान्वेषिभिः पौत्रैः खानितं [2]तद्द्वारेण तस्य यशोनिर्गमादियमुत्प्रेक्षा ॥३३॥

पवणुग्गाहिअ [F 10a]-जल-लव-णिवह-पहम्मन्त-मुहल-तीर-
तल-वणं ।
ससि-सेल-मऊहोज्झर-परिवड्ढिअ-सलिल-मलिअ-[3]पुलिणु-
च्छङ्गं ॥३४॥

[पवनोद्ग्राहित-जल-लव-निवह-प्रहन्यमान-मुखर-तीर-ताल-वनम् ।
शशि-शैल-मयूख-निर्झर-परिवर्धित-सलिल-मृदित-पुलिनोत्सङ्गम् ॥]

[F 10a] पवनेनोद्ग्राहितैरुत्क्षिप्तैर्जललवनिवहैः प्रहन्यमानमतएव मुखरं तेन सह कलहायमानं तीरतालवनं यत्र, शशिनः शैलस्य मयूखेन निर्झरेण परिवर्धितैः सलिलैर्मृदितः पुलिनस्य तोयोत्थितद्वीपस्योत्सङ्गो येन तम् ॥३४॥

मन्दर-मेह-क्खोहिअ-ससि-कलहंस-[4]पडिमुक्क-सलिलुच्छङ्गं ।
मरगअ-[5]सेआलोवरि-णिसण्ण-तुण्हिक्क-मीण-चक्काअ-जुअं ॥३५॥

[मन्दर-मेघ-क्षोभित-शशि-कलहंस-प्रतिमुक्त-सलिलोत्सङ्गम् ।
मरकत-शैवालोपरि-निषण्ण-तूष्णीक-मीन-चक्रवाक-युगम् ॥]

मन्दरमेघक्षोभितेन शशिकलहंसेन प्रतिमुक्तः सलिलोत्सङ्गो यस्य, तुल्याकारत्वान्मरकतमेव शैवालं तदुपरिनिषण्णं तूष्णीकं निःशब्दं मीनाकारस्य चक्रवाकस्य युगं यत्र तम् ॥३५॥

---

1 ०नभो Ms. 2 तत्-द्वा० Ms. 3 पवणु० B, evidently a misprint. 4 ०परि० GB. 5 ०सेवा० GB.

पुण्ण-णइ-सोत्त-सण्णिह-जल-मज्झ-मुणिज्जमाण[1]-चलिअ-तिमि-वहं[2]।
वलआमुह-मूल-समोसरन्त[3]-मसि-रासि-कज्जलिअ[4]-पाआलं ॥३६॥
([5]कु)

[पुण्य-नदी-स्रोतः-सन्निभ-जल-मध्य-ज्ञायमान-चलित-तिमि-पथम्।
वडवामुख मूल-समपसरन्-मसि-राशि-कज्जलित-पातालम् ॥ ]

दीर्घत्वाच्छुक्लत्वाच्च पुण्यनद्या गङ्गायाः स्रोतःसन्निभः, विशालत्वाद्दीर्घत्वाच्च पूर्णनदीस्रोतः-सन्निभो वा, जलमध्ये ज्ञायमानश्चलितानां सवेगं धावितानां तिमीनां पन्था यत्र तं, वडवा-मुखाद् वडवाग्नेः सकाशात् मूले समपसरद्भिर्मसिराशिभिर्विविधजलजन्तुदाहसम्भवाभिः कर्दमितं, पाठान्तरे कज्जलितं, पातालं येन तम् ॥३६॥

तो उग्घाडिअ-मूलो पवअ-बलक्कन्त-महिअलुद्धुच्छलिओ[6]।
दिट्ठीअ दिट्ठ-सारो णज्जइ तुलिओ त्ति राहवेण समुद्दो ॥३७॥

[ततः उद्घाटित मूलः प्लवग-बलाक्रान्त महीतलोर्ध्वोच्छलितः।
दृष्ट्या दृष्ट-सारः ज्ञायते तुलितः इति राघवेण समुद्रः ॥ ]

ततः समुद्रदर्शनानन्तरं प्लवगबलेनाक्रान्तेन महीतलेनोर्ध्वोच्छलितः, अतएव उद्-घाटितमूलः प्रकाशिततलः, अतो ज्ञातसारो दृष्टतत्त्वः समुद्रो राघवेण दृष्ट्या तुलितः परिकलित इति ज्ञायते। इयानेवास्य सारः सुगम एवायमित्येवं रामेण तुलित इति दृष्टिप्रसादेनैव लक्ष्यत इत्यर्थः। एतेन रामस्य महत्त्वोत्कर्षः सूचितः ॥३७॥

कालन्तर-परिहुत्तं दट्ठूण वि अप्पणो महोअहि-सअणं।
जनअ-सुआ-बद्ध-मणो रामो [7]पलअ-घरिणिं ण सम्भरइ सिरिं ॥३८॥

---

1 ०णिज्झ० Ms. 2 तिमि-णि० ; So RC. 3 ०विसमो० Ms.
4 ०कद्दमिअ० Ms. marginally 5 The end of the कुलक consisting of 36 verses is indicated here. 6 ०द्धुच्छ Ms.
7 पणअ० Ms. marginally.

[कालान्तर-परिभुक्तं दृष्ट्वा अपि आत्मनः महोदधि-शयनम् ।
जनक-सुता-बद्ध-मनाः रामः प्रलय-गृहिणीं न संस्मरति श्रियम् ॥ ]

कालान्तरे संहारकाले परिभुक्तमात्मनो महोदधिरूपं शयनं दृष्ट्वापि, स्मृतिबीजे सत्यपि इति भावः, जनकसुताबद्धमना रामः प्रलयगृहिणीमिति विपत्कालेऽप्यपरित्यक्तपरिचर्यां श्रियं न स्मरति । अत्र हेतुर्जनकसुताभिमुखमना इति स्मृतिबीजशय्यादर्शनसत्त्वेऽपि तस्या अस्मरणात् सीतानुरागस्यौत्कव्यमुक्तम् । प्रणयगृहिणीत्यपि क्वचित् पाठः, जनकसुतामुखमना अपि ॥३८॥

ईसि-जल-पेसिअच्छं विहसन्त-विइण्ण-पवअ-वइ-संलावं ।
अदिट्ठे व[1] ण मुक्कं दिट्ठे उअहिम्मि लक्खणेण वि धीरं ॥३९॥

[ईषज्-जल-प्रेक्षि(षि)ताक्षं विहसद्-वितीर्ण-प्लवग-पति-संलापम् ।
अदृष्टे इव न मुक्तं दृष्टे उदधौ लक्ष्मणेन अपि धैर्य्यम् ॥]

शक्य एवायं लङ्घयितुमित्यवज्ञया ईषज्जलप्रेषिताक्षं, यस्मादेवं विहसता हनूमता वितीर्णः प्लवगपतेः संलापोऽयमसौ सागरो दुस्तरः श्रूयत इत्येवमादिव्याहारो यत्र तद्धैर्यम्, अदृष्टे उदधौ यथा न मुक्तं तथा दृष्टेऽपि च मुक्तं लक्ष्मणेनापि न केवलं तेन, अर्थाद्रामेणापीत्यर्थः । दृष्टेऽप्युदधावदृष्ट इव लक्ष्मणेन न मुक्तम् । अपिर्भिन्नक्रमे । न केवलं रामेण ॥३९॥

हरिस-णिराउण्णमिअ-पीणअरालोअ-पाअडोवरि-भाअं ।
पवआहिवो[F10b]वि पेच्छइ अद्धुपइअं व रुम्भिऊण[2] सरीरं ॥४०॥

[हर्ष-निरायतोन्नामित-पीनतरालोक-प्रकटोपरिभागम् ।
प्लवगाधिपः अपि प्रेक्षते अर्धोत्पतितं इव रुद्ध्वा शरीरम् ॥]

[F10b] सुतरत्वाध्यवसायजनितेन हर्षेण निरायतश्च तत्र पीनतरालोकेन स्फुरद्रूपत्वेन प्रकट उपरिभागो यस्य एवम्भूतश्चेति तथाभूतं शरीरं निरायतत्वात् समुद्रलंघनार्थमर्धोत्पतितमिव रुद्ध्वा प्लवगाधिपोऽपि प्रेक्षते, अर्थात् समुद्रम् । हर्षेण लङ्घनरभसेन निरायतं यथा स्यात्तथा उन्नामित उन्नामितत्वादधिकविततहृदयः, अधिकविततहृदयत्वेन पीनतरो विशाल आलोकेन

1 व्व GB.

2 ०हन्धि० B's wrong alternative reading.

स्फुरद्रूपतया प्रकट उपरिभागो यस्य तदात्मशरीरं समुद्रलङ्घनार्थमर्धोत्पतितमिव रुद्धा प्लवगसैन्यबलापेक्षया नियम्येति भावः, प्लवगाधिपःसुग्रीवोऽपि प्रेक्षते समुद्रमिति प्रकृतत्वात् ॥४०॥

**गरुलेण[1] व जलण-णिहं समुद्द-लङ्घण-मणेण वाणर-वइणा ।**
**अवहोवास-पसरिअं पक्ख-विआणं व पुलइअं कइ-सेण्णं ॥४१॥**

**[गरुडेन इव ज्वलन-निभं समुद्र-लङ्घन-मनसा वानर-पतिना ।**
**उभय-पार्श्वे-प्रसृतं पक्ष-वितानं इव प्रलोकितं कपि-सैन्यम् ॥]**

अमृताहरणावसरे गरुडेनेव समुद्रलंघनमनसा वानरपतिना कनकवर्णत्वाज् ज्वलननिभम्, उभयपार्श्वप्रसृतं पक्षवितानमिव पक्षयोर्विस्तारमिव कपिसैन्यं प्रलोकितं, कः किं व्यवस्यतीति ज्ञातुमितिभावः ॥४१॥

**साअर-दंसण-हित्था अक्खित्तोसरिअ-वेवमाण-सरीरा ।**
**सहसा लिहिअ व्व ठिआ णिप्पन्द-णिराअ-लोअणा कइ-**
**णिवहा ॥४२॥**

**[सागर-दर्शन-त्रस्ताः आक्षिप्तापसृत-वेपमान-शरीराः ।**
**सहसा लिखिताः इव स्थिताः निष्पन्द-निरायत-लोचनाः कपि-निवहाः ॥]**

सागरदर्शनेन त्रस्ताः, पूर्वं भयादपसृतं लज्जया पश्चादाक्षिप्तं[2] वेपमानं शरीरं यैस्ते तथा, लिखिता इव निर्व्यापारत्वाच्चित्रन्यस्ता इव, अतो दुस्तरोऽयं समुद्र इति विस्मयान्निष्पन्दानि दरसंकुचितत्वान्निरायतानि दीर्घाणि लोचनानि येषां ते कपिनिवहाः स्थिताः । 'हित्थ' व्रीडित-भीतयोर्देशो । अन्यथ आक्षिप्त[3]मनाकृष्टं सदपसृतमात्मनैवापसृतमिति यावत् तथा तद्वेपमानं शरीरं यस्य, तथा निष्पन्दनिरायतलोचना[4] विस्मयेनेति भावः ॥४२॥

---

1 ०डेण GB. 2 It appears अपसृतं and आक्षिप्तं should change their places in the commentary. 3 अक्षिप्तं Ms. 4 ०नानि Ms.

पेच्छन्ताण [1]अ उअहिं[1] चडुलो वि अउव्व-विम्हअ-रस-त्थिमिओ।
हणुमन्तम्मि[2] णिवडिओ सगोरवं[3] वाणराण लोअण-णिवहो ॥४३॥

[प्रेक्षमाणानां च उदधिं चटुलः अपि अपूर्व-विस्मय-रस-स्तिमितः।
हनूमति निपतितः सगौरवं वानराणां लोचन-निवहः ॥]

उदधिं प्रेक्षमाणानाञ्च वानराणां स्वभावतश्चटुलोऽपि चञ्चलोऽपि, अपूर्वमननुभूतत्वादपूर्वेण विस्मयरसेन स्तिमितो निश्चलो लोचननिवहः। अहो माहात्म्यमेतस्यैतादृशं दुष्करं कर्मानेन कृतमिति सगौरवं यथा स्यात्तथा हनूमति निपतितः। अन्यत्रापि रसेन जलेन स्तिमितस्य निश्चलत्वं दृश्यते ॥४३॥

उअहिं अलङ्घणिज्जं दट्ठूण गआगअञ्च मारुअ-तणअं।
मोहन्धआरिएसु वि मूढो[4] भमइ हिअएसु सिं उच्छाहो[5] ॥४४॥

[उदधिं अलङ्घनीयं दृष्ट्वा गतागतं च मारुत-तनयम्।
मोहान्धकारितेषु अपि मूढः भ्रमति हृदयेषु तेषां उत्साहः ॥]

उदधिमलङ्घनीयं दृष्ट्वा तमतिक्रम्य गतागतं मारुततनयं च दृष्ट्वा, 'सिं' तेषां वानराणां मोहेन विषादकृतवैचित्त्येनान्धकारितेषु प्रतिपत्तिशून्येष्वपि हृदयेषु मूढो निश्चयरहित उत्साहो जलधिलङ्घनाध्यवसायो भ्रमति, अस्मज्जातीयेन लङ्घितोऽयमिति बहुलान्धकारे खद्योत इव दृष्टनष्ट इव भवति। भ्रमति स्थैर्यं न लभते। हनूमत्कृतलङ्घनदर्शनादुत्साह उत्पद्यते, अलंघनीय-दर्शनाच्चास्थिरीभवतीत्यर्थ इत्यपि केचित् ॥४४॥

तो ताण हअ-च्छाअं णिच्चल-लोअण-सिहं पउत्थ-पहावं[6]।
आलेक्ख-पईवाण व णिअअं [7]पअइ-चडुलत्तणं पि[8] विअलिअं ॥४५॥

---

1 Cf. CS; but समुद्दं GB. 2 °न्तिम्मि Ms. 3 सगारवं G.
4 Cf. CR vi K; but गूढो GB. 5 उत्साहो Ms. 6 °पआवं GB.
7 पइइ° GB.

**[ततः तेषां हत-च्छायं निश्चल-लोचन-शिखं प्रोषित-प्रभावम् ।
आलेख्य-प्रदीपानां इव निजकं प्रकृति-चटुलत्वं अपि विगलितम् ॥]**

ततः समुद्रदर्शनानन्तरं तेषां वानराणां हता छाया कान्तिः पक्षे द्युतिर्यत्र, निश्चलानि लोचनानि शिखा इव यत्र, प्रोषितः प्रतापः प्रभावः स्वभावदाहशक्तिश्च यत्र तद्यथा स्यादिति सर्वं क्रियाविशेषणम् । आलेख्यप्रदीपानामिव निजकमात्मीयं नित्यञ्च प्रकृतिचटुलत्वमपि विगलितं दुष्करव्यापारोपनिपातचिन्तयेति भावः ॥४५॥

**कह वि जवेन्ति[1] पवङ्गा समुद्द-दंसण-विसाद-विमुहिज्जन्तं ।
गलिअ-गमणाणुराअं पडिवन्थ-णिअत्त-लोअणं[F11a]
अप्पाणं ॥४६॥**

**[कथं अपि यापयन्ति प्लवङ्गाः समुद्र-दर्शन-विषाद-विमुह्यन्तम् ।
गलित-गमनानुरागं प्रतिपथ-निवृत्त-लोचनं आत्मानम् ॥ ]**

राअ सिरि-पवरसेणस्स एत्थ रावणवहे महाकव्वम्मि ।
साअर-वण्णण-सण्णो वीओो आसासओो परिसमत्तो ॥

[ राज-श्री-प्रवरसेनस्य अत्र रावणवधे महाकाव्ये ।
सागर-वर्णन-संज्ञो द्वितीयः आश्वासकः परिसमाप्तः ॥ ]

प्लवङ्गाः कथमपि प्रभुभयलज्जादिभिः समुद्रदर्शनविषादेन विमुह्यन्तं विमुखीक्रियमाणमात्मानं यापयन्ति धारयन्ति । गलितगमनानुरागं कथमिदं [2]ज्ञायतामित्याह—प्रतिपथनिवृत्तलोचनमिति येन प्रतिनिवृत्य गृहं गम्यते स प्रतिपथस्तेन निवृत्तं लोचनं यस्य ॥४६॥

इति दशमुखवधटीकायां द्वितीय आश्वासः ॥

---

1 Cf. C; but टपेन्ति GB. 2 ०तमि० Ms.

# तइओ आसासओ

तो ते कइ-माअङ्गे रूढ-विसाअ-मअ-[1]भामिओमीलन्ते ।
आलाणक्खम्भेसु[2] व बाहूसु[3] सिला-अल-ट्ठिएसु णिसण्णे ॥१॥
आहासइ सुग्गीवो[4] णिअअ-रवाहि फुड-णिन्त[5]-जस-णिग्घोसं ।
धीराहि सार-गरुअं दन्तुज्जोआहि णिम्मलत्थं वअणं ॥२॥

( जुग्गअं[6] । )

[ततः तान् कपि-मातङ्गान् रूढ-विषाद-मद-भ्रामितावमीलतः ।
आलान-स्तम्भेषु इव बाहुषु शिला-तल-स्थितेषु निषण्णान् ॥
आभाषते सुग्रीवः निजक-रवात् स्फुट-निर्यद्-यशो-निर्घोषम् ।
धैर्यात् सार-गुरुकं दन्तोद्योतात् निर्मलार्थं वचनम् ॥ युग्मकम् । ]

[ F 11a ] ततस्तान् कपीन् मातङ्गानिव रूढेन विषादेन मदेनेव भ्रामितान् घूर्णितान् सतोऽवमीलतो बाहुषु शिलातलस्थितेष्वालानस्तम्भेष्विव स्वदेहधारणाक्षमत्वान्निषण्णान् न्यस्तदेहभारान् सुग्रीव आभाषते इति सम्बन्धः ॥१॥

निजकरवात् स्वयमुच्चारितवचनध्वनिमपेक्ष्य शौर्यातिशयप्रकाशकत्वात् स्फुटं निर्यन् यशोनिर्घोषो यत्र तत्तथा, धैर्यात्[7] सारेणार्थवत्तया गुरुकमतिनिर्मलादपि निर्मलोद्योतवद् युक्तिपरिशुद्धत्वात् दन्तोद्योतादपि निर्मलोऽर्थो यत्र युक्तिसिद्धत्वादितिभाव इति **केचित्**। निर्मलार्थं वचनं सुग्रीव आभाषते एतान्याभाषणक्रियाविशेषणानि वा ॥२॥

धरणि-धरणे भुअ च्चिअ महणम्मि सुरासुरा खअम्मि समुद्दा ।
हन्तव्वम्मि दहमुहे एण्हिं[8] तुम्हे त्थ महुमहस्स सहाआ ॥३॥

[धरणि-धरणे भुजाः एव मथने सुरासुराः क्षये समुद्राः ।
हन्तव्ये दशमुखे इदानीं यूयं स्थ मधुमथनस्य सहायाः ॥ ]

---

1 भविश्रो० GB. 2 ०त्थम्भेसु Ms. 3 बाहुसु Ms. 4 ०ग्गीश्रो G. 5 ०णिज्जन्त Ms. 6 कु (i.e.कुलकं) Ms. 7 धैर्य Ms. 8 ०ण्हिं Ms and B.

धरणिधरणे मधुमथनस्य भुजा एव सहाया मथने सुरासुराः, क्षये समुद्राः, इदानीं दशमुखे हन्तव्ये यूयमेव सहायाः स्थ । यथा भुजादिसहायवतोऽस्य कार्यसिद्धिरव्यभिचारिणी तथा भवदादिकृतसाहाय्ये [1]प्रीत्युत्साहस्थाने विषादो न युज्यत इति भावः । यद्वा धरणीधरणादिषु स्वत एव विष्णोः सामर्थ्येऽपि यथा भुजादिभिरनौदास्येनोद्धरणादियशो लब्धं तथेदानीं दशमुखवधे भवद्भिरपि लभ्यतामित्यभिप्रायः ॥३॥

मा सासअ-सोडीरं कह वि णिअत्तन्त-समुह[2]-सण्ठविअ-पअं ।
आअअ-वित्थक्कन्तं पणअन्तं व सुअणं परम्हाह[3] यसं ॥४॥

[ मा शाश्वत-शौटीर्यं कथं अपि निवर्तमान-सम्मुख-संस्थापित-पदम् ।
आगत-वितिष्ठमानं प्रणयन्तं इव सुजनं परांमुखयत यशः ॥ ]

प्रणयन्तं प्रार्थयमानं सुजनमिव यशो मा 'परम्हाह' मा परांमुखय । सुजनयशसोस्तुल्यं विशेषणमाह शाश्वतशौटीर्यं स्थिरगर्व्यं सीतान्वेषणप्रेषितेषु वृथानिवृत्तेषु कपिषु निवर्तमानं हनूमता ज्ञातायां सीतावार्तायां संमुखसंस्थापितपदम् । सुजनोऽपि याच्ञालज्जया निवर्तमानः कुटुम्बरक्षणादिनिर्वाहालोचनया कथमपि संस्थापितपदो भवति । रामेण सह रिपुनिग्रहार्थमागतेष्वस्मास्वागतमीदृग्विषादोदयात् 'वित्थक्कन्तं' वितिष्ठमानम् । सुजनोऽपि प्रार्थ्यमानोऽपि कथं मया दीनं वक्तव्यमिति [4]वितिष्ठमानः स्यात् ॥४॥

रक्खस-वह-दुव्वोज्झो[5]कज्जारम्भो समुद्द-लंघण-गरुओ ।
पढुमं च्चिअ रहुवइणा उअरि[6] हिअअ-तुलिओ भरो व्व'णे
लइओ[7] ॥५॥

[ राक्षस-बध-दुर्वाह्यः कार्यारम्भः समुद्र-लंघन-गुरुकः ।
प्रथमं एव रघुपतिना उपरि हृदय-तुलितः भरः इव अस्मभ्यं लगितः ॥ ]

---

1 पीत्यु० Ms. 2 संमु० Ms ; सँमु० B. 3 ०म्हाअ Ms.
4 Ms. omits विति० before ०ष्ठमानः 5 ०ज्झो GB. 6 उवरिं GB.
7 विलइओ GB.

राक्षसवधस्य दुष्करत्वात् तेन दुर्वहः, समुद्रलंघनेन गुरुको दुष्करः, कार्यारम्भो भर इव कार्यस्य सीतोद्धारस्य, आरम्भ उपक्रमः प्रथममेव मैत्रीकरणावसर एव 'णे' अस्मभ्यं रचितो निर्मितः पश्चान्मैत्रीकरणानन्तरं बाह्यसुखास्वादवशीकृतैरस्माभिरेतादृशान्यदुष्करोपकारिणो मित्रस्यावश्यमेव कार्यं निर्वाह्यमिति हृदयेन तुलितः स्थिरीकृतः सन् भर इव लगितः, अतः सर्वैरेवायं भारो वोढुमुचितः ॥५॥

[1]गरुए वि समर-क[F11b]ज्जे विअसन्ते च्चिअ रसं लहन्ति समत्था ।
बद्ध-प्फलम्मि कुसुमे वोलीणो होइ महुअराण अवसरो ॥६॥

[ **गुरुके अपि समर-कार्ये विकसति एव रसं लभन्ते समर्थाः ।**
**बद्ध-फले कुसुमे व्यतिक्रान्तः भवति मधुकराणां अवसरः ॥** ]

[F7a] अतिगुरुत्वदोषनिरासार्थमाह—गुरुकेऽप्यशक्येऽपि समरकार्ये विकसत्येवाधिक्रमशक्यतां गच्छत्येव सति समर्था रसं प्रीतिं लभन्ते, इदानीमेव हि तेषां व्यापारावसरः—एतदेव वैधर्म्येण निदर्शयन्नाह । बद्धफले कुसुमे विकाशापगमान्मधुकराणामवसरो[2] व्यतिक्रान्तो भवति कार्येऽपि निष्पन्ने भटानामिति भावः ॥६॥

तुम्ह च्चिअ एस भरो आणा-मेत्त-प्फलो[3] पहुत्तण-सद्दो ।
अरुणो छाआ-वहणो विसअं विअसन्ति अप्पणा कमल-सरा ॥७॥

[**युष्माकं एव एष भरः आज्ञा-मात्र-फलः प्रभुत्व-शब्दः ।**
**अरुणः छाया-वहनः विशदं विकसन्ति आत्मना कमल-सरांसि ॥** ]

प्रभुर्भवानतस्त्वमेवाग्रणी भवेत्याशङ्कयाह—युष्माकमेवैष भरः, प्रभुत्वशब्दः प्रभुत्वेन व्यपदेश आज्ञामात्रफलः, आज्ञापयति परं प्रभुः, भृत्या एव कुर्वत इत्यर्थः । एतदेव

---

1 This verse does not occur in GB texts. 2 ॰मवसो Ms.
3 ॰फलो Ms.

प्रतिवस्तूपमया दर्शयति—अरुणो रविः, छायां शोभामावहतीति छायावहनः परं विशदं[1] यथा स्यात्तथा कमलसरांसि स्वयमेव विकसन्ति। अथवा छायामातपविरोधिनीमपहन्तीति। **केचित्तु**—अरुणः सूर्यश्छायागहनस्तिमिरात्मकं छायामात्रमपहन्ति। प्रकृते च प्रकारोपदर्शनाद्व्यामोहखण्डनमात्रं प्रभुकार्यमध्यवसायस्त्वनुजीविनिष्पाद्य एवेति भावः ॥७॥

## तरिउं ण हु णवर इमं वेला-वण-वउल-कुसुम-वासिअ-सुरहिं।
## हत्थ-उडेहि समत्था तुम्हे पाउं पि फल-रसं व समुद्दं ॥८॥

**[तरीतुं न खलु केवलं इमं वेला-वन-वकुल-कुसुम-वासित-सुरभिम्।
हस्त-पुटैः समर्थाः यूयं पातुं अपि फल-रसं इव समुद्रम् ॥]**

शक्यमेव प्रभुकार्यं क्रियेत इदं पुनरशक्यमत्राह—'तरिउ'मिति न खलु तरीतुममुं 'तुम्हे' यूयं समर्थाः, किन्तु हस्तपुटैः पातुमपि वेलावनकुसुमवासितमिति लघुता पानयोग्यता दर्शिता फलरसमिति वेति, फलरसोपि पानकादिः कुतूहलाच्चुलुकैः पीयत इति सुकरं तावदिदम् ॥८॥

## चिर-आल-कङ्खिआणं धुआवमाण-णिअलोणमन्त[2]-मुहाणं।
## एसो णवर अवसरो असरिस-समसीस-बन्धण-विमोक्खाणं[3] ॥९॥

**[चिर-काल-काङ्क्षितानां धूतावमान-निगडावनमन्-मुखानाम्।
एष केवलं अवसरः असदृश-समशीर्ष-बन्धन-विमोक्षाणाम् ॥]**

असदृशैः सह गणनयैवापमानितानां मनस्विनां दुष्करकार्यावसर एवाभीष्टसिद्धिरित्याह 'चिर-आले'ति—असदृशसमगणनलज्जया नमन्मुखानां मनस्विनां कदा समरकङ्कटं प्राप्यात्मानमसदृशतुल्यगणनात् पृथक्करोमीतिरूपेण चिरकालकाङ्क्षितानामसदृशेन हीनजनेन या समीकरणस्पर्द्धा सा च बन्धनमिव तद्विमोक्षाणामिति वा। एष 'णवर' केवलोऽवसरः शूराणां कातराणाञ्चात्र व्यक्तिरिति भावः। किंभूतः समयः, धूतोऽपमाननिगडो येन स तथा, धूत इत्याशंसायां भूतवत् क्तः। यद्वा ध्रुवेणापमाननिगडेनावनमन्मुखं यत्र मोक्षे ॥९॥

[1] विषदं Ms. [2] °लुणणमन्त° GB. [3] °ण-मो° Ms.

ते विरला सप्पुरिसा ये अभणेन्ता[1] घडेन्ति कज्जालावे ।
थोअ च्चिअ ते वि दुमा ये अमुणिअ-कुसुम-णिग्गमा देन्ति फलं ॥१०॥

[ते विरलाः सत्-पुरुषाः ये अभणन्तः घटयन्ति कार्यालापान् ।
स्तोकाः एव ते अपि द्रुमाः ये अज्ञात-कुसुम-निर्गमाः ददति फलम् ॥ ]

अथवायमाशयो युष्माकं यत् प्रभोराकर्षणेनागच्छामो नायमर्थोऽस्माभिः प्रतिज्ञात इत्याशङ्क्याह ते विरलाः सत्पुरुषा येऽभणन्तः[2] कार्यालापान् कार्यमित्यालप्यन्त इति कार्य-शब्दवाच्या ये व्यापारास्तान् घटयन्ति कुर्वन्ति । अत्र प्रतिवस्तूपमामाह—स्तोका एव ते द्रुमा येऽज्ञातकुसुमनिर्गमाः कुसुमेनासूचितफलाः फलं ददति ॥१०॥

खिण्णं चावम्मि करं चिर-[3]आलुक्कण्ठिअं अमरिसम्मि मणं ।
मा दा देउ रहुवई बाणाहिमुहिं च बाह-गरुअं दिट्ठिं ॥११॥

[खिन्नं चापे करं चिर-कालोत्कण्ठितं अमर्षे मनः ।
मा तावत् ददातु रघुपतिः बाणाभिमुखीं च बाष्प-गुर्वीं दृष्टिम् ॥ ]

युष्माभिरवक्रियमाणमपि रामेण कार्यमिदं करणीयमेव किन्तु युष्माकमयशस्करमित्याह मा तावद्रघुपतिः सीताविरहात् खिन्नं करं चापे धनुषि चिरकालोत्कण्ठितं जातोत्कण्ठं मनोऽमर्षे रोषे बाष्पेण गुर्वीं दृष्टिं बाणाभिमुखीं बाणावलोकिनीं ददातु ॥११॥

ओवग्गउ तु [F12a]म्ह जसो दसाणण-पआव[4]-पत्थिव-परिग्गहिअं ।
विलुलिअ-समुद्द-रसणं णह-भवणन्तेउरं दिसा-वहु-निवहं ॥१२॥

---

1 °भण° GB. 2 °भनन्तः Ms. 3 °काल° B. 4 °पहा° Ms. but it contains a marginal correction as °आ° in place °हा°

[अववल्गतु युष्माकं यशः दशानन-प्रताप-पार्थिव-परिगृहीतम् ।
विलुलित-समुद्र-रसनं नभो-भवनान्तःपुरं दिग्-वधू-निवहम् ॥ ]

[F12a] दशाननस्य प्रतापः पार्थिव इव तेन परिगृहीतं स्वीकृतं, नभो भवनमिव तदेवान्तःपुरं निवासस्थानं यस्य तं, दिशो वध्व इव तासां निवहं युष्माकं यशो विलुलिता विधुता समुद्ररसना यथा स्यात्तथा अववल्गतु रसनामिव समुद्रं विधूयाक्रम्य लङ्घतां समुद्रावरणरावणप्रतापमभिभूय युष्माकं यशः सर्वासु दिक्षु प्रसरत्वित्यर्थः ॥१२॥

जं साहसं ण कीरइ तं दअमाणेण जीविअं किर दइअं ।
जो[1] अपडिमुक्क-सुकओ सो वि गणिज्जइ जअम्मि जीअन्त-
मुओ ॥१३॥

[यत् साहसं न क्रियते तत् दयमानेन जीवितं किल दयितम् ।
यः अप्रतिमुक्त-सुकृतः सः अपि गण्यते जगति जीवन्-मृतः ॥ ]

नयशाली भवान् कथमीदृशे जीवितसन्देहे प्रवर्तयति स्वयञ्च प्रवर्ततामित्याह । यत् साहसं न क्रियते, तत् किं दयितं वल्लभं जीवितं दयमानेन रक्षता तदपि वृथैव । यत् योऽप्रतिमुक्तसुकृतः प्रत्युपकारेणापरिशोधितोपकारणः सोऽपि जगति जीवन्मृतो गण्यते जीवत्कार्याकरणात् । तस्माद्रामप्रत्युपकारार्थं साहसमेवाश्रयेति भावः ॥१३॥

किं व ण आणह[2] एअं कज्जं परिपेलवं पि जह परिणामे ।
देइ परं सम्मोहं कुसुमं विस-पाअवस्स व मलिज्जन्तं ॥१४॥

[किं वा न जानीथ एतत् कार्यं परिपेलवं अपि यथा परिणामे ।
ददाति परं सम्मोहं कुसुमं विष-पादपस्य इव मृद्यमानम् ॥ ]

विमृष्य स्थिरीकृतोऽपि पुनर्विमर्षो हेय एवेत्याह । किं वा न जानीथैतद्, विश्वविख्यातमेवैतदिति भावः, यथा परिपेलवमपि कोमलमपि सुसारमपीति यावत् कार्यं

1 तो Ms. 2 आणइ Ms.

परिणामे उत्तरकाले मृद्यमानं क्षुभ्यमाणं विषपादपस्य कुसुममिव परं संमोहं कार्यानिश्चयं मूर्च्छाञ्च ददाति। कोमलमपि कार्यं सम्मोहापादकं, किं [1]पुनर्दुर्घटमिति भावः ॥१४॥

विहडन्तं पि समत्थो[2] ववसाअं पुरिस-दुग्गमं णेइ[3] पहं[4] ।
[5]भुअणन्तर-विक्खम्भं दिअसअरो [6]विगलिएक्क-चक्कं व
रहं ॥१५॥

[विघटमानं अपि समर्थः व्यवसायं पुरुष-दुर्गमं नयति पन्थानम्।
भुवनान्तर-विष्कम्भं दिवसकरः विगलितैक-चक्रं इव रथम् ॥]

इदं तावत् सुकरं, दुर्घटमपि घटयन्ति समर्था इति दर्शयन्नाह। विघटमानमपि व्यवसायं कार्यं समर्थः पुरुषदुर्गममन्यपुरुषैर्लङ्घितुमशक्यं पन्थानं नयति, किं पुनः सुघटमित्यर्थः। एकस्माद्भुवनादन्यद्भुवनान्तरं तस्य विष्कम्भमन्तरालं विगलितं विश्लृङ्खलमेकं चक्रं यस्य तं रथं दिवसकर इव। एतेन वर्त्मनो दुर्गमता दर्शिता, तथा रविरथस्यान्यैर्नेतुमशक्यता च। "विष्कम्भो योगभेदे स्याद्विस्तारप्रतिबन्धयो"रिति **विश्वः** ॥१५॥

कअ-कज्जे ताल-समे अइरा पेच्छह भुए अणुत्ताल-समे।
णिहुओ राअस-हाओ पडिवक्खस्स अ अवेउ राअ-सहाओ ॥१६॥

[कृत-कार्यान् ताल-समान् अचिरात् प्रेक्षध्वं भुजान् अनुत्ताल-श्रमान्।
निभृतः (निर्वृतः, निधुतः) राजस-भावः (राग-सहायः) प्रतिपक्षस्य च
अपैतु राज-स्वभावः ॥]

वानरप्रोत्साहनमुखेन कार्यस्यानायाससाध्यत्वमाह। तालतरुतुल्यान्, अतोऽनुत्तालश्रमान्

---

1 पुनदुर्घ० Ms. 2 Cf. CK; ०त्था GB. 3 Cf. CK; ०न्ति GB.
4 वहं GB. 5 भुव० GB. 6 विहडि० GB.

अनुद्घाटायासान् सतः कृतकार्यान् भुजानचिरात्[1] प्रेक्षध्वम्, अनेन भुजेनैव साहसमनुष्ठितमिति सहर्षमालोकयध्वम्। प्रतिपक्षस्य रावणस्य रागो विषयासङ्गः सहायो यस्य स राजस्वभावो राजत्वं निर्वृतः सन्नर्थाद् युष्माभिरपैतु। यद्वा राजसो भावो [2]रजोगुणविकारः। रागसहायो निभृतः सन्नपैतु। निधुतः निःशेषेण धुतो रावणस्य राजस्वभावो राजत्वमपैतु अपगच्छतु। रागसहायः, रागः कामासक्तिः सहायो सहचरो यस्य। अथवा राजस्वभावेन व्यपदेशान्निभृतशङ्को राजसो भाव इत्यर्थः ॥१६॥

**संखोहिअ-मअरहरो ससम्भमुव्वत्त[3]-दिट्ठ-रक्खस-लोओ।**
**वेला-अड-मुज्झन्ते अह णे हिअएण हसइ[4] मारुअ-तणओ ॥१७॥**

**[संक्षोभित-मकरगृहः ससंभ्रमोद्वृत्त-दृष्ट-राक्षस-लोकः।**
**वेला-तट-मुह्यतः अथ अस्मान् हृदयेन हसति मारुत-तनयः ॥]**

सजातीयोत्कर्षं दर्शयन्नमर्षमुद्दीपयन्नाह—आक्रमणभरेणानततटत्वेनोच्छलितत्वात् संक्षोभितसमुद्रः। उत्तीर्य च समुद्रं संभ्रान्तः सन्नुद्वृत्तः परावृत्तो दृष्टो राक्षसलोको येनासौ मारुततनयो हनूमान् 'अह णे'[5] अयमस्मान् वेलातटे मुह्यतो[6] हृदयेन हसत्युपहसति। न तु प्रकाशं नायकगुणयोगात् तस्मादमर्षाधिकमुत्साहो मुह्यते। 'णे' अस्मान् ॥१७॥

**अव्वोच्छिण्ण-पसरिओ अहिअं उद्धाइ फुरिअ-सूर-च्छाओ।**
**उच्छाहो सुभडाणं वि[F12b]सम-क्खलिओ महा-णईण[7] व**
**सोत्तो[8] ॥१८॥**

**[अव्यवच्छिन्न-प्रसृतः अधिकं उद्धावति स्फुरित-सूर्य(शूर) च्छायः।**
**उत्साहः सुभटानां विषम-स्खलितः महानदीनां इव स्रोतः ॥]**

[F12b] समर्थानां कार्यवैषम्यमेवाधिकोत्साहहेतुः। अव्यवच्छिन्नं निरन्तरं प्रसृतः, स्फुरिता शूराणां छाया कीर्तिर्यस्माद्[9], ईदृशः सुभटानामुत्साहो दुष्करे कार्ये स्खलितो

---

1 चिरात् Ms. 2 राज० Ms. 3 संभन्तुव्व० GB. 4 हसइ placed before हिअएण in GB. 5 ने Ms. 6 मुह्या Ms. 7 ०णाइ० Ms. 8 त्ता Ms. 9 ०य Ms.

विघटितः सन्महानदीनां स्रोत इव अधिकम् 'उद्धाइ' वर्धते। नदोस्रोतोऽपि निरन्तरप्रसृतं विषमभूभागे[1] स्खलितं सत् स्फुरितं सूरच्छायमुच्छलितत्वात् प्रतिफलितादित्यकरं यथा स्यात्तथा उद्धावति ऊर्ध्वायते ॥१८॥

**माणेण परिट्ठविआ कुल-परिवाडि-घडिआ अणोणअ-उव्वा।**
**चिन्तेउं पि ण तीरइ ओहुव्वन्ती[2] परेण णिअअ-च्छाआ ॥१९॥**

**[मानेन परिस्थापिता कुल-परिपाटि-घटिता अनवनत-पूर्वा।**
**चिन्तयितुं अपि न शक्यते अवधूयमाना परेण निजक-च्छाया ॥]**

कथं वा वीरवंशप्रसूतैः पराभवोऽपेक्षणीय इत्याह। मानेन पूजया परिस्थापिता स्थिरीकृता, कुलपरिपाट्या वंशानुक्रमेण घटिता सम्बद्धा, अनवनतपूर्वा[3] कुत्राप्यनभिभूता निजकच्छाया विषमाध्यवसायनिर्वाहजा शोभा परेणावधूयमाना चिन्तयितुमपि न शक्यते, किं पुनरनुभवितुमिति भावः। विशेषणसाम्येन छायायां प्रियाधर्मसमाधानात् समाधिरलङ्कारः। प्रकृते स एवास्माकं छायाभिभवो[4] यदुल्लङ्घ्य समुद्रं रावणो न निर्जित इति भावः ॥१९॥

**परिवड्ढन्त-च्छाओ[5] विअलिअ-रण-मच्छरेहि अप्पत्त-गुणो।**
**[6]अअस-क्कन्तोसरिओ कड्ढिज्जइ दुक्करं भडत्तण-सद्दो ॥२०॥**

**[परिवर्धमान-च्छायः विगलित-रण-मात्सर्यैः अप्राप्त-गुणः।**
**अयशः-क्रान्तापसृतः कृष्यते दुष्करं भटत्व-शब्दः ॥]**

अथैतत्कर्मानध्यवसायादपसृता ख्यातिः साहसान्तरेण [7]प्रत्यानेतव्येत्याशङ्क्याह— परिवर्धमाना छाया यस्मात् 'परिवड्ढन्तुच्छाहो'[8] इति क्वचित् पाठः। विगलितो रणमत्सरः समरामर्षो येषां तैरप्राप्तो गुणः [9]सौजन्यसुखानुभवरूपो यस्य, अयशःक्रान्तोऽपसृतो[10] भटत्व-

1 ०भगागे० Ms. 2 ०प्पन्ती GB. 3 ०तन० Ms. 4 ०भवे Ms. 5 ०न्तुच्छाहो GB; but C has our reading which is transcribed by वर्धमान-किरणः by S. 6 अअसं० Ms. 7 ०नेतवे० Ms. 8 ०तु० Ms. 9 सु० Ms. 10 अनु० Ms.

शब्दो भटत्वख्यातिर्दुष्करं यथा स्यात्तथा कृष्यते। अपकीर्तिस्पर्शादपसृतायाः ख्यातेः साहसान्तरेणापि पुनराकर्षणं[1] दुष्करमतोऽयशस्योऽनुत्साहस्त्यज्यतामिति भावः ॥२०॥

[2]आढिअ-समराअमणा वसणम्मि वि[3] ऊसवे[4] अ सम-राअ-
मणा।
[5]अवसाइअ-विसमत्था धीर च्चिअ होन्ति[6] संसए वि
समत्था ॥२१॥

[आदृतसमरागमनाः व्यसने अपि उत्सवे च सम-राग-मनसः।
अवसादित-विषमार्थाः धीराः एव भवन्ति संशये अपि समर्थाः॥]

धैर्यमवलम्बयन्नाह। 'आढिअं' गणनीयं समरागमनं येषां, व्यसने चोत्सवे च समरागं तुल्यानुरागं मनो येषाम्, अवसादितोऽवसन्नीकृतो विषमोऽर्थो यैः। 'अवसाअअ' इति पाठे स्वाधीनीकृतत्वादवशोऽन्यतन्त्र आगतो विषमो दुष्करोऽर्थो येषु। अथवा, अवशं दैवमप्रतिक्रियत्वात् तस्मादागतो विषमोऽर्थो येषाम्। अथवा, अवशाद्दैवादागते विषमे तिष्ठन्तीति तथोक्तास्ते समर्थाः सन्देहे धीरा एव भवन्ति। अथवा, 'आढिअं' आदृतम्, 'आहिअ' इति पाठे आहितमभिलषितं समरागमनं येषाम् ॥२१॥

ववसाअ-सप्पिआसा[7] कह ते हत्थ-ट्ठिअं ण पाहिन्ति[8] जसं।
जे जीविअ-सन्देहे विसं भुअङ्ग व्व उव्वमन्ति अमरिषं ॥२२॥

[व्यवसाय-सपिपासाः कथं ते हस्त-स्थितं न पास्यन्ति यशः।
ये जीवित-सन्देहे विषं भुजङ्गाः इव उद्वमन्ति अमर्षम्॥]

प्राणसंकटप्रवेशे को गुणस्तत्राह—व्यवसाये समरोद्यमे सपिपासाः सतृष्णाः कथं ते हस्तार्जितत्वाद् हस्तस्थितं यशो न पास्यन्ति, अपि तु पास्यन्त्येव। ये जीवितसन्देहे भुजङ्गा

1 ०णा Ms. 2 आहि० GB; Ms also having ०हि० marginally. 3 अ GB. 4 उच्छ० B. 5 ०साअअ० GB; Ms also having 'अ' for 'इ' marginally. 6 होइ Ms. 7 ०वासा GB. 8 पाहे० GB; पाइ० Ms.

विषमिव अमर्षमुद्वमन्ति। अन्यत्रापि पिपासुना जलादि पीयत इत्यौचित्याद्यशसेव जलत्वं समाधीयते। समर्था मरणमपि सहन्ते ॥२२॥

**सीहा सहन्ति बन्धं उक्खअ-दाढा चिरं धरेन्ति विसहरा।**
**ण उण जिअन्ति पडिहआ अक्खण्डिअ-ववसिअ खणं पि समत्था ॥२३॥**

**[सिंहाः सहन्ते बन्धं उत्खात-दंष्ट्राः चिरं ध्रियन्ते विषधराः।**
**न पुनः जीवन्ति प्रतिहताः अखण्डित-व्यवसिताः क्षणं अपि समर्थाः ॥]**

वरं मरणं, न पुनः प्रारब्धपरित्याग इत्याह। सिंहास्तावत्तेजस्विनस्तेऽपि बन्धं सहन्ते। उत्खातदंष्ट्रा विषधराश्चिरं ध्रियन्ते न पुनः समर्थाः प्रतिहता वारिताः सन्तः क्षणमपि जीवन्ति। हेतुमाह—अखण्डितव्यवसिता[1] इति। खण्डितव्यवसितास्तु पूर्वमपि गाढत्वात् सहन्तेऽपि ॥२३॥

**अकअत्थ-पडिणिअत्ता कह [2]समुहालोअ[3]-मेत्त-पडिसंकन्तं।**
**दप्पण-अलेसु व[4] ठिअं निअअं दंच्छिह[5] पिआ-मुहेसु विसा [F13a] अं ॥२४॥**

**[अकृतार्थ-प्रतिनिवृत्ताः कथं संमुखालोक-मात्र-प्रतिसंक्रान्तम्।**
**दर्पणतलेषु इव स्थितं निजकं द्रक्ष्यथ प्रिया-मुखेषु विषादम् ॥]**

किञ्चाकृतार्थप्रतिनिवृत्तस्य निजस्त्रीमुखप्रेक्षणमपि लज्जाकरमित्याह। अकृतार्थप्रतिनिवृत्ता यूयं कथं दर्पणतलेष्विव संमुखालोकमात्रस्फुटसंक्रान्तं निजकं स्थितं विषादं प्रियामुखेषु द्रक्ष्यथ। रिपून् जित्वा कान्तः समागमिष्यतीति कृत्वोत्साहजन्यप्रसादेन भवत्प्रियाणां मुखं दर्पण इवासीदधुना पराभवकृतत्वदीयमुखवैवर्ण्यावलोकनाय यत्तासां मुखवैवर्ण्यं भावि तत् कथमवलोकयिष्यथ इत्यर्थः ॥२४॥

1 ०त Ms. 2 सँ B 3 ०लोह० Ms.
4 वि Ms. which has व marginally. 5 दे० GB.

**णिज्जन्ति चिर-पअत्ता समुद्द-गहिरा वि पडिवहं णइ-सोत्ता ।**
**तीरन्ति[1] णिअत्तेउं [2]असमाविअ-पेसणा ण उणसप्पुरिसा ॥२५॥**

**[नीयन्ते चिर-प्रवृत्तानि समुद्र-गभीराणि अपि प्रतिपथं नदी-स्रोतांसि ।**
**शक्यन्ते निवर्तयितुं असमापित-प्रेषणाः न पुनः सत्-पुरुषाः ॥ ]**

[F13a] किञ्चानारम्भो वरं नाम, नत्वारभ्य निवर्तनमित्याह । चिरप्रवृत्तानि समुद्र-गभीराण्यपि नदीस्रोतांसि प्रतिपथं विपरीतपथं नीयन्ते, न पुनरसमापितं प्रेषणं प्रारब्ध-कार्यं यैस्ते सत्पुरुषा निवर्तयितुं शक्यन्ते । ईदृशाः सत्पुरुषाः प्रयत्नादन्यैरपि निवर्तयितुं न शक्यन्ते, किं पुनरात्मना[3] निवर्तयिष्यन्त इति भावः ॥२५॥

**जो लङ्घिज्जइ रविणा[4] जो अ[5] खविज्जइ खआणलेण वि बहुसो ।**
**कह सो उइअ-परिहवो[6]दुत्तारो त्ति पवआण भण्णइ[7] उअही ॥२६**

**[यः लङ्घ्यते रविणा यः च क्षप्यते क्षयानलेन अपि बहुशः ।**
**कथं स उदित-परिभवः दुस्तरः इति प्लवगानां भण्यते उदधिः ॥ ]**

न च दुर्लङ्घ्योऽयं समुद्र इति दर्शयन्नाह । यो रविणा लङ्घ्यते बहुशो यः क्षयानलेन क्षप्यते, उदितः कथितः परिभवो यस्य, उचितोऽभ्यस्तः परिभवो येन वा, स उदधिः कथं प्लवगानां तदधिकतेजःपराक्रमाणामसंख्यानां दुस्तर इति भण्यते । तद्वक्तुमपि न युज्यत इत्याशयः ॥२६॥

**चिन्तिज्जउ दाव चिरं[8] कुल-ववएस-क्खमं वहन्ताण जसं ।**
**लज्जाइ समुद्दस्स अ[9] दोण्ह वि किं होइ दुक्करं बोलेउं ॥२७॥**

**[चिन्त्यतां तावत् चिरं कुल-व्यपदेश-क्षमं वहतां यशः ।**
**लज्जायाः समुद्रस्य च द्वयोः अपि किं भवति दुष्करं व्यतिक्रमितुम् ॥]**

तेषामेव हृदयानि प्रमाणीकृत्य तान् प्रबोधयन्नाह । किं भो महात्मानश्चिन्त्यतां तावच्चिरं

---

1 तीरे० GB. 2 ०णिअ० GB. 3 ०नि० Ms. 4 रइ० GB. 5 वि GB. 6 ०हओ GB. 7 ०उ GB. 8 इमं GB. 9 वि GB.

कुलव्यपदेशक्षममस्य वंशेऽनेनैवं कृतमित्येवंरूपं वंशख्यातिक्षमं यशो वहतां भवद्विधानां लज्जायाः समुद्रस्य च द्वयोरपि मध्ये किं 'बोलेउं' व्यतिक्रमितुं दुष्करं भवति। समुद्रलङ्घनादपि लज्जालङ्घनं सत्पुरुषाणां दुष्करमिति भावः। किं दुष्करमिति सामान्योपक्रमे नपुंसकत्वम् ॥२७॥

**किरणासणिं रहु-सुए सुहस्स किर णासणिं विमुञ्चउ मा दा।**
**सेल-ससारअमे हो तुम्हे[1] जेऊण चन्द-सारअ-मेहो ॥२८॥**

**[किरणाशनिं रघु-सुते सुखस्य किल नाशनीं विमुञ्चतु मा तावत्।**
**शैल-ससारतमान् भोः युष्मान् जित्वा चन्द्र-शारद-मेघः ॥]**

युष्माकमारब्धकार्यवैमुख्यादेव रामस्य विरहपीडेत्याह। 'हो'-शब्दो भो इत्यर्थे। शैलादपि[2] ससारतमान् युष्मान् जित्वा प्रारब्धकार्यासमर्थान् मत्वा चन्द्र एव धवलत्वाच्छारदो मेघः सुखस्य किल नाशनीं किरणाशनिं रघुसुते मा तावन्मुञ्चतु दुःसहत्वाद्वज्रतया किरणनिरूपणम्, अशनिर्द्वयोरित्यमरः। अनतिक्रान्तायां शरदि शीघ्रमेवैतन्निष्पाद्यतामिति भावः। रामोऽपि निर्वृतिं लभतामिति ॥२८॥

**बन्धव-णेहब्भहिओ होइ परो वि विणएण सेविज्जन्तो।**
**किं उण कओवआरो णिक्कारण-णिद्ध-बन्धवो दासरही ॥२९॥**

**[बान्धव-स्नेहाभ्यधिकः भवति परः अपि विनयेन सेव्यमानः।**
**किं पुनः कृतोपकारः निष्कारण-स्निग्ध-बान्धवः दाशरथिः ॥]**

उदासीनस्य रामस्य निमित्तं कथं प्राणनिरपेक्ष्यमध्यवसितमित्याह। परोऽप्युदासीनोऽपि बान्धवस्येव स्नेहेनाभ्यधिकः प्रकटितबान्धवसद्भावः सन् विनयेन सेव्यमानो भवति। कृतो निष्कण्टकराज्यदानादुपकारो येनेदृशो निष्कारणस्निग्धबान्धवो दाशरथिः किं पुनरीदृशस्य स्निग्धस्य सविनयसेवा उचितैवेत्यर्थः। अत्र परोऽपि शत्रुरपि बान्धवस्नेहाभ्यधिकः सन् विनयेन सेव्यमानो भवति किं पुनरकारणस्निग्धबन्धुः कृतोपकार उपकारेण गृहीतो दाशरथिरिति **कुलनाथः** ॥२९॥

---

1 तुव्वे Ms. 2 सार॰ Ms.

[1]केच्चिर-मेत्तं व ठिई एअ विसंवाइआ[2] ण मोच्छिइ[3] रामं ।
कमलम्मि समुप्पण्णा तं चिअ रअणीसु किं ण मुञ्चइ लच्छी ॥३०

[कियच्चिर-मात्रं वा स्थितिः एवं विसंवादिता न मोक्ष्यति रामम् ।
कमले समुत्पन्ना तत् एव रजनीषु किं न मुञ्चति लक्ष्मीः ॥]

अकृते रामस्य प्रत्युपकारे लब्धा श्रीरप्य[4]लब्धैवेत्याह । एवं प्रतिज्ञातार्थाकरणेन विसंवादिताऽस्थिरीकृता स्थितिर्मर्यादा [5]कियच्चिरमात्रं रामं न मोच्यति । महासत्त्वतया रामेणामुक्तायामपि मर्यादायां प्रतिज्ञातार्थाकरणादस्थिरीकृता सैव तं तक्ष्यतीति भावः । अथ [6]यमुपेत्य स्थितिः कथमिव तं त्यजेदत आह—कमलात् समुत्पन्ना लक्ष्मीस्तदेव कमलं रजनीषु किं न मुञ्चति । एतेन प्रतिश्रुताकरणादस्मास्वेव प्रथमतस्तस्य मर्यादातिक्रमो भविष्यतीति भावः । एतेनैवं विसंवादादस्मानेव तावदयं हनिष्यतीति **कुलनाथः** ॥३०॥

[7]अइर-परूढ व्व लआ समरुच्छाहे उदुम्मि व विलम्बन्ते ।
अज्ज वि दा[F13b]व मह इमा मउलेइ च्चिअ फलं ण दावेइ
सिरी ॥३१॥

[अचिर-प्ररूढा इव लता समरोत्साहे ऋतौ इव विलम्बमाने ।
अद्य अपि तावत् मम एषा मुकुलायते एव फलं न दर्शयति श्रीः ॥ ]

अकृतरामप्रत्युपकाराल्लब्धामपि श्रियं विनश्वरीं मन्यमान आह । समरोत्साहे अर्थाद्युष्माकम्, ऋताविव विलम्बमाने सति, अद्य ममैषा श्रीरचिरं प्ररूढा लतेव मुकुलायत एव सीताया उद्देशमात्रादिति भावः । फलं न दर्शयति रावणवधपूर्वकसीतोद्धाररूपकारणाभावादिति भावः । रामरोषाद्धि मां त्यक्ष्यतीति भावः ॥३१॥

1 This verse comes after the next in GB texts. 2 °इ Ms.
3 °हि GB. 4 बल° Ms. 5 °रं मा° Ms. 6 यनु° Ms.
7 This verse comes before the preceding one in GB texts.

**सअलुज्जोइअ-वसुहे समत्थ-जिअ-लोअ-वित्थरन्त-पआवे[1] ।
ठाइ ण चिरं रविम्मि व विहाण-पडिआ वि मइलआ[2]
सप्पुरिसे ॥३२॥**

**[सकलोद्द्योतित-वसुधे समस्त-जीव-लोक-विस्तीर्यमाण-प्रतापे ।
तिष्ठति न चिरं रवौ इव विधान-पतिता अपि मलिनता सत्-पुरुषे ॥]**

[F 13b] ननु सीताविरहशोकातुरो रामः कर्तुमयं क्षम इत्यत आह । यशोभिरुद्योतिता सकला वसुधा येन, पक्षे उद्योतिता प्रकाशिता वसुधा येन । समस्तजीवलोक विस्तीर्यमाणः प्रतापो यस्य तस्मिन् सत्पुरुषे रवाविव विधानं दैवं ततः पतिता मलिनता शोकादिकृतो विषादः, पक्षे 'विहाणं' प्रभातं तत्र पतिता मलिनता सन्ध्यारागो न चिरं तिष्ठति । विभानमसद्भानमिति **केचित्** । अतो भवादृशेष्वपि सत्पुरुषेषु दैवकृतो व्यामोहश्चिरं [3]स्थातुमनुचित इति भाव इति **केचित्** ॥३२॥

**सप्पुरिस-पाअड-वहं पढमं जं राहवेण अम्हासु कअं ।
होज्ज व[4] ण होज्ज व समं अम्हेहि[5] कअं पि किं उण
अकीरन्तं ॥३३॥**

**[सत्पुरुष-प्रकट-पथं प्रथमं यत् राघवेण अस्मासु कृतम् ।
भवेत् वा न भवेत् वा समं अस्माभिः कृतं अपि किं पुनः अक्रियमाणम् ॥]**

नन्वस्माभिरपि सीतान्वेषणेन प्रत्युपकृतमेवास्य इत्यत आह । सत्पुरुषस्य प्रकटः पन्था विपदुद्धरणलक्षणो मार्गो यत्र तद्यत् प्रथममस्मासु राघवेण कृतमुपहृतं तस्य रावणवधरूपं प्रधानं कार्यं कृतमपि समं भवेद्वा न भवेद्वा, किं पुनरक्रियमाणम् । कृतस्य साम्यसन्देहेऽकृतं दूरोत्सारितमिति सीतान्वेषणादीनान्तु का कथेति भावः ॥३३॥

---

1 ॰ह्वा॰ Ms. which has ॰आ॰ marginally, 2 ॰दा GB. 3 ॰रस्थातुमचित Ms. 4 Wanting in Ms. 5 ॰हिँ B

**राहव-पत्थिज्जन्तो उद्धो दीसिहइ केच्चिरं व दहमुहो ।**
**दूरन्त-पेच्छिअव्वो सिहर-पडन्त-विअडासणि व्व वण-दुमो ॥३४॥**

**[राघव-प्रार्थ्यमानः ऊर्ध्वः द्रक्ष्यते कियच्चिरं वा दशमुखः ।**
**दूरान्त-प्रेक्षितव्यः शिखर-पतद्-विकटाशनिः इव वन-द्रुमः ॥]**

नन्वोल्लंघ्य[1] गतानामपि त्रैलोक्यविजयिनो रावणादस्माकमवश्यं मरणं, तद्वरं रामादेवास्त्वित्यत आह । राघवेण प्रार्थ्यमानो व्यापादनविषयीक्रियमाणो दशमुखः समरापतितत्वादूर्ध्वः कियच्चिरं वा द्रक्ष्यते, दृष्टमात्रेणैव रामेण व्यापादनीय इत्यर्थः । अत आह त्वरमाणेन[2] प्रेक्षणीयः । 'दूरन्त' इति पाठे दूरान्तप्रेक्षणीयोऽतितुङ्ग इति यावत्, तादृशो वनद्रुमः[3] शिखरे पतन् विकटो [4]महानशनिर्यस्य स वनद्रुम इव, अन्यो ह्यशनिस्तरोरेकदेशं पातयति नतु सर्वमिति विकटग्रहणम् ॥३४॥

**बालाअवं व एन्तं धुअ-अम्बालाअ-वंसु-निवह-च्छाअं ।**
**कइ-सेण्णं रअणिअरा तम-रअ-निअर व्व पेच्छिउं पि**
**अजोग्गा[5] ॥३५॥**

**[बालातपं इव आयत् धुत-ताम्रालात-पांशु-निवह-च्छायम् ।**
**कपि-सैन्यं रजनिचराः तमो-रजो-निकराः इव प्रेक्षितुं अपि अयोग्याः ॥ ]**

रामप्रार्थितस्य रावणस्यैव चिरानवस्थानाद् दूरे तत्सैन्यस्येत्यत आह । कपिसैन्यं पिङ्गलत्वाद्दुर्यापित्वाच्च बालातपमिवागच्छद् धुतस्ताम्रायमाणो योऽलातस्तस्य साग्निदग्धकाष्ठस्य पांशुनिवहः स्फुलिङ्गकणसमूहो यस्तस्येव छाया यस्य तत्तथोक्तं कपिसैन्यं रजनिचरा राक्षसास्तमोरजो[6]निकरा इव प्रेक्षितुमपि न योग्या न समर्थाः । रजन्याश्चरन्तीति तमोरेणवोऽपि रजनीचरास्तमोरजसां श्यामत्वादन्धकारचूर्णानां निकरा इव रजनीचरा द्रष्टुमप्ययोग्या न क्षमाः, अस्तु तावद्योद्धुमिति भावः । कपिसैन्यं बालातपश्च कीदृशं, धुतस्य ताम्रस्यालातपांशुनिवहस्य ज्वलदनलकाष्ठस्य स्फुलिङ्गसमूहस्येव छाया यस्य इति **केचित्** ॥३५॥

---

1 मुक्त्वा Ms. 2 KS also have त्वरमाण॰ 3 वद्रुमः Ms.
4 महाश॰ Ms. 5 अओग्गा GB. 6 'रजो' omitted in Ms.

[1]गरुअम्मि वि पडिवक्खे होन्ति भडा अहिअ-वारिअ-प्पडिऊला ।
पडिगअ-गन्धाइद्धा उद्धङ्कुस-रुद्ध-मत्थअ व्व गइन्दा ॥३६॥

[गुरुके अपि प्रतिपक्षे भवन्ति भटाः अधिक-वारित-प्रतिकूलाः ।
प्रतिगज-गन्धाविद्धाः ऊर्ध्वाङ्कुश-रुद्ध-मस्तकाः इव गजेन्द्राः ॥ ]

किञ्च बलवत्यपि विपक्षे भवद्विधानां धीराणामुत्साहातिशय एव युज्यत इत्याह । गुरुकेऽपि प्रतिपक्षे भटाः शूरा अधिकं वारितः प्रतिकूलो विपक्षो यैरीदृशा भवन्ति, महतोऽप्यस्य विपक्षस्य निग्रहादतीव मम संभावना भविष्यतीति भावः । प्रतिपक्ष इत्यनादरे सप्तमी । प्रतिगजस्य गन्धेन आविद्धाः क्षिप्ता ऊर्ध्वाङ्कुशरुद्धमस्तका[2] गजेन्द्रा इव ऊर्ध्वारोपितमङ्कुशमुल्लङ्घ्य धावन्ति ॥३६॥

विसमम्मि विअ विसण्णो धारेइ धुरं धुरन्धरो च्चिअ णवरं ।
किं दिणअरोवराए दिणस्स होइ अवलम्ब[F 14a]णं ससि-
बिम्बं ॥३७॥

[विषमे अपि अविषण्णः धारयति धुरं धुरन्धरः एव केवलम् ।
किं दिनकरोपरागे दिनस्य भवति अवलम्बनं शशि-बिम्बम् ॥]

अपि च विषमोपनिपात एव भटानामवसर इत्याह । विषमेऽप्यविषण्णो धुरन्धर एव भारोद्वहन एव[3] धुरं भारं धारयति । वैधर्म्येण दृष्टान्तमाह—किं दिनकरस्योपरागे राहुग्रासे शशिबिम्बं दिनस्यावलम्बनं रविग्रहणसमये नियतसान्निध्योऽपि चन्द्रो नैव दिनस्यावलम्बनं किन्तु दिनकर एव । 'णवर'[4] केवलं, अस्य नैरपेक्ष्येणेत्यर्थः । एवकारो भिन्नक्रमे । केचित्तु उपरागपदं लक्षणया पीडामात्रपरं कदाचित् क्षीण इति कृत्वा चन्द्रो दिनस्यावलम्बनं न भवितुमर्हति, अतो बिम्बपदं सामर्थ्यख्यापनायेति वदन्ति ॥३७॥

मुक्क-सलिला जलहरा अहिणअ-दिण्ण-प्फला अ पाअव-णिवहा ।
लहुआ वि होन्ति गरुआ समर-मुहोहरिअ[5]-मण्डलग्गा
अ भुआ ॥३८॥

1 गु॰ B. 2 ॰बद्ध॰ Ms. 3 'एव' written twice in Ms.
3 न॰ Ms. 5 ॰अरि॰ Ms.

**[मुक्त-सलिलाः जलधराः अभिनव-दत्त-फलाः च पादप-निवहाः ।
लघुकाः अपि भवन्ति गुरुकाः समर-मुखावहृत-मण्डलाग्राः च भुजाः ॥]**

[F14a] स्वीयकार्यनिर्वर्तनेऽपि भारापगमनेऽपि भुजानां गौरवमेव भवतीति सूचयन्नाह । समर(स्य) मुखे उपक्रमे । मुक्तसलिला जलधरा अभिनवं प्रत्यग्रं दत्तं फलं यैस्ते पादपनिवहास्तथा समरमुखे अवहृतो व्यापारितो मण्डलाग्रः खड्गो यैस्तादृशा भुजाश्च लघवोऽपि निर्जलत्वात् फलशून्यत्वाद्व्यापारितखड्गत्वाच्च गुरुत्वशून्या अपि गुरव आदृता भवन्ति कृतोपकारत्वादिति भावः । अथ च लघवो गुरवो भवन्तीति विरोधोऽपि शब्दार्थः[1] ॥३८॥

दप्पं ण मुअन्ति[2] भुआ पहरण-कज्ज-सुलहा धरेन्ति महिहरा ।
वित्थिण्णो गअण-वहो णिज्जइ कीस गरुअत्तणं[3] पडिवक्खो ॥३९॥

**[दर्पं न मुञ्चतः भुजौ प्रहरण-कार्य-सुलभाः ध्रियन्ते महीधराः ।
विस्तीर्णः गगन-पथः नीयते कस्मात् गुरुकत्वं प्रतिपक्षः ॥]**

उत्साहकारणे सत्यपि किमनुत्साह इत्याह । भुजौ दर्पं न मुञ्चतः, प्रहरणकार्यसुलभा महीधरा ध्रियन्तेऽवतिष्ठन्ते, गगनपथो विस्तीर्णः, अतः सत्यामेव कार्यसामग्र्यां भवद्भिरनुद्यममात्रेण प्रतिपक्षः किं गौरवं नीयते दुर्जयख्यातिं प्राप्यते ॥३९॥

धीरच्चिअ[4] रक्खन्ता गरुअम्पि भरं धरेन्ति णवर सप्पुरिसा[5] ।
ठाणं च्चिअ अमुअन्ता णीसेसं तिहुअणं तवेन्ति[6] रवि-अरा ॥४०॥

**[धैर्यं एव रक्षन्तः गुरुकं अपि भरं धारयन्ति केवलं सत्-पुरुषाः
स्थानं एव अमुञ्चन्तः निःशेषं त्रिभुवनं तापयन्ति रवि-कराः ॥]**

धैर्यमेवामुञ्चन्तः सत् पुरुषाः केवलं गुरुकमपि भारं धारयन्ति धैर्यारम्भाद् दुष्करमपि सुकरं भवतीत्यर्थः । प्रतिवस्तूपमामाह स्थानं रविमण्डलं धैर्यस्थानीयममुञ्चन्त एव

---

1 शब्दो॰ Ms. 2 सहन्ति GB. Ms. reading looks like मुद्ध॰, but it is marginally corrected into मुअ॰ 3 गरुत्त॰ Ms. 4 ॰रं परि॰ GB. 5 सुउ॰ GB. 6 ख॰ GB.

निःशेषं त्रिभुवनं रविकरास्तापयन्ति, स्थानत्यागे तु रविं त्यजन्तो ज्वाला इवाकिञ्चित्कराः स्युरित्याशयः। **केचित्तु** धैर्यं रक्षन्त इव 'णवर' केवलं, अन्यनैरपेक्ष्येणेति यावत् सत्पुरुषा गुरुकमपि भारं धारयन्ति, स्थानं स्वाभाविकममुञ्चन्त एव रविकरा निःशेषं त्रिभुवनं तापयन्ति ॥४०॥

काअर-पडिमुक्क-धुरं जिणन्ति पत्थाण-लङ्घिअग्ग-क्खन्धा।
पढमं ता णिअअ-बलं पच्छा पहरेहि[1] सुउरिसा पडिवक्खं ॥४१॥

**[ कातर-प्रतिमुक्त-धुरं जयन्ति प्रस्थान-लङ्घिताग्र-स्कन्धाः।
प्रथमं तावत् निजक-बलं पश्चात् प्रहारैः सु-पुरुषाः प्रतिपक्षम् ॥ ]**

कातरमपि स्वबलं पश्चात्कृत्य समर्थाः पराक्रमन्त इत्याह। प्रस्थानमात्रेण लङ्घितोऽतिक्रान्तोऽग्रस्कन्धोऽग्रसेना यैस्तादृशाः सत्(सु)पुरुषाः कातरेण प्रमुक्ता धूरुत्साहजनिताग्रेसरत्वरूपा यत्र तन्निजकबलं तावत् प्रथमं जयन्ति पश्चात् प्रहारैः प्रतिपक्षजयः पश्चाच्च रणनिग्रहः ॥४१॥

अण्णेन्ति मङ्गलाइं अल्लिअइ सिरी जसो विढप्पइ[2] पुरओ।
पडिवण्ण-रणुच्छाहे पडिवक्खुद्धरण-पत्थिए[3] सप्पुरिसे[4] ॥४२॥

**[अनुगच्छन्ति (अनुयन्ति) मङ्गलानि आलीयते श्रीः यशः अर्ज्यते पुरतः।
प्रतिपन्न-रणोत्साहे प्रतिपक्षोद्धरण-प्रस्थिते सत्-पुरुषे ॥]**

उत्साहशालिनामुद्योगे सत्यनुकूलं दर्शयति। आनयन्ति मङ्गलानि आलीयते समालिङ्गयते श्रीः, यशः प्रवर्धते पुरतः प्रतिपन्नरणोत्साहे प्रतिपक्षोद्धरणाय प्रस्थिते सत्पुरुषे। अत्र तु त्रैलोक्यकण्टकोद्धरणे सुतरामेव मङ्गलादियोगो युष्माकमिति भावः। सत्पुरुषे प्रतिपन्नरणोत्साहे प्रस्थिते सति, अनुगच्छन्ति मङ्गलानि, आलीयते आलिङ्गति श्रीः, यशः प्रवर्धते पुरतः, येषामुत्साहशालिनां साधारणशत्रुमात्रपराभवप्रस्थाने पुरतः पृष्ठतः शरीरे च शुभनिमित्तानि स्फुरन्ति तेषाम् ॥४२॥

---

1 ०हिँ B.　2 पवड्ढइ GB.　3 ०अम्मि GB.　4 सुउ० GB.

वच्चन्ता अइभूमिं कड्ढिअ-सुहडासि-वत्त-वन्थावडिआ ।
णवर ण चलन्ति बिइअं[1]लुअ-वक्खा [F14b] महिहर व्व
वेराबन्धा ॥४३॥

[व्रजन्तः अतिभूमिं कृष्ट-सुभटासि-पत्र-पथापतिताः ।
केवलं न चलन्ति द्वितीयं लून-पक्षाः महीधराः इव वैराबन्धाः ॥]

स्वयमेव प्रतिज्ञातं रावणवैरनिर्यातनं गौणाचरं कर्तुं सुभटा यूयं नार्हथेत्याह । सुभटैराकृष्टानामसीनां पथ्यापतिताः सन्तः समरसंकटं प्राप्ता इति यावत्, ईदृशा सन्तोऽतिभूमिं पराकाष्ठां व्रजन्तो वैराबन्धाः केवलं द्वितीयं न चलन्ति । अन्यत् तु प्रहरणादिकं कदाचित् द्वितीयमपि चलन्तीति । लूनपक्षा महीधरा इव, ते यथा भूमिमतिक्रम्य गता अपि द्वितीयं स्थानं न चलन्तीत्यर्थः । यं प्रति येन यद्वैरमङ्गीकृतं तेनैव वैरेण स तेन व्यापादयितुमुचितः, न तु तस्मिन् भग्नोद्यमे तद्वैरमादायान्यैररिनिर्यातनं कर्तुमुचितमित्यर्थः । तथा युष्माभिरारब्धः कार्यभारो युष्माभिरेव निर्वोढुं शोभते न रामेणेति भावः ॥४३॥

ता सोअइ रहु-तणओ ताव अ सीआ वि हत्थ-पल्हत्थ-मुही ।
ताव धरइ दहमुहो जाव विसाएण वो तुलिज्जइ धीरं ॥४४॥

[तावत् शोचति रघु-तनयः तावत् च सीता अपि हस्त-पर्यस्त-मुखी ।
तावत् ध्रियते दशमुखः यावत् विषादेन वः तुल्यते धैर्यम् ॥ ]

[F14b] तावच्छोचति रघुतनयो हस्तपर्यस्तमुख इत्यत्रापि योज्यं, तावच्च सीता हस्तपर्यस्तमुखी शोचति तावच्च ध्रियतेऽवतिष्ठते दशमुखो यावद्वो युष्माकं धैर्यं विषादेन तुल्यते उत्क्षिप्यते ॥४४॥

अण्णो अण्णस्स मणो तुम्ह[2] ण आणे अणाढिओ[3] मह अप्पा ।
णिव्वण्णन्तस्स इमं दर-रूढ-वण-प्पसाहणं हणुमन्तं ॥४५॥

[अन्यत् अन्यस्य मनः युष्माकं न जाने अनादृतः मम आत्मा ।
निर्वर्णयतः इमं दर-रूढ-व्रण-प्रसाधनं हनूमन्तम् ॥]

---

1 बोअं GB. 2 तुव्व Ms. 3 ०हिओ GB.

सजातीयहनूमद्वीर्यश्लाघनया उत्तेजयन्नाह। अन्यदन्यस्य मनः, अतस्तद्वो युष्माकं न जाने मन इत्यर्थात्। परकीयमनोवृत्तेरप्रत्यक्षत्वादित्यर्थः। मम तु दररूढव्रणप्रसाधनं हनूमन्तं निर्वर्णयतः आत्मा 'अणाढिओ' अगणनीयोऽस्मिन्नेव बहुमतो नत्वात्मनीति भावः। हनूमन्तं निर्वर्णयतो निरूपयतः आत्मा अनादृतः, अस्तु तावदन्यस्यादर इति भावः ॥४५॥

पडिवक्खस्स अ[1] लच्छिअं आसाअन्तएणं[2]
णिअअ-कुलस्स अ कित्तिअं आसाअन्तएणं।
मरणअम्पि वरं लद्धअं णअ-णिम्माणएण
पुरिसएण[3] चिरं जीविअं ण अ णिम्माणएण ॥४६॥

**[प्रतिपक्षस्य च लक्ष्मीं आशातयता निजक-कुलस्य च कीर्तिं आसादयता। मरणकमपि वरं लब्धकं नय-निर्माणकेन पुरुषकेण चिरं जीवितं न च निर्मानकेन ॥]**

गलितकद्वयमाह। पुरुषकारप्रवृत्तस्य मरणमपि वरं न तु मानहीनस्य जीवितमपीति सूचयन्नाह। प्रतिपक्षस्य लक्ष्मीमाशातयता नाशयता, निजकुलस्य च कीर्तिमासादयता स्वीकुर्वता पुरुषेण, नयं निर्माणयतीति नयनिर्माणको नीतिप्रयोक्ता तेन, मरणमपि वरं लब्धं, न च निर्मानकेन मानहीनेन जीवितं लब्धम्। पुरुषस्तावदसौ यावन्मानान्न हीयत इति भावः। प्रतिपक्षस्य लक्ष्मीमाशातयता तनूकुर्वता निजकुलस्य च कीर्तिमासादयता प्राप्नुवतेति केचित् ॥५६॥

एअ[4] वि सिरीअ दिट्ठआ के सरलच्छिआए
कर-कमलस्स अ छिक्कआ केसर-लच्छिआए।
मुज्झन्ति सविण्णाणआ सम-रस-माणअम्मि
एअ ममम्मि भणन्तए समर-समाणअम्मि ॥४७॥

**[एवं अपि श्रिया दृष्टकाः के सरलाक्ष्या कर-कमलस्य च स्पृष्टकाः केसर-लक्ष्म्या। मुह्यन्ति सविज्ञानकाः सम-रस-मानदे एवं मयि भणति समर-समानके ॥]**

1 This word is wanting in Ms. 2 ०एण Ms. 3 ०सेण GB. 4 एवं Ms.

यत्प्रसादादेवंविधा श्रीरुपभुज्यते तस्य मम वचने कोऽयं व्यामोह इत्याह। एवमपि एवंरूपेऽपि कस्मैचित् सेनापतित्वं कस्मैचित् सामन्तत्वं दत्तमस्तीत्यर्थः, एवं मयि भणति सति के सविज्ञानका विवेकिनो मुह्यन्ति, न तु युष्मद्विधा इति भावः। 'एअ व' एवमपि यत्-प्रसादात् श्रिया सरलाद्व्या प्रगुणदृष्ट्या दृष्टाः श्रियै( यै )व करकमलस्य केसरलक्ष्म्या किञ्जल्कनिकरेण 'छिक्कआ' स्पृष्टाः। अनेन लक्ष्म्या दर्शनकथनेन मध्यमोत्तमसम्पदा मया यूयं विभक्ता न तु केऽपि निकृष्टयेति सूचितम्; किंभूते मयि, समं यथा स्यात्तथा रसमानावनुरागसत्कारौ ददति, पुनः किंभूते, समरस्य संग्रामस्य समानके शत्रुवधात् कृतसत्कारे। एतेन विशेषणद्वयेनानुग्रहक्षमता सूचिता ॥४७॥

[1]चन्दे व्व[2] मेह-मइलिए रअणी-सारअम्मि
कमलअम्मि[3]व हिम-डड्ढए रअ-णीसारअम्मि।
दुहिअए राम-हिअअम्मि[4] [F 15a] भम-रोअ-अत्तम्मि[5]
कुसुमम्मि व पव्वाअए भमरोअअत्तम्मि ॥४८॥
मा सोइज्जउ दुहिआ सीआ लोअएणं[6]
णलिणि व्व समोलुग्गआ[7] सीआलोअएणं[6]
दुहिए राहव-हिअए काम-इलन्तअम्मि
जीविअम्मि[8] अहिलोहिआ का मइलन्तअम्मि ॥कु २॥४९॥

[चन्द्रे इव मेघ-मलिनिते रजनी-सारके कमलके इव हिम-दग्धे रजो-निःसारके। दुःखिते राम-हृदये श्रम-रोदार्ते कुसुमे इव प्रवाणे भ्रमरापवर्तितव्ये ॥

1 In GB texts this verse (48) comes after the next (49), as in KS. 2 चन्दअ व्व GB. 3 कमलम्मि Ms. 4 Ms. has दुहिअए राम-हिअअम्मि marginally, but has दुहिअम्मि राहव-हिअए in the original text, in place of दुहिअम्मि राहव-हिअअए as in GB. 5 °रोअत्तअम्मि GB. 6 लोएण Ms. 7 °लुग्गा Ms. It has also हिमावरुग्गा marginally. 8 After this word Ms has वि which appears superfluous.

**मा शोच्यतां दुःखिता सीता लोककेन नलिनी इव समर-रुग्णा शीतालोकेन।**
**दुःखिते राघव-हृदये काम-क्राम्यमाने जीवितके अभिलोभिता का मलिनायमाने॥]**

परस्परगलितकद्वयेन सीतारामयोर्विरहदुःखकथनेन त्वरयन्नाह। दुःखिते रामहृदये सतीत्यर्थात् सीता लोकेन मा शोच्यतामिति योज्यम्। किंभूते रामहृदये भ्रमरोगार्ते भ्रमेण रोगेण चार्ते पीडिते। अथवा भ्रमरोदाभ्यां भ्रान्तिरोदनाभ्याम् ऋते प्राप्ते भ्रमरोदार्ते। अत्र हेतुः 'कामइलन्तअम्मि' कामकान्ते विशेषेण च दुर्हृतकृतवैरामथिते। प्राकृते दुर्हृत-शब्दस्य सर्वत्र 'नवरामिति' रेफलोपे, इदृश्या(ष्या)दिष्विति ऋत इत्वे अन्त्यहल इति तलोपे दुहि इति रूपे स्थिते, ऋत शब्दस्य ऋतोऽदिति ऋकारस्य अत्वे क-ग-च-ज-त-द-प-(य) वां प्रायो लोप इति तलोपे कृते, कअ इति स्थिते, वैरशब्दस्य ऐत ए इत्यैकारस्य एत्वे क-ग-चेत्यादिना कअ शब्दस्य ककारे वेरशब्दस्य वकारे लुप्ते, सन्धावचा संज्ञापरिशेषा बहुलमिति कअ इत्यस्य अकारलोपे कृते दुहि अत्र इति सिद्धे, आमथितशब्दस्य च थस्य हत्वे अवशेषे च तकारस्य (अकारे ?) कृते, दुहिअए रामहिअअम्मि इति सप्तम्यां सिद्धं भवति। अतएव शुष्के। अतश्च कस्मिन् कीदृश इव 'भमरोअत्तअम्मि कुसुमम्मि व' भ्रमरेणापवृत्ते विमर्दवशादावर्जिते कुसुम इव, हिमदग्धे रजोनिःसारके कमल इव, कस्मिन् कीदृशे यथा शोच्यते शारदे चन्द्रे मेघमलिनिते रजनीव शीतालोकेन चन्द्रेण 'हिमावरुग्गा' हिमावरुग्णा हिमग्लपिता नलिनीव, अतो भवतां 'मइलन्तअम्मि' धिक्कारमलिनायमाने जीविते काभि-लोभिता अतितृष्णा न युज्यत इति भावः ॥४८-४९॥

**कइआ णु विरह-विरइअ-दोब्बल्ल-पसाहणुज्झिआहरणाइं।**
**णीसास-वस-पहोलिर-लम्बालअ-मिलिअ-[1]पम्हल-कवोलाइं[2] ॥५०॥**
**पिहुल[3]-णिअम्ब-अड[4]-क्खलिअ-सिढिल-वलअ-विणिइण्ण[5]-**
**बाहु-लआइं[6]।**
**दच्छाम परिअण-त्थुअ-कअ-पेसण-लज्जिआ पिअ-कलत्ताइं॥**
**कु २ ॥५१॥**

---

1 ०मलिअ GB. 2 ०कत्त० GB. 3 प० Ms. 4 ०अल० GB. 5 ०विव० GB. K has (विनिकीर्ण०) 6 ०लइ आण' Ms. (wrongly)

[कदा नु विरह-विरचित-दौर्ब्बल्य-साधनोज्झिताभरणानि ।
निःश्वास-वश प्रघूर्णनशील-लम्बालक-मिलित-पक्ष्मल-कपोलानि ॥
पृथुल-नितम्ब-तटस्खलित-शिथिल-वलय-विनिकीर्ण-बाहु-लतानि ।
द्रक्ष्यामः परिजन-स्तुत-कृत-प्रेषण-लज्जिताः प्रिय-कलत्राणि ॥ ]

[ F15a ] स्कन्धकद्वयेन व्याख्या । इदानीं स्वगृहगमनकलत्रमुखावलोकनौत्सुक्येन शीघ्रं कार्यसम्पादनाय त्वरयन्नाह । विरहेण विरचितं दौर्वल्यमेवाभरणं प्रसाधनम् अतएवोज्झिता-भरणं यैस्तानि, निःश्वासवशेन प्रघूर्णनशीला ये लम्बालकास्तैर्निर्मितानि पक्ष्मलाणि कपोलानि येषाम् ॥५०॥ परिजनस्तुततेन कृतेन प्रेषणेन स्वाम्यादेशाधीनरिपुनिग्रहेण विलज्जिताश्च सन्त ईदृशानि कलत्राणि कदा नु द्रक्ष्याम इत्यन्वयः । प्रशंसया लज्जा स्यादिति महाजनस्वभावोऽयं, तानि कीदृशानि विरहेण विरचितं दौर्वल्यमाभरणं येषामतएव उज्झिताभरणं यैस्तानि । तथा परनिपाताद्विरहदौर्वल्यशिथिलाः सत्यः पृथुलनितम्बतट-स्खलितवलयैः प्रतिरिक्ताः शून्या बाहुलता येषाम् ॥५१॥

इअ जाहे भणन्तं ण चलइ चिन्ता-भरोसिअन्त-सरीरं ।
आअड्ढिअ[1]-णिच्चेट्ठं पङ्क-क्खुत्तं व गअ-उलं कइ-सेण्णं ॥५२॥
तो फुड-सद्दुद्धाइअ-वण-दव-भरिअ-गिरि-अन्दराआर[2]-मुहो ।
रिउ-विक्कममसहन्तो जम्पइ वाणर-वई पुणो[3] वि हसन्तो ॥५३॥

[इति यदा भण्यमानं न चलति चिन्ता-भरावसीदच्छरीरम् ।
आकर्षित-निश्चेष्टं पङ्क-क्षिप्तं इव गज कुलं कपि सैन्यम् ॥
ततः स्फुट-शब्दोद्धावित-वन-दव-भृत-गिरि-कन्दराकार-मुखः ।
रिपु-विक्रमं असहमानः जल्पति वानर-पतिः पुनः अपि हसन् ॥ ]

तथापि मूढेषु तेषु साहङ्कारप्रोत्साहनमाह । युष्माकमित्यनन्तरोक्तप्रकारेण भण्यमानं चिन्ताभरेणावसीदच्छरीरम् आक्षिप्तमाकृष्टं परिश्रान्तं पङ्कक्षिप्तं गजकुलमिव कपिसैन्यं न चलति नोपक्रमते । प्रभुमन्त्रशक्तिभ्यामुद्यमयितुं शक्तः सन् निजोत्साहशक्तिमा-श्रित्याह ॥५२॥

---

1 ०ड्ढण० GB, but CK have the Ms reading. 2 ०कन्द० GB.
3 पुणो omitted in Ms.

ततः स्फुटशब्दं यथा स्यात्तथोर्ध्वायितेन वनदवेन वनाग्निना भरितो यो गिरिकन्दरस्तदाकारमुखो रिपुविक्रममसहमानः पुनरपि क्रोधेन हसन् वानरपतिर्जल्पति। हासः क्रोधादिति **कुलनाथः**। कार्यस्यावज्ञानिवार्यत्वादिति **केचित्**। कीदृशः, स्फुटशब्दं यथा स्यात्तथा उद्धावितेन वनदवेन भृतस्य गिरिकन्दरस्येवाकारो यस्य, ईदृशं मुखं यस्य ताम्रत्वात् सशब्दत्वाद्विकटव्यादानशालित्वाच्च मुखस्य तादृशगिरिकन्दरसाम्यम् ॥५३॥

**इअ अत्थिर-सामत्थे अण्णस्स वि परिअ[F15b]णम्मि को आसंघो।**
**तत्थ वि णाम दहमुहो तस्स ठिओ एस पडिहडो[1] मज्झ**
**भुओ ॥५४॥**

**[इति अस्थिर-सामर्थ्ये अन्यस्य अपि परिजने कः आसङ्गः।**
**तत्र अपि नाम दशमुखः तस्य स्थितः एष प्रतिभटः मम भुजः॥]**

[F15b] इत्येवं प्रारब्धकार्यविमुखत्वादस्थिरसामर्थ्ये परिजने, अन्यस्यापि शत्रोरपि क आसङ्गः का प्रत्याशा। नामशब्दः सम्भावनायाम्। तत्रापि रिपुसैन्येऽपि दशमुखस्तस्य प्रतिभटो ममैष भुजः स्थितः किं भवद्भिरिति। **केचित्तु** इत्यस्थिरसामर्थ्ये परिजने सेनामुख्यतमे अन्यस्यापि मनुष्यमात्रस्यापि क आसङ्गः को विजयसंप्रत्ययः। तत्रापि नाम दशमुखः। नाम प्राकाश्ये सम्भावनायां वा। ईदृशमस्थिरसामर्थ्यं विलोक्यानेन जेतव्य इति मनुष्यमात्रस्यैव संप्रत्ययो न भवेत् किं पुनर्दशमुखस्येत्यर्थः। **श्रीनिवासस्तु** इदं व्याचष्टे अथ रिपोर्दुर्जयत्वात् सामर्थ्यहानिरत्राह - तत्रापि नामेति, अथास्माकमवलम्बनं तत्तुल्यप्रतिभटो नास्तीति विषाद इत्याह तस्य स्थित इति। **अन्ये** तु इत्यस्थिरसामर्थ्ये, अन्यस्मै यस्मैं कस्मैचिदपि शत्रवे क आसङ्गो जेतव्य इति संप्रत्ययः, तत्रापि नाम दशमुखस्तत्र सुतरामेव जेतव्य इति प्रत्ययो न स्यादिति व्याचक्षते ॥५४॥

**अवहोवासम्मि[2] मह हत्थ-अलाहअ-दलन्त-पत्थिअ-सलिलो।**
**जा ण णिअत्तइ उअही बोलीणं ताव होउ वाणर-सेण्णं ॥५५॥**

**[उभय-पार्श्वे मम हस्त-तलाहत-दलत्-प्रस्थित-सलिलः।**
**यावत् न निवर्तते उदधिः व्यतिक्रान्तं तावत् भवतु वानर-सैन्यम्॥]**

---

1 ०भडो Ms. 2 ०होआ० GB.

दुस्तरत्वात् समुद्रो न तीर्येत इति चेत्तदस्य दूरीकरोमीत्याह । उभयपार्श्वे मम हस्ततलेनाहतं सत् दलद्विशीर्यत्[1] प्रस्थितं सलिलं यस्य स उदधिर्दिगन्तरगतत्वाद्यावन्न निवर्तते तावत् कपिसैन्यं व्यतिक्रान्तं भवतु ॥५५॥

अहिआणन्तोसि-हरे धरिअं मलअ-गिरिणो हसन्तो[2] सिहरे ।
गुरु-भर-विसअंसेणं णेज्जामि भुएण जोअण-सअं सेणं ॥५६॥

[अहितानां तुष्टि-हरे धृतां मलय-गिरेः हसन् शिखरे ।
गुरु-भर-विशदांसेन नयामि भुजेन योजन-शतं सेनाम् ॥ ]

समुद्रलङ्घने प्रकारान्तरमाह । विपक्षाक्रान्तत्वादहितानां शत्रूणां तुष्टिहरे, यद्वा नानाकुञ्जचन्दनमयत्वादभिकानां तुष्टिगृहे, यद्वा अहीनां सर्पाणां तोषिणी धरा भूमिर्यत्र तस्मिन् मलयगिरेः शिखरे भवतां विनिहितां सेनां गुरुणा भरेण विशद उन्नमितत्वाद्यक्तोऽंसो यस्य । अंसः स्कन्धे । तेन भुजेन योजनशतं नेष्यामि समुद्रस्य योजनशतत्वात् पारं नयामीत्यर्थः । मलयगिरेः शिखरावधृतां सेनां शिखरावस्थापिताम् ॥५६॥

समुह-मिलिएक्कमेक्के को इर आसण्ण-संसअम्मि सहाओ ।
जाव ण दिज्जइ दिट्ठी काअव्वं होइ ताव[3] चिर-णिव्वुत्तं[4] ॥५७॥

[सम्मुख-मिलितैकैकस्मिन् कः किल आसन्न-संशये सहायः ।
यावत् न दीयते दृष्टिः कर्तव्यं तावत् चिर-निर्वृत्तम् ॥ ]

सहायानर्थक्यमाह युद्धाय संमुखमिलिते 'एक्कमेक्के'ऽन्योन्यस्मिन् अतएवासन्नसंशये संप्रत्ययमहं न भविष्यामीति दूरवर्तिसन्देहे कः किल को नाम न कोऽपीत्यर्थः सहायः । हेतुमाह, यावन्न दीयते दृष्टिः प्रेक्षकैरित्यर्थः, तावत् कर्तव्यं शस्त्रप्रहानुरूपं चिरनिर्वृत्तं भवतु । **केचित्तु** संमुखमिलितमन्योन्यं परस्परं यत्र तस्मिन्नासन्नसंशये समरसंकटे कः किल सहायो भवेदपि तु न कोऽपि । एवं तर्हि कार्यसाधने का गतिरित्याह यावन्न दीयते दृष्टिस्तावत् कर्तव्यं चिरेण निव्यूढं भवति । पाठान्तरे चिरनिर्वृत्तमिति ॥५७॥

1 दलत् द्वीशी० Ms. 2 महन्तो Ms. 3 दाव GB, placed before होइ. 4 णिव्वूढं GB. This reading is put marginally in Ms. K also has निर्वृत्तं.

अह व महण्णव-हुत्तं पत्थन्तस्स गअणं महण्ण[1]वहुत्तं ।
रुहिर-वसामिस-वत्तं हन्तूण व[2] णिव्वुओ वसामि सवत्तं ॥५८॥

[अथवा महार्णवाभिमुखं प्रार्थयमानस्य गमनं मम न प्रभुत्वम् ।
रुधिर-वसामिष-पात्रं (०वृत्तं वा) हत्वा एव निर्वृतः वसामि सपत्नम् ॥ ]

अमर्षात् सप्रतिज्ञमाह। अथवा महार्णवाभिमुखं गमनं प्रार्थयमानस्य मम प्रभुत्वं राज्यमेव न स्यात्। पक्षान्तरमाह रुधिरवसामिषवार्त्तां रक्तवसानां सवर्तनं, सपत्नं रावणमित्यर्थः 'हन्तूण' हत्वा वा निर्वृतो वसामि। अथवा रुधिरस्वामी रावणः स एव सपत्नस्तं वसामिषवार्तां हत्वा वा निर्वृत्तः स्यामित्यर्थात्। किंवा सपत्नं सवाहनं सपात्रं ससचिवं हत्वा वा निर्वृतो वसामीति योज्यम्। **केचित्तु** अथवा महार्णवाभिमुखं गमनं प्रार्थयमानस्य मम न प्रभुत्वं एतन्मात्रेण निर्वृतिर्न स्यादिति भावः। कथं तर्हि निर्वृतिरत्राह रुधिरस्य वसाया आमिषस्य च पात्रं योग्यं। यद्वा रुधिरवसामिषैर्वृत्तिर्वर्तनं यस्य रावणस्येति यावत् तं सपत्नं हत्वेति तस्मिन् हतप्राये सति निर्वृतो वसामि इति प्राहुः ॥५८॥

णिसुढिज्जन्त[3]-भुअङ्गं मा मुज्झह मह सरोस-चलणक्कन्तं ।
जत्तो णमइ महि-अलं तत्तो णाम सअलो पलोट्टउ[4] उअही ॥५९॥

[निपात्यमान-भुजङ्गं मा मुह्यत मम सरोष-चरणाक्रान्तम् ।
यतः नमति मही-तलं ततः नाम सकलः प्रलुठतु उदधिः ॥ ]

अन्यच्च स्थलपथतां चिकीर्षुराह। समुद्रलङ्घने मा मुह्यत मम सरोषचरणाक्रान्तमत एव 'णिसुलिज्जन्त-भुअङ्गं' आक्रमणभरपीड्यमानपातालस्थभुजङ्गं महीतलं यतो नमति ततो नाम सकल उदधिः 'पलोट्टउ' प्रसरतु, तेन स्थलपथेन यास्यथेति भावः। नामशब्दोऽभ्युपगमे। **अन्ये** तु मा मुह्यत समुद्रलङ्घनमोहं त्यजत। त्यागे हेतुमाह मम संरोषचरणाक्रान्तञ्चेदतो 'णिसुलिज्जन्त-भुअङ्गं' निष्पाद्य(त्य)मान-पातालसर्पं महीतलं यतो नमति ततो नाम सकल उदधिः पर्यस्यतु ॥५९॥[5]

1 ०हं ण GB. 2 व omitted in Ms. 3 णिसुढि० GB.
4 पअ० GB. 5 After this, the scribe fills up the space by writing 'श्रीदुर्गाचरणौ शरणं'.

ओ जमल-क्खम्भेहि[1] व धरिएण भुएहि[1] मह महोअहि-वट्ठे[2]।
उप्पा[F16a]डिआणिएण[3] समइञ्छउ विञ्झ-संकमेण[4] कइ-
बलं ॥६०॥

[उत यमल-स्तम्भाभ्यां इव धृतेन भुजाभ्यां मम महोदधि-पृष्ठे ।
उत्पाटितानीतेन समतिक्रामतु विन्ध्य-संक्रमेण कपि-बलम् ॥ ]

[F16a] प्रकारान्तरमाह । ओशब्दो विकल्पार्थः । अथवा युग्मरूपस्तम्भाभ्यामिव मम भुजाभ्यां धृतेनोत्पाटितानीतेन विन्ध्येन संक्रमणेनेव कपिबलं 'समइञ्छउ' समतिक्रामतु । अन्ये तु ओ अथवा यमलाभ्यां युगपदुत्पन्नाभ्यां स्तम्भाभ्यामिव भुजाभ्यां उन्मूलितानीतेनानन्तरं महोदधिपृष्ठे धृतेन विन्ध्यसंक्रमणेन कपिबलं 'समइञ्छउ'। यथा स्तम्भद्वयोपरि निहितेन संक्रमणकाष्ठेन लोकाः सञ्चरन्ति तथा भुजद्वयेनोपरिधृतेन विन्ध्येन भवन्तोऽपि सञ्चरन्त्वित्यर्थः[5] ॥६०॥

विवलाअन्त-भुअङ्गं उव्वत्तिअ-जलअरं विहिण्ण[6]-महिहरं ।
मुह-मारुअ-विहुअ-जलं पेच्छह[7] रअणाअरं करोमि थल-
वहं ॥६१॥

[विपलायमान-भुजङ्गं उद्वर्तित-जलचरं विभिन्न-महीधरम् ।
मख-मारुत-विधुत-जलं प्रेक्षध्वं रत्नाकरं करोमि स्थल-पथम् ॥ ]

प्रेक्षध्वं मुखमारुतेन विधुतजलमुत्सारितपानीयं रत्नाकरं समुद्रं त्रासाद्विपलायमानभुजङ्गम्, उद्वर्तितजलचरं विभिन्नमहीधरं स्थलपथं करोमि ॥६१॥

---

1 °त्थ° Ms, °हिँ B. 2 °मज्झे B. 3 उम्मूलिअइ° GB. 4 संक्रमणेण Ms. 5 सञ्चरन्त्व इत्यर्थः Ms. 6 Ms. original reading here is चलन्त°, but it has विभिण्ण° marginally. 7 °अ Ms.

[1]अह व सुवेलालग्गं पेच्छह अज्जेअ भग्ग-रक्खस-विडवं।
सीआ-किसलअ-सेसं मज्झ भुआअड्ढिअं[2] लअम्मिव[3] लङ्कं ॥६२

[अथवा सुवेलालग्नां प्रेक्षध्वं अद्य एव भग्न-राक्षस-विटपाम्।
सीता-किसलय-शेषां मम भुजाकृष्टां लतां इव लङ्काम्॥]

अथवा सुवेलालग्नां सुवेलगिरावालग्नां भग्नराक्षसविटपां सीताकिसलयशेषां मम भुजाकृष्टां लङ्कामद्यैव प्रेक्षध्वम्॥६२॥

[4]मज्झुक्खुडिउम्मूलिअ-भुआ-भमाइअ-विमुक्क-सेसद्धन्तं।
एत्तो-हुत्त-सुवेलं तत्तो-हुत्त-मलअं करेमि समुद्दं ॥६३॥

[मध्योत्खण्डितोन्मूलित-भुजा-भ्रामित-विमुक्त-शेषार्द्धान्तम्।
इतोऽभिमुख-सुवेलं ततोऽभिमुख-मलयं करोमि समुद्रम्॥]

अथवा मलयमेव भवद्भिः सह समुद्रपारं नयामीत्याह। भुजाभ्रामितो बाहुना मथितो मथनोत्सारितजलत्वान्मध्ये उत्खण्डितश्चासावुन्मूलितः क्षिप्तान्तजलश्च मध्यभाग एव वर्तमानजलत्वाद् विमुक्तशेषार्द्धान्तस्त्यक्तपूर्वपश्चिमपर्यन्तद्वयश्चेति तं, तथा यतो मूलजलोद्गमेनोन्मूलितत्वाद् भ्रमजलरयेन भ्रमितत्वाद्, इतोऽभिमुखो मलयदेशाक्रमणाभिमुखः सुवेलो यत्र तं, ततोऽभिमुखः सुवेलदेशाक्रमणाभिमुखश्च मलयो यत्र तं, तथा समुद्रं करोमि। **केचित्तु** उन्मूलित उत्खातश्चासौ भुजाभ्रामितश्चेति स तथा, अनन्तरं मध्ये उत्खण्डित एकदेशभग्नत्वादेव विमुक्तशेषार्द्धान्तं यथा स्यात्तथा इतोऽभिमुखीभवन् सुवेलो यत्र ततोऽभिमुखीभवन् मलयो यत्र ईदृशं समुद्रं करोमीत्यन्तर्भूतभवनक्रियाविशेषणतया उपपादयन्ति॥६३॥

ओ भग्ग-रक्खस-दुमं णिहअ-दसाणण-मइन्द-सुह-सञ्चारं।
रामाणुराअ-मत्तो मलेमि लङ्कं वण-त्थलिं व[5] वण-गओ ॥६४॥

---

1 This verse (62) comes after the next (63) in GB. texts.
2 °ट्ठिं° B. 3 लग्नं मिव GB. 4 मज्झ° GB.

**[ अथवा भग्नराक्षस-द्रुमां निहत-दशानन-मृगेन्द्र-सुर-सञ्चाराम् ।**
**रामानुराग-मत्तः मृद्नामि लङ्कां वन-स्थलीं इव वन-गजः ॥ ]**

राअ-सिरि-पवरसेणस्स एत्थ रावणवहे महाकव्वम्मि ।
वाणर-वइ-उच्छाहो तइओ आसासओ परिसमत्तो ॥

**[ राज-श्रीप्रवरसेनस्य अत्र रावणवधे महाकाव्ये ।**
**वानर-पत्युत्साहः तृतीयः आश्वासकः परिसमाप्तः ]**

अथवा भग्नाः पतिता राक्षसा एव द्रुमा यत्र । निहतो दशाननो मृगेन्द्र इव यत्र, सा चासौ सुखसञ्चरा चेति तथाभूतां लङ्कां रामानुरागेण मत्तो वनस्थलीमिव रक्षाशून्यां वनगज इव निरङ्कुशो मृद्नामि गजस्य हृष्टौ मदावस्था भवन्ति षष्ठ्यां मदावस्थायां गजः सिंहमपहन्ति । **केचित्तु** अथवा भग्ना द्रुमा इव राक्षसा यत्र, निहतेन मृगेन्द्रेण इव दशाननेन सुखसञ्चारां रामस्यानुरागेण, पक्षे रामायाः करिण्या अनुरागेण मत्तो वनगज इव वनस्थलीं लङ्कां मृद्नामि लङ्कामर्दने निरङ्कुशत्वसूचनाय वनगजत्वेनोपमानमिति प्राहुः ॥६४॥

इति वानरपत्युत्साह[1]स्तृतीय आश्वासः परिसमाप्तः ॥

---

1 ०पति-उत्० Ms.

# चउट्ठो आसासओ

अह पढम-वअण-णिहुअं पच्छा उम्हविअ-[1]-लज्जिअं कइ-सेण्णं ।
ससि-दंसण-पासुत्तं कमल-वणं व दिअसागमेण विउद्धं[2] ॥१॥

[अथ प्रथम-वचन-निभृतं पश्चात् ऊष्मायित-लज्जितं कपि-सैन्यम् ।
शशि-दर्शन-प्रसुप्तं कमल-वनं इव दिवसागमेन विबुद्धम् ॥ ]

इदानीं सुग्रीववचनप्रबोधितानां वानराणामुत्साहं दर्शयति—अथ प्रथमवचनानि 'धरणि-धरणे भुअचिअ' (III. 3) इत्यादीनि सामप्रधानानि तैर्निभृतं निरुद्यमं पश्चात् 'इअ अथिर-सामत्थे' ( III. 54 ) इत्युत्साहवचनैः[3] सहायमनादृत्य स्वयं विक्रमितुमिच्छता सुग्रीवेण ऊष्मितमुत्तेजितं लज्जितं व्रीडितं कपिसैन्यं कमलवनमिव शशिकरदर्शनेन सामवचनोपमेन प्रसुप्तं दिवसागमेनोत्साहवाक्येनेव विबुद्धं विगलितमोहं विगलितनिमीलितश्चाभूत् ॥१॥

णवरि अ [F16b] कइ-हिअआइं धुअन्धआर[4]-विअडाइ
गमणुच्छाहो ।
एक्को बहुआइ समं गिरि-सिहराइ[5] अरुणाअवो व्व विलग्गो ॥२॥

[अनन्तरं च कपि-हृदयानि धुतान्धकार-विकटानि गमनोत्साहः ।
एकः बहुकानि समं गिरि-शिखराणि अरुणातपः इव विलग्नः ॥ ]

[F16b] अनन्तरञ्चैकत्व धुतविषादान्धकारत्वाद्विकटानि विशालानि हृदयानि गिरि-शिखराणीवोन्नतत्वादेको गमनोत्साहोऽरुणातप इव तेजःस्वभावत्वादनुरागयोगाच्च बहून्येकः समं युगपद् 'विलग्गो' आरूढः ॥२॥

---

1 ०इअ० GB.
2 विबु० GB.
3 इत्युच्छाह० Ms
4 धुअ-अ० Ms.
5 ०राइं Ms.

तो दप्प-मुह-पसाओ आढत्तो ताण हिअअ-हसिउज्जोओ ।
रण-विक्कमग्गहत्थो णिअअ-सहाओ व्व पहरिसो वित्थरिउं ॥३॥

[ततः दर्प-मुख-प्रसादः आरब्धः तेषां हृदय-हसितोद्योतः ।
रण-विक्रमाग्रहस्तः निजक-स्वभावः इव प्रहर्षः विस्तरितुम् ॥ ]

ततो दर्पस्य मुखप्रसादो दर्पोल्लासं सूचयति मुखप्रसादोऽपि भवति तस्योल्लासं सूचयति । हृदयस्य हसितोद्योत इव हृदयस्य सोत्साहत्वाविष्करणात् । रणविक्रमस्याग्रः श्रेष्ठो हस्त इव रणव्यापारसाधकतमत्वात् तेषां निज(क)स्वभावो निजकः स्वभावश्चापलं सोऽपि विस्तारं गन्तुं प्रवृत्तः, दर्प-हृदयोल्लास-विक्रमाणां दृढत्वं तेषामुत्साहेन निरस्तमिति भावः । **केचित्तु** ततो गमनोत्साहानन्तरं तेषां वानराणां प्रहर्षो मानसः प्रसादो विस्तरी(रि)तुं वक्ष्यमाण-नानाजातीयानामनुभववत्तया प्रहर्षो निजकस्वभावश्चाञ्चल्यं स इव तदा चाञ्चल्यानि प्रसरणान्निजकसहाय इव वा 'आढत्तो' प्रवृत्तः । कीदृशः, दर्पस्य शौर्यस्य मुखप्रसादो यस्मात् स तथा हृदयस्य हसितोद्योतो हृदयवर्तिनो व्यापारस्याविष्करणाद् रणविक्रमयोरग्रहस्तः प्रथमावलम्बनं तयोः साधकतमत्वादिति प्रवदन्ति ॥३॥

बहुलुद्धअ[1]-धाउ-रअं रिसहेण धुओज्झराहअ-कवोल[2]-अलं ।
भिण्णं वाम-भुअ-सिरे[3] उम्मूलिअ-वलिअ-पण्णअं गिरि-सिहरं ॥४

[बहुलोद्धत-धातु-रजः ऋषभेण धुत-निर्झराहत-कपोल-तलम् ।
भिन्नं वाम-भुज-शिरसि उन्मूलित-वलित-पन्नगं गिरि-शिखरम् ॥ ]

हर्षमेव फलद्वारेण दर्शयति । बहुलमुद्धतं धातुरजो यस्माद् धुतेन निर्झरेणाहतं कपोलतलं येन तत्तथा । उन्मूलितवलितपन्नगम् उत्पाटितवलितसर्पं गिरिशिखरम् ऋषभेण वामभुजशिरसि स्कन्धे भिन्नं भग्नम् । **अन्ये** त्वेवम्भूतं यथा ऋषभेण वामभुजशिखरे गिरिशिखरं भिन्नमुन्मूलितपदं पन्नगशिखरयोर्निविडाश्लेषकथनाय, अन्यत्राप्याहन्यमाने

1 ०लुग्ग० Ms, which has also the reading ०लुद्ध० marginally.

2 ०ओल० GB. 3 ०सिहरे Ms.

पुरुषे आहन्तुर्जनस्य रोषेण कपोले चपेटादिप्रहारः क्रियत इति प्राकृतेऽपि तथेति धुतनिर्झ-राहृतेति पदेन व्यज्यते। स च रोषः प्रकृते निजाश्रितानां धातुधूलीनां पन्नगानाञ्च पीडितातिशयाद्गिरिशिखरस्योचित एव विशेषणत्रयं शिखरस्येति **कुलनाथः** ॥४॥

पुलउब्भेआअम्बं नीलो परिपुसइ विसम-कसण-च्छाअं।
हिअअ[1]-निहिओ-पहरिसं ससि-पडिभिण्ण-घण-सण्णिहं वच्छ-अडं[2] ॥५॥

**[पुलकोद्भेदाताम्रं नीलः परिप्रोञ्छति विषम-कृष्ण-च्छायम्।**
**हृदय-निहित-प्रहर्षं शशि-प्रतिभिन्न-घन-सन्निभं वक्षस्तटम् ॥]**

सामर्षहर्षयोगात् पुलकोद्भेदेनाताम्रमतएव विषमकृष्णच्छायं हृदयनिहितप्रहर्षत्वात् स्थगितेन शशिना प्रतिभिन्नः संपृक्तो यो घनस्तत्सदृशं वक्षःस्थलं नीलः परिमृषति हस्तेन घट्टयति। समुद्रदर्शनव्यामुग्धस्य हृदयस्याश्वासायेति भावः ॥५॥

विहडन्तोट्ठ-उड-दलं फुरन्त-दन्त-कर-बहल-केसर-वअरं।
पहरिस-चन्दालोए हसिअं कुमुएण सुरहि-गन्धुग्गारं ॥६॥

**[विघटमानोष्ठ-पुट-दलं स्फुरद्-दन्त-कर-बहल-केसर-प्रकरम्।**
**प्रहर्ष-चन्द्रालोके हसितं कुमुदेन सुरभि-गन्धोद्गारम् ॥]**

विघटमानोष्ठपुटं दलमिव यथा स्यात् स्फुरद्दन्तकराणां केसराणामिव प्रहर्षे चन्द्रालोक इव कुमुदेन कुमुदनाम्ना वानरेण कैरवेण च सुरभिगन्धस्योद्गारो यथा स्यात्तथा हसितम्। **केचित्तु** विघटमानो दलमिव ओष्ठपुटो यत्र तथा स्फुरतां दन्तकराणां बहलकेसराणामिव प्रकरो यत्र तथा सुरभिर्गन्धोद्गारो यत्र एवं यथा स्यात्तथा कुमुदेन वानरेण चन्द्रालोक इव प्रहर्षे सति हसितं पक्षे विकसितम् ॥६॥[3]

---

1 ०हिअ-णि० Ms. 2 ०अलं Ms. 3 5 Ms. Henceforth the number of each following verse is indicated by one number less.

विहडन्त-धरणि-वेढो[1] उअह-भुअ-क्खेव-मुहल-वेविर-विडवो ।
विसम-पडन्त-वि [F17a] सहरो वेला-अन्दण[2]-दुमो मइन्देण
धुओ ॥७॥

[विघटमान-धरणि-वेष्टः उभय-भुज-क्षेप-मुखर-वेपनशील-विटपः ।
विषम-पतद्-विषधरः वेला-चन्दन-द्रुमः मैन्देन धुतः ॥ ]

विघटमानो धरणीवेष्टो यस्योभयभुजाक्षेपेण मुखरा वेपनशीला विटपा यस्य विषममस्त-व्यस्तं पतन्तो विषधरा यस्मात् स तथाभूतो वेलास्थितश्चन्दनो मैन्देन धुतः। **केचित्तु** 'मइन्देन' वानरेणोभयभुजाक्षेपेण मुखराः शब्दायमाना वेपमानाश्च विटपा यस्य स वेलाचन्दनद्रुमो धुतः कम्पितः कम्पादेव विघटमानो धरणीबन्धो यस्य तथा विषमं पतन्तो विषधरा यस्मात्। अत्र सर्वेषां विशेषणानां क्रियाविशेषणत्वमेवोचितमन्यथा विध्यनुवादापत्तेः ॥७॥

दिप्पन्त-दुरालोआ दिविदस्स सधूम-सिहि-सिहावत्त-णिहा ।
सोम्मत्तणं ण पत्ता हरिस-भरेन्ती वि विसहरस्स व[3] दिट्ठी ॥८॥

[दीप्यमान-दुरालोका द्विविदस्य सधूम-शिखि-शिखावर्त-निभा ।
सौम्यत्वं न प्राप्ता हर्ष-भ्रियमाणा अपि विषधरस्य इव दृष्टिः ॥ ]

[F17a] अमर्षेण दीप्यमाना अतो दुरालोका कृष्णतारकामध्यलोहितवर्तुलभ्रमच्चक्षुर्गोल-त्वात् सधूमो यः शिखिनः शिखावर्तो ज्वालाभ्रमणं तन्निभा हर्षेण भ्रियमाणापि द्विविदस्य विषधरस्येव दृष्टिः सौम्यत्वं न प्राप्ता। **अन्ये तु** द्विविदस्य वानरस्य हर्षेण भ्रियमाणा पूर्यमाणा दृष्टिः सौम्यत्वं सुखेन दर्शनयोग्यत्वं न प्राप्ता, हेतुमाह, अमर्षेण दीप्यमाना सता दुरालोका ततो रोषपाटलस्य ॥८॥

---

1 ०बन्धो GB. 2 ०चन्दण० GB. 3 व omitted in Ms.

सरहो वि दरि-मुहग्गअ-पडिसद्द-प्फुडिअ-मलअ-अड-पब्भारं ।
मुञ्चइ विसअं णाअं मलेइ अङ्गञ्च रोस-विस-अण्णाअं ॥९॥

[शरभः अपि दरी-मुखोद्गत-प्रतिशब्द-स्फुटित-मलय-तट-प्राग्भारम् ।
मुञ्चति विशदं नादं मृद्नाति अङ्गं च रोष-विषार्द्रम् ॥ ]

दरीमुखादुद्गतेन प्रतिरवेण स्फुटितो भिदां गत इव मलयतटप्राग्भारो येन तं विशदं नादं सर्वतोऽपि मुञ्चति, अङ्गञ्च रोषविषेण रोषोद्गतस्वेदजालेन 'अन्नाअ' आर्द्रं मृद्नाति ॥९॥

अरुणाअम्ब-च्छाए तक्खण-मेत्त-पडिबुद्ध[1]-पङ्कअ-सोहे ।
फुरइ णिसढस्स वि फुडं मुहम्मि[2] दिअसस्स दिणअवो व्व
अमरिसो ॥१०॥

[अरुणाताम्र-च्छाये तत्क्षण-मात्र-प्रतिबुद्ध-पङ्कज-शोभे ।
स्फुरति निषधस्य अपि स्फुटं मुखे दिवसस्य दिनकरः इव अमर्षः ॥ ]

अरुणवदाताम्रा पक्षे अरुणेन रविसारथिना आताम्रा छाया यस्य तस्मिन्, क्षणमात्रं प्रतिबुद्धस्य पङ्कजस्येव प्रतिबुद्धेन च पङ्कजेन शोभा यस्य तस्मिन्निषधस्यापि मुखे अमर्षः दिवसस्य मुखे दिनकर इव अन्यैर्दुःसहत्वात् स्फुटं स्फुरति । **केचित्तु** निषधस्य वानरस्य मुखे अमर्षः स्फुटं स्फुरति मुखेनैवामर्षो लक्ष्यत इत्यर्थः । दिवसस्य मुखे आरम्भे दिनकर इव दिनारम्भोऽप्यरुणेन सारथिना ताम्रच्छायस्तत्क्षणमात्रं प्रतिबुद्धेन पङ्कजेन शोभा यस्य एवं भवति ॥१०॥

विअडाहरन्तरालं कअं सुसेणस्स रोस-हसिएण फुडं ।
उप्पाअ-रुहिर-अम्बं मज्झ-प्फुडिअ-रइ-मण्डलं मिव वअणं ॥११

---

1 ०उद्ध० Ms. 2 दिवसस्स placed before मुहम्मि in GB (cf. CKRb).

[विकटाधरान्तरालं कृतं सुषेणस्य रोष-हसितेन स्फुटम् ।
उत्पात-रुधिर-ताम्रं मध्य-स्फुटित-रवि-मण्डलं इव वदनम् ॥ ]

सुषेणस्य वदनं रोषहसितेन विकटाधरान्तरालमुत्पातरुधिरेण ताम्रं मध्यस्फुटितं रविमण्डलमिव चिरं कृतम् । **केचित्तु** सुषेणस्य रोषहसितेन विकटं बृहदधरान्तरालं यस्य एवञ्चेदुत्पातरुधिरेणाताम्रं मध्यस्फुटितरविमण्डलमिव वदनं चिरं कृतम् ॥११॥

हरिस-परिअम्भिएण[1] अदरुल्लसन्त[2]-रवि[3]-बिम्ब-अम्ब-च्छविणा ।
पुरओ-हुत्तारम्भो[4] मुहेण दिअसो[5] व्व पाअडो वालि-सुओ ॥१२

[ हर्ष-परिजृम्भितेन अदरोल्लसद्-रवि-विम्ब-ताम्र-च्छविना ।
पुरतोऽभिमुखारम्भः मुखेन दिवसः इव प्रकटः वालि-सुतः ॥ ]

हर्षपरिजृम्भितेन प्रमोदविकसितेन रोमावृतत्वेनासमप्रदर्शनाद् वानरमुखानामीषदुल्लसतो रविमण्डलस्येव पक्षे ईषदुल्लसता रविबिम्बेन ताम्रा द्युतिर्यस्य तेन मुखेन पक्षे प्रत्यूषेण पुरतोऽभिमुखारम्भो दिवस इव वालिसुतोऽङ्गदश्च प्रकटः । **केचित्तु** पुरतोऽभिमुख आरम्भो व्यवसायो यस्य एवंरूपतया वालिसुतः प्रकटो दिवस इव स यथा दरोल्लसद्रविबिम्बता-[म्रच्छविः] ॥१२॥

णेच्छइ णिव्वूढ-भरो लहुअं दप्पुद्धअत्तणं पवण-सुओ ।
कअ-पेसणस्स सो[F 17b]हइ धीरं चिअ महइ[6] रक्खिउं
वअणिज्जं ॥१३॥

[ न इच्छति निर्व्यूढ-भरः लघुकं दर्पोद्धतत्वं पवन-सुतः ।
कृत-प्रेषणस्य शोभते धैर्यं एव महति रक्षितुं वचनीयम् ॥ ]

---

1 ०आम्ह० Ms. 2 अद्दुल्ल० GB. 3 ०रइ० GB.
4 पुरु० Ms. 5 ०हु० Ms. 6 Omitted in Ms.

निव्यू॑ढभरः पवनसुतो हनुमान् लघुकं दर्पोद्धतत्वं नेच्छति सद्भिरनादृतमहङ्कारचेष्टितं नाकरोदित्यर्थः। यस्मात् कृतप्रेषणस्य सम्पादितप्रभुनियोगस्य धैर्यमेव शोभते, धैर्यमेव परापवादं रक्षितुं महत्यर्हति नान्यदिति भावः। **केचित्तु** दर्पोद्धृतत्वं नेच्छति, अत्र हेतुमाह कृतप्रेषणस्येति, धैर्यमेव शोभते न तु लघुत्वापादकं दर्पोद्धृतत्वमिति भावः। वचनीयं परीवादं प्रभुकार्यानुद्यमरूपं रक्षितुं निगृहीतुञ्च महत्यर्हति, यद्वा महति कार्ये जने वा वचनीयं रक्षितुं निग्रहीतुं धैर्यमेव शोभते ॥१३॥

**णिब्भच्छिओअहि-रवं फुडिआहर-णिव्वडन्त-दाढा-हीरं।**
**हसइ कइ-दप्प-पसमिअ-रोस-विरज्जन्त-लोअणो सुग्गीवो ॥१४॥**

**[ निर्भर्त्सितोदधि-रवं स्फुटिताधर-निर्वलद्-दंष्ट्रा-हीरम्।**
**हसति कपि-दर्प-प्रशमित-रोष-विरज्यमान-लोचनः सुग्रीवः ॥ ]**

[F17b] निर्भर्त्सितोदधिरवं यथा स्यात् स्फुटिताद्विकसितादधरान् [1]निर्वलद्-दंष्ट्राया हीरं तीक्ष्णाग्रं यथा स्यात्तथा कपीनां दर्पेण प्रशमितरोषतस्तु विरज्यन्ती विरक्तीभवन्ती लोचने यस्य स सुग्रीवो हसति। **केचित्तु** रोषेण विरज्यदरुणीभवत् पश्चात् कपिदर्पेण प्रशमितं लोचनं यस्य स सुग्रीवः निर्भर्त्सितोदधिरवं तथा स्फुरिताधरत्वेन निर्वलत् पृथङ्निष्पद्यमानं 'दाढाहीरं' दंष्ट्राग्रं यत्रैवंभूतं यथा स्यात्तथा हसति ॥१४॥

**णवरं[2] सुमित्ता-तणओ आसंघन्तो गुरुस्स णिअअञ्च बलं।**
**ण अ चिन्तेइ ण जम्पइ उअहिं सदसाणणं तणं व गणेन्तो ॥१५॥**

**[ केवलं सुमित्रा-तनयः आशंसन् गुरोः निजकं च बलम्।**
**न च चिन्तयति न जल्पति उदधिं सदशाननं तृणं इव गणयन् ॥ ]**

केवलं सुमित्रातनयो लक्ष्मणः गुरो रामस्य निजकञ्च बलमाशंसन् दशाननसहितमुदधिं तृणमिव गणयन् न च चिन्तयति न जल्पति ॥१५॥

---

1 निर्वूढदंष्ट्रा० Ms. 2 ०रि GB.

रहुणाहस्स वि दिट्ठी वाणर-वइणो फुरन्त-विद्दुम-अम्बं ।
वअणं वआणाहि चला कमलं कमलाहि भमर-वन्ति[1]व्व
गआ ॥१६॥

[रघुनाथस्य अपि दृष्टिः वानर-पतेः स्फुरद्-विद्रुम-ताम्रम् ।
वदनं वदनात् चला कमलं कमलात् भ्रमर-पङ्क्तिः इव गता ॥]

कपीनामुत्साहदर्शनादिदानीमनुष्ठानमुचितमिति रघुनाथस्यापि वदनाद् दृष्टिः स्फुरद्विद्रुमवत्ताम्रं वानरपतेः सुग्रीवस्य वदनं चला भ्रमरपंक्तिरिव पङ्कजात् पङ्कजं गता ॥१६॥

तो वअ-परिणामोणअ-भुमआवलि-रुब्भमाण-दिट्ठि-च्छेहो[2] ।
आसण्ण-धवल-मिहिआ-परिक्खलन्तोसहि-प्पहो व्व
महिहरो ॥१७॥

कर-वारिअ-कइ-लोओ सुग्गीव-विइण्ण-भासुरच्छि-च्छेहो[2] ।
जालाहअ-दुम-णिवहो फुलिङ्ग-पिङ्गलिअ-महिहरो व्व वन-
दओ[3] ॥१८॥

जम्पइ रिक्खाहिवई उण्णामिऊण महि-अलद्धन्त-णिहं ।
खलिअ-वलि-भङ्ग-दाविअ-वित्थअ-बहल-वण-कन्दरं वच्छ-
अलं[4] ॥१९॥

[ततः वयः-परिणामावनत-भ्रू-आवलि-रुध्यमान-दृष्टिक्षेपः ।
आसन्न-धवल-मेघिका-परिस्खलदोषधि-प्रभः इव महीधरः ।।]

1 ०पन्ति GB. 2 ०च्छोहो G, Ms. 3 ०दवो GB. 4 ०अडं GB.

कर-वारित-कपि-लोकः सुग्रीव-वितीर्ण-भासुराक्षि-क्षेपः।
ज्वालाहत-द्रुम-निवहः स्फुलिङ्ग-पिङ्गलित-महीधरः इव वन-दवः॥
जल्पति ऋक्षाधिपतिः उन्नमय्य महीतलार्द्धान्त-निभम्।
स्खलित-वलि-भङ्ग-दर्शित-विस्तृत-बहल-व्रण-कन्दरं वक्षस्तलम्॥]

ततो वयःपरिणामेन शैथिल्यादवनतया भ्रूलेखयावरुध्यमानदृष्टिविक्षेपः, अतश्चासन्नायां मेघिकायां स्वल्पमेघराज्यां प्रतिस्खलदोषधिप्रभो महीधर इव ऋक्षपतिर्जल्पति। **केचित्तु** ततः कपीनामुत्साहानन्तरं स्खलितेन वक्षःस्थलोन्नमनाद्विगलितेन बलिभङ्गेन दर्शितं विस्तृतं युद्धजन्यं बहलव्रणकन्दरं यथा स्यात्तथा महीतलार्द्धान्तनिभं वक्षःस्थलमुन्नमय्य, ऋक्षाधिपतिजाम्बवान् जल्पति। कन्दरोपमानेन व्रणस्य महत्त्वं सूच्यते। कीदृशः, वयःपरिणामावनता भ्रूरेव वलिस्तेन रुध्यमानो नयनक्षेपो यस्य, अतएवासन्नायां धवलमेघिकायां परिस्खलन्त्योषधिप्रभा यस्य तादृशो महीधर इव। मेघिका स्वल्पमेघराजिः [1]क्षिपश्छुह इति क्षिपधातोश्छुहादेशः। अत्र जरापाण्डुभ्रूलताधवलमेघिकयो दृष्टिक्षेपौषधिप्रभयोः ऋक्षपतिमहीधरयोः साम्यत्वाद्वाक्योपमा ॥१७॥

उच्चावचनिषेधार्थं करवारितकपिलोकः पूर्वं तदुक्तानुचितारम्भनिषेधाभिप्रायेण सुग्रीवार्पितभास्वराक्षिक्षेपः, अतएवोत्क्षिप्तताम्राङ्गुलिकरनिभया ज्वालयाहतः कपिलोकनिभो द्रुमनिवहो येन, भास्वराक्षिक्षेपनिभैः स्फुलिङ्गैरग्निकणैः पिङ्गलितः सुग्रीवनिभो महीधरो येन, तादृशो वनदव इव। करवारितकपिलोक उच्चावचनिषेधार्थमिति भावः। सुग्रीवे वितीर्णो भास्वरोऽक्षिक्षेपो येन, अनुचितजल्पननिषेधायेति भावः। अतो ज्वालाहतो द्रुमनिवहः स्फुलिङ्गपिङ्गलितमहीधरो वनदव इव। अत्र करज्वालयोः कपिलोकवनद्रुमनिवहयोरक्षिक्षेपस्फुलिङ्गयोः सुग्रीवमहीधरयो र्जाम्बवद्वनदवयोः साम्याद्वाक्यान्तोपमा इति **प्राहुः**[2] ( केचित् ? ) ॥१८॥

बृहदायामविस्तारत्वान्महीतलैकदेशनिभं वक्षःस्थलमुन्नमय्य जल्पति। उन्नमितत्वात् स्खलितजरावलिभङ्गत्वेन दर्शिताविष्कृता बहला बहुयुद्धजनितव्रणाः कन्दरा इव यत्र तत्तथा। परिणतबुद्धितां बहुदृश्वताञ्च प्रतिपादयितुमात्मनश्चिरन्तनत्वमाह ॥१९॥

---

1 Cf. Hem. VIII. 4. 143.  2 Evidently the commentator refers here to the interpretation of any other previous commentator or commentators.

सग्गं[F18a] अपारिजाअं कोत्थुह-लच्छि-रहिअं महुमहस्स[1]उरं ।
सुमरामि[2] महण-पुरओ अ-मुद्ध-अन्दञ्च हर-जडा-पब्भारं ॥२०॥

[स्वर्गं अपारिजातं कौस्तुभ-लक्ष्मी रहितं मधुमथनस्य उरः ।
स्मरामि मथन-पुरतः अ-मुग्धचन्द्रं च हर-जटा-प्राग्भारम् ॥]

[F18a] मथनपुरतः समुद्रमथनात् पूर्वं स्वर्गमपारिजातं कौस्तुभलक्ष्मीरहितं मधुमथनस्योरोऽमुग्धचन्द्रञ्च हरजटाप्राग्भारं स्मरामि । अयमाशयः, मयैव दृष्टमिमं मथित्वा, इन्द्रेण पारिजातो विष्णुना कौस्तुभलक्ष्म्यौ हरेण मुग्धचन्द्रो गृहीता, अतः किमस्मिन् दुर्लङ्घ्यबुद्धिः क्रियते ॥२०॥

महुमह-हत्थम्मि मए णक्खुक्खुडिअ-सरसं महासुर-हिअअं ।
दिट्ठा अणुधावन्ती अक्खित्तं णिअअ[3]-हत्थ-कमलंव सिरी ॥२१॥

[मधुमथन-हस्ते मया नखोत्खण्डित-सरसं महासुर-हृदयम् ।
दृष्टा अनुधावन्ती आक्षिप्तं निजक-हस्त-कमलं इव श्रीः ॥ ]

नरसिंहरूपिणो मधुमथनस्य हस्ते महासुरस्य हिरण्यकशिपोर्हृदयं हृत्पुण्डरीकं नखैरुत्खण्डितं तत् सरसञ्चेति तथाक्षिप्तमाकृष्य गृहीतं निजकं स्वहस्तस्थितं कमलमिवानुधावन्ती दैत्यानां श्रीर्मया दृष्टा । एतेन बहुवृत्तान्तज्ञत्वं दर्शितम् ॥२१॥

तञ्च हिरण्णक्खस्स वि सुमरामि महावराह-दाढा-भिण्णं ।
महि-मण्डलं व तुलिअं उक्खअ-हिअअ-गिरि-बन्धणं वच्छ-
अलं[4] ॥२२॥

[तत् च हिरण्याक्षस्य अपि स्मरामि महावराह-दंष्ट्रा-भिन्नम् ।
मही-मण्डलं इव तुलितं उत्खात-हृदय-गिरि-बन्धनं वक्षस्तलम् ॥ ]

---

1 महुमहणस्स Ms. 2 सुमि० GB. 3 One अ omitted in Ms.
4 ०लअं Ms. ; ०अडं GB.

तच्च न केवलं हिरण्यकशिपोर्हृदयं तद्भ्रातुर्हिरण्याक्षस्यापि जलधिमग्नमहीमण्डलोद्धरणप्रवृत्तेन महावराहेण दंष्ट्र्या भिन्नं तुलितञ्च यद् वक्षःस्थलं तदपि स्मरामि। महीमण्डलमिवेति महीमण्डलमपि तथाभूतं स्मरामि। तदपि मे प्रत्यक्षम्। हृदयं गिरिरिव दृढनिष्ठुरत्वात् तस्य बन्धनं बन्धनस्थानं बध्यतेऽस्मिन्निति कृत्वा, उत्खातमुत्पाटितं हृदयगिरिबन्धनं यस्य तत्तथा। महीपक्षे, उत्खातानि गिरय एव बन्धनानि यस्य गिरिबन्धैः सहैवेत्यर्थः। एतेनास्यैव रामाभिधाननारायणस्य क्षीरोदमथन-भूमण्डलोद्धरणहिरण्यकशिपुवधहिरण्याक्षभेदादयो ये व्यापारास्ते च मम प्रत्यक्षा एव। अतो रावणवधे समुद्रः कथमस्य परिपन्थी भविष्यतीति भावः। अन्येषां कार्यबहिर्मुखतां मनसिकृत्यात्मनः परिणतबुद्धित्वेन कार्यतत्त्वज्ञत्वोपादेयवाक्यतां सूचयन्नाह ॥२२॥

**धीरं हरइ विसाओ[1] विणअं जोव्वण-मओ अणङ्गो लज्जं।**
**एक्कन्त-गहिअ-वक्खो किं सीसउ जं ठवेइ वअ-परिणामो ॥२३॥**

**[धैर्यं हरति विषादः विनयं यौवन-मदः अनङ्गः लज्जाम्।**
**एकान्त-गृहीत-पक्षः किं शिष्यतां यत् स्थापयति वयः-परिणामः ॥]**

प्रथमे वयसि विषयविसंवादयोगेन विवेकलोपात् कार्यप्रतिपत्तिविच्छेदेनाप्रतिपत्तिर्विषादो धैर्यं विद्वत्तां हरति, धीरो विद्वान् तस्य भावो धैर्यं, यौवनमदो विनयमनङ्गो लज्जां हरतीत्यत्रापि योज्यम्। एकान्तो निश्चयस्तेन गृहीतः पक्षः सुसाध्यो येन स वयःपरिणाम एषां विषादयौवनमदानङ्गानां मध्ये किं 'सीसउ' कथ्यतां यत् स्थापयति न किमपि, अपि तु सर्वमेवैतद्विनाशयतीत्यर्थः। ततो विषादादि[2]-कारणत्रितयाभावात् तत्कार्यानुदय इति तद्विरोधिवयःपरिणतिसाध्यानां धैर्यविनयलज्जानां योगो भवति, तेन कार्यतत्त्वपरिज्ञानं भवति, उच्चावचं त्यक्त्वा मम परिणतस्य बुद्ध्या प्रतिपत्तिः क्रियतां इति भावः। **केचित्** विषादः सत्त्वसंक्षयः धैर्यं पाण्डित्यं सदसद्विवेचनरूपं हरति तथा यौवनमदो विनयमनौद्धत्यम् ॥२३॥

1 विषा० Ms.    2 विषादि० Ms.

अणुहूअ[1]-मुणेअव्वे विहडिअ-विसमक्खरे वि संघडिअत्थे ।
जोव्वण-मूढ-पहसिए मा अवमण्णह जरा-परिणउल्लावे ॥२४॥

[अनुभूत-ज्ञातव्यान् विघटित-विषमाक्षरान् अपि संघटितार्थान् ।
यौवन-मूढ-प्रहसितान् मा अवमन्यध्वं जरा-परिणतोल्लापान् ॥ ]

तदेव प्रकृते योजयन्नाह । अनेकशास्त्राभ्यासेन ज्ञातमनुभूतमनुभवलिङ्गं येषु तान्, अथवा साक्षादनादृतानपि अनुभूतेनानुभवेन ज्ञातव्यान् । दन्ताद्यवसादेन विघटितविषमाक्षरानपि संघटितार्थान् सम्यक्प्रतिपादितार्थान्, अतएव यौवनमूढैः प्रहसितानुपहसितान् जरापरिणतस्योल्लापान् मा अवमन्यध्वम्, ईदृशां वृद्धानामुल्लापोऽप्यवमन्तुं नोचितः, किं पुनरुपदेश इति भावः ॥२४॥

तुज्झ भुएसु[2] णिसण्णो हरि-सत्थो पब्बलो सुराण वि समरे ।
मारुअ-लद्ध-त्थामा ओवग्गइ महि-रओ वि ता दिअसअरं ॥२५॥

[तव भुजयोः निषण्णः हरि-सार्थः प्रबलः सुराणां अपि समरे ।
मारुत-लब्ध-स्थाम अववलगति मही-रजः अपि तावत् दिनकरम् ॥ ]

'इअ अथिर-सामत्थे' ( III. 54 ) इत्यादिस्कन्धकैः परिजनस्यानुपयुक्तत्वं यदुक्तं तन्निरस्यन्नाह । तव भुजयोर्निषण्णो हरिसार्थो वानराणां यूथः सुराणामपि समरे 'पब्बलो' समर्थः । इदमेव दृष्टान्तेन द्रढयन्नाह—आस्तामन्यद् महीरजोऽपि तावन् मारुतात् लब्धस्थाम प्राप्तबलं सत् तेजस्विनामग्रगण्यं दिवसकरमववल्गत्यास्कन्दति किं पुनरन्यत् ॥२५॥

किं उण दुप्परिअल्ला[3] मज्जाआइक्कमुप्पह[4]-वलिज्जन्ता ।
उहहि व्व सार-गरुआ घडिआ वि विसंघडन्ति क[F18b]-
ज्जालावा ॥२६॥

---

1 A superfluous letter of the shape of 'व' appears in Ms after ०हूअ०. 2 भुआ० GB. 3 दुःप० Ms. 4 मज्जाइ०

[किं पुनः दुष्परिकलनीयाः मर्यादातिक्रमोत्पथ-वल्यमानाः ।
उदधयः इव सार-गुरुकाः घटिताः अपि विसंघटन्ते कार्यालापाः ॥]

[F18b] किं पुनः कार्यालापाः कार्यशब्दवाच्याः कार्यविशेषा उदधय इव सारेणार्थेन रत्नादिना च गुरुकाः, 'दुप्परिअल्ला' अशक्यावधारणा अशक्यलङ्घनाः। दुरधिगमा हि गतिः कार्यस्येत्याशयः। घटिता अपि विसंघटन्ते। अत्र हेतुर्मर्यादातिक्रमो दर्पाच्छास्त्र-लङ्घनं स एवोत्पथो विमार्गस्तेन वल्यमाना नीयमानाः, पक्षे मर्यादा स्थितिः। स्वबुद्ध्या कल्पनं न युक्तमिति दर्शयितुं शास्त्रार्थ एव बलवानित्यत आह। **केचित्तु** किं पुनः कार्यालापाः कार्यशब्दव्यपदेश्या उदधय इव घटिता अपि स्थैर्यं प्रापिता विसंघटन्ते स्खलन्ति। कार्यस्य समुद्रस्य च साम्यमाह—'दुप्परिअल्ला' दुःखेन परिलंघनीयाः परिलंघनं पारगमनं। सारेण बलीयस्त्वेन रत्नादिना च गुरुकाः, परिसंघटने हेतुमाह मर्यादातिक्रमेण शास्त्रोल्लंघनेन पक्षे स्थितिलंघनेन ॥२६॥

**पच्चक्खाहि परोक्खं कह वि तुलग्ग-घडिआहि आगम-सुद्धं ।**
**सञ्चालिअ-णिक्कम्पं[1] अणुहूआहि वि मह सुअञ्चिअ गरुअं ॥२७॥**

[प्रत्यक्षात् परोक्षं कथं अपि तुलाग्र-घटितात् आगम-शुद्धम् ।
सञ्चालित-निष्कम्पं अनुभूतात् अपि मम श्रुतं एव गुरुकम् ॥]

शास्त्रदृष्टिरेव बलवती न तु तद्विरुद्धा स्वबुद्धिकल्पनेत्याह—प्रत्यक्षमिन्द्रियजन्यं ज्ञानं तच्च भ्रान्तमपि भवति यथा शुक्तयादौ रजतबुद्धिः, अतः कथमपि तुलाग्रवद् घटितात् स्थिरीकृताद् उपपन्नीकृतादिति यावत् प्रत्यक्षादिन्द्रियार्थसन्निकर्षज्ञानात् साक्षादनुभूतादपि परोक्षं साक्षा-दाननुभूतमपि श्रुतमेव शास्त्राधिगतमेव मम गुरुकमादृतम्, अत्र हेतुः, आगमशुद्धं आप्तानां हरिहरादीनामन्येषां वा निश्चितवादिनां वचनमागमस्तेन शुद्धं निर्मलं शास्त्रस्यागमावि-रुद्धत्वादतएव सञ्चालितनिष्कम्पं विचार्य सिद्धान्तीकृतत्वात् स्थिरम्। एतेन यदह-मागमानुमितं भणामि तत्तथा ध्रियतामिति भावः ॥२७॥

---

1 ०णिप्पअप्पं Ms. ( evidently for ०णिप्पअम्पं=०निष्प्रकम्पं ) but it mars the metre.

जं साहेन्ति समत्ता[1] सम-सार-परक्कमा[2] ण तं णिव्वलिआ[3] ।
एक्को पअवेज्ज दढं मिलिआ उण दिणअरा खवेन्ति[4] तिहु-
अणं ॥२८॥

[यत् साधयन्ति समस्ताः सम-सार-पराक्रमाः न तत् निर्वलिताः ।
एकः प्रतपेत् दृढं मिलिताः पुनः दिनकराः क्षपयन्ति त्रिभुवनम् ॥]

कार्योद्यतानामेकबुद्धित्वमेव साधकमित्याह । समौ सारपराक्रमौ येषां ते समस्ता मिलिताः सन्तो यत् साधयन्ति, न तत् निर्वलिताः पृथग्भूताः । एतदेव द्रढयन्नाह- एको गाढं दृढं प्रतपेत्, मिलिताः पुनर्दिनकरास्त्रिभुवनं तापयन्ति ॥२८॥

ओवग्गइ अहिमाणं पडिवक्खस्स वि ण तारिसं देइ भअं ।
अमरिस-गहिओ व्व सरो विद्दाइ अभाअ-सन्धिओ
उच्छाहो[5] ॥२९॥

[अववल्गति अभिमानं प्रतिपक्षस्य अपि न तादृशं ददाति भयम् ।
अमर्ष-गृहीतः एव शरः विद्राति अभाग-संहितः उत्साहः ॥ ]

अकालकृतस्योत्साहस्य न कोऽपि गुणः प्रत्युत दोष एवेत्याह—अभागे अकाले च अस्थाने च संहितो योजितोऽमर्षेण क्रोधेन गृहीत उत्साहः शर इवाभिमानमववल्गत्यास्कन्दति । काले स्थाने च संहितो यादृशं भयं ददाति तादृशं भयं न प्रतिपक्षस्य च ददाति, अतो निष्फल एव विलीयते । **तथाचोक्तं**—"न पापाय पूर्वं लिम्पेत् कालं वीक्ष्य समुत्पतेत् । पश्चात्तापाय निर्दिष्टा विक्रमैकरसज्ञता" । **केचित्** त्वमर्षेण गृहीत उत्साहस्तादृशः शर इव अभागेऽकालेऽस्थाने च संहितो योजितः सन् विद्रात्यनिष्टफलतया निष्फलतया च विलीयत इत्यर्थः ॥२९॥

---

1 ०त्था GB. 2 क्खमा Ms. 3 ०डिआ GB. 4 थवे० Ms.
5 उत्साहो Ms, but corrected marginally into उच्छाहो

णेअ तुमे मोत्तव्वं सुट्ठु वि तुरिएण धीर[1]-पत्थिव-चरिअं ।
तुवरन्तस्स रविस्स वि मउइज्जइ दक्खिणाअणम्मि पआवो[2] ॥३०॥

[नैव त्वया मोक्तव्यं सुष्ठु अपि त्वरितेन धीर-पार्थिव-चरितम् ।
त्वरमाणस्य रवेः अपि मृदूयते दक्षिणायने प्रतापः ॥ ]

अविमृष्यकारिता पार्थिवानां नोचितेत्याह । यच्च त्वया 'किं व ण आणह' [III.14] इत्यादिना विमृष्यमाणमेव कार्यं मोहं जनयति, अतः सहसैव क्रियतामिति त्वया दर्शिता तत्राह 'णेअ' । त्वरितेन त्वया धीरस्य विमृष्यकारिणः पार्थिवस्य सुष्ठु चरितमपि नैव मोक्तव्यम् । त्वराया दूषणमाह त्वरमाणस्य रवेरपि मृदूयते दक्षिणायने प्रतापः । एतेन सहसा कार्यं न कुर्यादिति भावः ॥३०॥

किं अइराएण इमा अमग्ग-समर-सुह-चिन्तिअ-कहाहि[3] कआ ।
पहरिस-पणामिअ-मुही गोत्त-क्खलण-विमण व्व दे जअ-
लच्छी ॥३१॥

[किं अतिरागेण इयं अमार्ग-समर-सुख-चिन्तित-कथाभिः कृता ।
प्रहर्ष-प्रणामित-मुखी गोत्र-स्खलन-विमनाः इव त्वया जय-लक्ष्मीः ॥]

अविमृष्यकारिणं श्रीरेव नोपसर्पतीत्याह । अतिरागेण शौर्यवशेनानुरागेण च परनिपातादमार्गेणाशास्त्रीयवर्त्मना नायकानुचितपथेन च चिन्तितस्य समरसुखस्य, पक्षे स्मरयुद्धोत्सवस्य कथाभिः किं 'दे' किं त्वया प्रहर्षेण प्रणामितमर्पितमाभिमुख्यं वदनञ्च, त्वया एवंभूता जयलक्ष्मीः कान्तेव गोत्रस्खलनविमनायितेव कृता कर्तुमारब्धा । **केचित्तु** अभिरामेणेति देशकालादिमनपेक्ष्य शौर्यबलनैव केवलेन शास्त्रीयं मार्गं त्यक्त्वा अमार्गेण यच्चिन्तितं समरसुखं तस्य कथाभिरियं जयलक्ष्मीः प्रहतसुखचिन्तनं तेन याः कथास्ताभि र्गोत्रस्खलितेन विमनाः क्रियत इति ॥३१॥

---

1 वीर॰ Ms, but it has धीर॰ marginally. 2 ॰आओ GB.
3 ॰क आहि Ms.

मा रज्जह रहसे[1] च्चिअ चन्दस्स वि दाव कुमुअ-वण-णिप्फण्णो।
दूरं णिव्वूढ-भरो[2] एक्क-रसस्स कमलेसु विद्दाइ जसो ॥३२॥

[मा रज्यत रभसे एव चन्द्रस्य अपि तावत् कुमुद-वन-निष्पन्नम्।
दूरं निर्व्यूढ-भरं एक-रसस्य कमलेषु विद्राति यशः ॥]

विमर्षनैरपेक्ष्येणोत्साहस्यानपेक्षणीयत्वमाह। यत एवं तस्माद् देशकालादिमनपेक्ष्य रभस एव उत्साहे[3] एव किं रज्यत, यत आस्तां तावदन्यश्चन्द्रस्याप्येकरसस्य तावत् कुमुदमालानुरागिणो विकाशकत्वेन कुमुदवननिष्पन्नं यद्यशः ख्यातिर्दूरमत्यर्थं निर्व्यूढभरं धृतोत्कर्षं तत् कमलेषु विद्राति तदविकाशनाद् विलयं याति। तेन रभसेन न संपतेदिति नयो दर्शितः ॥३२॥

किं अ][F 19a] प्पणा परिअणो परस्स ओ परिअणेण दे पडि-
वक्खो।
सोहइ पत्थिज्जन्तो जिआहिमाणस्स किं जअम्मि वि गहणं ॥३३॥

[किं आत्मना परिजनः परस्य उत परिजनेन ते प्रतिपक्षः।
शोभते प्रार्थ्यमानः जिताभिमानस्य किं जये (जगति वा) अपि ग्रहणम्
(गहनम् वा) ॥]

[F 19a] समर्थस्यापि सहायनिरपेक्षो नोद्यमः श्रेयानित्याह। किमसहायगमनेनात्मना स्वयमेव शत्रो रावणस्य परिजनो धूम्राक्षादिः प्रार्थ्यमानोऽभियुज्यमानः शोभते युज्यते, उत सहायगमनेन तव परिजनेन हनुमदङ्गदादिना रावणः प्रार्थ्यमानः शोभते, निरूप्यतां तावदुभयोर्मध्ये कः शोभाकरः पक्ष इति सहायेनैव शत्रुर्जीयत इति प्रभोः शोभैवेति भावः। एतद्विपरीतस्वीकारे तु जिताभिमानस्याभिमानशून्यस्य किं जयेऽपि ग्रहणम्

1 ॰स GB. 2 णिव्वलिअ-गुणो GB. but CKS have the reading of Ms. 3 उत्सोह Ms.

आदरः। अथवा अभिमानशून्यस्य जगत्यपि किम् आदरः? **अन्ये तु** ततोऽभिमानेन सहायस्य निरपेक्षता न युक्ता प्रत्युताभिमान एव जेतुं युज्यत इति, तथा च जिताभिमानस्य जगत्यपि किं गहनं दुर्लभमपि तु नेत्याह ॥३३॥

**हणुमन्ताइसएण अ[1] हणुमन्त-प्पमुह[2]-वाणराण अ वइणा।**
**धीर अणिव्वडिअ[3]-जसं काअव्वं किं तुमे वि मारुइ-सरिसं ॥३४**

**[हनुमदतिशयितेन च हनुमत्-प्रमुख-वानराणां च पत्या।**
**धीर अनिर्वेलित-यशः कर्तव्यं किं त्वया अपि मारुति-सदृशम् ॥]**

नन्वेकाकिनैव हनूमता समुद्रलङ्घनं कृतमित्याह। हे धीर हनूमतोऽप्यतिशयशालिनो-त्कर्षवता हनुमत्प्रमुखानाञ्च वानराणां पत्या पृथग्भूतं यशो यत्र, एवं यथास्यात्तथा मारुति-सदृशं कर्तव्यं सेवकेन सहैककार्यकरणादसाधारणयशःशून्यं कर्मानुचितमिति भावः। **कुलनाथस्तु** अनिष्पन्नयशो यथा स्यात्तथा त्वयापि किं मारुतिसदृशं कर्तव्यम्, ईदृशेन कर्मणा यशोऽनुत्पत्तेरित्याह ॥३४॥

**कह तम्मि वि लाइज्जउ[4] जम्मि अइण्ण-प्फला अदूर-पसरिआ।**
**पडिअम्मि दुमे व्व लआ स च्चिअ अण्णं पुणो वि[5] लग्गइ**
**आणा ॥३५॥**

**[कथं तस्मिन् अपि लाग्यतां यस्मिन् अदत्त-फला अदूर-प्रसृता।**
**पतिते द्रुमे इव लता सा एव अन्यं पुनः अपि लगति आज्ञा ॥]**

किञ्चामार्गप्रवृत्तेन त्वया रामस्याज्ञा विफलीकृता, अन्यस्मिन् लगति चेत् तदा तवैवाकीर्तिः स्यादित्याशयेनाह। कथं तस्मिन्नपि सहाये द्रुमे च आज्ञा लता च लाग्यतां यस्मिन्नदूर-प्रसृतारोहणमालादेव स्खलिता, अतएवादत्तफला सती पतिते द्रुमे इव सैवाज्ञा लता चान्यं सहायं द्रुमं च लगति। तथा च नीतिपथमुल्लङ्घ्य तत्कार्याकरणेऽपि संभावितस्य तवाकीर्तिः स्यादिति भावः ॥३५॥

---

1 ०सएणं without the word अ after it, GB. 2 ०मुहाण GB.
3 ०लि० GB. 4 ०इ GB. 5 विल० G.

हन्तुं विमग्गमाणो हन्तुं तुरिअस्स अप्पणा दहवअणं ।
किं इच्छसि काउं जे[1] पवअ-वइ पिअन्ति विप्पिअं रहुवइणो ॥३६

[हन्तुं विमार्गयन् हन्तुं त्वरितस्य आत्मना दशवदनम् ।
किं इच्छसि कर्तुं यत् प्लवग-पते प्रियं इति विप्रियं रघुपतेः ॥ ]

यश्चात्मना रावणवधोऽभिलष्यते तदप्यनुचितमित्याह । 'जे' शब्दः पादपूरणे सम्बोधने वा । भो प्लवगपते आत्मना दशवदनं हन्तुं त्वरितस्य सप्रतिज्ञं यतमानस्य रघुपतेः प्रियमिति कृत्वा दशवदनं हन्तुं विमार्गयन् प्रार्थयन् किमप्रियं कर्तुमिच्छसि तस्य प्रतिज्ञाहानिस्त्वया कर्तुमनुचितेति भावः ॥३६॥

इअ णिअमिअ-सुग्गीवो रामन्तेण वलिओ पिआमह-तणओ ।
परिमट्ठ-मेरु-सिहरो सूराहिमुहो व्व पलअ-धूमुप्पीडो ॥३७॥

[इति नियमित-सुग्रीवः रामान्तेन वलितः पितामह-तनयः ।
परिमृष्ट-मेरु-शिखरः सूर्याभिमुखः इव प्रलय-धूमोत्पीडः ॥]

इत्युक्तोपदेशेन नियमितो निराकृतः सुग्रीवो येन स पितामहतनयो जाम्बवान् रामान्तेन रामसमीपेन वलितो निवेदयितुं संमुखीभूतः । परिमृष्टमाच्छादितं मेरुशिखरं येन, ईदृशः सन् सूर्याभिमुखः प्रलयधूमोत्पीड इव कनकवर्णत्वात् सुग्रीवस्य मेरुशिखरेण तेजोमयत्वा-द्रामस्य सूर्येण श्यामभीषणत्वाच्च जाम्बवतः प्रलयधूमेन सहोपमानम् ॥३७॥

जम्पइ अ किरण-पम्हल-फुरन्त-दन्त-प्पहा-णिहाओत्थइअं ।
विणअ-पणअं वहन्तो समुहागअ-धवल-केसर-सडं व[2] मुहं ॥३८॥

[जल्पति च किरण-पक्ष्मल-स्फुरद्-दन्त-प्रभा-निघातावस्थगितम् ।
विनय-प्रणतं वहन् संमुखागत-धवल-केसर-सटं इव मुखम् ॥]

---

1 ज्जे Ms ; the reading से (=अस्य KS) appearing better. 2 ०टम्व Ms.

किरणैः पक्ष्मलत्वादतएव स्फुरतां दन्तानां प्रभानिवहेनावस्थगितमतएव संमुखागतधवलकेसरसटमिव वहन् मुखं विनयप्रणतं यथा स्यात्तथा जल्पति च। विनयप्रणतं मुखस्य विशेषणं वा ॥३८॥

**रक्खिज्जइ[1] तेलोक्कं पलअ-समुद्द-विहुरा धरिज्जइ वसुहा।**
**उअरद्धन्त-प[F 19b]हुत्ते मुज्झिज्जइ[2] साअरे त्ति [3]विम्हअणिज्जं ॥३९॥**

**[रक्ष्यते त्रैलोक्यं प्रलय-समुद्र-विधुरा ध्रियते वसुधा।**
**उदरार्धान्त-प्रभूते मुह्यते सागरे इति विस्मयनीयम् ॥]**

त्रिभुवनस्थितिकारिणा त्वया त्रैलोक्यं रक्ष्यते तेन तेनावतारेणेति भावः। प्रलयसमुद्रविधुरा धरणी ध्रियत इत्यादि दुष्करकर्मकारिणा विश्वम्भरेण, उदरार्धान्तप्रभूते उदरैकदेशसम्मिते सागरे मुह्यत इति विस्मयः ॥३९॥

**धणु-वावारस्स रणे कुविअ-कअन्त-णिमिसन्तर-णिहस्स तुहं।**
**फुड[4]-विज्जु-विलसिअस्स व आरम्भो च्चिअ ण होइ किं अवसाणं ॥४०॥**

**[धनुर्व्यापारस्य रणे कुपित-कृतान्त-निमेषान्तर-निभस्य तव।**
**स्फुट-विद्युद्-विलसितस्य इव आरम्भः एव न भवति किं अवसानम् ॥]**

प्रशंसया शौर्यमुद्दीपयन्नाह। कुपितस्य कृतान्तस्य यन्निमेषान्तरं भ्रूव्यापारविशेषस्तन्निभस्य त्वदीयधनुर्व्यापारस्य स्फुटविद्युद्विलसितस्येवारम्भ एव किमवसानं न भवति। यथा विद्युदारम्भक्षण एवावसानक्षणस्तथा धनुर्व्यापारक्षण एव शत्रुनाशक्षण इत्यर्थः। यद्वारम्भादेव शत्रुनाशेन धनुर्व्यापारस्यारम्भ एव न पुनरक्रियमाणत्वात् किमवसानं न भवतीत्यर्थः। तथाचासाध्यसाधनक्षमस्य धनुर्व्यापारस्य पुरतः कोऽयं समुद्रो नाम वराक इति भावः। **कुलनाथस्तु** कुपितस्य कृतान्तस्य यन्निमेषान्तरं क्षयहेतुः सूक्ष्मकालविशेषस्तन्निभस्य धनुर्व्यापारस्येत्यर्थ इत्याह ॥४०॥

---

1 रक्खि° Ms. 2 विमुहिज्जइ GB. 3 °रत्ति Ms.
4 प्फु° Ms.

णिव्वुब्भइ पलअ-भरो तीरइ वलवा-मुहाणलो विसहिउं[1] ।
दिण्णं जेणेअ तुमे कह काहिइ[2] साअरो तहिं ञ्चिअ धीरं ॥४१॥

[निरुह्यते प्रलय-भरः शक्यते वडवा-मुखानलः अपि विसोढुम् ।
दत्तं येन एव त्वया कथं करिष्यति सागरः तस्मिन् एव धैर्यम् ॥]

येनैव त्वया धैर्यं दत्तं कथं तस्मिन्नेव सागरस्तत् करिष्यति त्वदभ्यनुनयाद् दुस्तरत्वं त्यक्ष्यतीति भावः । यस्य धैर्यस्य प्रसादेन प्रलयभरो निःशेषमुह्यते वडवानलोऽपि परिषोढुं शक्यते । येनैव त्वया दत्तमादिष्टं सत् प्रलयभरः प्रलयकार्यभारो निर्व्युह्यते कथं करिष्यति सागरस्तस्मिन्नेव धैर्यं त्वदाज्ञया सर्वानेवास्मानुत्तारयिष्यतीति भावः ॥४१॥

[3]तो सेल-सार-गरुअं अइरा-होन्त-दइआ-समागम-पिसुणं ।
अभिणन्दिऊण सुइरं फुरमाणब्भहिअ[4]-पीवरं णिअअ-भुअं ॥४२॥
तो [5]पाअड-दोब्बल्लं पब्भट्ठ[6]-पिआ[7]-पओहर-प्फरिस-सुहं ।
वच्छं तमाल-णीलं पुणो पुणो वाम-अर[8]-अलेण मलेन्तो ॥४३॥
उअहिस्स जसेन जसं धीरं धीरेण गरुअआइ गरुअं[9] ।
रामो [10]ठिईअ अ ठिइं भणइ रवेण अ रवं समुप्फुल्लन्तो[11] ॥४४॥कु॥

[ततः शैल-सार-गुरुकं अचिराद्-भविष्यद्-दयिता-समागम-पिशुनम् ।
अभिनन्द्य सुचिरं स्फुरदभ्यधिक-पीवरं निजक-भुजम् ॥
ततः प्रकटदौर्बल्यं प्रभ्रष्ट-प्रिया-पयोधर-स्पर्श-सुखम् ।
वक्षः तमाल-नीलं पुनः पुनः वाम-कर-तलेन मृद्नन् ॥
उदधेः यशसा यशः धैर्यं धैर्येण गुरुकतया गुरुकताम् ।
रामः स्थित्या च स्थितिं भणति रवेण च रवं समुद्भ्रंशयन् ॥ कुलकम् ॥]

---

1 सहिउं (without वि) Ms. 2 काइहि Ms. 3 This verse does not occur in GB. text which forms a जुग्गअं ( युग्मकं ) with the next two verses, whereas our Ms. has a कुलक of three verses in its text. 4 °हिअं पी° Ms. 5 पाउट्टो° Ms. 6 पम्हट्ठ° GB. 7 °पिअ° Ms. 8 °कर° GB. 9 गरुअं Ms. 10 वि थिईअ GB. 11 °लन्तो Ms. ; °न्दन्तो GB.

[ततो जाम्बवद्वचनानन्तरं रामोऽपि भणतीत्यग्रिमस्कन्धकेनान्वयः। शैलसारात् शैल-स्थिरांशाद्]पि गुरुकं दृढमित्यर्थः। अचिराद्भविष्यद्-दयितासमागम-पिशुनं तत्[1]-समागमसूचकं सुचिरं बहुकालं व्याप्याभिनन्द्य स्फुरत्त्वादभ्यधिकं सीता-विरहकार्येऽपि स्थूलं स्फुरत्-[2]पीवरमिति पाठे प्रकृत एवार्थः। एवंभूतं निजकभुजं। प्रकृष्टार्थे कप्रत्ययः। पुरुषस्य दक्षभुजस्पन्दः शुभसूचकः[3] ॥४२॥

प्रभ्रष्टप्रियापयोधरस्पर्शसुखं प्रियावियोगात् प्रकटदौर्बल्यं तमालनीलं वक्षः समाश्वासन्निव रामस्यात्यन्तप्रियापरिचितत्वाद् वामकरतलेन पुनः पुनः मृद्नन् परिमृषन् ॥४३॥

अपरिच्छेद्यतया त्रैलोक्यव्यापित्वेन च उदधेर्यशो यशसा, धैर्येण लोकोत्तरेण धैर्यं, गुरुकतयानन्यसाधारणया गुरुकतां, स्थित्या च त्रिभुवनव्यवस्थाकारिण्या स्थितिं, रवेण च सजलजलधरगम्भीरेण महापुरुषलक्षणेन च रवं 'समुपफुल्लन्तो' आच्छादयन् रामोऽपि भणति। एतेनाविसंवादादनुकृत्वात् समुद्रस्य गम्यता सूचिता ॥४४॥

**दुत्तरम्मि समुद्दे कइ-लोए विमुहिए ममम्मि[4] विसण्णे।**
**हरि-वइ तुमे च्चिअ इमा दुव्वोज्झा वि अवलम्बिआ कज्जधुरा ॥४५**

**[दुस्तरे समुद्रे कपि-लोके विमुखिते (विमुग्धे वा) मयि विषण्णे।**
**हरि-पते त्वया एव इयं दुर्वाह्या अपि अवलम्बिता कार्य-धुरा ॥]**

दुस्तरे समुद्रे, अतएव कपिलोके विमुखिते सति मयि विषण्णे, भो हरिपते त्वयैव केवलमियं दुर्वहापि कार्यधुरा, अध्यवसायादवलम्बिता गृहीता। **केचित्** तु कपिलोके विमुग्धे तद्दर्शनाच्च मयि विषण्णे हे हरिपते त्वयैवैषा कार्यधुरा कार्यभारोऽवलम्बितः। समुद्रदशनक्षोभादिनापि न त्यक्तेति भावः ॥४५॥

---

1 Ms has simply समागम॰ i. e. without तत् preceding it. 2 स्फुरमाण॰ Ms., but the root स्फुर् is परस्मैपदी. 3 After this point occur the words 'उपरिपतितमेतत्' to indicate that the commentary portion of this verse was omitted to be written at first before verse 43. 4 मम्मि Ms.

धी[F20a]राहि सार-गरुअं अलङ्घणिज्जाहि सासअ-जसुज्जोअं[1] ।
रिच्छाहिवाहि वअणं रअणं रअणाअराहि व समुच्छलिअं ॥४६॥

[धीरात् सार-गुरुकं अलङ्घनीयात् शाश्वत-यश-उद्द्योतम् ।
ऋक्षाधिपात् वचनं रत्नं रत्नकरात् इव समुच्छलितम् ॥]

[F20a] यद्यपि जाम्बवत एव प्रत्युत्तरं दातुं युक्तं तथाप्यादौ मुख्यत्वेन सुग्रीवमुद्दिश्य जाम्बवद्वचनं पुरष्कुर्वन्नाह । ऋक्षाधिपाज् जाम्बवतो वचनं 'तुज्झ भुएसु णिसण्णो [IV. 25] इत्यादिरूपं रत्नं रत्नकरादिव समुच्छलितं जाम्बवत्समुद्रयोः साम्यमाह । धीरात् पण्डितात् धैर्यवतश्च अलंघनीयादुपादेयवचनाच्चेति भावः । वचनरत्नयोः साम्यमाह । सारेण सदर्थेन रत्नादिसम्पदा च गुरुकं शाश्वतो यश-उद्द्योतो यशःप्रकाशो यत्र, यद्वा शाश्वतं यश एव उद्योतो यस्य ॥४६॥

जत्थ परमत्थ-गरुआ ण होन्ति तुम्हारिसा थिर-ववट्ठम्भा ।
महिअर-मुक्क व्व मही अत्थाअइ तत्थ वित्थआ[2] कज्ज-धुरा ॥४७॥

[यत्र परमार्थ-गुरुकाः न भवन्ति युष्मादृशाः स्थिर-व्यवष्टम्भाः ।
महीधर-मुक्ता इव मही अस्तायते तत्र विस्तृता कार्य-धुरा ॥]

तदानीं सर्वानेव स्तुवन्नाह । यत्र युष्मादृशः सुभटाः कुलशैला इवेत्यर्थात् । वैधुर्य-मरुद्भिरथामचाल्यमानत्वात परमार्थगुरुकाः स्थिरव्यवष्टम्भा दृढावलम्बना न भवन्ति तत्र महीधरैः कुलशैलैर्मुक्ता महीव विस्तृता महती कार्यधुरा अस्तायते नश्यति जलधौ निमज्जति च ॥४७॥

पडिवत्ति-मेत्त-सारं कज्जं थोआवसेसिअं मारुइणा ।
सम्पइ जो च्चेअ उरं देइ पवङ्गाण पिअइ सो च्चेअ जसं ॥४८॥

---

1 समुज्जोअं B, evidentay a misprint. 2 ०रा GB.

[प्रतिपत्ति-मात्र-सारं कार्यं स्तोकावशेषितं मारुतिना ।
सम्प्रति यः एव उरः ददाति प्लवङ्गानां पिबति स एव यशः ॥

हनुमतैव कृतप्रायं कार्यमित्याह । इहास्ति सीतेति निश्चयः प्रतिपत्तिस्तन्मात्रं सारः प्रधानमङ्गं यस्य तत् कार्यं सीतोद्धारणरूपं मारुतिना स्तोकावशेषितं प्रधानभूतायाः प्रतिपत्तेस्तेनैव कृतत्वादिति भावः । यद्वा मारुतिना स्तोकावशेषितश्चेत् कार्यमतः प्रतिपत्तिरुत्तरक्रिया तन्मात्रसारं जातमस्ति । संप्रति प्लवङ्गानां मध्ये य उरो हृदयं ददाति स एव यशः पिबति । "प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेपि च । प्रागल्भ्ये च प्रयोगे च प्रज्ञायाञ्च प्रयुज्यते" ॥ इति **विश्वः** ॥४८॥

तं[1] सव्वे च्चिअ समअं दुत्तारम्पि हणुमन्त-सुह-वोलीणं ।
अब्भत्थेम्ह[2] सुरासुर-णिव्वूढब्भत्थणाअरं मअरहरम् ॥४९॥

[ तत् सर्वे एव समकं दुस्तरं अपि हनुमत्-सुख-व्यतिक्रान्तम् ।
अभ्यर्थयामहे सुरासुर-निर्व्यूढाभ्यर्थनादरं मकर-गृहम् ॥]

यत एवं तत्तस्मात् सर्व एव वयं समकालं मकरगृहं समुद्रमभ्यर्थयामहे । दुस्तरमपि दुस्तरत्वेन ख्यातमपि हनुमता सुखेनानायासेन व्यतिक्रान्तं सुरासुराणां निर्व्यूढेप्सितसंपादनान्निर्वाहितोऽभ्यर्थनायामादरो गौरवं येन । एतेन नायमशक्यलंघनो न चाभ्यर्थितं न करोतीत्युक्तम् ॥४६॥

अह णिक्कारण-गहिअं मए वि अब्भत्थिओ ण मोच्छिहि[3] धीरं ।
ता पेच्छह वोलीणं विहुओअहि-जन्तणं [4]थलेण कइ-बलं ॥५०॥

[अथ निष्कारण-गृहीतं मया अपि अभ्यर्थितः न मोक्ष्यति धैर्यम् ।
तत् प्रेक्ष्वध्वं व्यतिक्रान्तं विधुतोदधि-यन्त्रणं स्थलेन कपि-बलम् ॥ ]

---

1 ता GB. 2 ०बुत्थम्भ० Ms. 3 ०बिइ Ms.
4 त्थ० Ms.

अभ्यर्थनाभङ्गे दण्डमाह। अथासौ, अथशब्दोऽयमर्थे वा निष्कारणगृहीतं कारणं विना बाल्येनैव गृहीतं धैर्यं मयाभ्यर्थितोऽपि न मुञ्चति न मोक्ष्यति इति वा। ततः प्रेक्षध्वं विधुतोदधियन्त्रणं निराकृतसमुद्रनिरोधं कपिबलं स्थलेन व्यतिक्रान्तं आग्नेयेन समुद्रं दग्ध्वा स्थलपथेन कपिबलं लङ्कां नेष्यामीत्यर्थः, न च जगत्कण्टकस्य रावणस्य वधविघाताय नान्येन विगृहीतधैर्यस्य दाहादधर्म एवेत्यर्थः ॥५०॥

**जत्थ महं पडिउत्थो[1] वसिहिइ अण्णस्स कह तहिँच्चिअ रोसो।**
**दिट्ठिं पाडेइ जहिं दिट्ठि-विसो तं पुणो ण पेच्छइ बिइओ ॥५१॥**

**[यत्र मम पर्युषितः[1] वत्स्यति अन्यस्य कथं तस्मिन् एव रोषः।**
**दृष्टिं पातयति यत्र दृष्टि-विषः तं पुनः न प्रेक्षते द्वितीयः ॥]**

अस्यैवार्थस्य शक्यतां दर्शयितुमाह। यत्र मम रोषः पर्युषितः कृतावासस्तत्रैव कथमन्यस्य रोषो वत्स्यति मदीयरोषाग्निनैव दग्धत्वात। प्रतिवस्तूपमामाह—यत्र दृष्टिविषो दृष्टिं पातयति तं जनं द्वितीयो न प्रेक्षते तस्यैव विषाग्निना दग्धत्वात्। पुनःशब्दोऽवधारणे ॥५१॥

**ताव अ सहसुप्पण्णा णवाअवालिद्ध-कसण-मिहिआ-अम्बा।**
**मउड[2]-प्पहाणुविद्धा आढत्ता दीसिउं णिसि[F20b]अर-**
**च्छाआ[3] ॥५२॥**

**[तावत् च सहसोत्पन्ना नवातपालीढ-कृष्ण-मेघिका-ताम्रा।**
**मुकुट-प्रभानुविद्धा आरब्धा द्रष्टुं निशिचर-च्छाया ॥ ]**

यावदेवं वदति रामस्तावच्च सहसोत्पन्नातर्कितोदिता निशिचराणां छाया द्युतिर्द्रष्टुमारब्धा कपिसैन्यैरित्यर्थात्। पद्मरागादिमणिनिचितस्य मुकुटस्य प्रभयानुविद्धा युक्ता, अतो नवातपेनालीढा लिप्ता या कृष्णा मेघिका तनुमेघावली तद्वत्ताम्रा। "अतर्किते तु सहसे"त्यमरः ॥५२॥

---

1 C reads परिउद्धो, परिवृद्धः K उषितः s, 2 मउल० GB. 3 ०च्छाया B, evidently a misprint.

तो गमण-वेअ-मारुअ-मुहल-पडद्धन्त-णह-णिराइअ-जलए ।
पेच्छन्ति रवि-अरन्तर-घोलाविअ-पिहुल-विज्जुले रअणिअरे ॥५३

[ ततः गमत-वेग-मारुत-मुखर-पटार्द्धान्त-नभो-निराकृत-जलदान् ।
प्रेक्षन्ते रवि-करान्तर-घूर्णित-पृथुल-विद्युतः रजनीचरान् ॥ ]

[F20b] ततो गमनवेगेन यो मारुतस्तेन मुखरैः पटार्धान्तैर्नभसि निराकृता निर्भर्त्सिता सशब्दत्वात् कृष्णत्वाच्च जलदा यैस्तान्, 'णिह-णिराजिअ-जलए' इति पाठे गमनवेग-मारुतमुखरा ये पटार्धान्तास्तन्निभा निराजिताः शोभिता जलदा येषु तान् मेघ-साम्यपोषणार्थमेवाह, रविकरा एवान्तरे मध्ये घूर्णिता भ्रमिताः पृथुला विद्युतो येषु तान, एतेन सशब्दस्फुरितविद्युन्नवमेघानिव व्यापकान् निशाचरान् प्रेक्षन्ते। 'लोकनाथस्तु प्रेक्षन्ते अर्थात् कपयः, कीदृशान्, गमनवेगमारुतैः पटार्धान्तैर्नभसि निराकृता निर्भर्त्सिताः सदृशीकृता इति यावज् जलदा मेघा यैः। आत्मनः कृष्णत्वात् पटेन सशब्दत्वाच्च मेघसाम्यं। परनिपातादन्तरघूर्णिता राक्षसमध्यनिपतिता रविकरा एव पृथुलविद्युतो यत्रेति केचित् ॥५३॥

तो णह-अलोडन्ते पलउप्पाए[2]व्व णिसिअरे अहिलेउं ।
उण्णामिअ-गिरि-सिहरं चलिअं महिमण्डलंव वाणर-
सेण्णं ॥५४॥

[ ततः नभस्तलावपततः प्रलयोत्पातान् इव निशिचरान् अभिलेतुम् ।
उन्नामित-गिरि-शिखरं चलितं मही-मण्डलं इव वानर-सैन्यम् ॥ ]

---

1 Before this word Ms. has within brackets the following words evidently out of mistake during copying :—[ "लोकनाथस्तु ततः प्रेक्षणानन्तरमेव नभस्थ ( स्त ) लादवपततः प्रलयकालीनान् प्रलयहेतून् वा उत्पातानिव निशाचरानभिलेतुं योद्धुं"], but these words form a portion of the commentary on the next verse (54). 2 ० प्पाअ GB.

ततः प्रेक्षणान्तरमेव नभस्तलादवपततः प्रलयकालीनान् प्रलयहेतून् वा, उत्पातानिव निशाचरानभिलेतु योद्धुम्, 'अभि(हि)लाउ' इति पाठे अभिमुखं ग्रहीतुमुन्नमितगिरि-शिखरमतो महीमण्डलमिव वानरसैन्यं चलितम् ॥५४॥

ओसुम्भन्त-जलहरं विसमुट्ठिअ[2]-पवअ[3]-बल-वलन्तालोअं ।
दीसइ भमन्त-विअलं[4] ठाण[5]-प्फिडिअ-सिढिलं पडन्तंव
णहं ॥५५॥

[अवपात्यमान-जलधरं विषमोत्थित-प्लवग-बल-वलदालोकम् ।
दृश्यते भ्रमद्-विकलं स्थान-भ्रष्ट-शिथिलं पतत् इव नभः ॥ ]

कपीनां राक्षसानां वा गमनमारुतेन भ्रमदस्थिरं सत् विकलं यथा स्यात्तथा निपात्यमाना जलधरा यत्र, तथा विषमतिशयितं यथा स्यात्तथा उत्थितैर्वानरबलैर्वलन् वानरैरधः-संछादितत्वादुपरि धावन्नालोको यत्र, तथा च निविडोत्थितानां वानराणामधो नभस्तुल्यान्ध-कारदर्शनान्निपात्यमानजलधरत्वाच्च स्थानभ्रष्टशिथिलं नभः पतदिव दृश्यते। भ्रमद्विकल-मस्थिरं सत्, विकलमिति नभोविशेषणं वा। **कुलनाथस्तु** निपात्यमानमेघं विषमोत्थित-प्लवगबलेन देहवितानैरुत्क्षिप्तमिव वलमानालोकमावर्जितमिव दृश्यमानं। अतएव स्थानभ्रष्ट-शिथिलं भ्रमद्विकलं नभः पतदिव दृश्यते इति व्याचष्टे। निपात्यजलधरत्वात् स्थानभ्रष्ट-शिथिलमिव विषमोत्थितप्लवगबलतया वलन् भ्रमन्नालोको यत्र। अतो भ्रमद्विकलमिव नभो दृश्यते इति **हर्षपालः** ॥५५॥

णवरि अ लङ्का-दिट्ठो दिट्ठ-सहावो[6] विहीसणो मारुइणा ।
णिअमेऊण कइ-बलं बिइओदन्त[7] व्व राहवस्स उवणिओ ॥५६॥

[ अनन्तरं च लङ्का-दृष्टः दृष्ट-स्वभावः विभीषणः मारुतिना ।
नियम्य कपि-बलं द्वितीयोदन्तः इव राघवस्य उपनीतः ॥ ]

---

1 गृ० Ms. 2 ०मट्ठि GB. 3 ०कपि० GB. 4 ०विहडं GB.
5 थाण० 6 ०ओ GB; but C has ०वो as in Ms. 7 बीओ० GB.

कपीनामुद्यमानन्तरं लङ्कायां दृष्टः, दृष्टो ज्ञातः स्वभावः सौजन्यं यस्य स विभीषणो मारुतिना कपिबलं नियम्य द्वितीयोदन्त इव राघवस्योपनीतः। सीतावार्तया यथा रामः प्रीणितस्तथा विभीषणमुपनीय तत् सौजन्यनिवेदनादपीत्यर्थः। सुचरितो धार्मिकः परम-वैष्णवो विभीषणः परमाश्वासनस्थानत्वाद् द्वितीयोदन्त इव इति **कुलनाथः** ॥५६॥

चलणोणअ-णिहुअस्स अ माणेण व कर-अलेण से रहुवइणो[1]।
उण्णामिअं णणु सिरं जाअं रक्खस-उलाहि दूरब्भहिअं ॥५७॥

[ **चरणावनत-निभृतस्य च मानेन इव कर-तलेन अस्य रघुपतेः।**
**उन्नामितं ननु शिरः जातं राक्षस-कुलात् दूराभ्यधिकम्** ॥ ]

चरणावनतस्य सतो निभृतस्य संभ्रमसंकुचितस्य तस्य विभीषणस्य शिरो रघुपतेर्मानेनेव करतलेन उन्नमितं सत् राक्षसकुलाद् दूराभ्यधिकं दूरोन्नतिशालि। ननु उत्प्रेक्षायां निश्चय इति **कुलनाथः**। जातं दूरमुत्कृष्टं जातमिति **केचित्** ॥५७॥

ववसिअ-णिवेइअत्थो[2] सो मारुइ-लद्ध-पच्चआगअ-हरिसं।
सुग्गीवेण उर-त्थल-वण-माला-मलिअ-महुअरं उवऊढो ॥५८॥

[ **व्यवसित-निवेदितार्थः स मारुति-लब्ध-प्रत्ययागत-हर्षम्।**
**सुग्रीवेण उरः-स्थल-वन-माला-मृदित-मधुकरं उपगूढः** ॥ ]

देशज्ञातिकुलञ्च त्यक्त्वा रामानुप्रवेशरूपेण व्यवसितेन निवेदितोऽर्थो राक्षसाधिपत्यरूपं येन, यद्वा व्यवसितस्य निवेदितोऽर्थः प्रयोजनं येन, यद्वा व्यवसितेन निवेदितः प्रतिज्ञातो[3]ऽर्थो राज्यलाभरूपो यस्मै, तथा मारुतेः सकाशाल्लब्धेन प्रत्ययेन विश्वस्ततयागतः प्राप्तो हर्षो यस्मात्, 'हरिसमि'ति पाठे क्रियाविशेषणम्। विभीषणः परनिपातान्मृदितोरः-स्थलवनमालामधुकरं यथा स्यात्तथा सुग्रीवेणोपगूढ आलिङ्गितः सुदृढमित्यर्थः। व्यवसितो रामेण कृतत्नं प्रतिज्ञातः तदभिप्रायवेदिना हनूमता निवेदितः कथितोऽर्थो राक्षसपतित्वं प्रयोजनं यस्मै, रामेण व्यवसितोऽनुष्ठितः सोपायं कथितोऽर्थो रावणवधलक्षणो येन स तथा इति **कुलनाथः** ॥५८॥

---

1 ०णा GB. 2 ०दिअ० Ms. 3 ०तः omitted in Ms.

[F21a] तो जम्पइ रहु-णाहो[1] समअं दससु वि दिसा-मुहेसु किरन्तो ।
पअइ-सुकअस्स धवलं णीसन्दं व[2] हिअअस्स दन्तज्जोअं ॥५९॥

[ततः जल्पति रघुनाथः समकं दशसु अपि दिङ्मुखेषु किरन् ।
प्रकृति-सुकृतस्य धवलं निःस्यन्दं इव हृदयस्य दन्तोद्द्योतम् ॥ ]

[F21a] इदानीं रामः प्रियवाक्येनानुरागं सूचयति । ततो दशदिङ्मुखेषु प्रकृति-सुकृतस्य निसर्गेण पुण्यस्य हृदयस्य धवलं निःस्यन्दमिव दन्तोद्द्योतं समं युगपत् किरन् रघुनाथो जल्पति ॥५९॥

ठाणं दवग्गि-भीआ वणम्मि वण-हत्थिणि व्व परिमग्गन्ती ।
पेच्छह लद्धासाआ मोत्तुं रक्खस-उलं ण इच्छइ लच्छी ॥६०॥

[स्थानं दवाग्नि-भीता वने वन-हस्तिनी इव परिमृग्यन्ती ।
प्रेक्षध्वं लब्धास्वादा मोक्तुं राक्षस-कुलं न इच्छति लक्ष्मीः ॥ ]

वने लब्धास्वादत्वाद् वनहस्तिनी यथा वनाग्निभीता तत्रैव स्थानमन्विष्यन्ती वनं मोक्तुं नेच्छति, तथा राक्षसलक्ष्मी राक्षसकुलं मच्छराग्निभीतापि मोक्तुं नेच्छति, यतः सीताहरणा-दवधारितरावणमरणा विभीषणं राक्षसलक्ष्मी राक्षसराज्यप्राप्तये मत्समीपागमनाय प्रेरित-वतीति भावः ॥६०॥

णज्जइ विहीसण तुहं सोम्म-सहाव-परिवड्ढिअं विण्णाणं ।
दिट्ठि-विसेहि व अमअं[3] उअहिस्स णिसाअरेहि वि अविद्द-विअं ॥६१॥

---

1 ०तणओ GB. 2 ०न्दम्ब Ms. 2 This word अमअं is repeated after the letter उ of उअहिस्स in Ms. 3 This portion within bracket, though appropriate, is omitted in Ms.

[ज्ञायते विभीषण तव सौम्य-स्वभाव-परिवर्धितं विज्ञानम् ।
दृष्टि-विषैः इव अमृतं उदधेः निशाचरैः अपि अविद्रावितम् ॥ ]

हे विभीषण, ज्ञायते शीलसौष्ठवादेवं प्रतीयते सौम्येन शुचिना स्वभावेन परिवर्धितं विज्ञानं हिताहितविवेकी, दृष्टिविषैस्तक्षकादिभिरुदधेरमृतमिव निशाचरैरपि न विद्रावितं न दूरीकृतम् । ज्ञायते सुशीलत्वात् प्रतीयते इति **कुलनाथः** [ ।* ] एतेन 'संसर्गजा दोषगुणा भवन्ती'ति, एतदपि त्वय्येव व्यभिचरितमिति भावः ॥६१॥

सुद्ध-सहावेण फुडं फुरन्त-पज्जत्त-गुण-मऊहेण तुमे ।
चन्देण व णिअअ-मओ कलुसो वि पसाहिओ निसाअर-
वंसो ६२॥

[शुद्ध-स्वभावेन स्फुटं स्फुरत् पर्याप्त-गुण-मयूखेन त्वया ।
चन्द्रेण इव निजक-मृगः कलुषः अपि प्रसाधितः निशाचर-वंशः ॥ ]

शुद्धो निर्दोषः पक्षे निर्मलः स्वभावो यस्य, तथा स्फुरन्तः पर्याप्ता गुणा मयूखा इव यस्य, पक्षे स्फुरन्तः पर्याप्ता गुणाः शौर्यादयो येषां [ ते मयूखा एव यस्य ] तेन त्वया चन्द्रेण इव निजकमृगः कलङ्कः कलुषोऽपि मलिनोऽपि निशाचरवंशः स्फुटं प्रसाधितो भूषित आयत्तीकृतो वा । चन्द्रपक्षे निशाकरवंशः ॥६२॥

कह इर स-कज्ज-कुसला कज्ज-गइं मइ-गुणेहि अवलम्बन्ता ।
कुल-माण-ववट्ठम्भा ण होन्ति राअ-सिरि-भाअणं सप्पु-
रिसा ॥६३॥ ]

[कथं किल सकार्यकुशलाः कार्य-गतिं मति-गुणैः अवलम्बमानाः ।
कुल-मान-व्यवष्टम्भाः न भवन्ति राज-श्री-भाजनं सत्-पुरुषाः ॥ ]

सह कार्यकुशलैः सचिवादिभिर्वर्तन्त इति ते तथोक्ताः, मत्या नीतिमार्गानुगामिन्या बुद्धया गुणैस्त्यागादिभिश्च कार्यगतिमवलम्बमानाः कुलाहङ्कार एव व्यवष्टम्भोऽवलम्बनं येषां ते तथोक्ताः सत्पुरुषाः कथं किल राजश्रीभाजनं न भवन्ति, अपि तु भवन्त्येवेत्यर्थः ॥६३॥

लद्धासाएण चिरं सुर-बन्दि-परिग्गहे निसाअर-वइणा ।
सीआ रक्खस-वसइं[1] दिट्ठि-विसेहिं[2] विसोसहि व्व
उवणीआ ॥६४॥

[लब्धास्वादेन चिरं सुर-बन्दी-परिग्रहे निशाचर-पतिना ।
सीता राक्षस-वसतिं दृष्टि-विषैः विषौषधिः इव उपनीता ॥ ]

सुरबन्दीनां परिग्रहे देवकलत्रहरणे चिरं लब्धास्वादेन निशाचरपतिना रावणेन सीता राक्षसवसतिं लङ्कां दृष्टिविषैस्तक्षककुलैः स्वगृहं विषौषधिरिव उपनीता 'उअ' पश्य नीता वा । समीपं प्रापिता सीतैव तस्य विनाशहेतुर्भविष्यतीत्यर्थः । अत्र दृष्टिविषपक्षे वसतिपदस्यान्वयेऽभवन्मतयोगः स्यादिति, राक्षसेति सम्बोधनान्तं पदमिति **केचिदिति लोकनाथः** ॥६४॥

फिडिआ सुर-संखोहा बन्दि-अणक्कन्दिअं गअं परिणामं ।
जाआ दहमुह-गहिआ तिहुअण-डिम्ब[F21b]स्स जाणई
अवसाणं ॥६५॥

[भ्रष्टाः सुर-संक्षोभाः बन्दी-जनाक्रन्दितं गतं परिणामम् ।
जाता दशमुख-गृहीता त्रिभुवन-डिम्बस्य जानकी अवसानम् ॥ ]

भ्रष्टाः सुराणां संक्षोभा विद्रवाः, बन्दीजनस्याक्रन्दितं परिणाममवसानं गतम् । अत्र हेतुमाह—दशमुखेन गृहीता जानकी त्रिभुवनडिम्बस्य त्रैलोक्यविप्लवस्यावसानहेतुत्वादवसानं जाता, यथा विषं मृत्युरिव जातेत्याशंसायां भूतवत् प्रयोगः । दशमुखेन सीताया अपहार एव त्रिभुवनविप्लवस्य अवसानमित्यर्थः ॥६५॥

---

1 ०हिं GB ; also read as such marginally in Ms. 2 ०विसहरं GB. 3 उप० Ms.

अह णअणेसु पहरिसं कण्णेसु पवङ्ग-वड्ढिअं जअ-सद्दं ।

सीसम्मि अ अहिसेअं पल्हत्थइ अ हिअअम्मि से अणुराअं ॥६६॥

राअ-सिरि-पवरसेणस्स एत्थ रावणवहे महाकव्वम्मि ।

सविहीसणाहिसेओ चोट्ठो आसासओ परिसमत्तो ॥

[अथ नयनयोः प्रहर्षं कर्णयोः प्लवङ्ग-वर्धितं जय-शब्दम् ।

शीर्षे च अभिषेकं पर्यासयति च हृदये तस्य अनुरागम् ॥ ]

[ राज-श्रीप्रवरसेनस्य अत्र रावणवधे महाकाव्ये ।

सविभीषणाभिषेकः चतुर्थः आश्वासकः परिसमाप्तः ॥ ]

इदानीं विभीषणस्याभिषेकमाह । अथानन्तरं 'से' तस्य विभीषणस्य कर्णयोः प्लवङ्गैर्वर्धितं जयशब्दं शीर्षे चाभिषेकं हृदये अनुरागं पर्यासयति आरोपयति । अत्राभिषेकस्य हर्षादिहेतुत्वेन प्राधान्यसूचनाय चकारः ॥६६॥

# पञ्चमो आसासओ

अह जलणिहिम्मि अहिअं मअणे अ मिअङ्क-दंसण-विअम्भन्ते ।
विरह-विहुरस्स णज्जइ णिसा वि रामस्स वड्ढिउं[1] आढत्ता ॥१॥

[अथ जलनिधौ अधिकं मदने च मृगाङ्क-दर्शन-विजृम्भमाणे ।
विरह-विधुरस्य ज्ञायते निशा अपि रामस्य वर्धितुं आरब्धा ॥ ]

अथ जलनिधौ मदने च मृगाङ्कदर्शनादधिकं विजृम्भमाणे सति संहर्षादेव ज्ञायते विरहविधुरस्य रामस्य निशापि वर्धितुं प्रवृत्ता, अत्तयेव रात्रिर्जातेत्याशयः। चन्द्रदर्शने च जलनिधौ मदने च सुहृदि विजृम्भमाणे तत्प्रियाया निशाया अपि वृद्धिरुचितैवेति भावः। दुःखितस्य रात्रिर्यथाकालं न गच्छतीत्यनुभवात्। अधुना समुद्रमुत्तारार्थमभ्यर्थयितुं तत्तीरशयितेषु रामसुग्रीवादिषु शरच्चन्द्रोदयदर्शनाद् रामस्य विरहवेदनामाह इति **कुलनाथः** ॥१॥

उइअ-मिअङ्कञ्च णहं णिअम-ट्ठिअ-राहवञ्च साअर-पुलिणं ।
णेन्ति परं परिवड्ढिं आलिङ्गिअ-चन्दिमं महोअधि-सलिलं ॥२॥

[उदित-मृगाङ्कं च नभः नियम-स्थित-राघवं च सागर-पुलिनम् ।
नयतः परां परिवृद्धिं आलिङ्गित-चन्द्रिकं महोदधि-सलिलम् ॥

उदितमृगाङ्कञ्च नभः, नियमेनानशनविधिना स्थितो राघवो यत्र तत् सागरपुलिनञ्च, आलिङ्गितचन्द्रिकं महोदधिसलिलं परां परिवृद्धिं नयतः। द्विधा हि वृद्धिर्द्रव्यगता गुणगता च, उदितचन्द्रेण नभसा द्रव्यवृद्धिः नियमस्थितराघवेण पुलिनेन गौरववृद्धिरित्याशयः। **केचित्तु** उदितमृगाङ्कं नभः कर्तृ सागरजलस्य परां वृद्धिं स्फीततां नयति, नियमस्थितराघवं पुलिनमुच्छेदं नयति। वृद्धिः स्फीतता उच्छेदश्च इत्यर्थद्वयनियतव्याप्यवर्धितोदय

1 °अं Ms.

इत्युभयार्थके **माघ**श्लोके व्याख्यातम्। समुद्रस्योच्छेदश्च रामक्रोधाच्छराग्निना करिष्यते। अत्रोदासीनेन दूरवर्तिनापि नभसा यत् समुद्रस्य स्फीतत्वं तत्र निजसूनोश्चन्द्रस्य सान्निध्यमेव हेतुः। उत्सङ्गवर्तिना स्वकीयेनापि पुलिनेन यत्तस्योच्छेदस्तत्र विरहदुःखितराघवसान्निध्यमेव हेतुः। आलिङ्गितपदेनार्थान्तरसंक्रमितवाच्येन समुद्रसलिलयोर्नायकनायिकाभावः सूच्यत इति भाव इति व्यावक्षते ॥२॥

**तो से विओअ-सुलहा णिअम-विइण्ण-हिअअ-क्खिवण-सोडीरा।**
**खउरेन्ति धिइ-ग्गहणं जाअं जाअं विसूरण-विक्खेवा[1] ॥३॥**

**[ततः तस्य वियोग-सुलभाः नियम-वितीर्ण-हृदय-क्षेपण-शौटीर्याः।**
**कलुषयन्ति धृति-ग्रहणं जातं जातं विसूरण (खेद)-विक्षेपाः॥ ]**

तत आलिङ्गितचन्द्रिकस्य सिन्धोर्जलवृद्ध्यनन्तरं तस्य रामस्य वियोगेन सुलभाः, नियमे स्थलपथप्राप्तिहेतुके व्रते वितीर्णस्य दत्तस्य हृदयस्य क्षेपणे दूरीकरणे शौटीराः शूराः, ईदृशस्य हृदयस्य क्षेपणे शौटीर्यं यस्येति वा, तादृशा 'विसूरणा'विक्षेपाः खेदजनितवेगा जातं जातं धृतिग्रहणं 'खउरेन्ति' आविलयन्ति। **केचित्तु** ततस्तस्य रामस्य वियोगेन सुलभा 'विसूरणा' उद्वेगा एव चित्तमवक्षिपन्तीत्यवक्षेपास्ते दृढं समाधाय नियमे वितीर्णस्य हृदयस्य क्षेपणे विघाते शौटीराः शूरा अतएव जातं जातं धृतिग्रहणं चित्तवृत्तिस्वीकारार्थं 'खउरेन्ति' कलुषयन्ति इति **कुलनाथः**, क्षोभयन्तीति **केचित्** ॥३॥

**काहिइ पिअं समुद्दो गलिहिइ चन्दाअवो समप्पिहिइ[2] णिसा।**
**अवि णाम धरेज्ज पिआ ओ णे विरहेज्ज जीविअं त्ति विसण्णो ॥४॥**

**[ करिष्यति प्रियं समुद्रः गलिष्यति चन्द्रातपः समाप्स्यति निशा।**
**अपि नाम ध्रियेत प्रिया उत नः विरहयेत् जीवितं इति विषण्णः॥ ]**

'अपि नाम'शब्दः कच्चिदर्थे, कच्चित् प्रियं करिष्यति, कच्चित् गलिष्यति चन्द्रातपः, कच्चित् समाप्स्यति निशा, एवं सति च कच्चित् प्रिया ध्रियेत, यदि सा जीवेत् तदा सर्वं

---

1 व० Ms. 2 ०हि Ms.

सफलमन्यथा वृथैवेत्याशयः। 'ओ णे' अथवा अस्मान् जोवितं विरहयेदिति विषण्णः। अपि सम्भावनायां, नाम प्राकाश्ये, अपि नाम जीवितं कर्तृ 'णे' अस्मान् विरहयेत् त्यजेत्, 'ओ' शब्दो दुःखसूचने इति **केचित्**। "अपिः सम्भावनाप्रश्नगर्हाशंकासमुच्चये तथायुक्तपदार्थे च" इति **विश्वः** ॥४॥

**णिन्दइ मिअङ्क-किरणे खिज्जइ कुसुमाउहे जुउच्छ[F22a]इ रअणिं।**
**झीणो[1] णवर धरिज्जइ[2] जीवेज्ज पिएत्ति[3] मारुइं पुच्छन्तो ॥५॥**

**[निन्दति मृगाङ्क-किरणान् खिद्यते कुसुमायुधे जुगुप्सते रजनीम्।**
**क्षीणः केवलं ध्रियते जीवेत् प्रिया इति मारुतिं पृच्छन्॥ ]**

[ F22a ] निन्दति मृगाङ्ककिरणान् नैते सुधां वर्षन्ति किन्तु विषमिति, खिद्यते कुसुमायुधे वज्रायुधोऽयमिति, जुगुप्सते रजनीं नेयं कुमुदकह्लारादिवाससुभगा चन्द्रातपधवला शारदी निशा किन्तु कालरात्रिरिति, तथाप्यहं कठिनहृदयतया प्राणिमि ना (?) सा तु स्त्रीत्वान् मृदुप्रकृतिः कथं मन्यसे यावन्मासस्तावज्जीवतीति मारुतिं पृच्छन् केवलं, केवलं क्षीणो याप्यते सन्धार्यते मारुतिनेत्यर्थवशात्। नैतेऽमृतमयाः किन्तु विषमया इति मृगाङ्ककिरणान्निन्दति। नायं कुसुमायुधः किन्तु वज्रायुधः पुष्पायुधस्वभाववैपरीत्यात् तत्तद्विषये खेदं प्रकाशयतीत्यर्थः। अस्मद्गमनं यावत् प्रिया जीवेदिति मारुतिं पृच्छन् धार्यते आश्वास्यते ॥५॥[4]

**एत्तो वसइ त्ति दिसा एणं सा णूण निन्दइ त्ति मिअङ्को।**
**एत्थ णिसण्ण[5]त्ति मही एएण णिअ त्ति से णहम्पि बहु-मअं ॥६॥**

**[इतः वसति इति दिक् एनं सा नूनं निन्दति इति मृगाङ्कः।**
**अत्र निषण्णा इति मही एतेन नीता इति तस्य नभः अपि बहु-मतम्॥ ]**

1 ॰णो व GB. 2 भिज्जइ GB. 3 पिअत्ति Ms. 4 The scribe puts the figure as 4 here and continues to carry on the mistake henceforward. 5 ॰एणो GB,

इतोऽस्यां वसतीति 'से' तस्य रामस्य दिक् दक्षिणा बहुमता, एतं सा नूनं निन्दतीति मृगाङ्कः। अत्र सा निषण्णेति महो, एतेन सा नीतेति नभोऽपि बहुमतम्। एते द्वेषभूमयोऽपि सीतास्मरणाद् बहुमता अभूवन्नित्यर्थः। तथा च उदासीनः शत्रुर्वा द्वावपि सीतास्मारकत्वात् तस्य बहुमताविति भावः ॥६॥

**धीरेण णिसा-आमा हिअएण समं अणिट्ठिआ उवएसा।**
**उच्छाहेण[1] सह भुआ बाहेण समं गलन्ति से उल्लावा ॥७॥**

**[धैर्येण निशा-यामाः हृदयेन समं अनिष्ठिताः उपदेशाः।**
**उत्साहेन सह भुजौ बाष्पेण समं गलन्ति तस्य उल्लापाः ॥ ]**

समं सह गलन्तीति सर्वत्र योज्यम्। 'से' तस्य निशायामा धैर्येण समं गलन्ति, देव नैतत्तव युक्तमधैर्यमित्यादिका उपदेशा अनिष्ठिता अपर्याप्ता हृदयेन समं गलन्ति उपदेशाग्रहणाद् हृदयमपि न तिष्ठतीति भावः। उत्साहेन सह भुजौ गलतः अवसादात् खिन्नौ भवतः, बाष्पेणाश्रुणा समं उल्लापा अतिरोदनशीलत्वाद् गलन्ति ॥७॥

**धीर त्ति[2] संठविज्जइ मुच्छिज्जइ मअण-पेलव त्ति[3] गणेन्तो।**
**धरइ पिअ त्ति धरिज्जइ विओअ-तणुअ त्ति[4] आमुअइ**
**अङ्गाइं ॥८॥**

**[धीरा इति संस्थाप्यते मूर्छ्यते मदन-पेलवा इति गणयन्।**
**ध्रियते प्रिया इति ध्रियते वियोग-तनुका इति आमुञ्चति अङ्गानि ॥ ]**

देव मा गाः कातरत्वं ननु देवी धीरेति संस्थाप्यते आश्वास्यते हनुमतेत्यर्थात् मदनपेलवेति मदनोऽतिदुःसहः सा च कुसुमाकृतिः कथं सहिष्यत इति गणयन् मुह्य(ते)[5] मोहं याति कर्मकर्तरि प्रयोगः। ध्रियते जीवति प्रियेति हनुमद्वचसा धार्यते जीव्यते, मद्वियोग-

---

1 उत्साएण Ms (wrongly read). 2 °रेत्ति GB. 3 °वेत्ति GB.
4 °एत्ति GB. 5 In this case the text should be मुज्झिज्जइ.

तनुका कथं जीविष्यतीत्यङ्गान्यामुञ्चति दुर्बलो भवतीत्यर्थः। **केचित्तु** प्रिया धीरा, अतो विरहपारवश्यं न यास्यतीति स्वयमेव संस्थाप्यते, ततो मदनपेलवेति धैर्यमपि न स्थास्यतीति गणयन् स्वयं मुह्यते, हनूमतः सकाशान् निश्चित्य प्रिया भ्रियते जीवतीति गणयन् भ्रियते, पश्चाद्वियोगतन्वीति गणयन्नङ्गानि मुञ्चति, आः-शब्दः पीडायां इति प्राहुः ॥८॥

**उब्भड-हरिण-कलङ्को मलअ-लआ-पल्लवुव्वमन्त-मऊहो।**
**अरुणाहअ-विच्छाओ जाओ तस्स[1] सुह-दंसणो णवर ससी ॥९॥**

**[ उद्भट-हरिण-कलङ्कः मलय-लता-पल्लवोद्वमन्-मयूखः।**
**अरुणाहत-विच्छायः जातः तस्य सुख-दर्शनः केवलं शशी ॥ ]**

अनन्तरञ्च 'से' तस्य शशी सुखदर्शनो जातः, कथमित्याह—अरुणाहतत्वाद्विच्छायो विगत-शोभो मलयस्य लतापल्लवेषु चन्दनतरुशोभाविटपेषु, उद्वमन्तो गलन्तो मयूखा यस्य स तथा तदा तदा तेषु शोभातिशयदर्शनादतः किरणविरहादुद्भटहरिणकलङ्कः, मदनोपरागा-समर्थ इति रामस्य सुखदर्शनः। चन्द्रोदयावधि तत्पल्लवानामुत्तरोत्तरशोभातिशयदर्शना-दियमुत्प्रेक्षागर्भोक्तिः, तथा मयूखरूपसहायाभावादिव अरुणाहतत्वाद्विच्छाय इति **लोकनाथः** ॥९॥

**जह जह णिसा समप्पइ तह तह वेविर-तरङ्ग-पडिमा-वडिअं।**
**किंकाअव्व-विमूढं घोलइ[2] हिअअं व उअहिणो ससि-बिम्बं ॥१०॥**

**[यथा यथा निशा समाप्यते तथा तथा वेपनशील-तरङ्ग-प्रतिमा-पतितम्।**
**किंकर्तव्य-विमूढं घूर्णते हृदयं इव उदधेः शशि-बिम्बम् ॥ ]**

यथा यथा निशा समाप्यते तथा तथा प्रभातवातेन वेपनशीलेषु तरङ्गेषु प्रतिबिम्बेन पतितं शशिबिम्बं किं कर्तव्यमिति मूढं किं भुवनस्थितिहेतुं शौर्यं त्यजामि किं रामाभ्यर्थ-नातिक्रमं करोमीति निर्णयासमर्थं उदधेर्हृदयमिव घूर्णते, स्थैर्यं न लभत[3] इत्यर्थः। प्रभातायां यामिन्यां प्रार्थनाभङ्गामर्षितो रामः कमिवानर्थं कुर्यादिति भाव इति **केचित्** ॥१०॥

1 This word (तस्स) is pleced after णवर in GB. 2 ०इइ GB.
3 भलत Ms.

णवरि अ मलअ-गुहा-मुह-भरिउव्वरिअ-फुड-णीहरतु-पडिरवं ।
पवणेण ऊअहि-सलिलं पहाअ-तूरं व आहअं रहुवइणो ॥११॥

[अनन्तरं च मलय-गुहा-मुख-भृतोद्वृत्त-स्फुट-निर्हरत्-प्रतिरवम् ।
पवनेन उदधि-सलिलं प्रभात-तूर्यं इव आहतं रघुपतेः ॥ ]

अनन्तरञ्च मलयगुहामुखेषु भृतः सन्, उद्वृत्तोऽधिकतां गतः स्फुटः प्रकटो निर्हरन् दूरं विसर्पन् प्रतिरवो यथा स्यात्तथा पवनेनोदधिसलिलं रघुपतेः प्रभातसूर्यमिवाहतम् ॥११॥

हंस-उ[F22b]ल-सद्द-मुहलं उग्घाडिज्जन्त-दस-दिसा-वित्थारं ।
ओसरिअ-तिमिर-सलिलं जाअं पुलिणं व पाअडं दिअस-
मुहं ॥१२॥

[हंस-कुल-शब्द-मुखरं उद्घाट्यमान-दश-दिग्-विस्तारम् ।
अपसृत-तिमिर-सलिलं जातं पुलिनं इव प्रकटं दिवस-मुखम् ॥ ]

[F22b] हंसकुलस्य शब्देन मुखरमुद्घाट्यमानः प्रकाश्यमानो दशदिग्विस्तारो यत्र, पक्षे पञ्चम्यन्तबहुव्रीहिस्तत्तथेति, दिवसमुखपुलिनयोस्तुल्यं विशेषणमपसृतं तिमिरमेव सलिलं यस्मात्, पक्षे कृष्णत्वात्तिमिराकारं सलिलं यस्मात् तत्तथा दिवसमुखं पुलिनमिव प्रकटं जातं, दिवसमुखं पुलिनञ्च प्रकटमभूदित्यर्थः ॥१२॥

अह गमिअ-णिसा-समअं गम्भीरत्तण-दढ-ट्ठिअम्मि समुद्दे ।
रोसो राहव-वअणं उप्पाओ चन्द-मण्डलं व वलग्गो[1] ॥१३॥

[अथ गमित-निशा-समयं गम्भीरत्व-दृढ-स्थिते समुद्रे ।
रोषः राघव-वदनं उत्पातः चन्द्र-मण्डलं इव आरूढः ॥ ]

1 वि० GB,

अथानन्तरं गमितो निशारूपः समयो [ यत्र तत् ] यथा स्यात्तथा गम्भीरत्वे दृढस्थिते कृतप्रतिज्ञे समुद्रे सति, तदुक्तं प्रतिज्ञा भवति स्थितेति समुद्रविनाशहेतुत्वाद् रोष उत्पात इव राघववदनं चन्द्रमण्डलं[1] 'वलग्गो' आरूढः। गम्भीरत्वे दृढस्थिते समुद्रे सति, उत्पातो दुर्निमित्तविशेषश्चन्द्रमण्डलमिव राघववदनं रोषो 'विलग्ग'(ग्न) आरूढो दुर्निमित्तारूढे[2] चन्द्रे यथा प्रजाक्षोभो रोषारूढे राममुखे समुद्रस्यापीति वस्तूपमालङ्कारो[3] व्यज्यते ॥१३॥

तो से तमाल-णील' णिडाल[4]-वट्ट' पलोट्ट-सेअ-जल-लवं ।
भिउडी थिर-वित्थिण्णं कडअं विञ्झस्स विस-लअ व्व
विलग्गा ॥१४॥

[ततः तस्य तमाल-नील' ललाट-पट्ट' प्रलुठित-स्वेद-जल-लवम् ।
भ्रुकुटी स्थिर-विस्तीर्ण' कटक' विन्ध्यस्य विष-लता इव विलग्ना ॥ ]

ततो रोषानन्तरं तमालवन्नीलं पक्षे तमालेन नीलं ललाटपट्ट' स्थिरविस्तीर्ण' प्रगलितस्वेदजललव' भ्रुकुटी विषलतेव विन्ध्यस्य कटकमिवारूढा। **केचित्तु** पक्षे निर्झरादीनां सेकजललवा यत्र तादृश' ललाटपट्ट' विन्ध्यस्य कटकं विषलतेव स्थिरविस्तीर्ण' यथा स्यात्तथा भ्रुकुटी विलग्ना ॥१४॥

अह जणिअ-भिउडि-भङ्गं जाअं धणु-हुत्त-वलिअ-लोअण-जुअलं ।
अमरिस-विइण्ण-कम्प' सिढिल-जडा-भार-बन्धणं तस्स
मुहम् ॥१५॥

[अथ जनित-भ्रुकुटि-भङ्गं जातं धनुरभिमुख-वलित-लोचन-युगलम् ।
अमर्ष-वितीर्ण-कम्पं शिथिल-जटा-भार-बन्धन' तस्य मुखम् ॥ ]

अथ रोषजन्यखेदादिप्रसरणानन्तरं जनितभ्रुकुटिभङ्गं धनुरभिमुखवलितलोचनयुगलममर्षेण वितीर्णकम्पमतः शिथिलजटाभारबन्धनं मुखं जातम् ॥१५॥

1 चण्डल० Ms. 2 ०त्तावरूढे Ms. 3 वस्तुउपमा Ms.
4 णडग्ल० Ms. which has noticed ललाड० above the line.

पणअ-पडिभङ्ग-विमणो थोअ-त्थोअ-[1]परिवड्ढिआमरिस-रसो ।
तह सोम्मो वि रहु-सुओ जाओ पलअ-रवि[2]-मण्डल-दुरा-
लोओ ॥१६॥

[प्रणय-प्रतिभङ्ग-विमनाः स्तोक-स्तोक-परिवर्धितामर्ष-रसः ।
तथा सौम्यः अपि रघु-सुतः जातः प्रलय-रवि-मण्डल-दुरालोकः ॥ ]

प्रणयप्रतिभङ्गेनाभ्यर्थनाया अकरणेन विमनाः स्तोकं परिवर्धितामर्षरसस्तथा सौम्योऽपि रघुसुतः प्रलयरविमण्डलमिव दुरालोको जातः ॥१६॥

[3]राहव-पत्थिज्जन्तो जं च्चिअ दंसण-सुहं ण दावइ उअही ।
तं चिअ दावेइ दढं णिअअं जलहि-गुणं सअम्पि विअड्ढो ॥१७॥

[राघव-प्रार्थ्यमानः यत् चैव दर्शन-सुखं न ददाति उदधिः ।
तत् चैव दर्शयति दृढं निजकं जलधि-गुणं स्वयं अपि विदग्धः ॥ ]

[4]राघवप्रार्थ्यमानो यद्येवं दर्शनसुखं न ददाति उदधिः । तदैव दर्शयति दृढं निजकं जलनिधित्वं स्वयमपि विदग्धो भस्मसाद्भवन्, अथवा विदग्धः पण्डितः शरत्याग-व्यतिरेकेणेति । इदं तु पद्यं केनापि टिप्पनीकारेण न धृतमिति तदीयत्वेनाशङ्कनीयम् [ श्रीहरिः पातु[5] ] ॥१७॥

तो साहस-णिम्माणं अमित्त-दी[F23a]सन्त-लच्छि-संकेअ-हरं ।
सञ्चिअ[1]-रोसालाणं गेण्हइ भुअ-दप्प-बिइअ[2]-लक्खं चावं ॥१८॥

[ततः साहस-निर्माणं अमित्र-दृश्यमान-लक्ष्मी-संकेत-गृहम् ।
सञ्चित-रोषालानं गृह्णाति भुज-दर्प-द्वितीय-लक्ष्यं चापम् ॥ ]

---

1 पडि० GB. 2 ०रइ० GB. 3 This verse does not occur in GB. 4 The Ms gives this commentary after that of the next verse. 5 This portion is written probably to fill up the page of the Falio. 1 संठि० GB. 2 ०बीअ० GB.

ततः क्रोधजनितदुष्प्रेक्षत्वानन्तरं साहसस्य निर्माणं साधनं चापं गृह्णाति अर्थाद्रामः। धनुषि गृहीते साहसप्रादुर्भावादमित्रेण दृश्यमानं निजाया लक्ष्म्याः संकेतगृहं, तथा सञ्चितस्य चिरोपसेवितस्य रोषस्यालानम्। एतेन रोषस्यापि महत्त्वात् हस्तित्वं व्यज्यत आलान-पददर्शनात्। भुजदर्पस्य द्वितीयलक्ष्यमाश्रयः, प्रथम आश्रयो भुज एव द्वितीयश्चाप-स्तमालम्ब्यैव भुजदर्पस्य कार्यकारित्वादिति भावः। साहसस्य निर्माणं निर्मितिसाधनममित्रेषु शत्रुषु दृश्यमानाया लक्ष्म्याः संकेतस्थानमभिसारस्थानं भुजदर्पस्य द्वितीयलक्ष्यम्। भुजदर्पस्य लक्ष्ये तावच्छत्रुचापौ तेनैव तयोरशक्यभूतयोर्नाम्यत्वादेवंभूतं चापं गृह्णातीति कुलनाथः ॥१८॥

**अक्कन्त-धणु-भरोणअ-धरणि-अल-त्थल-पलोट्ट-जल-पब्भारो।**
**थोअम्पि अणारूढे उअही चापम्मि संसअं आरूढो ॥१९॥**

**[आक्रान्त-धनु-र्भरावनत-धरणी-तल-स्थल-प्रलुठित-जल-प्राग्भारः।**
**स्तोकं अपि अनारूढे उदधिः चापे संशयं आरूढः ॥ ]**

[F 23a] गुणारोपणार्थमाक्रान्तस्य धनुषो भरेणावनतधरणितलत्वादुच्छलन्[1] तल लङ्घितजलप्राग्भारो जलोच्छ्रायो यस्य स उदधिः स्तोकमप्यनारूढे चापे संशयमारूढः पश्चात्तु कः प्रतिकार इति भावः। धनुषो भरादवनतेन धरणीतलेन हेतुना ऊर्ध्वस्थलपर्यन्तजल-प्राग्भारः ॥१९॥

**धूमाइ धूय-कलुसे जलइ जलन्तारुहन्त-जीआ-बन्धे।**
**पडिरव-पडिउण्ण-दिसं रसइ रसन्त-सिहरे धणुम्मि णह-**
**अलं ॥२०॥**

**[धूमायते धूम-कलुषे ज्वलति ज्वलदारोहद्-जीवा-बन्धे।**
**प्रतिरव-प्रतिपूर्ण-दिक् रसति रसच्छिखरे धनुषि नभस्-तलम् ॥ ]**

---

1 ०दुच्छलच्छलन् Ms, च्छलन् evidently a scribal mistake.

क्रूरकर्मार्थमाग्नेयास्त्रध्यायिना क्रोधाविष्टेन रामेणारोप्यमाणे गुणे, धनुष्यस्त्र-देवताधिष्ठानाद् धूमकलुषे सति, नभस्तलं धूमायते ज्वलदारोहज्ज्याबन्धे सति ज्वलति, रसच्छिखरे सति प्रतिरवपूर्णा दिशो यथा स्यात्तथा रसति। जीवाशब्दो ज्यावचनः। एवं गुणाकर्षाद्रसच्छिखरे सति प्रतिरवप्रतिपूर्णदिक्कं यथा स्यात्तथा नभस्तलं रसतीति **केचित्** ॥२०॥

**भिज्जइ[1] महि त्ति व फुडं णत्थि समुद्दो त्ति दारुणं व पइण्णं।**
**णासइ जअन्ति व मणे चिरं कलेऊण[2] विलइअं णेण धणुं ॥२१॥**

**[भिद्यते मही इति इव स्फुटं नास्ति समुद्रः इति दारुणं इव प्रकीर्णम्।**
**नश्यति जगत् इति वा मन्ये चिरं कलयित्वा विलगितं अनेन धनुः ॥ ]**

स्फुटं नास्ति समुद्र इतीव, अतः प्रकीर्णं जगन् निःशेषं भुवनं नश्यति स्फुटमितीव चिरं तुलयित्वा 'मणे' मन्ये दारुणं भयानकं धनुरनेन रामेण विलगितं गृहीतम्, भिद्यते स्फुटं मही इतीव स्फुटं नास्तु समुद्र इतीव दारुणं प्रजासंहारोपपादकं प्रकीर्णं सकलं जगन्नश्यतीतीव कलयित्वा विमृष्य मन्ये रामेण धनुर्विलगितं गृहीतमुपायान्तरमदृष्ट्वेति भाव इति **लोकनाथः**। **श्रीनिवासस्तु** भिद्यतां महीतीव स्फुटं नास्तु समुद्र इतीव दारुणं यथा स्यात्तथा जगन्नश्यत्वितीव मन्ये चिरं चिरकालीनां 'पडिण्णं' प्रतिज्ञां कलयित्वा कृत्वानेन धनुर्गृहीतमित्याह। समुद्रस्याधारभूता मही पातालपतनाय भिद्यतामिति वा, नास्ति न तिष्ठतु समुद्र इति वा, नश्यन्तु जगन्ति इति वा, समुद्राधारतया वा इति स्फुटं सर्वत्र योज्यमित्य**न्ये** ॥२१॥

**तो चिर-विओअ-तणुओ सइ-बाहोमट्ठ-मउअ-जीआघाओ।**
**अण्णो च्चिअ से जाओ[3] विलइअ[4]-धणु-मेत्त-वावडो वाम-**
**भुओ ॥२२॥**

---

1 ०उ GB. 2 तुलेऊण GB. 3 This word is placed at the beginning of the third pāda of the verse in GB. 4 विअलिअ० Ms.

[ततः चिर-वियोग-तनुकः सदा-बाष्पाव-मृष्ट-मृदुक-जीवाघातः।
अन्यः एव तस्य जातः विलगित-धनुर्-मात्र-व्यापृतः वाम-भुजः ॥]

'से' तस्य चिरवियोगेन तनुकः सदा बाष्पेणावमृष्टः सिक्तो मृदुको ज्याघातो गुणाघातस्थानं यत्र स वामभुजो विलगित[1]-धनुर्मात्रव्यापृतः सन्नन्य एव जातो भीषणोऽभूदित्यर्थः, दक्षिणभुजे तु व्याप्रियमाणे किं भविष्यतीति भावः। **केचित्तु** तस्य वामो भुजो विगलिते सकोपगृहीते धनुर्मात्रे व्यापृतो व्यापारशाली सन्, अन्य एव भयङ्करत्वात् पूर्वावस्थातो भिन्न एव जातः ॥२२॥

अह [2]राम-करप्फालण-पडिरव-पडिभिण्ण[3]-दस-दिसा-वित्थारं।
सम्भरइ जाअ-कम्पं[4] पलअ-घण-त्थणिअ[5]-पेल्लणं तेल्लोक्कं ॥२३॥

[अथ राम-करास्फालन-प्रतिरव-प्रतिभिन्न-दश-दिग्-विस्तारम्।
स्मरति जात-कम्पं प्रलय-घन-स्तनित-प्रेषणं त्रैलोक्यम् ॥]

अथ सरोषधनुर्ग्रहणानन्तरं रामस्य करास्फालनेन यो धनुषो रवस्तेन प्रतिभिन्नः पाटित इव दशदिग्विस्तारो यत्र तत् त्रैलोक्यं भयाज्जातकम्पं प्रलयघनस्तनितस्य प्रेषणं पातनं स्मरति ॥२३॥

गेण्हइ अ सो अणाअर-परम्मुह-पसा[F23b]रिअग्ग-हत्थावडिअं।
खअ-सूर-मऊहाण व एक्कं उअहि-परिवत्तण-सहं बाणं ॥२४॥

[गृह्णाति च सः अनादर-पराङ्मुख-प्रसारिताग्र-हस्तापतितम्।
क्षय-सूर्य-मयूखानां इव एकं उदधि-परिवर्तन-सहं बाणम् ॥]

स रामोऽनादरेणावज्ञया परांमुखप्रसारिते अग्रहस्ते आपतितं क्षयकालीनसूर्यमयूखानामेकमिवोदधिपरिवर्तनसहं बाणञ्च गृह्णाति। एतावतः समुद्रस्य नाशे तद्योग्य एव बाणो ग्रहीतुमुचित इत्यत्रावज्ञया रामस्य समुद्रनाशं प्रति धैर्यानपायः सूचितः ॥२४॥

---

1 विगलि॰ Ms, 2 वाम-भुअ॰ GB. 3 ॰उरण॰ GB. 4 ॰सङ्कं GB. 5 ॰अहिअ॰ GB.

तो सन्धन्तेण सरं रसन्तरोलुग्ग-भिउडि-भङ्गेण चिरं ।
णीससिऊण पुलइओ अणुअम्पा-दूमिआणणेण समुद्दो ॥२५॥

[ ततः संदधता शरं रसान्तरावलग्न-भ्रुकुटि-भङ्गेन चिरम् ।
निःश्वस्य प्रलोकितः अनुकम्पा-दूयमानाननेन समुद्रः ॥ ]

ततः शरं दधता रौद्ररसनिवृत्त्यां रसान्तरः करुणरसस्तेनावरुग्णोऽपनीतो भ्रुकुटिभङ्गो यस्य तेनानुकम्पाव्यथिताननेन निःश्वस्य समुद्रश्चिरं 'पुलइओ' दृष्टः। सिन्धोरिदानीमेव प्रलयो भविष्यतीत्यनुकम्पया दुःखाभिव्यञ्जकमाननं यस्य, अतएव रसान्तरेण करुणात्मना-वरुग्णो भ्रुकुटीभङ्गो यस्य तेन रामेण समुद्रः प्रलोकितः, समुद्रवर्तिनां कोटिशः प्राणिनां प्रलयजनितयाप्यनुकम्पया रामस्योपायान्तरादर्शनात् समुद्रनाशाध्यवसायो न दूरीभूत इति भावः ॥२५॥

अह कड्ढिउं पउत्तो णिक्कम्प-णिराअ-दिट्ठि-सच्चविअ-सरं ।
वलिअ-भुअ-रुद्ध-मज्झं दढ-णिप्पडिअ-गुणं धणुं रहुणाहो ॥२६

[अथ क्रष्टुं प्रवृत्तः निष्कम्प-निरायत-दृष्टि-सत्यापित-शरम् ।
वलित-भुज-रुद्ध-मध्यं दृढ-निष्पीडित-गुणं धनुः रघुनाथः ॥ ]

अथ समुद्रप्रलोकनानन्तरं वलितेन दृढमुष्टीकृतेन भुजेनार्धाद्यामेन रुद्धमायत्तीकृतं मध्यं यस्य, तथा दक्षिणहस्तेन दृढनिष्पीडितगुणं धनुर्निष्कम्पया विषयान्तरपरिहारेण तन्मात्रे स्थिरीभूतया निरायतया, आशराग्रादालक्ष्यदेशं प्रसृतया, दृष्ट्या सत्यापितो विशदीकृतः शरो यत्र एवं यथा स्यात्तथा क्रष्टुं प्रवृत्तः। विशेषणत्रयमेव कर्षणक्रियाया इति **केचित्**। निश्चला निरायता शराग्रदानेन लक्ष्यदेशं प्रसृता या दृष्टिस्तया 'सच्चविअ'-शरं कृष्टशरं यथा स्यात्तथा कर्तुं रघुनाथः प्रवृत्त इति **कुलनाथः** ॥२६॥

सर-मुह-विसम-प्फलिआ णमन्त-धणु-कोडि-विप्फुरन्त-च्छाआ ।
णज्जइ कड्ढिज्जन्ता जीआ-सद्द-गहिरं रसन्ति रवि-अरा ॥२७॥

[ शर-मुख-विषम-फलिताः नमद्-धनुष्-कोटि-विस्फुरच्-छायाः ।
ज्ञायते कृष्यमाणाः जीवा-शब्द-गभीरं रसन्ति रवि-कराः ॥ ]

शरमुखे लोहफले विषममत्यर्थं यथा स्यात्तथा फलिताः प्रतिबिम्बिताः, तथा ज्याकर्षणेन नमन्त्योर्धनुष्कोट्योर्विस्फुरन्ती छाया प्रतिकृतिर्येषां ते रविकरा ज्ञायते ज्याशब्द-गभीरं यथा स्यात्तथा रसन्ति। अयमर्थः। ज्याकर्षणे कोटिद्वयस्य शरस्य चाकर्षणं भवति अत ईदृशस्थानत्रये पतिता सूर्यकरा आकृष्यमाणा इव ज्याशब्दव्याजात् क्रन्दन्तीवेत्युत्-प्रेक्षा ॥२७॥

फुड-जीआ-रव-मुहलं तज्जेइ व बाण-मुह-वलन्तग्गि[1]-सिहं।
जलणिहि-वह-पडिउद्धं आअण्णाअड्ढिअं विअम्भइ व धणुं ॥२८

**[स्फुट-जीवा-रव-मुखरं तर्जयति इव बाण-मुख-वलमानाग्नि-शिखम्।
जलनिधि-वध-प्रतिबुद्धं आकर्षणाकृष्टं विजृम्भते इव धनुः॥]**

बाणमुखे वलमाना, पाठान्तरे ज्वलन्ती अग्निशिखा यस्य, तथा स्फुटज्यारवेण मुखरं धनुस्तर्जयतीव, अर्थात् समुद्रं, तदर्थमेव मम भुजनिष्पीडनाकर्षणादिदुःखमिति कृत्वा अग्निशिखा तज्जन्या कलहायमानमिव धनुः समुद्रं तर्जयतीत्युत्प्रेक्षा। आकर्णाकृष्टतया स्फारीभूतत्वाज्जल-निधिवधाय प्रतिबुद्धं त्यक्तनिद्रं सद्विजृम्भत इव, तत्कालत्यक्तनिद्रस्य जृम्भाप्युचितैवेति भावः। **केचित्तु** स्फुटेन ज्यारवेण मुखरं यथा स्यात्तथा। बाणमुखवलमाना तर्जन्यङ्गुलिरिव शिखा यस्य तद्धनुस्तर्जयतीव इति **केचित्** ॥२८॥

खुहिअ-जल-सिट्ठ-सारो मुह-णिग्गअ[2]-बहल-पसरिउक्का-णिवहो।
आअड्ढिज्जन्तो च्चिअ णज्जइ पडिओ त्ति साअरे राम-सरो ॥२९॥

**[क्षुभित-जल-शिष्ट-सारः मुख-निर्गत-बहल-प्रसारितोल्का-निवहः।
आकृष्यमाणः एव ज्ञायते पतितः इति सागरे राम-शरः॥]**

अकस्मात् क्षुभितेन जलेन शिष्टः कथितः सारो यस्य, मुखान्निर्गतो बहलः प्रसृत उल्का-निवहो यस्य स रामशर आकृष्यमाण एव अपतितोऽपि सागरे पतित इति ज्ञायते, उल्कानिवहे समुद्रलग्नमात्र एव शरपतनजन्यक्षोभदर्शनादिति भावः ॥२९॥

---

1 ०जलन्तग्गि० GB; Ms also noticing this reading marginally.
2 ०णिद्दाविअ-प० GB.

[1]तो भुअ-रहसाअड्ढण[2]-धणु-[F24a]वट्ट-प्फिडिअ[3]-बहल-
धूमुप्पील ।[4] ।
मुअइ मुह-णिग्गआणल-सिहाहओलुग्ग[5]-सूर-किरणं बाणं ॥३०॥

[ततः भुज-रभसाकर्षण-धनुः-पृष्ठ-स्फोटित-बहल-धूमोत्पीडम् ।
मुञ्चति मुख-निर्गतानल-शिखाहतावरुग्ण-सूर्य-किरणं बाणम् ॥ ]

[ F24a ] तत ईदृशबाणाकर्षणानन्तरं मुखनिर्गतानलशिखाभिराहता अवरुग्णा विच्छायीकृताः 'सूरस्य' किरणा येन तं बाणं, भुजरभसाकर्षणेन धनुःपृष्ठाद्भ्रष्टो वह्निदेवता-सान्निध्यजनितो बहलधूमोत्पीडो यथा स्यात्तथा मुञ्चति । द्वयमेव क्रियाविशेषणं वा ॥३०॥

धुअ-विज्जु-पिङ्गलाइं सर-मुह-णिग्गिण्ण-हुअवह-भरन्ताइं[6] ।
उप्पाअ-लोअणाइ[7] व फुट्टन्ति दिसा-मुहाण घणवुन्दाइं[8] ॥३१॥

[धुत-विद्युत्-पिङ्गलानि शर-मुख-निर्गीर्ण-हुतवह-भ्रियमाणानि ।
उत्पात-लोचनानि इव स्फुटन्ति दिङ्-मुखानां घन-वृन्दानि ॥ ]

शरमुखनिर्गीर्णेन हुतवहेन भ्रियमाणानि, अतएव धुताभिर्विद्युद्भिरिव पिङ्गलानि दिङ्मुखानामुत्पातलोचनानीव घनवृन्दानि स्फुटन्ति । पाठान्तरे तु निगीर्णेन इति व्याख्या । अन्यत्रापि हुतवहाद्युत्पातग्रस्तानि लोचनानि चटचटायमानानि स्फुटन्ति ॥३१॥

सो जलिऊण णह-अले सलिलद्धत्थमिअ-हुअवहाअम्ब-मुहो ।
पढमोइण्ण-दिणअरो दीहो दिअसो[9] व्व साअरम्मि णिव-
डिओ ॥३२॥

1 This verse is read in GB after the one beginning with धुअ॰ (in Ms V. 31). 2 ॰अड्ढिअ॰ GB. 3 ॰प्फुलिअ॰ GB. 4 ॰डं GB. 5 ॰समोलुग्ग॰ GB; Ms noticing this reading marginally. 6 ॰पलित्ताइं GB. 7 ॰इं Ms. 8 ॰विन्दाइं GB. 9 ॰हो GB.

**[सः ज्वलित्वा नभस्तले सलिलार्धास्तमित-हुतवहाताम्र-मुखः ।
प्रथमावतीर्ण-दिनकरः दीर्घः दिवसः इव सागरे निपतितः ॥ ]**

सलिलेऽर्धास्तमितं हुतवहेनाताम्रं मुखं यस्य स शरो नभस्तले ज्वलित्वा प्रथमभागेन पूर्वार्धेनावतीर्णः सलिले मग्नो दिनकरो यत्र एवंभूतो दीर्घो ग्रीष्मकालीनो दिवस इव सागरे निपतितः । अतिचण्डत्वाद् ग्रीष्मकालीनदिवसेनोपमा । **कुलनाथस्तु** स ज्वलित्वा नभस्तल इति शरस्य दिवसस्य च विशेषणं, सलिलेऽर्धास्तमितं हुतवहाताम्रं मुखं यस्य स तथा शरस्य समस्तास्तमये नभसि तेजोऽदर्शनं स्यादिति शङ्कानिरासार्थमर्धास्तमितमित्युक्तं, प्रथमावतीर्ण-दिनकर इत्यत्राप्यर्धावतीर्ण इति ज्ञेयं समस्तास्तमये नभसि दिवसस्यादर्शनप्रसङ्गात्, स शरो दीर्घो दिवस इव सागरे निपतितः ॥३२॥

गअणे विज्जु-णिहाओ खअन्त-कालाणले समुद्दुच्छङ्गे ।
महि-अम्पो पाआले होइ पडन्त-पडिअ-ट्ठिओ राम-सरो ॥३३॥

**[गगने विद्युन्-निघातः क्षयान्त-कालानलः समुद्रोत्सङ्गे ।
मही-कम्पः पाताले भवति पतत्-पतित-स्थितः राम-शरः ॥ ]**

पतन् पतितः स्थितो रामशरस्त्रिषु स्थानेषु एवंरूपो भवति यथासंख्यमन्वयः, कुत्र कीदृशः ? गगने पतन् विद्युतां निघातस्तत्क्षणादृष्टनष्टत्वात्, समुद्रोत्सङ्गे पतितः क्षयान्त-कालानलः समुद्रे क्वाथजननान्निपत्य पाताले स्थितो महीकम्पः शरज्वालया धरणीधर्तुः पन्नगस्य कम्पात् ॥३३॥

तस्स अ मग्गालग्गा अइन्ति णिद्धूम-जलण-अम्ब-च्छाआ ।
उअहिं बाण-णिहाआ [1]उइअत्थमिअस्स दिणअरस्स व
किरणा ॥३४॥

**[तस्य च मार्गालग्नाः आयान्ति निर्धूम-ज्वलन-ताम्र-च्छायाः ।
उदधिं बाण-निघाताः उदितास्तमितस्य दिनकरस्य इव किरणाः ॥ ]**

---

1 अद्धत्थ० GB.

तस्य शरस्य मार्गानुगता निर्धूमज्वलन इव ताम्रच्छाया बाणसमूहा उदधिमायान्ति, उदितास्तमितस्य दिनकरस्य मार्गालग्ना किरणा इव। शरोऽप्युदितास्तमितो यतो धनुष्युदितो नभसि प्रसृत्य जलधौ मग्नः। रविकरोऽपि उदधौ निमज्जति ॥३४॥

**णवरि अ सर-णिब्भिण्णो वलवा[1]-मुह-विहुअ-केसर-सडुग्घाओ[2]।**
**उद्धाइओ रसन्तो वीसत्थ[3]-पसुत्त-केसरि व्व समुद्दो[4] ॥३५॥**

**[अनन्तरं च शर-निर्भिन्नः वडवा-मुख-विधुत-केशर-शटोद्घातः।**
**उद्धावितः रसन् विश्वस्त-प्रसुप्त-केशरी इव समुद्रः ॥ ]**

शरपातानन्तरं शरनिपाताद्विधुतं वडवामुखं वडवाग्निः केशरशटोद्घात इव यस्य, समुद्रो विश्वस्तः सुप्तकेशरीव सन्नुद्धावितः प्रसुप्तः सिंहोऽपि नितम्बादिषु शरनिर्भिन्नः सन् केशरं व्याधूय सशब्दमुद्धावति। अनन्तरञ्च शरनिर्भिन्नो वडवानलमुखविधुतकेशरशटोद्घातो विधुतवडवाग्निकेशरसंघात इत्यर्थः। विश्वस्तप्रसुप्तकेशरीव रसन् समुद्र ऊर्ध्वायित इति **कुलनाथः** ॥३६॥

**दूराइद्ध-णिअत्ते समुहागअ-बहल-सर-णिहा [F24b]उच्छलिए[5]।**
**दोहाइज्जइ व णहं टङ्क-च्छेअ-विसमुट्ठिअम्मि[6] समुद्दे ॥३६॥**

**[दूराविद्ध-निवृत्ते सम्मुखागत-बहल-शर-निघातोच्छलिते।**
**द्विधा क्रियते इव नभः टङ्क-च्छेद-विषमोत्थिते समुद्रे ॥ ]**

पूर्वप्रहितबाणेन दूरमुत्क्षिप्ते, पाठान्तरे तु दूरमाविद्धे ततो निवृत्ते, अनन्तरं सम्मुखागत-बहलशरनिघातैः स्खलिते समुद्रे टङ्कच्छिन्न इव विषममत्यर्थं, पाठान्तरे रभसेन वेगेनोत्थिते सति, नभो द्विधाक्रियत इव, शरघातोच्छलितस्य सिन्धोरधस्तादूर्ध्वञ्च स्थानद्वये दृश्यमानं नभो द्विधाभूतमिव दृश्यत इत्यर्थः। यद्वा टङ्कैरिव बाणैश्छिन्नोत्थिते समुद्रेऽधःस्थितस्योच्छलितस्य

---

1 वलआ॰ GB. 2 ॰सट्ट॰ Ms. 3 ॰त्त॰ Ms. 4 समुद्दो Ms. 5 ॰हाअ-क्खुडिए GB. 6 ॰रद्दसु॰ GB.

च मलिनत्वादुभयोस्तुल्यत्वान्नभ एव टङ्कच्छेदाद् द्विधा क्रियत इवेत्यर्थः। ये संमुखागता बहलशरसमूहास्तेषु स्खलिते ततः स्खलनात् टङ्कच्छेदे टङ्कच्छिन्नशिलाशकल इव विषमोत्थिते सति समुद्रे नभो 'दोहाइज्जइ व' द्विधा क्रियत इवेति **कुलनाथः** ॥३६॥

**रअणाअर-पर-भाए मज्झ-च्छिण्णम्मि बाण-घाउच्छित्ते[1] ।**
**णिवडइ [2]बिइअद्धन्तो फुडिओसरिओ व्व मलअ-अड-**
**पब्भारो ॥३७॥**

[रत्नाकर-पर-भागे मध्य-च्छिन्ने बाण-घातोत्क्षिप्ते ।
निपतति द्वितीयार्धान्तः स्फुटितापसृतः इव मलय-तट-प्राग्भारः ॥ ]

रत्नाकरस्य परभागे मध्यच्छिन्ने बाणघातोत्क्षिप्ते द्वितीयार्धान्तोऽर्वाक्समुद्रैकदेशः स्फुटितो भिन्नः सन्नपसृतो मलयतटप्राग्भार इव निपतति। प्राग्भार इव तुङ्गदेश इवेति **केचित्** ॥३७॥

**भिण्ण-गिरि-धाउ-अम्बा विसम-च्छिण्णुप्पअन्त[3]-महिहर-वक्खा।**
**[4]खुब्भन्ति खुहिअ-मअरा आवाअल-गहिरासमुद्दुद्देसा ॥३८॥**

[भिन्न-गिरि-धातु-ताम्राः विषम-च्छिन्नोत्पतन्-महीधर-पक्षाः ।
क्षुभ्यन्ति क्षुभित-मकराः आपाताल-गभीराः समुद्रोद्देशाः ॥ ]

भिन्नैर्गिरीणां धातुभिर्गैरिकैस्ताम्रा विषमं छिन्ना उत्पतन्तो महीधराणां पक्षा येषु ते आपातालं गभीराः समुद्रोद्देशाः क्षुभ्यन्ति ॥३८॥

---

1 °क्खित्ते GB. 2 बीअ° GB ; बिदिअ° Ms. 3 °च्छिण्ण° GB. 4 खुब्व° Ms.

आअम्ब-रवि-अराहअ-दर-विहडिअ-धवल-कमल-मउल-च्छाअं ।
भमइ सर-पूरिअ-मुहं उग्घाडिअ-[1]पण्डरोअरं संख-उलं ॥३९॥

[आताम्र-रवि-कराहत-दरविघटित-धवल-कमल-मुकुल-च्छायम् ।
भ्रमति शर-पूरित-मुखं उद्घाटित-पाण्डरोदरं शङ्ख-कुलम् ॥ ]

आताम्रै रविकरैराहतानि दरविघटितानि स्तोकविघटितानि यानि धवलकमलकुट्मलानि[2] तेषामिव छाया द्युतिर्यस्य तत्तथा शरैः पूरितमुखं प्रहारवेदनयोत्तानीकरणादुद्घाटितं पाण्डरमुदरं[3] येन तच्छङ्खकुलं भ्रमति व्याकुलतया क्वापि न स्थैर्यं लभत इत्यर्थः, लघुत्वाच्छङ्खकुलस्य प्रथममेव विह्वलता ॥३९॥

वेवन्ति विहुअ-मच्छा सर-घाउक्खुडिअ-मअर-दाढा-धवला ।
मणि-भर-विसमोणामिअ-लुअ[4]-घोलिर-विसहर[4]-प्फणा जल-णिवहा ॥४०॥

[वेपन्ते विधुत-मत्स्याः शर-घातोत्खण्डित-मकर-दंष्ट्रा-धवलाः ।
मणि-भर-विषमावनामित-लून-घूर्णनशील-विषधर-फणाः जल-निवहाः ॥ ]

विधुतमत्स्याः शराणां घातैः खण्डिताभिर्मकरदंष्ट्राभिर्धवला मणीनां भरेण विषमं व्यग्रमवनामिता विच्छेदविकलत्वाद् धरणाक्षमत्वेन घूर्णनशीला विषधराणां फणा येषु ते जलनिवहा वेपन्त आन्दोलनं भजन्ते ॥४०॥

फुट्टन्त-विद्दुम-लअं[5] संखोहुव्वत्त-णिन्त-रअण-मऊहं ।
घोलइ वेला-वडिअं फेण-णिहुच्छलिअ-मोत्तिअं [6]उअहि-जलं ॥४१॥

---

1 ०ण्डु० GB. 2 ०कुमुदानि Ms. 3 वदनं Ms.
4 These two words interchange place in GB. 5 ०वणं GB.
6 उवहि० GB.

[स्फुटद्-विद्रुम-लतं संक्षोभोद्वृत्त-निर्यद्-रत्न-मयूखम् ।
घूर्णते वेला-पतितं फेन-निभोच्छलित-मौक्तिकं उद्धि-जलम् ॥ ]

बाणप्रहारेण स्फुटन्त्यः खण्डखण्डीभवन्त्यो विद्रुमलता यत्र, संक्षोभेणोद्वृत्तानां परिवृत्त-पार्श्वानां रत्नानां निर्यन्तो मयूखा यत्र, रत्नानामुपरिभागे शैवालादिमलिनतया मयूखाप्रसरणात्, फेननिभान्युच्छलितानि मौक्तिकानि यत्र, ईदृशमुदधिजलं वेलापतितं घूर्णते गतागतिं करोति ॥४१॥

जल-पव्वालिअ[1]-मुक्का खण-मेत्त-त्थइअ-पाअडिअ-वित्थारा ।
होन्ति पसण्ण-क्खुहिआ[F25a][2]मूअल्लिअ-पमुहला समुद्दावत्ता ॥४२

[जल-प्लावित-मुक्ताः क्षण-मात्र-स्थगित-प्रकटित-विस्ताराः ।
भवन्ति प्रसन्न-क्षुभिताः मूकायित-प्रमुखराः समुद्रावर्ताः ॥ ]

समुद्रावर्ताः शरक्षोभोच्छलितेन सलिलेन प्लाविता मुक्ताश्च भवन्ति, कीदृशा इत्याह—तेषामेव जलानां प्लावनात् क्षणमात्रस्थगितास्तेषामेव मोचनात् प्रकटितविस्ताराः, तथा जलप्लावनात् प्रसन्ना एकरूपतया स्तिमिता मोचनात् क्षुभिता अधिकं भ्रमिताः, तेषां प्लावनान्मूका मोचनान्मुखराः ॥४२॥

वलमाणुव्वत्तन्तो एक्कं चिर-आल-पीडिअं सिढिलेन्तो ।
बिइएण[3] व पाआले पासेण णिसम्मिउं पउत्तो उअही[4] ॥४३॥

[वलमानोद्वर्तमानः एकं चिर-काल-पीडितं शिथिलयन् ।
द्वितीयेन इव पाताले पार्श्वेन निस्वप्तुं प्रवृत्तः उदधिः ॥ ]

[F25a] एकं पार्श्वं चिरकालं पातालनिक्षिप्तत्वात् पीडितं शिथिलयन् वलमानश्च उद्वर्तमानश्च सन् द्वितीयेन पार्श्वेन 'णिसम्मिउं' निस्वप्तुमुदधिः प्रवृत्तः, यदधोगतं जलं

---

1 ०डिअ० GB. 2 मूअल्लइअ-मुहला GB. 3 बोएण GB.
4 उवही GB.

तज् ज्वलनक्राथवशादुपरिष्टाद्भूतं यदुपरिपरिवर्ति तदधोगतमित्यर्थः। वलमान इव स्वस्थाने लुठन्निवोद्वर्तमान उपर्यधो वैपरीत्यं गच्छन्। पाताले शय्यात्वस्य समुद्रे पुरुषत्वस्य समाधानादुत्प्रेक्षासमाधिरलङ्कारः ॥४३॥

**सर-वेअ-गलत्थल्लिअ-सुवेल-रुब्भन्त-साअरद्ध-त्थइअं।**
**ओसरिअ-डाहिण[1]-दिसं दीसइ [2]ओखण्डिएक्क-पासं व णहं ॥४४॥**

[शर-वेग-गलहस्तित-सुवेल-रुध्यमान-सागरार्ध-स्थगितम्।
अपसृत-दक्षिण-दिशं दृश्यते अवखण्डितैक-पार्श्वं इव नभः॥ ]

शरवेगेण 'गलत्थल्लिअ' प्रेरितं ततः सुवेलेन रुध्यमानेन सागरार्धेन स्थगितमतएवापसृता दक्षिणा दिन् यस्य तग् नभोऽवखण्डितैकपार्श्वमिव दृश्यते ॥४५॥

**आइ-वराहेण वि जे अदिट्ठा मन्दरेण वि अणालिद्धा।**
**खुहिआ ते वि भअअरा आवाआल-गहिरा समुद्दुद्देसा ॥४५॥**

[आदि-वराहेण अपि ये अदृष्टा मन्दरेण अपि अनाश्लिष्टाः।
क्षुभिताः ते अपि भयङ्कराः आपाताल-गभीराः समुद्रोद्देशाः॥ ]

आदिवराहेणापि येऽदृष्टा मन्दरेणापि ये 'अणालिद्धा' अस्पृष्टाः क्षुभितास्तेऽपि भयङ्करा आपातालगभीराः समुद्रोद्देशाः ॥४५॥

**एक्केक्कम्मि वलन्तो बाण-प्पहर-विवरे णिराअवलम्बे[3]।**
**खअ-कालाणल-भीओ पडइ रसन्तो रसाअले व्व समुद्दो ॥४६॥**

[एकैकस्मिन् वलन् बाण-प्रहार-विवरे निरायत-प्रलम्बे।
क्षय-कालानल-भीतः पतति रसन् रसातले इव समुद्रः॥ ]

---

1 दा० GB. 2 उक्ख० GB. 3 णह-णिरालम्बे GB.

एकैकस्मिन् निरायते प्रलम्बेऽवक्रदीर्घे बाणप्रहारविवरे वलमानः समुद्रः क्षयकालानल-भीत इव रसन् पाताले पतति। निरायते ऋजूभूते एकैकस्मिन् बाणप्रभावविवरे 'पहाव-विवरे' इति पाठे, वलमानो भ्रान्त्वाधोविशन् समुद्रः क्षयकालानलभीत इव रसन् क्रन्दन् इति **लोकनाथः** ॥४६॥

**दीसन्ति दिट्ठ-महणा पुट्ठि-परिट्ठिअ[1]-पलोट्ट-मन्दर-सिहरा।**
**आसाइअमअ-रसा बाण-दढ-प्पहर-मुच्छिआ तिमि-णिवहा[2] ॥४७**

**[दृश्यन्ते दृष्ट-मथनाः पृष्ठ परिस्थित-प्रलुठित-मन्दर-शिखराः।**
**आस्वादितामृत-रसाः बाण-दृढ-प्रहार-मूर्च्छिताः तिमि-निवहाः। ]**

दृष्टं मथनं यैः, पृष्ठे परिस्थितं भ्रमणवेगान्निपत्यावस्थितं सत् पर्यस्तं भग्नं मन्दरशिखरं येषां ते, आस्वादितामृतरसास्तिमिनिवहा बाणदृढप्रहारमूर्छिता दृश्यन्ते। आस्वादितामृत-रसत्वान्न तादृशप्रहारेऽपि मृता इति भावः। पृष्ठे परिस्थितं प्रगलितं मन्दरस्य शिखरमग्रं येषाम् ॥४७॥

**उक्खित्त-महावत्ता सर[3]दड्ढ-विवण्ण-विद्दुम-रअ-क्खउरा।**
**आवाआल-वलन्ता दीसन्ति महा-भुअङ्ग-णीसास-वहा ॥४८॥**

**[उत्क्षिप्त-महावर्ताः शर-दग्ध-विवर्ण-विद्रुम-रजः-कलुषाः।**
**आपाताल-वलन्तः दृश्यन्ते महाभुजङ्ग-निःश्वास-पथाः ॥ ]**

उत्क्षिप्तः समुद्रसलिलादूर्ध्वं क्षिप्तो महावर्तः कुण्डलाकारभ्रमो यैः, शरदग्धानां विद्रुमाणां रजोभिः कलुषाः, आपातालं वलन्तो महाभुजङ्गानामर्थाच्छरानलोत्तप्तानां निश्वासपथा दृश्यन्ते ॥४८॥

---

1 ०पड्डि० GB.  2 ०मच्छा GB  3 दर० GB.

[1]जलण-प्पहाणुविद्धं आवत्त-भमन्त-पव्वअ-दुमालग्गं ।
सम्ब-[F25b]द्ध-रअण-पुप्फं फुरइ फुरन्त-प्पहं पवाल-
किसलअं ॥४९

[ज्वलन-प्रभानुविद्धं आवर्त-भ्रमत्-पर्वत-द्रुमालग्नम् ।
सम्बद्ध-रत्न-पुष्पं स्फुरति स्फुरत्-प्रभं प्रवाल-किसलयम् ॥ ]

आवर्ते भ्रमतां पर्वतानां द्रुमेष्वालग्नं, सम्बद्धानि रत्नानि मौक्तिकादीनि कुसुमानीव यत्र, प्रवालो विद्रुमः स एव किसलयं पल्लव इव, ज्वलनप्रभानुविद्धं चेद् अतः स्फुरत्प्रभं सत् स्फुरति, किसलयस्यापि द्रुमलग्नता पुष्पसमर्थता च ज्वलनप्रभवात्तुल्यवर्ण[त*]यानुविद्धं सद् इति **केचित्** ॥४६॥

वेवइ पेम्म-णिअलिअं सर-संदट्ठ-घणिओवऊहण-सुहिअं ।
जीएण एक्कमेक्कं परिरक्खन्त-वलिअं भुअङ्गम-मिहुणं ॥५०॥

[वेपते प्रेम-निगडितं शर-संदष्ट-घन्योपगूहन-सुखितम् ।
जीवेन एकैकं परिरक्षद्-वलितं भुजङ्गम-मिथुनम् ]

[F25b] प्रथमतः प्रेम्णा निगडितं मिलितं, ततः शरेण संदष्टं चेद् अतो 'धणिअं' गाढं यदवगूहनं तेन सुखितं, यद्यपि शरविद्धस्य दुःखमात्रभाजनत्वेन सुखं दुर्लभं तथापि दुःखात् सुखस्योत्कटत्वादिदमुपपद्यते । एकैकं जीवेन परिरक्षद्वलितं मदीयजीवितेनासौ जीवत्विति परस्परक्षार्थवलितमित्यर्थः । ईदृशं भुजङ्गममिथुनं वेपते, अस्मदग्रे शरप्रहारेणासौ किमु विपद्यते परस्परचिन्तयेति भावः । 'धणिअं' गाढमुच्यत इति देशी ॥५०॥

मोडिअ-विद्दुम-विडवा धावन्ति जलम्मि मणि-णिहंसण-णिसिआ ।
सिप्पि-उड-मज्झ-णिग्गअ-मुह-लग्ग-त्थोर-मोत्तिआ[2] राम-
सरा ॥५१॥

---

1 This verse does not occur in GB. 2 ०मु० GB.

[मोटित-विद्रुम-विटपाः धावन्ति जले मणि-निघर्षण-निशिताः ।
शुक्ति-पुट-मध्य-निर्गत-मुख-लग्न-स्थूल-मौक्तिकाः राम-शराः ॥ ]

मणिषु निघर्षणेन निशिता अतस्तीक्ष्णाग्रतया शुक्तिपुटमध्यान्निर्गताः सन्तो मुखलग्नस्थूलमौक्तिकाः स्थूलत्वादेव मौक्तिकानि मुखे लग्नानि नतु द्विधाभूतानीति भावः । मुखलग्नमौक्तिकत्वादेव मोटितो भग्नो नतु विद्धो विद्रुमविटपो यैरीदृशा रामशरा जले धावन्ति ॥५१॥

विस-वेओ व्व पसरिओ जं जं अहिलेइ बहल-धूमुप्पीलो[1] ।
कज्जलइज्जइ तं तं रुहिरं व महोअहिस्स विद्दुम-वेढं ॥५२॥

[विष-वेगः इव प्रसृतः यं यं अभिलीयते बहल-धूमोत्पीडः ।
कज्जलयति तं तं रुधिरं इव महोदधेः विद्रुम-वेष्टम् ॥ ]

विषवेग इव प्रसृतो बहलो निविडो धूमोत्पीडोऽर्थाद्बाणाग्निभवो यं यं महोदधेविंद्रुमवेष्टमभिलीयत आश्लिष्यति तं तं रुधिरमिव कज्जलयति । अन्योऽपि विषवेगो यावद्दूरं धावति तावत्पर्यन्तमेव रुधिरं श्यामीकरोति ॥५२॥

खुहिअ-समुद्दुप्पइआ बाणुक्कित्त-पडिएक्क-वित्थअ-वक्खा ।
विसम-भरोणअ-सिहरा णहद्ध-वन्थ-वलिआ पडन्ति महिहरा ॥५३॥

[क्षुभित-समुद्रोत्पतिताः बाणोत्कृत्त-पतितैक-विस्तृत-पक्षाः ।
विषम-भरावनत-शिखराः नभोऽर्ध-पथ-वलिताः पतन्ति महीधराः ॥]

क्षुभितात् समुद्रादुत्पतिता भयादुड्डयितुमारब्धाः । आदिकर्मणि क्तः । बाणोत्कृत्तपतितैकविस्तृतपक्षा अत एकेन पक्षेण स्थातुमशक्ताश्छिन्नपक्षपार्श्वेन विषमं तिर्यग्भरेणावनतशिखरा नभोऽर्धपथाद्वलिता महीधराः पतन्ति, अर्थात् समुद्रे ॥५३॥

---

1 ०ड्डो GB.

छिण्ण-विवइण्ण-भोआ कण्ठ-[1]परिट्ठविअ-जीविआगअ-रोसा ।
दिट्ठीहि बाण-णिवहे डहिऊण मुअन्ति जीविआइ भुअङ्गा ॥५४॥

[छिन्न-विप्रकीर्ण-भोगाः कण्ठ-परिस्थापित-जीवितागत-रोषाः ।
दृष्टिभ्यां बाण-निवहान् दग्ध्वा मुञ्चन्ति जीवितानि भुजङ्गाः ]

बाणेन छिन्नाः सन्तो विकीर्णा इतस्ततो विक्षिप्ता भोगाः शरीराणि येषां, यद्वा छिन्नतया विप्रकीर्णा रोषविस्तृता भोगाः फणा येषां, तथा कण्ठपरिस्थितजीविताश्च तथागतरोषाश्चेति ते भुजङ्गा दृष्टिभिर्बाणनिवहान् दग्ध्वा जीवितानि मुञ्चन्ति, प्राणात्ययेऽप्यादौ विपक्षमुन्मूल्य मनस्विनो जीवितानि त्यजन्तीति भावः ॥५४॥

आऊरेइ रसन्तो उक्खडिअ-भुअङ्ग-भोअ-पब्भाराइं ।
सर-मुह-गलत्थणुक्खअ-सेल-ट्ठाण-विवरो [F26a]अराइ
हुअवहो ॥५५॥

[आपूरयति रसन् उत्खण्डित-भुजङ्ग-भोग-प्राग्भाराणि ।
शर-मुख-गलहस्तनोत्खात-शैल-स्थान-विवरोदराणि हुतवहः ॥ ]

उत्खण्डितो भुजङ्गभोगानां शरीराणां फणानां वा प्राग्भारः समूहो येषु तानि शरमुखेण यद्गलहस्तनं प्रेरणं तेनोत्खातानां शैलानां स्थानविवरोदराण्यावासगर्तमध्यानि हुतवहो रसन् भुजङ्गमज्जादिप्रसरणाच्छब्दं कुर्वन् पूरयति । एतेन विवरप्राप्तिमात्रादेव तत्पूरण-समर्थान्यपि जलानि उज्झित्वा स्वयमेव गिरिकुहरपूरणाच्छराग्नेर्महिमातिशयः सूचितः ॥५५॥

भिण्णुव्वूढ-जलअरा दर-दिण्ण-महा-तरङ्ग-गिरि-अड-घाआ ।
छिण्ण-पडिउद्ध-विद्धा फुडन्ति माअङ्ग-मअर-दन्त-प्फलिहा[2] ॥५६

[भिन्नोद्व्यूढ-जलचराः दर-दत्त-महा-तरङ्ग-गिरि-तट-घाताः ।
छिन्न-पतितोर्ध्व-विद्धाः स्फुटन्ति मातङ्ग-मकर-दन्त-परिघाः ॥ ]

---

1 ०ड्डि० GB. 2 ०डिहा GB.

[F26a] भिन्ना विद्धाः सन्त उद्व्यूढा जलचरा यैः, गिरितटेष्विव महातरङ्गेषु दरमीषद्दत्तो घातो यैः, यद्वा ईषद्दत्तो महातरङ्गाणां गिरितटाघातो यैः, शरच्छिन्नोत्थितेषु[1] तद्दन्तेषु गिरितटेष्विव तरङ्गाः संघटिता इत्यर्थः। ईदृशा मातङ्गमकराणां दन्तपरिघा एकेन बाणेन छिन्नपतिताः पतितुमुपक्रान्ता, आदिकर्मणि कर्तरि क्तः। अनन्तरमेव बाणान्तरेणोर्ध्व-विद्धाः सन्तः स्फुटन्ति सशब्दं द्विधाभवन्तीत्यर्थः। प्राक्छिन्नास्ततः पतितास्तत ऊर्ध्वविद्धाश्चेति **कुलनाथः** ॥५६॥

## जालालोअ-विमुहिअं सलिल-तरङ्ग-परिसक्कण-परिक्खलिअं।
## परिहरइ विद्दुम-वणं धूमाहअ-अम्ब-लोअणं मीण-उलं ॥५७॥

**[ज्वालालोक-विमुग्धं सलिल-तरङ्ग-परिसर्पण-परिस्खलितम्।
परिहरति विद्रुम-वनं धूमाहताताम्र-लोचनं मीन-कुलम् ॥ ]**

रामशराग्नीनां ज्वालालोकेन विमुखितं विमुग्धं वा, सलिलतरङ्गाणां यत् परिसर्पणं परिवृत्य सर्पणं कूलं गत्वा निवर्तनमिति यावत् तेन परिस्खलितं कूलात् प्रत्यावृत्तं, कूलगमनञ्च शरानलोत्तप्तसलिलपरीहाराय, तथा धूमाहतताम्रलोचनं मीनकुलं विद्रुमं परिहरति त्यजति शरणत्वाज्ज्वालाशङ्कयेति भावः। तरङ्गस्य महत्त्वख्यापनाय सलिलपदमिति **केचित्** ॥५७॥

## उव्वत्तोअर[2]-धवला दर-णिग्गअ-[3]दट्ट-जमल[4]-जीहा-णिवहा।
## सन्धेन्ति उप्पवन्ता[5] थोर[6]-तरङ्ग-विअडन्तराइ भुअङ्गा ॥५८॥

**[उद्वृत्तोदर-धवलाः दर-निर्गत-दष्ट-यमल-जिह्वा-निवहाः।
सन्दधति उत्प्लवमानाः स्थूल-तरङ्ग-विकटान्तराणि भुजङ्गाः ॥ ]**

दरनिर्गता दष्टा युग्मजिह्वानिवहा यैः, मरणकाले जिह्वादंशनं स्वभावः। 'सुहावदट्ठे'ति क्वचित् पाठः। तथा शराघातेनोद्वृत्तोदरतया धवलाः सन्त उत्प्लवमाना भुजङ्गाः स्थूल-

---

1 ०न्नोत्त्थि० Ms. 2 ०दर० Ms. 3 ०डड्ढ० GB.
4 ०जल० (for ०जमल०) Ms. 5 ०अन्ता GB. 6 थोअ० Ms.

तरङ्गाणां विकटानि विशालान्यभ्यन्तराणि संदधते तुङ्गयोस्तरङ्गयोर्निम्नं मध्यभागं पूरयन्तीत्यर्थः। पन्नगाणां तरङ्गानां च धवलत्वतुङ्गत्वाभ्यामेकीभावदर्शनादिति भावः ॥५८॥

दीसन्ति दरुत्तिण्णा हुआसणुत्तत्त-वाअ-मअ-णीसन्दा।
पक्कग्गाह-णहङ्कुस-विसम-समक्कन्त[1]-मत्थआ करि-मअरा ॥५९॥

[दृश्यन्ते दरोत्तीर्णाः हुताशनोत्तप्त-वान-मद-निःस्यन्दाः।
पक्षग्राह-नखाङ्कुश-विषम-समाक्रान्त-मस्तकाः करि-मकराः ॥]

हुताशनेनोत्तप्ता अतएव 'वान्ना' शुष्का मदनिस्यन्दा येषां ते, करिमकरा जलहस्तिनः पक्षग्राहस्य जलसिंहस्य नखाङ्कुशेन विषमं निर्भरं यथा स्यात्तथा समाक्रान्तमस्तकाश्चेदतो दरमीषदुत्तीर्णा दृश्यन्ते। जलसिंहाक्रान्तमस्तकत्वात् स्वच्छन्दमुत्तरीतुं न प्रभवन्तीत्यर्थः। पक्षग्रहाः समर्थाग्रहा इति **कुलनाथः**, पक्षग्राहशब्दो जलसिंहे देशी इति वस्त्वर्थः। 'समुक्कित्तमत्थआ' इति पाठे समुत्कृत्तमस्तका इत्यर्थः ॥५९॥

घोलइ गओणिअत्तं विसम-ट्ठिअ-मणि-सिला-अल-पलोट्टन्तं।
झिज्जन्त-सलिल-विहलं वेलापुलिण-गमणूसुअं संख-उलं ॥६०॥

[घूर्णते गतापनिवृत्तं विषम-स्थित-मणि-शिला-तल-प्रलुठत्।
क्षीयमाण-सलिल-विह्वलं वेला-पुलिन-गमनोत्सुकं शङ्ख-कुलम् ॥]

क्षीयमाणेन सलिलेन विकलं विह्वलं वा, अतः प्रतीकारहेतोर्वेलागमनोत्सुकं शंखकुलं विषमं तिर्यक् स्थितान्मणितटात् पर्यस्यत् स्खलितं मणिशिलातटमुल्लङ्घ्य कूलं गन्तुमुद्यतं तस्मात् स्खलितमित्यर्थः। अतः कूलप्राप्तये गतं शिलातटस्खलनादपवृत्तं सद् घूर्णते भ्रमति ॥६०॥

मुक्क-समुद्दुच्छङ्गा पक्ख-क्खेवेहि सम्भम-समुप्पइआ।
अब्भुत्तेन्ति महिअरा [2]एक्केक्कम-सिहर-संठिअं सिहि-णिवहं ॥६१॥

[मुक्त-समुद्रोत्सङ्गाः पक्ष-क्षेपैः संभ्रम-समुत्पतिताः।
अभ्युत्तेजयन्ति महीधराः एकैक-शिखर-संस्थितं शिखि-निवहम् ॥]

---

1 ०समुक्कत्त० (=०समुत्कृत्त०) G. 2 एक्क० GB.

मुक्तसमुद्रोत्सङ्गाः सन्तः संभ्रमेण त्रासेन समुत्पतिता महीधराः पक्षोत्क्षेपैरन्योन्यशिखरस्थितं शिखिनिवहमभ्युत्तेजयन्त्यधिकमुद्दीपयन्ति। एकैकशिखरे संस्थितं प्राप्तविनाशं शिखिकुलमुत्तेजयन्तीति **केचित्** ॥६१॥

विहलुव्वत्त-भुअङ्गा छिण्ण-महासुर-सिरुप्पअण-गम्भीरा ।
मूलुत्थम्भिअ-रअणा णेन्ति रसन्ता रसाअल-जलुप्पीला[1]॥६२॥

**[विह्वलोद्वृत्त-भुजङ्गाः छिन्न-महासुर-शिर-उत्प्लवन-गम्भीराः ।**
**मूलोत्तम्भित-रत्नाः निर्यन्ति रसातल-जलोत्पीडाः ॥ ]**

शराग्निना विकला विह्वला वा, उद्वृत्ता उत्तानिता भुजङ्गा येषु, छिन्नानां महासुराणां शिरसामर्थ्यात् पातालस्थितानामुत्प्लवनेन गम्भीरा भयानकाः, मूलात् पातालाद् उत्तम्भितानि उत्क्षिप्तानि रत्नानि यैस्ते रसातलसम्बन्धिका जलोत्पीडा रसन्तो ज्वलदनलरामशराघातेन सशब्दा निर्यन्ति ॥६२॥

[2]णिव्वू[F26b]ढ-विस-त्थवआ[3] भोआअड्ढण-गलन्त-गमणुच्छाहा।
तुङ्ग-तरङ्ग-क्खलिआ विसमुव्वत्तोअरा वलन्ति भुअङ्गा ॥६३॥

**[निर्व्यूढ-विष-स्तवकाः भोगाकर्षण-गलद्-गमनोत्साहाः ।**
**तुङ्ग-तरङ्ग-स्खलिताः विषमोद्वृत्तोदराः वलन्ति भुजङ्गाः ॥ ]**

निर्व्यूढा उद्गीर्णा इतस्ततः क्षिप्ता वा 'विसत्थेवा' विषविन्दवो येषां, तथा शरप्रहारनिःसहतया भोगस्य शरीरस्याकर्षणेन गलन् गमनोत्साहो येषाम्, अतस्तुङ्गेषु तरङ्गेषु स्खलिताः प्रतिहतगमनास्तुङ्गतरङ्गेभ्यः स्खलिता इति **कुलनाथः**। विषमं तिर्यक् निर्भरं वा, उद्वृत्तमुत्तानीभूतमुदरं येषां ते भुजङ्गा वलन्ति निवर्तन्ते भ्रमन्ति वा। 'त्थेव'-शब्दो बिन्दुवाचको देशीयः ॥६३॥

---

1 ०प्पीडा GB. 2 Before this verse ( V. 63 ) occurs another which is numbered as V. 73 in Ms. 3 ०त्थेविआ Ms ; but 'त्थेवा' would have been a better reading for metrical necessity.

वेवन्ति णिण्णआणं सर-णिवह-च्छिण्ण-सङ्ख-विहडिअ-वलआ ।
हत्थ व्व उअहि-णिमिआ मुक्क-रवक्कन्द-णिपडिआण तरङ्गा ॥६४॥

[वेपन्ते निम्नगानां शर-निवह-च्छिन्न शङ्ख-विघटित-वलयाः ।
हस्ताः इव उदधि-निहिताः मुक्त-रवाक्रन्द-निपतितानां तरङ्गाः ॥ ]

मुक्तो रवो घर्घरध्वनिराक्रन्दोऽर्थाच्छोकजनितो यत्रेदृशं यथा स्यात्तथा निपतितानां निम्नगानां स्त्रीणामिव शरनिवहच्छिन्नाः शङ्खविगलिता वलया इव येषां ते तरङ्गाः शरानल-परिदह्यमाने पत्याविवोदधौ निहिता हस्ता इव वेपन्ते तरलीभवन्ति । स्त्रीणामपि स्वामि-विपत्तित्रासाद्धस्तादिकम्पः स्यादिति समाधिरलङ्कारः । मुक्तरव एवाक्रन्दनं तेन निपतितानां, पक्षे मुक्तो रवो यस्याक्रन्दनस्य तेनेति केचित् ॥६४॥

हुअवह-भरिअ-णिअम्बा जलअर-संदट्ठ-पक्ख-उड-वित्थारा[1] ।
चिर-संणिरोह-मसिणा दुक्खेण[2]णहं समुप्पअन्ति महिहरा ॥६५॥

[हुतवह-भृत-नितम्बाः जलचर-संदष्ट-पक्ष-पुट-विस्ताराः ।
चिर-संनिरोध-मसृणाः दुःखेन नभः समुत्पतन्ति महीधराः ॥ ]

महीधराः पर्वताः[3] दुःखेन कष्टेन नभः समुत्पतन्ति, दुःखोत्पतने हेतुमाह हुतवह-पूरितनितम्बा जलचरैः शङ्खशम्बुकादिभिः संदष्टाः पक्षपुटविस्तारा विस्तृतपक्षपुटा येषां, चिरसन्निरोधेन मसृणा अपगतोत्पतनाभ्यासतया मन्दगमना इत्यर्थः, अतो हुतवहभृत-नितम्बत्वमुत्पतने हेतुस्तस्य कृच्छ्रसाध्यत्वे विशेषणान्तरद्वयं हेतुः ॥६५॥

जलइ जलन्त-जलअरं भमइ भमन्त-मणि-विद्दुम-लआ-जालं ।
रसइ रसन्तावत्तं भिज्जइ भिज्जन्त-पव्वअं उअहि-जलं ॥६६॥

[ज्वलति ज्वलज्-जलचरं भ्रमति भ्रमन्-मणि-विद्रुम-लता-जालम् ।
रसति रसदावर्तं भिद्यते भिद्यमान-पर्वतं उदधि-जलम् ॥ ]

---

1 ०पव्भारा GB.  2 दुःखेण Ms.  3 समुद्रा Ms.

ज्वलज्जलचरं यथा स्यात्तथा ज्वलति, भ्रमन्मणीनां विद्रुमलतानां च जालं यत्र, एवं यथा स्यात्तथा भ्रमति, रसदावर्तं यथा स्यात्तथा रसति क्रन्दति, भिद्यमानपर्वतं यथा स्यात्तथोदधिजलं भिद्यते, तथा चाश्रयपीडायामुचितैवेति भावः। यद्वा ज्वलज्जलचरं चेद् अतो ज्वलति, भ्रमद्विद्रुमलताजालं चेद् अतो भ्रमति, रसदावर्तं चेद् अतो रसति, भिद्यमानपर्वतश्चेद् अतो भिद्यत उदधिजलम्। एतेनानुगतवात्सल्यं ध्वनितम् ॥६६॥

**आवत्त-विवर-भमिरो मलअ-मणि-सिला-अल-क्खलिअ-सञ्चारो।**
**घोलिर-तरङ्ग-विसमो जह दीसइ साअरो तहेअ हुअवहो ॥६७॥**

**[आवर्त-विवर-भ्रमणशीलः मलय-मणि-शिला-तल-स्खलित-सञ्चारः।**
**घूर्णनशील-तरङ्ग-विषमः यथा दृश्यते सागरः तथैव हुतवहः॥ ]**

यथा दृश्यते सागरस्तथैव हुतवहः। उभयोः साम्यमाह—आवर्तविवरावच्छेदेषु भ्रमणशीलो मलयमणिशिलातलेषु स्खलितसञ्चारस्तेषामनतिक्रमणाद् घूर्णनशीलतरङ्गावच्छेदेषु विषमः। एतेनायत्तीकृते प्रतिपक्षे तेन समयभेदव्यवहार उचित इति ध्वनितम्। यद्वा, विपक्षोन्मूलनावसरे तच्चेष्टानुरूपा चेष्टा कर्तव्येति सूचितम् ॥६७॥

**रहस-पलित्तुच्छलिओ[1] जे च्चिअ पलिवेइ[2] मलअ-वण-वित्थारे[3]।**
**विज्झाअ-णिअत्तन्तो ते च्चेअ पुणो वि विज्झवेइ समुद्दो ॥६८॥**

**[रभस-प्रदीप्तोच्छलितः यान् एव प्रदीपयति मलय-वन-विस्तारान्।**
**विध्मात-निवर्तमानः तान् एव पुनः अपि विध्मापयति समुद्रः॥ ]**

रभसेन वेगातिशयेन प्रदीप्तो दहनाक्रान्तः सन्नुच्छलितो यानेव मलयतटप्राग्भारान्, पाठान्तरे विस्तारान् समुद्रः प्रदीपयति, निर्वाणः सन् निवर्तमानस्तानेव पुनर्निर्वापयति।

---

1 ०हु० corrected wrongly to '०उ०' instead of 'त्तु', marginally in Ms. 2 पडि० GB. 3 ०पब्भारे, another reading noticed marginally in Ms.

यद्यपि पूर्वं निर्वापणाभावात् पुनरपि निर्वापयतीति न घटते, तथापि प्रदीपनक्रियापेक्षया पुनरपीति सङ्गच्छते। पुनरपि निवर्तमान इति वा सम्बन्धः। एतेन प्रसादकृतं कृतापकारं महाजनः स्वयमेव समुन्नयतीति भावः ॥६८॥

**उत्थंघिअ[1]-मअरहरो मअर-वसामिस-विसंखल-सिहा-णिवहो।**
**णिवह-णिसुद्ध-महिहरो महिअर-कू[F27a]ड-विअडो विअम्भइ जलणो ॥६९॥**

**[उत्तम्भित-मकरगृहः मकर-वसामिष-विशृङ्खल-शिखा-निवहः।**
**निवह-निपातित-महीधरः महीधर-कूट-विकटः विजृम्भते ज्वलनः ॥ ]**

उत्तम्भितमकरगृहो मकराणां वसाबहुलैरामिषैः सघृताहुतिभिरिवामन्त्रितशिखानिवहः। निवहेन सामग्र्येण 'णिसुद्धा' निपातिताश्चूर्णिता इति यावत्, महीधरा येन स तथा महीधराणां कूटेषु विकटो विजृम्भते ज्वलनः। महीधरकूटवद्विकटो विशालो ज्वलन इति **लोकनाथः** ॥६९॥

**जलणुत्थंघिअ-मूला बाणुक्खित्त-परिअत्तण[2]-णिसुम्भन्ता।**
**णिवडन्ति जलुप्पीला[3] पडिलोमागअ-वलन्त[4]-विअड-वत्ता ॥७०॥**

**[ज्वलनोत्तम्भित-मूलाः बाणोत्क्षिप्त-परिवर्तन-निपात्यमानाः।**
**निपतन्ति जलोत्पीडाः प्रतिलोमागत-वलद्-विकटावर्ताः ॥ ]**

[F27a] बाणोत्क्षिप्ताः सन्तः परिवर्तनेन निपतन्ती निपात्यमाना वा, परनिपातादुत्तम्भितो ज्वलनो यत्र, अधोमुखवर्ती सन् भ्रमन्नावर्तो येषामीदृशा निपतन्ति। पातालादुद्गच्छता ज्वलनेनोत्तम्भितमूला अनन्तरं पतद्भिर्बाणैरुत्कृत्ताः सन्तश्च परिवर्तनेन 'णिसुम्भन्ता' निपात्यमाना जलोत्पीडा जलसंघा उच्चात् पतनेन प्रतिलोमागतोऽधोमुखवर्ती वलन् विकट आवर्तो येषां ते तथाभूता निपतन्ति ॥७०॥

---

1 उत्थम्भि० GB. 2 पडि० GB, 3 ०प्पीडा GB.
4 ०पड० GB.

धूमाइ जलइ विहडइ ठाणं सिढिलेइ मलइ मलउच्छङ्गं ।
धीरस्स पढम-दिण्णं[1] तह वि हु रअणाअरो ण भञ्जइ पसरं ॥७१॥

[धूमायते ज्वलति विघटते स्थानं शिथिलयति मृद्नाति मलयोत्सङ्गम् ।
धैर्यस्य प्रथम-दत्तं तथा अपि खलु रत्नाकरः न भनक्ति प्रसरम् ॥ ]

आदौ धूमायते ततो ज्वलति ततो विघटते तरलीभवति ततो दाहभयात् स्थानं शिथिलयति त्यजति ततः शैत्यलाभाय मलयोत्सङ्गं मृद्नाति, यद्यप्येवं तथापि धैर्याय प्रथमदत्तं प्रसरं रत्नाकरो न भनक्ति नान्यथा करोति । रत्नाकर इत्युचितपदोपादानम् ॥७१॥

[2]बाणोसारिअ-सलिला थोउब्भिज्जन्त[3]-पाअडिअ-सिप्पि-उडा[4] ।
विअसन्ति विअसिआअव-रसुआअन्त-मणि-गब्भिणा पुलिण-
वहा ॥७२॥

[वाणापसारित-सलिलाः स्तोकोद्भिद्यमान-प्रकटित-शुक्ति-पुटाः ।
विकसन्ति विकसदातप-शुष्यन्-मणि-गर्भिताः पुलिन-पथाः ।। ]

बाणैरपसारितं सलिलं येष्वत एव स्तोकोद्भिद्यमानाः प्रकटिता विस्तारा येषां, 'सिप्पिउड' इति पाठे प्रकटितशुक्तिपुटा इत्यर्थः । विकसद्भिरातपैरर्थाच्छरत्कालीनैः शुष्यन्तो ये मणय-स्तद्गर्भिताः पुलिनपथा विकसन्ति सलिलक्षयात् प्रकटतां गच्छन्ति । अग्निदाहेन पुलिनस्य निस्तृणत्वख्यापनपथित्वेन निरूपणमिति केचित् ॥७२॥

भुअइन्द-लोअणाणं फुट्टन्ताण अ तिमीण साअर-मज्झे ।
संवत्त-जलहराण व राम-सराणल-हआण णीहरइ रवो[5] ॥७३॥

[भुजगेन्द्र-लोचनानां स्फुटतां च तिमीनां सागर-मध्ये ।
संवर्त-जलधराणां इव राम-शरानल-हतानां निर्हरति रवः ॥ ]

---

1 °इण्णं GB. 2 This verse does not occur in GB. 3 °ब्बि° Ms. 4 The reading °वित्थारा ( for 'सिप्पि-उडा' ) is noticed marginally in Ms. 5 °रओ GB.

रामशरानलहतानां भुजगेन्द्रलोचनानां तिमीनाञ्च स्फुटतां सागरमध्ये संवर्तजलधराणां प्रलयमेघानामिव रवो निर्हरति दूरं प्रसरति ॥७३॥

मुह-पुञ्जिअग्गि-णिवहा धूम-सिहा-णिह-णिराअ-कड्ढिअ[1]-सलिला ।
णिवडन्ति णहुच्छित्ता[2] पलउक्का-दण्ड-सण्णिहा णइ-सोत्ता ॥७४॥

[मुख-पुञ्जिताग्नि-निवहानि धूम-शिखा-निभ-निरायत-कृष्ट-सलिलानि ।
निपतन्ति नभ-उत्क्षिप्तानि प्रलयोल्का-दण्ड-संनिभानि नदी-स्रोतांसि ॥ ]

मुखे पुञ्जीभूतोऽग्निनिवहो येषां धूमशिखानिभं निरायतमाकृष्टं सलिलं येषां तानि नभस्युत्क्षिप्तानि नदीस्रोतांसि प्रलयोल्कादण्डसन्निभानि निपतन्ति ॥७४॥

[3]बाण-णिहाउच्छित्ता हुअवह-जालाहउत्तरन्त[4]-प्फेणा ।
अट्टन्ति णह-अले च्चिअ मारुअ-भिन्न-लहुआ सलिल-कल्लोला ॥७५

[बाण-निघातोत्क्षिप्ताः हुतवह-ज्वालाहतोत्तरत्-फेनाः ।
शुष्यन्ति नभस्तले एव मारुत-भिन्न-लघुकाः सलिल-कल्लोलाः ॥ ]

बाणसमूहोत्क्षिप्ता हुतवहज्वालाहतत्वादुत्तरत्फेना मारुतेन भिन्नत्वाल्लघुकाः सलिल-कल्लोला नभस्तल एव 'अट्टन्ति' क्षीयन्ते ॥७५॥

अट्टन्त-सलिल-णिवहो थोअ-त्थोअ-पडिमुक्क-पुलिणुच्छङ्गो ।
दीसइ ओसक्कन्तो मग्गाहुत्तो[5] पअं[F27b]पअं व समुद्दो ॥७६॥

[शुष्यत्-सलिल-निवहः स्तोक-स्तोक-प्रतिमुक्त-पुलिनोत्सङ्गः ।
दृश्यते अपसर्पन् पश्चादभिमुखः पदं पदं इव समुद्रः ॥ ]

---

1 ०अड्डि० GB. 2 ०क्खित्ता GB. 3 This verse is numbered as verse 61 in GB. 4 ०उप्पवन्त० GB. 5 मग्गअहुत्तो Ms.

ह्रीयमाण-सलिलनिवहः स्तोकस्तोकप्रतिमुक्तपुलिनोत्सङ्गोऽतः पदं पदं 'मग्गअहुत्तं' पश्चादभिमुखं यथा स्यात्तथापसर्पन्निव समुद्रो दृश्यते, 'मग्ग'शब्दः पश्चाद्भागे देशी ॥७६॥

जलण-णिवहम्मि सलिलं साणल-णिवहुच्छलन्त-सलिलम्मि णहं ।
सलिल-णिवहोत्थअम्मि अ अत्थाअइ णह-अले दस-दिसा-
अक्कं ॥७७॥

**[ज्वलन-निवहे सलिलं सानल-निवहोच्छलत्-सलिले नभः ।**
**सलिल-निवहावस्तृते च अस्तायते नभस्तले दश-दिक्-चक्रम् ॥ ]**

[F27b] ज्वलननिवहे सलिलमस्तायत इति सर्वत्र योज्यं, ज्वलननिवहसहिते उच्छलति सलिले नभस्तलं, नभस्तलाच्छन्नत्वात् सलिलनिवहावस्थगिते च नभस्तले दशदिक्-चक्रमस्तायत इत्यनेनान्वयः ॥७७॥

सिहिणा पअविज्जन्ते आअट्टन्तम्मि वित्थए जल-णिवहे ।
जाआ गिम्ह-विलम्बिअ-रवि-रह-चक्क-मसिणा समुद्दावत्ता ॥७८॥

**[शिखिना प्रताप्यमाने क्वाथ्यमाने विस्तृते जल-निवहे ।**
**जाताः ग्रीष्म-विलम्बित-रवि-रथ-चक्र-मसृणाः समुद्रावर्ताः ॥ ]**

शिखिना प्रताप्यमान आवर्त्य क्वाथ्यमाने विस्तृते जलनिवहे, ग्रीष्मे दीर्घत्वाद्दिवसस्य विलम्बितो यो रविरथस्तस्य चक्रवन्मसृणाः समुद्रावर्ता जाताः । दुग्धादिवत् क्वाथेन जलादीनां घनीभावादावर्ता मन्दगतयो जाता इत्यर्थः ॥७८॥

णिव्वडिअ-धूम-णिवहो उद्धाइअ-मरगअ-प्पहा-मिलिअ-सिहो ।
वित्थिण्णम्मि समुद्दे सेवालोमइलिअ व्व घोलइ जलणो ॥७९॥

**[निर्वटित-धूम-निवहः उद्धावित-मरकत-प्रभा-मिलित-शिखः ।**
**विस्तीर्णे समुद्रे शैवालावमलिनितः इव घूर्णते ज्वलनः ॥ ]**

निर्वेटितः पृथग्भूतो धूमनिवहो यस्मात् स तथा, एतेन धूममलिनोऽयमिति मतिर्नास्त्येव तथापि जलच्छयादूर्ध्वायितमरकतप्रभामिलितशिखो ज्वलनो विस्तीर्णे समुद्रे शैवालावमलिनित इव घूर्णते शैवालधीजनकधूमनिवहेऽपि मरकतप्रभाभिस्तत्प्रतीतिर्जातेत्यर्थः ॥७६॥

**जलइ पलआणलो[1] विअ फुट्टइ सेलो व्व राम-बाणाभिहओ ।**
**रसइ जलओ व्व उअही खुहिओ लङ्घेइ मारुओ व्व णह-**
**अलं ॥८०॥**

**[ज्वलति प्रलयानलः इव स्फुटति शैलः इव राम-बाणाभिहतः ।**
**रसति जलदः इव उदधिः क्षुभितः लङ्घयति मारुतः इव नभस्तलम् ॥]**

रामशराभिहतः सन् प्रलयानल इव ज्वलति शराग्निव्याप्तत्वाच्छैल इव स्फुटति लवणत्वाच्चटचटाशब्दं करोतीत्यर्थः, जलद इव रसति, क्षुभितः सन् मारुत इव नभस्तलं लङ्घयति, अतिवेलमारुतवन्नभस्तलमावृणोतीत्यर्थ इति **केचित्** ॥८०॥

**होइ थिमिअम्मि थिमिओ वलइ वलन्तम्मि विहडइ विसंघडिए ।**
**परिवड्ढिअम्मि वड्ढइ सलिले झीणम्मि णवर झिज्जइ**
**जलणो ॥८१॥**

**[भवति स्तिमिते स्तिमितः वलति वलमाने विघटते विसंघटिते ।**
**परिवर्धिते वर्धते सलिले क्षीणे केवलं क्षीयते ज्वलनः ॥ ]**

ज्वलनोऽर्थाच्छराग्निभवः स्तिमिते सलिले स्तिमितो भवति, वलमाने भ्रमति सति भ्रमति, विसंघटिते विश्लिष्टे सति विघटते, परिवर्धिते वर्धते, क्षीणे सति परिक्षीयते शाम्यति । अन्यश्च शराग्नेः क्षयोपायो नास्तीति भावः । एतेन विपक्षोन्मूलने तदनुरूपैव चेष्टा कार्या । अथ शान्ते च तस्मिन् शान्तिरुचितैवेति भावः ॥८१॥

---

1 वलयाणलो GB.

राम-सराणल-पअविअ-झिज्जन्तोअहि-विहत्त[1]-तड-विच्छेआ ।
ते च्चिअ तह-वित्थारा तुङ्गा दीसन्ति दीव-मण्डल-णिवहा[2] ॥८२॥

[राम-शरानल-प्रतप्त-क्षीयमाणोदधि-विभक्त-तट-विच्छेदाः ।
ते एव तथा-विस्ताराः तुङ्गाः दृश्यन्ते द्वीप-मण्डल-निवहाः ॥ ]

रामशरानलप्रतप्तेन क्षीयमाणेनोदधिना विभक्तास्तटविच्छेदास्तटपर्यन्तभागा येषां ते, तथा त एव तथेति ये जलपूर्णे जलधौ न लक्षिता इति भावः सलिलक्षयात्त एव द्वीपमण्डल-निवहा विस्तारास्तुङ्गा दृश्यन्ते ॥८२॥[3]

इअ दाविअ-पाआलं जलण-सिहाअट्टमाण[4]-जल-संघाअं ।
रामो द[F28a]लिअ-महिहरं खविअ-भुअङ्ग-णिवहं खवेइ
समुद्दं ॥८३॥

[इति दर्शित-पातालं ज्वलन-शिखा-क्वाथ्यमान-जल-संघातम् ।
रामः दलित-महीधरं क्षपित-भुजङ्ग-निवहं क्षपयति समुद्रम् ॥]

[F28a] इति पूर्वोक्तक्रमेण रामः समुद्रं क्षपयतीत्याश्वाससमाप्तिं यावत् सम्बन्धः । दर्शितपातालं यथा स्यात्तथा ज्वलनशिखया क्वाथ्यमानजलसंघातं दलिता महीधरा यस्य, क्षपितो भुजङ्गनिवहो यस्य तं समुद्रं क्षपयति ॥८३॥

जल-पब्भार-पलोट्टिअ-भमन्त-संख-उल-विहल-मुक्कक्कन्दं ।
फुडिअ[5]-वलवा[6]-मुहाणल-पलित्त-दर-दड्ढ-सञ्चरन्त-विसहरं ॥८४

[जल-प्राग्भार-प्रलुठित-भ्रमत्-शङ्ख-कुल-विह्वल-मुक्ताक्रन्दम् ।
स्फुटित-वडवा-मुखानल-प्रदीप्त-दर-दग्ध-सञ्चरद्-विषधरम् ॥ ]

---

1 ०विभ० Ms. 2 ०बन्धा GB. 3 After this portion of the commentary the scribe writes the word श्रीकृष्ण: to indicate probably his devotion to his own revered god. 4 ०वट्टमाण० GB.
5 खुभिअ० Ms. 6 वड० GB.

जलप्रस्तारात् [ प्रलुठितेन* ] 'भमन्तेन' भ्रमता शङ्खकुलेन विह्वलं यथा स्यात्तथा मुक्त आक्रन्दो यस्मिन्, शराग्निसङ्गात् स्फुटितेन विकसितेन वडवामुखानलेन प्रदीप्ताः शरानलेन दरदग्धाः सञ्चरन्तो विषधरा यत्र तम् ॥८४॥

झिज्जन्त-जलालोइअ-किरण-मुणिज्जन्त-रअण-पव्वअ-सिहरं ।
थोर-तरङ्ग-कराहअ-दिसा-लआ-भग्ग-पडिअ-जलहर-विडवं ॥८५

[क्षीयमाण-जलालोकित-किरण-ज्ञायमान-रत्न-पर्वत-शिखरम् ।
स्थूल-तरङ्ग-कराहत-दिग्-लता-भग्न पतित-जलधर-विटपम् ॥ ]

क्षीयमाणजले आलोकितैः किरणैर्ज्ञायमानरत्नपर्वतशिखरं, स्थूलेन तरङ्गेण करेणेव समुद्रकुञ्जवेलाहताभ्यो दिग्लताभ्यो भग्नाः पतिता जलधरा विटपा इव यत्र तम् ॥८५॥

साणल-सर-णिद्दारिअ-सकेसरुज्जलिअ-सीह-मअर-क्खन्धं ।
आसण्ण-भीअ-विसहर-वेढिअ-करि-मअर-धवल-दन्त-
प्फलिहं ॥८६॥

[सानल-शर-निर्दारित-सकेसरोज्ज्वलित-सिंह-मकर-स्कन्धम् ।
आसन्न-भीत-विषधर-वेष्टित-करि-मकर-धवल-दन्त-परिघम् ॥ ]

सानलैः शरैर्विद्राविताः सकेशरा उज्ज्वलिताः सिंहमकराणां स्कन्धा यत्र तम्, आसन्नैर्भीतैर्विषधरैर्वेष्टिताः करिमकराणां धवला दन्तपरिघा यत्र तम् ॥८६॥

धुअ-पव्वअ-सिहर-पडन्त-मणि-सिला-भग्ग-विहुम-लआवेढं ।
सर-दड्ढ[1]-विसहरुज्झिअ-विस-पङ्क-क्खुत्त-विहल-करि-मअर-
उलं ॥८७॥

[धुत-पर्वत-शिखर-पतन्-मणि-शिला-भग्न-विद्रुम-लतावेष्टम् ।
शर-दग्ध-विषधरोज्झित-विष-पङ्क-क्षिप्त-विह्वल-करि-मकर-कुलम् ॥]

---

1 दर-ड० GB.

धुतात् पर्वतशिखरात् पतन्तीभिर्मणिशिलाभिर्भग्नो विद्रुमलतावेष्टो यत्र, शर-दग्धैर्विषधरैरुज्झितेषु विषपङ्केषु क्षिप्तं मग्नं करिमकरकुलं यत्र तम् ॥८७॥

रुन्दावत्त-[1]पहोलिर-[2]वेआपडिएक्कमेक्क-[3]भिण्ण-महिहरं ।
णह-अरु-विलग्ग[4]-वेविर-धूम-लआविसम-लंघिअ-दिसा-
आलं ॥८८॥

[बृहदावर्त-प्रघूर्णनशील-वेगापतितैकैक-भिन्न-महीधरम् ।
नभस्-तरु-विलग्न-वेपनशील-धूम-लता-विषम-लङ्घित-दिग्-जालम् ॥ ]

'रुन्देन' बृहतावर्तेन विघूर्णनशीला, अतो वेगेनापतिता अन्योन्यभिन्ना महीधरा यत्र, नभस्तराविवारूढाभिर्वेपनशीलाभिर्धूमलताभिर्विषममितस्ततो लङ्घितं दिग्जालं येन तम् । अन्यस्या अपि लताया एष स्वभावो [5]यद्विसंष्ठुलतया वृक्षेषु परिमाणमप्राप्नुवती कम्पिताग्रा सती चतुर्दिक्षु धावति इति **लोकनाथः** ॥८८॥

पक्ख-परिरक्खणुट्ठिअ-सरणिवहाहअ-दिसा-पइण्ण-महिहरं ।
फुडिअ[6]-जल-मज्झ-णिग्गअ-फुड-रअणुज्जोअ-सन्धिउब्भड-
विवरं ॥८९॥

[पक्ष-परिरक्षणोत्थित-शर-निवहाहत-दिक्-प्रकीर्ण-महीधरम् ।
स्फुटित-जल-मध्य-निर्गत-स्फुट-रत्नोद्योत-संहितोद्भट-विवरम् ॥ ]

पक्षपरिरक्षणायोत्थिताः शरनिवहैराहता दिक्षु प्रकीर्णा महीधरा यत्र यतो वा, स्फुटिताद्विघटिताज् जलमध्यान्निर्गतेन स्फुटेनोज्ज्वलेन रत्नोद्योतेन संहितमुद्भटं विवरं यत्र तम् ॥८९॥

---

1 ०प्प० Ms. 2 ०वेलाव० GB. 3 This word ०भिएण० is omitted in Ms. 4 ०वलग्ग० Ms. 5 यद्विष्ठुतया Ms, a doubtful expression. 6 खुहिअ Ms.

हुअवह-पलित्त[1]-गोविअ[2]-णिअ-णअणुम्हा-विसंठुल-मह-ग्गाहं ।
परिवड्ढिएक्कमेक्काणुराअ-सर-पहर-णिव्वडिअ[3]-संख-उलं ॥९०॥

[हुतवह-प्रदीप्त-गोपित-निज-नयनोष्म-विसंष्ठुल-महा-ग्राहम् ।
परिवर्धितैकैकानुराग-शर-प्रहार-निर्वेटित-शङ्ख-कुलम् ॥ ]

राअ-सि[F28b]रि-पवरसेणस्स एत्थ रावण-वहे मदाकव्वम्मि
साअर-बलीवणं पञ्चमः आसासओ परिसमत्तो ॥

राजश्री-प्रवरसेनस्य अत्र रावणवधे महाकाव्ये सागरप्रदीपनं
पञ्चम आश्वासकः परिसमाप्तः ।

हुतवहेन प्रदीप्ताः स्वगात्रेष्वेव गोपिता निजनखास्तेषामुष्मणा विसंष्ठुला महाग्राहा यत्र, परिवर्धितान्योन्यानुरागं कृतघनाश्लेषमित्यर्थः शरप्रहारेण निर्वटितं पृथग्भूतं शङ्खकुलं यत्र तम् । पाठान्तरे, हुतवहेन प्रदीप्तानि निजनयनानि तेषामुष्मणा इत्यर्थः । अत्र **कुलनाथा**दिभिरुक्तानां सर्वेषामेव समुद्रविशेषणानां त्रपयतिक्रियाविशेषणत्वमेवोचितमन्यथा विध्यनुवादायुक्तता स्यादिति ध्येयम् । पञ्चम आश्वासः ॥९०॥

---

1 ०पडित्त० GB. 2 ०णुमिअ० G and Ms. 3 ०णिव्वलिअ० GB.

## छट्ठओ आसासओ

अह णिग्गओ जलन्तं दर-दड्ढ[1]-महा-भुअङ्ग-पाअव-णिवहं ।
मोत्तूण धूम-भरिअं पाआल-वणं दिसा-गओ व्व समुद्दो ॥१॥

[अथ निर्गतः ज्वलत् दर-दग्ध-महा-भुजङ्ग-पादप-निवहम् ।
मुक्त्वा धूम-भरितं पाताल-वनं दिग्-गजः इव समुद्रः ॥ ]

इदानीं दण्डोपनतस्य समुद्रस्य रामं प्रत्यनुवृत्तिं तदुपदेशाच्च पर्वतोन्मूलनमस्मिन्नापाततः[2] संदर्शयन्नाह । अथानन्तरं ज्वलद् दरदग्धमहाभुजङ्गाः पादपा इव यत्र तत्, धूमभरितं पातालं वनमिव मुक्त्वा दिग्गज इव समुद्रो निर्गतः । दिक्पदेन सर्वगत्वं ध्वनितं, प्रस्तुत-बाणव्रणितस्य प्रणतौ गजपदेन समुद्रस्य पशुत्वं ध्वनितम् ॥१॥

मन्दर-दढ-परिहट्ठं[3] पलअ-विअम्भिअ-वराह-दाढुल्लिहिअं ।
विसमं समुव्वहन्तो राम-सराघाअ-दूमिअं वच्छ-अलं[4] ॥२॥

[मन्दर-दृढ-परिघृष्टं प्रलय-विजृम्भित-वराह-दंष्ट्रोल्लिखितम् ।
विषमं समुद्वहन् राम-शराघात-व्यथितं वक्षस्तलम् ॥ ]

मन्दरेण दृढपरिघृष्टं पाठान्तरे मन्दरेण दृढपरिमृष्टं प्रलये विजृम्भितः प्रवृद्धो यो महावराहस्तस्य दंष्ट्रयोल्लिखितमुत्कीर्णं विषममितस्ततो जातविकरणत्वात् संप्रति राम-शराघातव्यथितं वक्षस्तलं समुद्वहन् । महावराहेण दंष्ट्रयोल्लिखितं तेन किम्भूतेन प्रलयविजृम्भितेन, संप्रति रामशराघातेन दुःखितं, यद्वा शराघातव्रणमयत्वाद्विषमं वक्षस्थलं समुद्वहन्तमिति केचित् ॥२॥

---

1 °डड्ढ° GB. 2 °पात् Ms. 3 °मट्ठ° GB. 4 °अडं GB.

गम्भीर-वणाहोए दीहे देह-सरिसे भुए वहमाणो ।
अहिणअ[1]-चन्दण-गन्धे अणहुक्खित्ते व्व मलअ-सरिआ-
सोत्ते ॥३॥

[गम्भीर-व्रणाभोगौ दीर्घौ देह-सदृशौ भुजौ वहमानः ।
अभिनव-चन्दन-गन्धौ अनघोत्क्षिप्तौ इव मलय-सरित्-स्रोतसी ॥ ]

अनघमपापं निःशेषं क्षिप्ते मलयसरित्स्रोतसी इव दीर्घौ भुजौ वहमानो गम्भीरो व्रणस्याभोगः, अन्यत्र वनस्य जलस्य काननस्य चाभोगो विस्तारो ययोस्तौ देहस्य जङ्गम-स्थावररूपस्य कायस्य सदृशौ सन्तापशान्त्यै समालब्धत्वाद्, अन्यत्र तटजातचन्दनतरुनिष्यन्द-योगादभिनवचन्दनगन्धाविति । अघं व्यसनं प्रतिबन्ध इति यावत् । अनघमप्रतिबन्धं यथा स्यात्तथा ऊर्ध्वं क्षिप्ते सरित्स्रोतसी इव दीर्घावाजानुलम्बिनौ पारवत्वाद्देहेन सदृशौ भुजौ वहमानः 'अलहुच्छित्ते' इति पाठे अलघु दीर्घमुत्क्षिप्ते इत्यर्थः । उभयोः साम्यमाह— गम्भीरो निम्नो व्रणस्यार्थाद्रामशरजन्यस्याभोगो विस्तारो यत्र । अभिनवश्चन्दनगन्धो यत्र, अभिनवपदेन चन्दनलेपनस्य संतापोपशमनिमित्तत्वं वक्ष्यत इति केचित् ॥३॥

लहुइअ-कोत्थुह-विरहं मन्दर-गिरि-महण-सम्भमे वि अमुक्कं ।
तारेक्कावलि-रअणं ससि-मइरामअ-सहोअरं वहमाणो ॥४॥

[लघूकृत-कौस्तुभ-विरहं मन्दर-गिरि-मथन-संभ्रमे अपि अमुक्तम् ।
तारैकावलि-रत्नं शशि-मदिरामृत-सहोदरं वहमानः ॥ ]

लघूकृतः कौस्तुभस्य विरहो येन तत्तथा मन्दरगिरिमथनसंभ्रमेऽप्यमुक्तं सर्वस्वमपि दत्वा तथाविधनिग्रहेऽपि रक्षितमिति सर्वरत्नोत्कृष्टत्वमायातम् । शशिमदिरामृतसहोदरमिति शशि-वदाह्लादकत्वं जगत्प्रकाशकारकत्वञ्च मदिरावन्मादकत्वममृतवत् सर्वदोषहरत्वं विशुद्धा या एकावली सैव रत्नं स्वजात्युत्कृष्टत्वादुद्वहमानः ॥४॥

1 ०णव० GB.

गरुअं उव्वहमाणो हत्थ-प्फरिस-पडिसिद्ध-वण-वेअल्लं ।
रुहिरारुण-रोमञ्चं खलन्त-गङ्गावलम्बिअं वाम-भुअं ॥५॥

[गुरुकं उद्वहमानः हस्त-स्पर्श-प्रतिषिद्ध-व्रण-वैकल्यम् ।
रुधिरारुण-रोमाञ्चं स्खलद्-गङ्गावलम्बितं वाम-भुजम् ॥ ]

गुरुकं शरघातादनायत्तमुच्छूनं वा तथा त्रासोत्कम्पेन स्खलन्त्या गङ्गयावलम्बितं, हस्तस्पर्शप्रतिषिद्धव्रणवैकल्यमर्थाद् गङ्गाया वाणक्षोभोत्थरुधिरेणारुणरोमाञ्चं हस्तमुद्वहन् । अथवा व्रणवैकल्येन प्रतिषिद्धो हस्तस्पर्शो येन, अतोऽतिकातरतया रुधिरेणारुणरोमाञ्चं श्रीरामदर्शनाच्च भयेन वा **इति केचित्** । प्राकृते पूर्वनिपातनियमादिति । संभ्रमात् स्त्रीत्वेन चापरिणीविततया च नितम्बिनीत्वेन च महापुरुषसमक्षगामितया व्रणदर्शनभयात् स्खलन्त्या गङ्गयावलम्बित**मिति केचित्** ॥५॥

अल्लीणो[1] अ रहुवइं णिअअ-च्छाआणुलित्त-मलअ-मणि-सिलं ।
संसिअ-सुहोवइव्वं[2] दुमं लआए व्व [F29a] जाणईअ
विरहिअं ॥६॥

[आलीनः च रघुपतिं निजक-च्छायानुलिप्त-मलय-मणि-शिलम् ।
संश्रित-सुखोपजीव्यं द्रुमं लतया इव जानक्या विरहितम् ॥ ]

निजकच्छायया कान्त्यातपाभावेन चानुलिप्तावृता मलयमणिशिला येन रामेण द्रुमेण च, संश्रितानां जनानां सुखार्थमुपजीव्यं, संश्रितैः सुखेनोपजीव्यं वा लतया द्रुममिव जानक्या विरहितं रघुपतिमालीनश्च प्राप्तः, जानकीविरहितत्वविशेषणं रामस्य स्वतन्त्वोप-सर्प्यश्रीमत्त्वख्यापनाय ॥६॥

---

1 आलीणो GB.    1 ०सुहोअ० GB.

**सर-घाअ-रुहिर-कुसुमो तिवहअ-वल्ली-पिणद्ध-मणि-रअण-फलो ।**
**राम-चलणेसु[1] उअही दढ-पवणोसुद्ध[2]-पाअवो व्व णिवडिओ ॥७॥**

[शर-घात-रुधिर-कुसुमः त्रिपथगा-वल्ली-पिनद्ध-मणि-रत्न-फलः ।
राम-चरणयोः उदधिः दृढ-पवन-निपातित-पादपः इव निपतितः ॥ ]

[F29a] शरघात एव रुधिरारुण्यरुणानि यद्वा शरघातरुधिराण्येव कुसुमान्येव यस्य, त्रिपथगया गङ्गया वल्ल्येव पिनद्धानि मणिरत्नानि मणिश्रेष्ठानि फलानीव यस्य यत्र वा, प्रसारितसर्वाङ्गत्वाद् दृढपवनेनाविद्धः क्षिप्तः । 'ओसुद्ध' इति पाठे निपातितः पादप इव, रामचरणयोरुदधिर्निपतितस्त्रिपथगा गङ्गा वल्लीव तस्यां पिनद्धानि मणिरत्नानि फलानीव यस्य इति केचित् ॥७॥

**पच्छा अ हित्थ-हिअआ जत्तो च्चिअ णिग्गआ विवल्हत्थ-मुही ।**
**हरि-चलणम्मि[3] तहिच्चिअ कमलाअम्बम्मि तिवहआ**
**णिवडिआ ॥८॥**

[पश्चात् च त्रस्त-हृदया यतः एव निर्गता विपर्यस्त-मुखी ।
हरिचरणे तत्र एव कमलाताम्रे त्रिपथगा निपतिता ॥ ]

पश्चाच्च यत एव हरिचरणान्निर्गता । अनेन दुहितृधर्मो दर्शितः । अतो भर्त्रा सह पितृसमीपागमनं लज्जाकरमित्याह 'हित्थ-हिअआ' व्रीडितहृदया भीतहृदया वा । हित्थं व्रीडितभीतयोरिति देशी । अतो विपर्यस्तमुखी लज्जया त्रासेन वेत्यर्थः, तत्रैव हरिचरणे कमलाताम्रे त्रिपथगापि निपतिता, भर्त्तरि प्रणते तदभिप्रायात् पश्चात् पितृपादप्रणाममकरोदित्यर्थः ॥८॥

---

1 चर० GB. 2 ०पवणाइद्ध० GB. 3 ०चरणम्मि GB.

**अह मउअं पि भर-सहं जम्पइ थोअं पि अत्थ-सारब्भहिअं।
पणअं पि धीर-गरुअं थुइ-सम्बद्धं पि अणलिअं सलिल-
णिही ॥९॥**

**[अथ मृदुकं अपि भर-सहं जल्पति स्तोकं अपि अर्थ-साराभ्यधिकम्।
प्रणतं अपि धैर्य-गुरुकं स्तुति-सम्बद्धं अपि अनलीकं सलिल-निधिः ॥]**

अथ रामचरणप्रणामान्तरं मृदुकमपि विनयप्रणतिपूर्वकत्वात् कोमलमपि भरसहं विमर्दक्षमं स्तोकमपि संक्षिप्ताक्षरमप्यर्थसारेणाभ्यधिकं प्रणतमप्यनुजीविवृत्त्या प्रकर्षेणानुन्नतमपि नतमपि धैर्येण गुरुकमुन्नतमनुल्लङ्घ्यं जगदुदयस्थितिप्रलयहेतुर्भवान्नारायण इत्यादिस्तुत्या सम्बद्धमप्यनलीकं यथार्थं यथा स्यात्तथा सलिलनिधिर्जल्पति। वक्ष्यमाणेषु स्कन्धकचतुष्टयेषु क्रमेण विशेषणचतुष्टयं योजयति **कश्चित्**। वस्तुतस्तु एकस्मिन्नेव सर्वमुपपद्यत इति ॥९॥

**दुत्तारत्तण-गरुइं थिर-धीर-परिग्गहं तुमे च्चिअ ठविअं।
अणुपालन्तेण ठिइं[1] पिअं त्ति तुह विप्पिअं मए कह वि
कअं ॥१०॥**

**[दुस्तारत्व-गुर्वीं स्थिर-धैर्य-परिग्रहां त्वया एव स्थापिताम्।
अनुपालयता स्थितिं प्रियं इति तव विप्रियं मया कथं अपि कृतम् ॥]**

दुस्तारत्वेन गुर्वीं, स्थिरो धैर्यपरिग्रहो यत्र तादृशीं, त्वयैव स्थापितां स्थितिं मर्यादां प्रियमित्यनुपालयता त्वद्दत्ताया मर्यादायाः प्रतिपालनेन तव प्रीतिविषयः स्यामिति बुद्ध्या तां रक्षता तव विप्रियं कथमपि कृतं, कथमपि-शब्दो दैवादित्यर्थे। प्रियबुद्ध्या यत् कृतं तदप्य-प्रियत्वेन दैवात् पर्यवसन्नमित्यर्थः। एवञ्च प्रभोरादेशाकरणेऽपि यन्ममोऽयं दशाविवर्तस्तत्र मम को दोष इति मधुरोपालम्भः सूचितः। अतएव मृदुकमपि भरसहमित्युक्तम्। **कुलनाथस्तु** त्वयैव स्थापितां स्थितिं त्रिभुवनस्य व्यवस्थाकारिणीं मर्यादां कथं नाम देवस्य प्रीतिः स्यादिति प्रियबुद्ध्यानुपालयता तव विप्रियं कथमपि कृतम्। अपिशब्दो नामार्थः, कथं नाम कृतं न कृतमेवेति भावः। अथवा कथमपि अप्रियकारणं किं तदित्यहं तावन्न जानामीत्यर्थं इत्याह ॥१०॥

---

1 थिइं GB.

विअसन्त-रअ-क्खउरं मअरन्द-रसुद्धुमाअ-मुहल-महुअरं ।
उदुणा दुमाण दिज्जइ हीरइ ण उणो अ अप्पण च्चिअ कुसुमं ॥११

[विकसद्-रजः-कलुषं मकरन्द-रसाध्मात-मुखर-मधुकरम् ।
ऋतुना द्रुमेभ्यः दीयते ह्रियते न पुनः च आत्मना एव कुसुमम् ॥ ]

किञ्च त्वया दत्तं धैर्यं दुस्तरत्वञ्च त्वया दूरीकर्तुं नोचितमिति दृष्टान्तेन द्रढयति । विकसद्भी रजोभिर्मिश्रं कलुषं खचितं वा मकरन्दरसैराध्माताः पूरिता मुखरा मधुकरा यत्र, एवम्भूतं कुसुममृतुना द्रुमेभ्यो दीयते न पुनरात्मनैव ह्रियते, तथा च त्वया दत्तां धैर्यादिसम्पदं रजोगुणैः कलुषामपि मुखरमधुकरादिभीषणामपि स्वयमेव अपनेतुं[1] देवो नार्हतीति भावः ॥११॥

किं पम्हट्ठा[2]म्हि अहं तुह चलणुप्पण्ण-तिवहआ-पडिउण्णं ।
खअ-कालाणल-खविअं धरणि-अलुद्धरण-विलुलिअं अप्पाणं ॥१२

[किं प्रस्मृतवान् अस्मि अहं तव चरणोत्पन्न-त्रिपथसा-प्रतिपूर्णम् ।
क्षय-कालानल-क्षयितं धरणि-तलोद्धरण-विलुलितं आत्मानम् ॥ ]

आत्मनोऽनात्मज्ञतां परिहरति । क्षयकालानलेन क्षयितं शोषितं त्वच्चरणोत्पन्नया त्रिपथगया प्रतिपूर्णं वराहरूपिणं[3] धरणितलोद्धरणे विलुलितं मृदितमात्मानं किं [4]प्रमृष्टोऽस्मि विस्मृतोऽस्मि । एतेन तव निग्रहानुग्रहक्षमत्वं ज्ञात्वा कथमप्रियं कर्तुमुत्सह इति भावः । कृतोपकारस्य प्रतिकूलाचरणं नोचितमिति दर्शितमिति भाव **इति केचित्** ॥१२॥[5]

1 उपनेतुं Ms. 2 ०ट्ठ GB. 3 ०रूपि Ms. 4 प्रवष्टोस्मि Ms.
5 The scribe fills up a little space by his Vaiṣṇava expression "श्रीहरिः शरणम्".

चलणेहि महु-विरोहे [F29b] दाढाघाएहि धरणि-वेढुद्धरणे ।
सोअ-किलिन्तेण तुमे एण्हिं[1] दहमुह-वहे सरेहिं विलुलिओ ॥१३॥

[चरणाभ्यां मधु-विरोधे दंष्ट्राघातैः धरणि-वेष्टोद्धरणे ।
शोक-क्लान्तेन त्वया इदानीं दशमुख-वधे शरैः विलुलितः ॥ ]

त्वयाहं सर्वकालमेव विधुरीकृतमित्याह । चरणाभ्यां त्वया मधुकैटभयुद्धे दंष्ट्राघातैर्धरणिमण्डलोद्धरणे शोकक्लान्तेन त्वयेदानीं दशमुखवधे शरैर्विलुलितः । अत्र 'दुत्तारगुण-गरुइ'[2] इत्यादिना स्कन्धकत्रयेण यथासंख्यं समुद्रवचनस्य मृदुत्वभरसहत्वे स्तोकत्वार्थसारत्वे प्रणतधैर्यगुरुत्वे, अनेन स्कन्धकेन च त्वं अमानुष इति स्तुतिसम्बद्धत्वमनलीकत्वञ्च प्रतिपादित मिति **श्रीनिवासः** ॥१३॥

णिअआवत्थाहि वि मे एअं धीरेण विप्पिअं धीर कअं ।
जं णेण पअइ-सोम्मा कह वि विसंवाइआ तुह मुह-च्छाआ ॥१४॥

[निजकावस्थातः अपि मे इदं धैर्येण विप्रियं धीर कृतम् ।
यत् अनेन प्रकृति-सौम्या कथं अपि विसंवादिता तव मुख-च्छाया ॥ ]

आत्मनिन्दयानुकूलयन्नाह । हे धीर धैर्येणार्थान्मदीयेन निजकावस्थातोऽप्यिदं मम विप्रियं कृतं यदनेन धैर्येण प्रकृत्या स्वभावेन सौम्या जगदाह्लादिनी तव मुखच्छाया कथमपि दैवेन मम प्रमादेन वा विसंवादिता क्रोधोद्दीपनेनान्यथाकृता, तत् प्रसीद रोषं त्यक्त्वा मदीयविज्ञापनेऽवधीयतामित्याह ॥१४॥

एअं तुह एआरिस-सुर-कज्ज-सहस्स-खेअ-वीसाम-सहं ।
जअ-पव्वालण-जोग्गं परिरक्खसु पलअ-रक्खिअं जल-
णिवहं ॥१५॥

1 इण्हिं GB. 2 ०गुरुइ Ms.

[एतं तव एतादृश-सुर-कार्य-सहस्र-खेद-विश्राम-सहम् ।
जगत्-प्लावन-योग्यं परिरक्ष प्रलय-रक्षितं जल-निवहम् ॥ ]

तदेवाह । तव एतादृशसुरकार्यसहस्रस्य खेदविश्रामसहं जगत्प्लावनयोग्यं प्रलयकालेऽनेन जगत्प्लावनान् मेघद्वारा निदाघदग्धस्य जगतः प्लावनाद्वा तथा प्रलयसमयेऽपि परिरक्षितं प्रलयार्थं रक्षितं वा, एतं जलनिवहं परिरक्ष विश्रामार्थं जगत्प्लावनार्थञ्च । यः प्रलयेऽपि रक्षितस्तस्याधुना रक्षणमेवोचितमिति भावः ॥१५॥

[1]अवरिट्ठिअ-मूल-अलं जत्तो गम्मइ तहिँ दलन्त-महि-अलं ।
ण हु सलिल-णिब्भरं च्चिअ खविए[2] वि ममम्मि दुग्गमं पाआलं ॥१६॥

[अपरिस्थित-मूल-तलं यतो गम्यते तत्र दलन्-मही-तलम् ।
न खलु सलिल-निर्भरं एव क्षयिते अपि मयि दुर्गमं पातालम् ॥ ]

न खलु सलिलनिर्भर एव दुर्गमः, मयि क्षयिते पातालमपि दुर्गमम् । हेतुमाह—अपरिस्थितमवधिशून्यं मूलतलं यस्य स्वार्थे तलप्रयोगः[3], मूलस्यतलमधोभागः **इति कुलनाथः** । मूलसम्बन्धे जल**मिति श्रीनिवासः**, तथा यतो गम्यते ततो दलता पङ्कमयत्वाच्चरणाघातेन शिथिलीभवन्महीतलं यत्र, आद्यविशेषणेन तलस्याप्राप्तिः सूचिता, द्वितीयेन यत्र वा तलप्राप्तिस्तत्र पङ्कमयत्वं दर्शितम् ॥१६॥

तं कालस्स णिसम्मउ कह वि दर-क्खुडिअ[4]-दसम-कण्ठ-क्खलिअं ।
घडिअ-गिरि-सेउ-बन्धं चिर-आलाउञ्चिअं दहमुहम्मि पअं ॥१७

[तत् कालस्य निषीदतु कथं अपि दर-खण्डित-दशम-कण्ठ-स्खलितम् ।
घटित-गिरि-सेतु-बन्धं चिर-कालाकुञ्चितं दशमुखे पदम् ॥ ]

---

1 अपरि॰ GB. 2 खअविए Ms. 3 प्रत्ययः Ms.
4 दरुक्कित्त॰ GB.

उपायं दर्शयन्नुपसंहरति। यस्मात् क्षयितेऽपि मयि पातालं दुर्गमं तस्मात् कालस्य यमस्य पदं दशकण्ठे निषीदतु। उपायमाह—घटितो गिरिभिः सेतुबन्धो यत्र, निषदने[1] पदं कीदृशं, कथमपि दरखण्डिते दशमकण्ठे स्खलितं रुद्राराधनाय नवसु कण्ठेषु छिन्नेषु मरणमस्य प्रत्यासन्नमिति बुद्ध्यार्धखण्डिते दशमकण्ठे निधातुं प्रसारितं शङ्करस्य प्रसन्नत्वात् कथमपि स्खलितमित्यर्थः, अतएव चिरकालाकुञ्चितं कदा निधाय[2] इत्यारोपणाशया चिरकालमाकुञ्चितम् उत्क्षिप्य वक्रयित्वा स्थापितं तदिदानीं त्वया निःशेषलूनकण्ठत्वाद् घटितो गिरिभिः सेतुबन्धो निषदनाय यस्मै तद्यथास्यात्तथा निषीदतु, तद्बध्यतां गिरिभिः सेतुरित्यर्थ **इति कुलनाथः** ॥१७॥

**अह जअ-दुप्परिअल्ले दहमुह-कुविएण पवअ-वइ-पच्चक्खं[3] ।**
**रहुणाहेण समुद्दे वालिम्मि व बाण-णिअमिअम्मि[4] पसन्ते ॥१८॥**

**[अथ जगद्-दुष्परिकलनीये दशमुख-कुपितेन प्लवग-पति-प्रत्यक्षम् ।**
**रघुनाथेन समुद्रे वालिनि इव बाण-नियमिते प्रशान्ते ॥ ]**

अथानन्तरं 'जअदुप्परिअल्ले' जगदशक्ये समुद्रे वालिनीव प्लवगपतेः सुग्रीवस्य प्रत्यक्षमिति सत्कार्यानभियुक्तस्य दशो दशा भवतीति भावः। दशमुखाय कुपितेन रघुनाथेन नियमिते दर्पशून्यीकृतेऽतः प्रशान्ते निर्वृत अन्यत्र मृते सति। अथ जगतामलंघ्ये समुद्रे वालिनीव बाणेन नियमित आयत्तीकृते प्रशान्ते सति **इति लोकनाथः** ॥१८॥

**पवआहिवइ-विइण्णा रामाणत्ती पवङ्गमेसु विलग्गा[5] ।**
**सेस-फणा-[F30a]णिव्वूढा[6] तिहुअण-सार-गरुई महि व्व**
**भुअङ्गे ॥१९॥ (जुग्गअं[7])**

**[प्लवगाधिपति-वितीर्णा रामाज्ञप्तिः प्लवङ्गमेषु विलग्ना ।**
**शेष-फणा-निर्व्यूढा त्रिभुवन-सार-गुर्वी मही इव भुजङ्गे ॥ ]**

---

1 निषी° Ms. 2 °स्य Ms. 3 °क्खा Ms. 4 णिअमिम्मि Ms. 5 वलग्गा Ms. 6 °प्फणा-विच्छूढा° G; फणा-विच्छूढा B. 7 Ms. has 'कु' (=कुलक') instead of this word.

स्वयं प्लवगाधिपतिवितीर्णा रामस्याज्ञप्तिराज्ञा दत्ता प्लवङ्गमेषु सेतुबन्धार्थं, वालिनियमे सीतानुसन्धानार्थञ्च 'विलग्गा' आरूढा शेषफणाविन्यस्ता भुवनस्रजेत्यर्थात् त्रिभुवनसारेण गुर्वी महीव भुजङ्गे, अत्रोपमानोपमेययोर्विभक्तिभेदेऽप्यर्थभेदान्न दोषः। रामस्याज्ञप्तिः पर्वतानयनार्थमाज्ञा प्लवङ्गमेषु[1] सुष्ठु विलग्नेत्यन्वय इति **लोकनाथः** ॥१९॥

## तो हरिस-पढम-तुलिए चलिआ फुट्टन्त-पम्ह-विसमूससिए।
## वेउक्खअ-सीमन्ते पवआ धुणिऊण केसर-सडुग्घाए[2] ॥२०॥

**[ततः हर्ष-प्रथम-तुलितान् चलिताः स्फुटत्-पक्ष्म-विषमोच्छ्वसितान्।
वेगोत्खात-सीमन्तान् प्लवगाः धूत्वा केसर-सटोद्घातान्॥]**

तत आज्ञानन्तरं हर्षेण प्रथमं तुलितानुल्लासितान्, एतेन कार्यारम्भे रोमाञ्चेन मनःप्रसादः कार्यसिद्धिहेतुर्दर्शितः। तदुक्तं—मनःप्रसादः श्रद्धा च सहायोत्थानसंपच्च कर्मणां सिद्धिलक्षणम् इति। [3]स्फुटत्पक्ष्म विलसत्पक्ष्म यथा स्यात्तथा विषममत्यर्थमुच्छ्वसितान् वेगेनोत्पतनेनोत्खात उत्कीर्णः सीमन्तो येषु तान् केसरसटासमूहानङ्गकम्पनेन धूनयित्वा प्लवगाश्चलिताः। स्फुटद्भिरुद्भिद्यमानैः पक्ष्मभिर्विषममत्यर्थमुच्छ्वसितान् एवं यथा स्यात्तथा केसरसटासमूहान् धूत्वा कियन्तः प्लवगाश्चलिताः। अत्र कियन्तः प्लवगाश्चलिता इति व्याख्यातं, पश्चात् 'तो सञ्चालिअ[4]' इति स्कन्धके प्लवगबलं चलितमिति व्याख्यास्यते। अतएव नानयोः पौनरुक्त्यं इति **लोकनाथः** ॥२०॥

## पवअ-क्खोहिअ-महि-अल-धुअ-मलअ-पडन्त-सिहर-मुक्क-कलअलो।
## उद्धाइओ अणागअ-घडन्त-धरणिहर-संकमो व्व समुद्दो ॥२१॥

**[प्लवग-क्षोभित-महीतल-धुत-मलय-पतच्छिखर-मुक्त-कलकलः।
उद्धावितः अनागत-घटमान-धरणीधर-संक्रमः इव समुद्रः॥]**

---

1 ०मान् Ms. 2 ०सड्डुग्घाए Ms.

3 स्फुटपक्ष्म Ms. 4 ०लिआ Ms.

प्लवगबलक्षोभितेन महीतलेन धुतस्य कम्पितस्य मलयस्य पतद्भिः शिखरैर्मुक्तः कलकलो येन, शिखरपातादेवानागतं प्रागेव घटमानो बन्धं गच्छन् धरणीधरसंक्रमो यत्रेदृश इव समुद्र उद्धावित उच्छलितः ॥२१॥

**कम्पइ महिन्द-[1]-सेलो हरि-संखोहेण दलइ मेइणि-वेढं ।**
**सइ दुद्दिण-तण्णाओ णवर ण उद्धाइ मलअ-वण-कुसुम-रओ ॥२२**

[**कम्पते महेन्द्र-शैलः हरि-संक्षोभेण दलति मेदिनी-वेष्टम् ।**
**सदा दुर्दिनार्द्रं केवलं न उद्धावति मलय-वन-कुसुम-रजः ॥** ]

हरीणां वानराणां संक्षोभेण महेन्द्रशैलः कम्पते, मेदिनीवेष्टं महीमण्डलं दलति जलधिसान्निध्याद् वातोत्क्षिप्तशीकरैर्जलभरविश्रान्तमेघैः सदा दुर्दिनेनार्द्रं केवलं मलयवनरजो नोद्धावति न गच्छति । एतेन विपदा महान्त एवाभिभूयन्ते न तु [2]लघव इति सूचितम् ॥२२॥

**तो सञ्चालिअ-सेलं कह वि तुलग्गेण सम-खडन्त-कम्पं ।**
**दूरं पवङ्गम-बलं णह-मुह-लग्ग-वसुहं णहं उप्पइअं ॥२३॥**

[**ततः सञ्चालित-शैलं कथं अपि तुलाग्रेण सम-घटमान-कम्पम् ।**
**दूरं प्लवङ्गम-बलं नख-मुख-लग्न-वसुधं नभः उत्पतितम् ॥** ]

ततः कियतां प्लवगानां चलनानन्तरं प्लवङ्गमबलं कथमपि कृच्छ्रेण दूरं नभ उत्पतितम् । आदौ कियन्तश्चलितास्तद्दृष्ट्वा वानरसैन्यमेव चलितमित्यर्थः । कीदृशमुत्पतनक्षोभेण सञ्चालिताः शैला येन, यत्रोत्पतने वायोर्बाधा वा[3] कृच्छ्रोत्पतने हेतुः, शैलसञ्चालनादेव तुलाग्रेण समं सदृशं यथा स्यात्तथा घटमानोत्कम्पं क्षितितले दृढनखारोपणेन नखानां मुखेऽग्रे लग्ना वसुधा पृथिवी यस्य तत् । शैलसञ्चालनादेव तुलाग्रेण समं सदृशं यथा स्यात्तथा घटमानोत्कम्पं तुलाग्रवदस्थिरमित्यर्थः । अस्थिरत्वादेव कथमपि दूरं नभ उत्पतितम् इति **कुलनाथः** ॥२३॥

---

1 महे० GB. 2 लाघव सूचितं Ms. 3 वाय्वावधा वा Ms.

उप्पअणोणअ-महि-अल-णइ-मुह-पडिसोत्त-पत्थिओ सलिलणिही ।
जल-णिवहाहअ-सिढिले पवउक्खिप्पण[1]-सहे करेइ महिहरे ॥२४॥

[उत्पतनावनत-मही-तल-नदी-मुख-प्रतिस्रोतः-प्रस्थितः सलिलनिधिः ।
जल-निवहाहत-शिथिलान् प्लवगोत्क्षेपण-सहान् करोति महीधरान् ॥]

उत्पतनावनतेन महीतलेन हेतुना नदीमुखेन प्रतिस्रोतसा प्रस्थितो नदीप्रभवशैलपर्यन्तं धावितः सलिलनिधिर्जलनिवहाहतशिथिलान् प्लवगानामुत्क्षेपणसहानुन्मूलनयोग्यान् महीधरान् करोति, पर्वतोन्मूलनासमर्थेषु कपिषु पर्वतोन्मूलनार्थं रामशरभयात् स्वयमेव गच्छतीति भावः । उत्पतनावनते महीतले सतीति **कुलनाथः** ॥२४॥

फुरमाण-जलण-पिङ्गल-णिरन्तरुप्पइअ-पवअ-पेल्लिज्जन्तो ।
जत्तो दीसइ तत्तो णज्जइ धूम-णिवह त्ति गअणु[F30b]द्देसो ॥२५॥

[स्फुरज्-ज्वलन-पिङ्गल-निरन्तरोत्पतित-प्लवग-प्रेर्यमाणः ।
यतः दृश्यते ततः ज्ञायते धूम-निवहः इति गगनोद्देशः ॥]

[2]स्फुरज्ज्वलनवत् पिङ्गलैर्निरन्तरोत्पतितैः प्लवगैः प्रेर्यमाण उत्क्षिप्यमाणो गगनोद्देशो यतो दृश्यते ततो धूमनिवह इति ज्ञायते । अग्नीनामिव वानराणां धूमनिवह इव गगनोद्देशो दृश्यत इत्यर्थः ॥२५॥

दीसइ दूरुप्पइअं उअहिम्मि अहोमुहोसरन्त-च्छाअं ।
पाआलं व अइन्तं धरणिहरुद्धरण-कंखिअं कइ-सेण्णं ॥२६॥

[दृश्यते दूरोत्पतितं उदधौ अधोमुखापसरच्-छायम् ।
पातालं इव अयमानं धरणीधरोद्धरण-काङ्क्षितं कपि-सैन्यम् ॥ ]

---

1 ०उच्छेवण० GB. 2 स्फुरत्ज्व० Ms.

वेगेनोत्पतितं, पाठान्तरे दूरमुत्पतितमुदधावधोमुखमपसरन्ती छाया प्रतिविम्बं यस्य, अतएव धरणीधरोद्धरणकांक्षितं सत् पातालमभिगच्छत् प्रविशदिव कपिसैन्यं दृश्यते ॥२६॥

अद्दिट्ठ-दिसा-णिवहं जाअं पवअ-बल-सण्णिरुद्धालअं ।
[1]वोच्छिण्णाअव-कसणं दिअस-मुहे वि दिअसावसाणे व्व णहं ॥२७

[अदृष्ट-दिङ्-निवहं जातं प्लवग-बल-संनिरुद्धालोकम् ।
व्यवच्छिन्नातप-कृष्णं दिवस-मखे अपि दिवसावसाने इव नभः ॥ ]

प्लवगव्याप्तत्वाददृष्टदिङ्निवहं निविडोत्थितत्वात् प्लवगबलैः सन्निरुद्धालोकमतएव दिवसमुखेऽपि दिवसावसान इव व्यवच्छिन्नातपत्वात् कृष्णं नभो जातम् ॥२७॥

ओवइआ अ सरहसं तंस-ट्ठिअ-पुट्ठि-णीसरन्त-रइ[2]-अरा ।
सेलेसु मुक्क-कलअल-पडिरव-भरिअ-कुहरोअरेसु पवङ्गा ॥२८॥

[अवपतिताः च सरभसं तिर्यक्-स्थित-पृष्ठ-निःसरद्-रवि-कराः ।
शैलेषु मुक्त-कलकल-प्रतिरव-भृत-कुहरोदरेषु प्लवङ्गाः ॥ ]

पर्वतप्राप्तिप्रीत्या मुक्तस्य कलकलस्य प्रतिरवेण भृतानि कुहरोदराणि येषां तेषु शैलेषु सरभसं सहर्षं सवेगं वा यथा स्यात्तथावपतिताः प्लवङ्गा अवपतनकाले तिर्यक्स्थित-पृष्ठत्वादवकाशलाभेन निःसरन्तो रविकरा येभ्यो वृक्षादिषु । तिर्यग्भावेनावपतनं वानराणां स्वभावः ॥२८॥

वेओवइआणां अ सिं जाअं दलिअ-महि-सन्धि-बन्धण-मुक्कं ।
[3]उक्खुडिअ-तुलेअव्वं कह वि भुअङ्ग-धरिअ-ट्ठिअं गिरि-
आलं ॥२९॥

---

1 विच्छिण्णा० GB. 2 ०रवि० GB. 3 उक्खलिअ० GB.

[वेगावपतितानां च तेषां जातं दलित-मही-सन्धि-बन्धन-मुक्तम् ।
उत्खण्डित-तोलयितव्यं कथं अपि भुजङ्ग-धृत-स्थितं गिरि-जालम् ॥ ]

वेगावपतितानाञ्च 'सिं' तेषां प्लवङ्गानां दलितान् महीसन्धिबन्धनान् मुक्तं श्लथत्वादागच्छत् कथमपि भुजङ्गैर्धृतत्वात् स्थितमुत्खण्डितेनोन्मूलनमात्रेण तोलयितव्यं तोलनार्हं जातं गिरिजालं पर्वतसमूहः ॥२९॥

आढत्ता अ तुलेउं उर-[1]वडिअ-विसट्ट-गण्ड-सेलद्धन्ते[2] ।
कुविअ-मइन्दोवग्गिअ-संखोह-प्फिडिअ-वण-गए धरणिहरे ॥३०॥

[आरब्धाः च तोलयितुं उरः-पतित-विशीर्ण-गण्ड-शैलार्धान्तान् ।
कुपित-मृगेन्द्रावगृहीत-संक्षोभ-स्फेटित-वन-गजान् धरणीधरान् ॥]

उरःपतिताः सन्तो विशीर्णा गण्डशैलार्धान्ता येषां तान्, तथा पूर्वं कुपितमृगेन्द्रैराक्रान्ताः पश्चाच्च पर्वतोन्मूलनजनितेन संक्षोभेण त्रस्ता वनगजा येषु तान् धरणीधरान् तोलयितुमारब्धाः प्रवृत्ताः । एतेन त्रैलोक्यपरित्राणहेतोः कर्मणः प्रारम्भमात्रेण विपद्ध्वस्तस्यापि विपत्तिरपैतीति ध्वनितम् ॥३०॥

[3]वच्छत्थम्भिअ-कडआ तो ते कडअ-[4]परिअट्टलिअ-वच्छ-अला[5] ।
सेलेसु सेल-गरुआ पवआ पव[F31a]एसु महिहरा अ पहुत्ता ॥३१॥

[वक्ष-उत्तम्भित-कटकाः ततः ते कटक-परिकलित-वक्षस्तलाः ।
शैलेषु शैल-गुरुकाः प्लवगाः प्लवगेषु महीधराः च प्रभूताः ॥ ]

ततः शैलोन्मूलनारम्भनानन्तरं वक्षसोत्तम्भिताः प्रेरिताः कटका येषां गिरीणां कटके 'परिअट्टलिअं' परिकलितं परिच्छिन्नमिति यावद् वक्षस्थलं येषां कपीनामतः सामर्थ्येन

---

1 ०पडिअ० GB. 2 ०न्तो Ms. 3 ०च्छुत्थम्भिअ० GB.
4 ०पडि० GB. 5 ०अडा GB.

गौरवेण च परस्परामर्दसहत्वाच्छैलवद्गुरुकाः प्लवगाः शैलेषु प्रभूता महीधराश्च प्लवगेषु प्रभूताः सम्मिताः[1] ॥३१॥

**पवअ-भुअ-[2]पेल्लिआणिअ-महिहर-पडिपेल्लणोणउण्णअ-विसमा ।**
**जाआ पलीट्टिओअहि-[3]वारंवार-भरिआ महि-अलद्धन्ता ॥३२॥**

**[प्लवग-भुज-प्रेरितानीत-महीधर-प्रतिप्रेरणावनतोन्नत-विषमाः ।**
**जाताः पर्यस्तोदधि-वारंवार-भरिताः मही-तलार्धान्ताः ॥ ]**

[ F31a ] प्लवगभुजैः पूर्वं प्रेरिताः पश्चादानीता ये महीधरास्तेषां प्रतिप्रेरणेनावनतोन्नतविषमा अतः पर्यस्तेनोदधिना वारंवारं भरिता महीतलार्धान्ता जाताः। प्रवर्तितेन प्रलुठता वेति **केचित्**। ये महीधरास्तेषां प्रेरणेन नता उन्नता विषमा। यद्यदेव प्रेरणं क्रियते तत्र तत्रैव नतत्वाद्यवस्थात्रयं प्राप्ता इत्यर्थः। यद्वा प्रतिक्षणं प्रेरणेन नतोन्नतरूपतया वैषम्यं गता अनया च नतत्वाद्यवस्थया पर्यस्तेनोदधिना वारंवारं महीभृतां महीतलार्धान्ता जाता **इति लोकनाथः** प्राह ॥३२॥

**विसहिअ-वज्ज-प्पहरा उक्खम्मन्ति खअ-मारुअ-पडिक्खम्भा ।**
**अगणिअ-वराह-णिहसा पलअ-जलुत्थङ्घ-पव्वला धरणिहरा ॥३३॥**

**[विसोढ-वज्र-प्रहाराः उत्खन्यन्ते क्षय-मारुत-प्रतिष्ठम्भाः ।**
**अगणित-वराह-निघर्षाः प्रलय-जलोत्तम्भ-प्रबलाः धरणीधराः ॥ ]**

विसोढवज्रप्रहाराः क्षयमारुतस्य प्रतिष्टम्भाः प्रतिघातका अगणितमहावराहनिघर्षाः प्रलयजलस्योत्तम्भ उच्चैः स्तम्भने प्रबलाः समर्था महीधरा उत्खन्यन्ते। विशेषणचतुष्टयेन धैर्यविस्तारतुङ्गताः क्रमेण सूचिता **इति श्रीनिवासः** ॥३३॥

---

1 After the verse-number the scribe writes श्रीहरिः शरणम् to fill up the space. 2 ०णोल्लिआ० GB. 3 ०वारम्बरे० Ms.

जलओवट्ठ-विमुक्का अणन्तरोवइअ[1]-सरअ-वन्थावडिआ ।
एक्क-क्खेवुग्गाहिअ[2]-दर-वसुआअ-विसआ विसट्टन्ति
[3]गिरी ॥३४॥

[जलदाववृष्ट-विमुक्ताः अनन्तरावपतित-शरत्-पथापतिताः ।
एक-क्षेपोद्ग्राहित-दर-शुष्क-विशदाः विशीर्यन्ते गिरयः ॥ ]

वर्षासु जलदैरववृष्टाः सिक्ता अनन्तरमवपतिताया अवतीर्णायाः शरदः पन्थानमापतिताः । एकेन क्षेपेण एकयैवाकृष्ट्योद्ग्राहिता उद्धृता अतो दरविशुष्कविशदा 'विसट्टन्ति' विकटविस्तारा भवन्तीत्यर्थः । **लोकनाथस्तु** अत्र विमुक्तपदेन अतिशयसिक्तत्वं सूचितम्, अनन्तरमवतीर्णायाः शरदः पन्थानं पारमापतिता अत एकेन क्षेपेणोद्ग्राहिता उन्मूलितुमारब्धाः सन्तो दरमीषच्छुष्कत्वाद्विशदा व्यक्ता विशीर्यन्ते सशब्दं खण्डशो भवन्तीत्यर्थः । यथा निःशेषस्तिमितं काष्ठादिकमल्पशुष्कत्वादाक्रमणारम्भ एव[4] विशीर्यते तथा निःशेषसिक्ता गिरयः कपीनामाक्रमणादेव विशीर्यन्त इत्यर्थ इति प्राह । **अन्ये तु** जलदैरववृष्टाः[5] सिक्ता अववृष्टेन वर्षेण वा विमुक्ता अनन्तरमवतीर्णायाः शरदः पथि गोचरे पतिता गिरय एकक्षेपेण युगपद्ग्राहिताः सन्तः शुष्कत्वाद्विशदाः स्पष्टा विभिन्नावयवा विशीर्यन्ते, स्तिमितत्वादगुणाख्याला मार्दवं प्राप्ताः झटित्युत्क्षेपणेन गिरयः खण्डशो भवन्तीत्यर्थ इत्याहुः ॥३४॥

विहुणन्ति विहुव्वन्ता [6]वलन्ति सेला पवङ्गम-वलिज्जन्ता ।
णामेन्ति णमिज्जन्ता उक्खिप्पन्ता अ उक्खिवन्ति[7]महि-अलं ॥३५॥

[विधुन्वन्ति विधूयमानाः वलन्ति शैलाः प्लवङ्गम-वल्यमानाः ।
नमयन्ति नाम्यमानाः उत्क्षिप्यमाणाः च उत्क्षिपन्ति मही-तलम् ॥ ]

1 ०रोइएण० GB. 2 ०वुग्घा० Ms. 3 विसट्टन्ति Ms.
4 एवि० Ms. 5 ०वपृष्टाः Ms. 6 वले० GB.
7 ०वेन्ति GB.

विधूयमाना विधुन्वन्ति, प्लवङ्गमैर्वल्यमानाः शैला वलन्ति, नम्यमाना नमन्ति। उत्क्षिप्य-माणाश्चोत्क्षिपन्ति महीतलम्। **अन्ये तु**—एतेनाश्रयव्यसनानुरूपमाश्रितस्यापि व्यसनं स्यादिति सूचितम्, अत्र विधूननादिक्रियाभ्यः प्लवङ्गमानां कर्तृत्वनियमात् प्लवङ्गमवल्यमाना इत्यत्र समासेऽभवन्मतयोगः स्यादिति चिन्त्यम् ॥३५॥

**दलिअ-महि-वेढ-सिढिला मूलालग्ग-भुअइन्द-कड्ढिज्जन्ता।**
**सञ्चालिज्जन्त च्चिअ अइन्ति गरुआ रसाअलं धरणिहरा ॥३६॥**

[दलित-मही-वेष्ट-शिथिलाः मूलालग्न-भुजगेन्द्र कृष्यमाणाः।
सञ्चाल्यमानाः एव आयान्ति गुरुकाः रसातलं धरणीधराः ॥ ]

दलितमहीवेष्टत्वेन शिथिला मूलेष्वालग्नैर्भुजगेन्द्रैः कृष्यमाणाः सञ्चाल्यमाना एव गुरुका धरणीधरा रसातलमायान्ति। एवशब्दो रसातल एवान्वित इति **श्रीनिवासः** ॥३६॥

**णव-पल्लव-सच्छाआ जलओअर-सिसिर-मारुअ-विइज्जन्ता।**
**वाअन्ति तक्खणुक्खअ-हरिहत्थुक्खित्त-भिब्भला[1] मलअ-दुमा ॥३७**

[नव-पल्लव-सच्छायाः जलदोदर-शिशिर-मारुत-वीज्यमानाः।
शुष्यन्ति तत्क्षणोत्खात-हरि-हस्तोत्क्षिप्त-विह्वलाः मलय-द्रुमाः। ]

नवेन पल्लवेन सती प्रशस्ता छाया कान्तिर्येषां जलदोदरसम्बन्धिना शिशिरेण मारुतेन वीज्यमाना ईदृशा प्रकटकद्रुमास्तत्क्षणोत्खाता हरिहस्तैरुत्क्षिप्तत्वाद् विह्वला 'वाअन्ति' शुष्यन्ति। अन्येऽपि विह्वलाः स्निग्धच्छायया सच्छाया भवन्ति बन्धुभिश्च वीज्यन्त इति प्रतिपादितम्। मलयद्रुमा इति पाठे रूढ्या चन्दनद्रुमा इत्यर्थः। नवपल्लवेन सच्छायाः कान्तिमन्त **इति कुलनाथः**। देवताधिवासपर्वते तत्सुकृतवशाच्चन्दनयोगो न विरुध्यते ॥३७॥

---

1 भेम्भला GB ; भेब्भला Ms. But cp. Hemachandra VIII. 2. 58.

कम्पिज्जन्त-धराहर-सिहर-समाइद्ध[1]-जलहर-रउप्पि[F31b]त्था ।
गअ-सुह-वत्त-णिसण्णा वेवइ हंसी सहस्सवन्त-णिसण्णा ॥३८॥

[कम्प्यमान-धराधर-शिखर-समाविद्ध-जलधर-रव-समाकुला ।
गत-सुख-पात्र-निःसंज्ञा वेपते हंसी सहस्रपत्र-निषण्णा ॥ ]

[F31b] कम्प्यमानाद् धराधरशिखरात् समाविद्धस्य क्षिप्तस्य जलधरस्य रवेण 'उप्पित्था'[2] समाकुला, गतेन मेघध्वनिना त्रासाद् दूरीभूतेन सुखपात्रेण वल्लभेन निःसंज्ञा चेतनशून्या । अथवा जलदागमबुद्धया गतेन सुखवृत्तेन प्रवृत्त्या निःसंज्ञा सहस्रपत्रे पद्मे निषण्णा हंसी वेपते 'उप्पित्थ'-शब्दो रोषपूर्णे समाकुले च देशी ॥३८॥

पवओवऊढ-कड्ढिअ-सेलाब्भन्तर-भमन्त-विसम-क्खलिआ ।
गहिरं रसन्ति वित्थअ-वच्छ-त्थल-रुद्ध-णिग्गमा णइ-सोत्ता ॥३९

[प्लवगोपगूढ-कृष्ट-शैलाभ्यन्तर-भ्रमद्-विषम-स्खलितानि ।
गभीरं रसन्ति विस्तृत-वक्षः-स्थल-रुद्ध-निर्गमानि नदी-स्रोतांसि ॥ ]

प्लवगैरुपगूढाकृष्टानां शैलानामभ्यन्तरे भ्रमन्ति तत्रैव विषमेषु पाषाणादिसंकटेषु स्खलितानि, विस्तृते वक्षःस्थले रुद्धा निर्गमा येषां तानि नदीस्रोतांसि गभीरं रसन्ति ॥३९॥

अद्धुच्छित्त[3]-सिढिलिए[4] अद्ध-वह-भुअङ्ग-कड्ढिअद्धत्थमिए ।
ऊम्मूलेन्ति रसाअल-पङ्क-क्खुप्प[5]-सरिआ-मुहे धरणिहरे ॥४०॥

[अर्धोत्क्षिप्त-शिथिलान् अर्ध-पथ-भुजङ्ग-कृष्टार्धास्तमितान् ।
उन्मूलयन्ति रसातल-पङ्क-मग्न-सरिन्-मुखान् धरणीधरान् ॥ ]

---

1 ०इड्ढ० GB. 2 उप्फित्थाः Ms. 3 ०क्खित्त० GB.
4 ०पसिढिले GB. 5 ०क्खुत्त० Ms.

धरणिनिमग्नभागादर्धोत्क्षिप्ता अनन्तरं शिथिलाश्च येऽर्धपथाद् भुजङ्गैराकृष्टाः सन्तः पर्यस्ता धरण्युपरिस्थितार्धभागेनास्तमिता ये धरणिधरास्तान् रसातलपङ्कक्षिप्तसरिन्मुखानुन्मूलयन्ति। परनिपातात् शिथिलान् कृत्वा भूतलनिमग्नभागादर्धोत्क्षिप्तान्, यद्वार्धोत्क्षिप्तत्वाच्छिथिलाञ् शिथिलत्वादेवार्धपथाद्भुजङ्गैराकृष्टान् सतोऽथन्युपरि गतार्धभागेनास्तमितान्, उपरिस्थितभागस्याधःप्रवेशादिति **लोकनाथः** ॥४०॥

उव्वेल्लेसु[1] णिराअं पासल्लन्तेसु सिहर-पडिमुच्चन्तं[2]।
उक्खिप्पन्तेसु पुणो संवेल्लिज्जइ[3] व महिहरेसु णह-अलं ॥४१॥

**[उद्वेल्लेषु निरायतं पार्श्वायमानेषु शिखर-प्रतिमुच्यमानम्।**
**उत्क्षिप्यमाणेषु पुनः संवेष्ट्यते इव महीधरेषु नभस्तलम्॥]**

उद्वेल्लेषूत्पाटितेषु महीधरेषु निरायतं दीर्घं पूर्वं पर्वतावृतत्वान्नभः खर्वमिवासीदुत्पाटितेषु दीर्घीभूततया दृश्यमानत्वादिति भावः। गर्तस्थाने निरायतं दीर्घमिति **कुलनाथः**। तथा स्कन्धारोपणकाले पार्श्वायमानेषु तिर्यक् क्रियमाणेषु तेषु शिखरैः प्रतिमुच्यमानमाच्छाद्यमानां शिखराणां तिर्यग्भावान्नभसो विस्तारदर्शनादिति भावः। ईदृशं नभस्तलं स्कन्धारोपणानन्तरमुत्क्षिप्यमाणेषु तेषु पुनः संवेष्ट्यत इव शिखरनितम्बमूलैर्नभसो व्याप्तत्वादिति भावः। संवेष्ट्यत इव वर्तुलीकृत्य संकल्यत इव स्कन्धारोपितस्य गिरेरधस्थादेव मण्डलाकारस्य नभसो लक्ष्यमाणत्वादिति **केचित्** ॥४१॥

उम्मूलेन्ति पवङ्गा भुज-सिहरल्लिअण[4]-णिच्चल-पडिग्गहिए।
कडआवडणुत्थङ्घिअ-विसम-विवत्त-विवरम्मुहा धरणिहरे ॥४२॥

**[उन्मूलयन्ति प्लवङ्गाः भुज-शिखरालीन-निश्चल-परिगृहीतान्।**
**कटकापतनोत्तम्भित-विषम-विवृत-विपराङ्मुखाः धरणिधरान्॥]**

---

1 ०ल्लइ व GB. 2 मुच्छन्तं Ms. 3 ०ल्लि० GB.; सम्वे० Ms,
4 ०रारुहण० GB.

भुजशिखरेषु स्कन्धेष्वारोहणेनारोपणेन निश्चलं यथा स्यात्तथा परिगृहीतान्। एवं कटकानामापतनेन निवेशनेनोत्थापितं पर्वतभरेण विषममतिशयितं विवृतं व्यात्तं विपरांमुखं येषां तादृशाः प्लवङ्गा धरणीधरानुन्मूलयन्ति ॥४२॥

हरि-भुअ-कड्ढिअ-मुक्का भुअङ्ग-दढ-वेढणावलम्बण-धरिआ।
[1]भज्जन्ता वि महि-अले ओअल्लन्ति ण पडन्ति चन्दण-विडवा ॥४३

[हरि-भुज-कृष्ट-मुक्ताः भुजङ्ग-दृढ-वेष्टनावलम्बन-धृताः।
भज्यमानाः अपि महीतले अवनमन्ति न पतन्ति चन्दन-विटपाः ॥ ]

स्कन्धोत्क्षिप्तेषु गिरिष्वलाग्रस्थितत्वाद् हरिभुजैराकृष्टमुक्का अतो भज्यमाना अपि भङ्गं गच्छन्तोऽपि तरुलग्नभुजङ्गदृढवेष्टनावलम्बनेन धृताः सन्त 'ओअल्लन्ति' अवलम्बन्ते चन्दनविटपा न महीतले पतन्ति ॥४३॥

पडिसमइ[2] णह-णिबद्धो चिरेण भरिअब्भ-णाअ-गम्भीरअरो।
हरि-भुअ-विक्कम-पिसुणो अअण्ड-भज्जन्त-धरणिहर-
णिग्घोसो ॥४४॥

[प्रतिशाम्यति नभो-निबद्धः चिरेण भृताभ्र-नाद-गम्भीरतरः।
हरि-भुज-विक्रम-पिशुनः अकाण्ड-भज्यमान-धरणिधर-निर्घोषः ॥ ]

भृतानां जलपूरितानामभ्राणां नादवद्गम्भीरतरो नभसि निबद्धो व्याप्तत्वात् पिण्डितो हरीणां वानराणां भुजविक्रमस्य पिशुनः सूचकः। अकाण्डेऽनवसरे भज्यमानस्य धरणीधरस्य निर्घोषश्चिरेण प्रतिशमति प्रतिशाम्यति वा गुरुघण्टाध्वनिरिव विलम्बेन क्षीयते, क्षि क्षये इत्यस्य रूपमिदम् ॥४४॥

पासल्लन्ति[F32a]महिहरा जत्तो-हुत्ता पवङ्गम-भुअ-क्खित्ता।
धुव्वन्त-धाउ-अम्बा तत्तो-हुत्ता वलन्ति सरिआ-सोत्ता ॥४५॥

---

1 भिज्जन्ता GB. 2 पडिसइ Ms.

[पार्श्वायन्ते महीधराः यतोऽभिमुखाः प्लवङ्गम-भुज-क्षिप्ताः।
धाव्यमान-धातु-ताम्राणि ततोऽभिमुखानि वलन्ति सरित्-स्रोतांसि ॥ ]

महीसन्निबद्धं प्लवङ्गमभुजक्षिप्ता महीधराः स्वामिन इव यतोऽभिमुखाः पार्श्वायन्ते धाव्यमानेन धातुना ताम्राणि सरितां स्रोतांस्यनुजीविन इव ततोऽभिमुखानि[1] वलन्ति। अनुजीविनामपि प्रभुशोकेन शरीराघातात् ताम्रता स्यात् ॥४५॥

दीसन्ति पवअ-वलिआ आवत्तेसु व महोअहिस्स वलन्ता।
सरिआण घडिअ-पत्थिअ-वलन्त-सलिल-वलअन्तरेसु महि-
हरा ॥४६॥

[दृश्यन्ते प्लवग-वलिताः आवर्तेषु इव महोदधेः वलन्तः।
सरितां घटित-प्रस्थित-वलत्-सलिल-वलयान्तरेषु महीधराः ॥ ]

सरितां पतितस्थितानामन्योन्यं घटितप्रस्थितानि सन्ति वलन्ति मण्डलाकारेण वहन्ति यानि सलिलवलयानि तेषामन्तरेषु प्लवगैर्वलिता भ्रमिता महीधरा महोदधेरावर्तेष्विव वलन्तो भ्रमन्तो दृश्यन्ते ॥४६॥

मअरन्द-गरुअ-वक्खं पासोअल्लन्त-वण-लआ-विच्छूढं[2]।
ण मुअइ कुसुम-ग्गोच्छं[3] आसाइअ-महु-रसं पि महुअर-
मिहुणं ॥४७॥

[मकरन्द-गुरुक-पक्षं पार्श्वायमान-वन-लता-विक्षिप्तम्।
न मुञ्चति कुसुम-गुच्छं आस्वादित-मधु-रसं अपि मधुकर-मिथुनम् ॥ ]

पार्श्वेऽवलम्बमानया वनलतया विक्षिप्तं प्रेरितमप्यास्वादितमधुरसमपि मधुकरमिथुनं मकरन्दगुरुकृतपक्षत्वात् कुसुमगुच्छं न मुञ्चति। अथवा पक्षपाते पक्षशब्दो मकरन्दगुरुपक्षपातात्

---

1 ०मुखा Ms.   2 ०विव्वूढं Ms,   3 ०गोच्छ Ms.

प्रासक्त्कृमपि न मुञ्चति, पक्षपाते[1] हेतुमाह आस्वादितमधुरसमपीति। अनुभूतमधुरसमपि भाविसम्बन्धानुबन्धेन न मुञ्चतीत्यर्थः ॥४७॥

उप्पुअ-सुरहि-गन्धि[2]-मअरन्द-रञ्जिआइं[3]
ठिअ-परिलेन्त-भमिर-भमरोअरञ्जिआइं[4]।
कमल-वणाइं सूर-कर-फंस[5]-विआसिआइं
उच्छलिए सराण सलिलम्मि विअ-सिआइं ॥४८॥

[उत्प्लुत-सुरभि-गन्धि-मकरन्द-रञ्जितानि
स्थित-परिलीयमान-भ्रमणशीलभ्रमरोदराञ्जितानि।
कमल-वनानि सूर्य-कर-स्पर्श-विकसितानि
उच्छलिते सरसां सलिले वियच्छ्रितानि ॥]

उच्छलिते पर्वतोत्पाटनवेगादूर्ध्वं गते सरसामर्थाद् गिरिसम्बन्धिनां सलिले कमलवनानि वियदाकाशं श्रितानि कीदृशान्युत्प्लुतेन पर्वतक्षोभादस्थिरेण सुरभिगन्धिना मकरन्देन रञ्जितान्यनुरागविषयीकृतानि, एवं केचित् स्थिताः केचिन्निश्चलाः केचित् परिलीयमानाः केचिद्भ्रमणशीला ये भ्रमरास्तैरुदरे मध्येऽञ्जितानि कज्जलीकृतानि सूर्यस्य करपरिस्पर्शेन परामर्षेण वा विकसितानि ॥४८॥

दढ-सन्दाणिअ-मूला वलन्ति वाणर-भुआवलम्बिअ-सिहरा।
रोसुप्पित्थ-भुअङ्गम-विसमुद्ध-प्फण[6]-पणोल्लिआ धरणिहरा ॥४९॥

[दृढ-सन्दानित-मूलाः वलन्ति वानर-भुजावलम्बित-शिखराः।
रोषोद्विग्न-भुजङ्गम-विषमोर्ध्व-फण-प्रणोदिताः धरणीधराः ॥]

दृढं यथा स्यात्तथा सन्दानितं गाढबद्धं मूलं येषां तथोन्मूलनार्थं नम्रीकरणाय वानरभुजैरवलम्बितशिखरा धरणीधरा वलन्त्येकपार्श्वेन तिर्यग्भवन्ति, हेतुमाह पर्वत-

---

1 पक्षपा Ms. 2 ०गन्ध० GB. 3 ०आइ Ms.
4 ०रोअरर० Ms. 5 ०परिमास० GB. 6 ०फणा० GB.

चालनेनेतस्ततः संक्षोभाद् रोषाकुलानां भुजङ्गमानां विषमोर्ध्वैस्तिर्यगूर्ध्वीभूतैः फणैः प्रणोदिताः[1] प्रेरिता एवंभूतापि दृढसन्दानितमूलत्वादनुपतिता[2] इति भावः ॥४६॥

सरिआ-[3]सअअ-प्पवहा अण्णोण्ण-महा-[4]णईण मुह[4]-पल्हत्था ।
खोहिअ-पङ्क-क्खउरा वलन्त-सेल-वलिआ मुहुत्तं वूढा ॥५०॥

[सरित्-सतत-प्रवाहाः अन्योन्य-महा-नदीनां मुख-पर्यस्ताः ।
क्षोभित-पङ्क-कलुषाः वलच्छैल-वलिताः मुहूर्तं व्यूढाः ॥ ]

सरितां नदीनां सततप्रवाहा अविच्छिन्नप्रवाहा वलत्सु शैलेषु वलिता अतोऽन्योन्यं परस्परं महानदीनां मुखे निर्गमे पर्यस्ताः सन्तः क्षोभितपङ्ककलुषा मुहूर्तं व्यूढाः प्रसृताः । वलत्सु भ्रमत्सु शैलेषु वलन्तो भ्रमन्तो भ्रमणवेगादेवान्योन्यं महानदीनां मुखैर्निर्गममार्गैः पर्यस्ताः, क्षोभितैः पङ्कैः कलुषा मुहूर्तं व्यूढाः क्षणं वहन्ति स्म । अनन्तरं शुष्का इति भाव इति **लोकनाथः** ॥५०॥

कड्ढिज्जन्ति [5]ससन्ता [6]विसम-समुव्व[F32b]त्त[7]-कसण-धवल[8]-च्छाआ ।
महिहर-मूलालग्गा रसाअलद्ध-परिघोलिरा[8] भुअइन्दा ॥५१॥

[कृष्यन्ते श्वसन्तः विषम-समुद्वृत्त-कृष्ण-धवल-च्छायाः ।
महीधर-मूलालग्नाः रसातलार्ध-परिघूर्णनशीलाः भुजगेन्द्राः ॥ ]

महीधराणामर्थादुत्पाट्यमानानां मूलेष्वालग्ना विषममस्तव्यस्तं समुद्वृत्तत्वात् क्रोडपृष्ठ-भागाभ्यां धवलकृष्णच्छाया रसातलेऽर्धकाये परिभ्रमणशीला भुजगेन्द्राः क्रोधात् श्वसन्तः कृष्यन्ते । 'समन्ता' इति पाठे समन्तादित्यर्थः ॥५१॥

1 प्रणु० Ms. 2 ०त्वानुपतिता Ms. 3 सरन्त० GB. 4 ०णइ-प्पवह० GB. 5 Marginally Ms. But Ms has समन्ता originally as in GB. 6 विसमुव्वत्तन्त० GB. 7 ०धवल-कसण० GB. 8 पडि० GB.

गलइ सरसं पि कुसुमं वाइ अणालिद्ध-बन्धणं पि किसलअं ।
रहसुम्मूलिअ-महिहर-भअ-विवलाअ[1]-वण-देवआण लताणं ॥५२॥

[गलति सरसं अपि कुसुमं शुष्यति अनालीढ-बन्धनं अपि किसलयम् ।
रभसोन्मूलित-महीधर-भय-विपलायित-वन-देवतानां लतानाम् ॥ ]

रभसोन्मूलितमहीधरत्वेन भयेन विपलायिता वनदेवता यासां तासां लतानां सरसमपि कुसुमं गलति पतति, अस्पष्टबन्धनमप्यभग्नवृन्तभागमपि किसलयं शुष्यति । शुष्यतीत्यर्थे वाइ इति प्रयोगः ॥५२॥

उक्खिप्पन्ति जं दिसासुं धरा समत्ता
तेण खणेण णज्जइ वसुन्धरा समत्ता ।
कीरइ महिहरेहि गअणंदि-साल-आणं
वड्ढइ जलअ-सिहर-वडणं[2] दिसा-लआणं ॥५३॥

[उत्खन्यन्ते यत् दिशासु धराः समात्ताः तेन क्षणेन ज्ञायते वसुन्धरा समाप्ता ।
क्रियते महीधरैः गजनन्दि-शाल-दानं वर्धते जलद-शिखर-पतनं दिशा-लतानाम् ॥ ]

यद्यस्माद्दिक्षु सर्वासु धराः पर्वताः 'समत्ताः' सममात्ता युगपद्गृहीता उत्खन्यन्ते तेन हेतुना ज्ञायते क्षणेन वसुन्धरा मही समाप्ता । धराः समस्ता इति व्याख्यानमसङ्गतं समस्त-शब्दस्य समत्थ इति रूपं भवति । किञ्च गजनन्दिनश्च ते शाला वृक्षाश्चेति तेषां दानं, दिशां लतानामिव महीधरैः क्रियते । द्वयोः शालयोः प्राकारयोर्दानं सन्निवेशस्थानं विस्तारो वा यत्देशं गगनं महीधरैः करणभूतैः क्रियते अर्थात् कपिभिः । अथवा दिक्षु आलयो येषां दिगालयानां दिग्गजानामित्यर्थवशाद् जलदाः शिखराणीव तेषां पतनं वर्धते । अधः कपिमाला उपरि शैलमाला यस्मात्तथा द्वौ प्राकाराविव नभसः कृतावित्युत्प्रेक्षागर्भोक्तिः । अथवा द्विशालतानं द्वयोः प्राकारयोस्तानं विस्तारो यत्र गगने तत्तथा इति ॥५३॥

---

1 ०विवलाइअ० marginally Ms. 2 ०पडणं GB.

एक्केक्केण[1] अ सेलं कर-अल-जुअल-धरिअं तुलन्तेण कअं ।
[2]अद्धत्थइअञ्च णहं अद्धुग्घाडिअ-रसाअलञ्च महि-अलं ॥५४॥

[एकैकेन च शैलं कर-तल-युगल-धृतं तोलयता कृतम् ।
अर्धावस्थगितं च नभः अर्धोद्घाटित-रसातलं च महीतलम् ॥]

एकैकेनार्थाद्वानरेण करतलयुगलेन धृतं शैलं तोलयता, अर्धावस्थगितमिव नभः कृतमेकैकेन गिरिणा नभोऽधस्थगनादित्यर्थः । अर्धमुद्घाटितं रसातलं पातालं यत्रैवंभूतमिव महीतलं कृतं पृथुना गिरिच्छिद्रेण पातालार्धस्य दृश्यमानत्वादित्यर्थः ॥५४॥

सेल-णिअम्बालग्गा पविरल-णइ-मग्ग-पाअड-तड-च्छेआ ।
भुअइन्द-प्फण-धरिआ णहं विलग्गन्ति मेइणि-दलद्धन्ता[3] ॥५५॥

[शैल-नितम्बालग्नाः प्रविरल-नदी-मार्ग-प्रकट-तट-च्छेदाः ।
भुजगेन्द्र-फण-धृताः नभः विलगन्ति मेदिनी-दलार्धाः ॥ ]

शैलानां नितम्बेष्वालग्नाः प्रविरला नदीमार्गाः सरित्प्रवाहा येषां एवंभूततया प्रकटास्तटच्छेदा येषां ते मेदिन्या दलार्धान्ताः खण्डैकदेशा नभो 'विलग्गन्ति' आरोहन्ति । मेदिनीखण्डस्य गुरुत्वात् पतनं कथं न भवतीत्याह भुजगेन्द्राणां पन्नगप्रधानानामर्थादुदधिवर्तिनां फणैर्धृताः ॥५५॥

धरणिहरेण अ[4]चलिअं चलिअ-कन्दरेण[5]
फुट्टइ गअ-उलं अणालिद्ध-कं दरेण[5] ।
गिरि-सिहराइ सरस-हरिआल-वङ्किआइं
सम-विसमं णमन्ति [F33a]हरि-आल-वङ्किआइं ॥५६॥

---

1 एक्क० GB. 2 ०त्थमिअ० GB. 3 ०अल० GB.
4 Omitted in Ms. 5 ०कन्दरेणं Ms.

[धरणीधरेण च चलितं चलित-कन्दरेण
स्फुटति गज-कुलं अनालीढ-कं दरेण।
गिरि-शिखराणि सरस-हरिताल-पङ्कितानि
सम-विषमं नमन्ति हरि-जाल-वङ्कितानि ॥ ]

गलितकमाह। दरेण भयेनास्पृष्टमपि गजकुलमकस्मादुत्क्षेपाच्चलितकन्दरेण गिरिणा भूकम्पेनेव चलितं सत् स्फुटत्युत्कर्णपुच्छपलायनेन विशीर्यते सरसेन निर्झरक्षोभार्द्रेण हरितालेन पङ्कितानि हरीणां वानराणां तालैः करतालैर्वङ्कितानि गिरिशिखराणि समविषमं नमन्ति **इति कुलनाथः**। उत्क्षेपाच्चलिताः कन्दरा यस्य तेन धरणीधरेण सह चलितं गजकुलं[1] 'अणालिद्धं' परस्परासंस्पृष्टं सद् दरेण भयेनोत्पुच्छं पलायत **इति लोकनाथः** ॥५६॥

**पाअव-सिहरुत्तिण्णो मलअ-वण-पवित्त-पवण-रअ-वित्थरिओ।**
**सञ्झा-राओ व्व णहं [2]अप्फुन्दइ मलिअ-रवि-अरं कुसुम-**
**रओ ॥५७॥**

[पादप-शिखरोत्तीर्णं मलय-वन-प्रवृत्त-पवन-रय-विस्तृतम्।
सन्ध्यारागः इव नभः आक्रामति मृदित-रवि-करं कुसुम-रजः ॥ ]

[F33a] पादपशिखरादुत्तीर्णमुद्गतं मलयवनात् परिगच्छतः पवनस्य वशेनाधीनतया विस्तृतं कुसुमरजः कर्तृ परनिपाताद् रविकरैर्मृदितमतः शोणवर्णत्वादतः सन्ध्याराग इव नभ 'अप्फुन्दइ' आक्रामति। मृदितरविकरं यथा स्यात्तथा नभः स्थगयतीति **कुलनाथः** ॥५७॥

**कड्ढिअ-मूल-णिरन्तर-रसाअलुक्खित्त-सलिल-कद्दम-घडिआ।**
**वट्टन्ति त्ति मुणिज्जइ [3]ण मुअन्ति च्चिअ रसाअलं[3] त्ति महि-**
**हरा ॥५८॥**

---

1 जग० Ms 2 Will it be अच्छुन्दइ ? cp. x. 55, where-under again we have अप्फु (C). Hemachandra has छुन्द् in VIII 4. 160
3 'णज्जइ ण मुअन्ति अहिअलं' GB.

[कृष्ट-मूल-निरन्तर-रसातलोत्क्षिप्त-सलिल-कर्दम-घटिताः ।
वर्धन्ते इति ज्ञायते न मुञ्चन्ति एव रसातलं इति महीधराः ॥ ]

कृष्टाश्चेति मूले निरन्तरमविच्छिन्नं यथा स्यात्तथा रसातलोत्क्षिप्तेन सलिलकर्दमेन सरसपङ्केन घटिताश्चेति तथाभूता महीधरा वर्धन्त इति न मुञ्चन्त्येव महीतलमिति ज्ञायते ॥५८॥

सिहराइ णिआइ णहं महिन्द-लद्धाइं
मलअस्स अ आणिआइ[1] महिं दलद्धाइं ।
विञ्झ-णिअम्बाण कई[2] दप्पुण्णामाणं
सज्झ-अडाण अ भरिआ धुअ-पुण्णामाणं ॥५९॥

[शिखराणि नीतानि नभः महेन्द्र-लब्धानि
मलयस्य च आनीतानि महीं दलार्धानि ।
विन्ध्य-नितम्बानां कपयः दर्पोन्नामानां
सह्य-तटानां च भरिताः धुत-पुन्नगानाम् ॥ ]

महेन्द्रात् पर्वतात् लब्धानि शिखराणि नभो नीतानि, चरणभरेणाक्रम्य गमनान् मलयस्य दलार्धानि च दलितार्धानीत्यर्थस्तानि महीमानीतानि प्रापितानि 'कई' कपयः विन्ध्यनितम्बानां भरिताः पूरिताः पूरणार्थयोगे तृतीयार्थे षष्ठी नितम्बैरित्यर्थः दर्पेण हृष्टतयोन्नादानामुद्धुष्टानां न केवलं तेषां भरिताः सह्यतटानाञ्च धुताः पुन्नागास्तरुभेदा येषां । 'दप्पुण्णामाण' इति पाठे दर्पेणान्यगिरिस्पर्धाहेतुनोल्लास उन्नतिर्येषां, धुताः पुन्नामानः पुरुषाह्वयाः पुन्नागतरवो येषामिति व्याख्या । शिखराणि महेन्द्रलब्धानि नभो नीतानीति लघुत्वादूरमुत्क्षिप्तानि । विन्ध्यनितम्बैः सह्यतटै[3]श्च कपयो महीं भृतवन्तः पूरितवन्त इति वा । 'दप्पुण्णामाण'मिति दर्पमुन्नमयति वर्धयतीति कर्मण्यण् इति केचित् ॥५९॥

---

1 अइणि० GB. 2 कइ Ms. 3 ०तटे० Ms.

सिहराण भुअ-सिरेहिं[1] कडआण अ माविअं उरेहिं पमाणं ।
वण-विवरेहि दरीणं तुलिआ पवआणं अग्ग-हत्थेहि गिरी ॥६०॥

[शिखराणां भुज-शिरोभिः कटकानां च मापितं उरोभिः प्रमाणम् ।
व्रण-विवरैः दरीणां तुलिताः प्लवगानां अग्रहस्तैः गिरयः ॥ ]

शिखराणां प्रमाणं प्लवगानां भुजशिरोभिः स्कन्धैर्भुजाग्रैर्वा मापितमियत्तया परिकलितं सदृशीकृतमिति यावत् । तथा कटकानां प्रमाणमुरोभि र्दरीणां प्रमाणं व्रणविवरैः, एवमग्रहस्तैर्हस्ताग्रैर्गिरयस्तुलिता उत्क्षिप्ताः । अथचाग्रहस्तैरित्युपलक्षणे तृतीया तेनाग्रहस्तैरर्थाद्गिरिशिखरधारणायोत्तोलितैरुपलक्षितानां प्लवगानां गिरयस्तुलिताः सदृशीकृता भुजाग्राणां शिखरतुल्यत्वाद्वानराणां पर्वतप्रायत्वमित्यर्थः । उरःस्थलस्थितपृथुव्रणविवरैर्दरीणां, 'दरीओ' इति पाठे तुलिता इति योज्यम् ॥६०॥

पडिसन्त-कण्ण-आलं ओवत्त-मुहं पसारिओलुग्ग-करं ।
झाइ णु सोअ-णिमिल्लं वीसमइ णु भमिअ-णीसहं हत्थि-
उलं ॥६१॥

[प्रतिश्रान्त-कर्ण-तालं अपवृत्त-मुखं प्रसारितावरुग्ण-करम् ।
ध्यायति नु शोक-निमीलितं विश्राम्यति नु भ्रमित-निःसहं हस्ति-कुलम् ॥]

तस्मिन् गिरिसंक्षोभे सति प्रतिश्रान्तः कर्णयोस्तालस्तालनं यस्य, अपवृत्तं मुखं यस्य, प्रसारितो दीर्घीकृतोऽवरुग्णो भग्नः श्लथव्यापार इत्यर्थः करो यस्य तत्तथा । ईदृशं हस्तिकुलं शैलक्षोभक्लिष्टायाः प्रियायाः शोकेन निमीलितं ध्यायति चिन्तयति नु भ्रान्तत्वेन पर्वतप्रचलनक्षोभेण भ्रमणशीलतया निःसहमलसं विश्राम्यति नु शोकविश्रामयोरेकाकारदर्शनादयं वितर्कः ॥६१॥

---

1 सिहरे० Ms.

पाअवा अ पासल्ल-सेल-विसमाणिआ
चुण्णि[F33b]आ दलिज्जन्त[1]-दलुव्वि-समाणिआ ।
जलहरा अ विहडन्त-महिन्द-रवाविआ
वण-लआ अ घोलन्ति महिं दरवाविआ ॥६२॥

[पादपाः च पार्श्वायित-शैल-विषमानीताः
चूर्णिताः दल्यमान-दलोर्वी-समानिताः ।
जलधराः च विघटमान-महेन्द्र-रवावृताः
वन-लताः च घूर्णन्ते महीं दर-वापिताः ॥ ]

[F33b] पादपाः स्कन्धारोपणावसरे पार्श्वायितेषु शैलेषु विषमभागस्थिततयानीता अर्थाद्भूमिं प्रापिताः । यद्वा विषमभागस्थिता आनीताश्चेति पदद्वयं, चूर्णिताश्च । अतएव दल्यमानैर्भिद्यमानैरवयवैरुर्व्याः समानिताः सदृशीकृताः पृथिव्या सह ऐक्यं प्रापिता इत्यर्थः । यद्वा परनिपाताद्विघटमानतया रवेणावृतो महेन्द्रो यैः, महीमीषत्प्रापिता वनलताश्च घूर्णन्ते पृथिव्यामधोमुखा लम्बन्त इत्यर्थः । जलधराश्च विघटन्ते किंभूता रवेणावृतो महेन्द्रो यैस्ते महेन्द्ररवावृताः ॥६२॥

फुट्टन्ता[2]वि ससद्दं [3]पवउक्खेवेहिं मूल-[3]दलिअद्धन्ता ।
भुअएहि भोअ-भारा सेल-भरङ्कुसइअ-प्फणेहि ण णाआ ॥६३॥

[स्फुटन्तः अपि सशब्दं प्लवगोत्क्षेपैः मूल-दलितार्धान्ताः ।
भुजगैः भोग-भाराः शैल-भराङ्कुशायित-फणैः न ज्ञाता ॥ ]

प्लवगोत्क्षेपैः सशब्दं चटच्छब्दं स्फुटन्तोऽपि विदीर्यन्तोऽपि मूले बलितो भ्रमितोऽर्धान्तो यैस्ते तथा भोगाः शरीराणि त एव गुरुत्वाद् भाराः, अज्ञाने हेतुमाह शैलभरेणाङ्कुशीकृताः फणा यैस्ते भुजगैर्न ज्ञाता लघुदुःखं गुरुदुःखेनाभिभूयत इति भावः । भारापगमे सुखादिति **श्रीहर्षः** ( हर्षपालः ? ) ।

---

1 दलिअ० Ms. 2 ट्टु० GB. 3 पवअ-भुअ-क्खेव-मूल-व० GB.

दर-दाविअ[1]-पाआलं दर-विक्खित्त[2]-विहलोसरन्त-भुअङ्गं ।
दीसइ हिरन्तम्मिव कईहि दर-तुलिअ-महिहरं महि-वेढं ॥६४॥

[दर-दर्शित-पातालं दर-विक्षिप्त-विह्वलापसरद्-भुजङ्गम् ।
दृश्यते ह्रियमाणं इव कपिभिः दर-तोलित-महीधरं मही-वेष्टम् ॥ ]

कपिभिर्दरतोलितमहीधरं महीमण्डलं शैलैः सहोद्धृतत्वाद् ह्रियमाणमिव दृश्यते, कथमित्याह दररेचितपातालं पर्वतानामीषत्तुलितत्वादी[3]षद्रेचितं त्यक्तं पातालं यत्र इति लोकनाथः । महीधरेण सहार्धोत्क्षिप्ता विह्वला अपसरन्तो भुजङ्गा यत्र तत्तथा ॥६४॥

मीण-उलाइ वि[4]सिढिलेन्ति जीविआइं[5] [6]णअण-दीहराइं[6]
विअसन्ते मुअन्ति धरणीहर-सम्भमे [6]ण अ णदी-हराइं[6] ।
महिस-उलाण [7]मणि-सिल-वेल्लिआण वण-चन्दणासिआणं
अवसेसो वि णत्थि तिमिरुग्गमाण जह चन्द-णासिआणं ॥६५॥

[मीन-कुलानि अपि शिथिलयन्ति जीवितानि नयन-दीर्घाणि
विकसति मुञ्चन्ति धरणिधर-संभ्रमे न च नदी-गृहाणि ।
महिष-कुलानां मणि-शिलाप्रेरितानां वन-चन्दनाश्रितानां
अवशेषः अपि न अस्ति तिमिरोद्गमानां यथा चन्द्र-नाशितानाम् ॥ ]

नयनवद्दीर्घाणि मीनकुलान्यर्थाच्छफरादीनि धरणीधरसंभ्रमे विकसति विजृम्भमाणे सति जीवितमपि शिथिलयन्ति, न तु नदीगृहाणि मुञ्चन्ति, दुस्त्यजा खलु जन्मभूमिरिति भावः । किञ्च महिषकुलानां प्रकृतिसोष्मत्वाद् वनचन्दनं चन्दनवनमाश्रितानां मणिशिलाभिः संक्षोभ-दलितस्फटिकशिलाभिः प्रेरितानामभिहतानामवशेषोऽपि नास्ति न भवति, निःशेषं क्षीयन्त इत्यर्थः । दृष्टान्तमाह यथा चन्द्रनाशितानां तिमिरोद्गमानाम् ॥६५॥

---

1 Ms has ०रेइअ० marginally. 2 ०उक्खि० GB. 3 इ० Ms.
4 अवि अ GB. 5 जीविअं GB. 6 The words change places in pādas 1 and 2 in GB. 7 फलिअ-मणि० Ms.

अद्धे अद्ध-प्फुडिआ अद्धे अद्ध-कडउक्ख[1]अ-सिला-वेढा ।
पवअ-भुआहअ-विसढा अद्धे अद्ध-सिहरा पडन्ति महिहरा ॥६६॥

[अर्धे अर्ध-स्फुटिताः अर्धे कटकोत्खात-शिला-वेष्टाः ।
प्लवग-भुजाहत-विशीर्णाः अर्धे अर्ध-शिखराः पतन्ति महीधराः ।। ]

अर्धेऽर्धप्रदेशे अर्धस्फुटिता अर्धेऽर्धकटकेभ्यः कटकार्धेभ्य उत्खातशिलावेष्टाः प्लवगभुजाहता 'विसढा' विघटत्प्रदेशा महीधरा अर्धेऽर्धशिखराः पतन्ति खण्डश्रृङ्गाः पतन्तीत्यर्थः । प्लवगभुजाहतत्वात्तैर्निष्पीडनगृहीतत्वाद् 'विसढा' विघटितसन्धयो महीधराः । केचिदर्धेऽर्धपथेऽर्धस्फुटिताः अर्धेऽर्धकटकेभ्य कटकार्धेभ्य उत्खातशिलावेष्टाः केचिदर्धेऽर्ध-शिखराः पतन्ति इति **लोकनाथः** ॥६६॥

जस्स तुलिज्जइ[2] सिहरं[3] पडिअ-[4]प्फु[F34a]डिओ अ जो धरिज्जइ सेलो ।
सो च्चेअ विसज्जिज्जइ उक्खित्तूण[5]वि[6]अऊरमाणम्मि[7] भरे ॥६७॥

[यस्य तुल्यते शिखरं पतित-स्फुटितः च यः ध्रियते शैलः ।
स एव विसृज्यते उत्क्षिप्य अपि अपूर्यमाणे भरे ।। ]

[F34a] यस्य शैलस्य शिखरं तुल्यतेऽन्यापेक्षया हीनतया आकल्यते, यश्चोन्मूलन-काले पतित एकदेशेन च स्फुटितो हस्ताभ्यां धार्यते, स एव उत्क्षिप्य विसृज्यते हेतुमाह अपूर्यमाणे भरे भारो [8]नानेन पूर्यत इति । पतितत्वात् स्फुटित एकदेशेन भग्नो यः शैलो ध्रियते भूमाववस्थाप्यत उपेक्षत इति यावत्, यद्वा यस्य शैलस्यार्थादुन्मूलनार्थमपरिधृतस्य शिखरं तुल्यते उत्पाट्यते तथा यश्च शैलः पतितो हस्ताद्भ्रष्टः सन् स्फुटितो भिदां प्राप्तो ध्रियते हस्ताभ्यां गृह्यते स एवापूर्यमाणे भरे पर्वतान्तरवदिह महत्त्वं नास्तीति कृत्वा उत्क्षिप्यापि विसृज्यते लघुत्वादुपेक्षित इत्यर्थ इति **लो** (लोकनाथः) ॥६७॥

---

1 ०करण्डअ-उ० Ms. 2 विवज्जइ GB. 3 This word is placed after जस्स in GB. 4 ०अं फु० GB. 5 उक्ख० GB. 6 अपू० GB. 7 ०म्पि Ms. 8 नेन Ms.

लोअण-वत्तन्तरिए कणे रुवन्तीओ[1]
धारेन्ति बाहमइए कणेरु-वन्तीओ[2] ।
[3]मण्णेन्ति अ आसाअं विसं[4]णव-अणस्य
विरहम्मि जूह-वइणो विसण्ण-वअणस्स ॥६८॥

[लोचन-पत्रान्तरितान् कणान् रुदत्यः
धारयन्ति बाष्पमयान् करेणु-पङ्क्तयः ।
मन्यन्ते च आस्वादं विषं नव-तृणस्य
विरहे यूथ-पतेः विषण्ण-वदनस्य ॥ ]

विषण्णवदनस्य यूथपतेः करिणोऽर्थाद्[5] गिरिसंक्षोभभ्रष्टस्य विरहे रुदत्यः करेणुपंक्तयो हस्तिनीश्रेण्यो लोचनपत्रान्तरितान्, यद्वा लोचनवर्त्मनो नेत्रावरणपुटादन्तरितान् पृथग्भूतान्, यद्वा परनिपातादन्तरितमाच्छादितं लोचनपत्र[6] यैस्तान् बाष्पमयान् कणान् धारयन्ति। नवतृणस्य चास्वादं मधुरमपि विषं मन्यन्ते। दुःखिते मनसि सर्वमसह्यमिति भावः। करेणवां रेणोः स्थितिपरिवृत्तिरिति [7]करेणुशब्दे कणेरुरितिरूपम् ॥६८॥

सेलुद्धरणारोसिअ-भुअइन्द-णिराअअ-प्फण-णिसम्मन्ती ।
जह जह संखोहिज्जइ तह तह कइ-देह-भर-सहा होइ मही ॥६९॥

[शैलोद्धरणारोषित-भुजगेन्द्र-निरायत-फण-निषीदन्ती ।
यथा यथा संक्षोभ्यते तथा तथा कपि-देह-भर-सहा भवति मही ॥ ]

यथा यथा मही संक्षोभ्यते तथा तथा कपीनां देह एव शैलोन्मूलनारभत्या गौरवाद्भार इव तेषां सहा उद्वहनक्षमा भवति। कुत इत्याह शैलोद्धरणेनारोषितस्य भुजगेन्द्रस्य निरायतेषु फणेषु निषीदन्ती ॥६९॥

---

1 ०अन्तीओ GB. 2 ०अम्वि० Ms. 3 अगणेन्ति Ms. 4 ०णाव० Ms. 5 ०णो अर्थात् Ms. 6 ०पात्री Ms. 7 कणेरु० Ms; cf. Hemcandra VIII.2.116.

सञ्चालिअ-णिक्कम्पा भुआ-णिहाअ-विसमुक्खअ-सिला-वेढा ।
खुडिआ सिहरद्धेसु अ पवएहि णिअम्ब-बन्धणेसु अ सेला ॥७०॥

[सञ्चालित-निष्कम्पाः भुजा-निघात-विषमोत्खात-शिला-वेष्टाः ।
खण्डिताः शिखरार्धेषु च प्लवगैः नितम्ब-बन्धनेषु च शैलाः ॥ ]

ये शैलाः सञ्चालिता अपि रसातले दूरप्रवेशान् निष्कम्पा उन्मूलयितुमशक्यास्ते भुजानिघातेन[1] विषमितास्तत उत्खातशिलावेष्टाः सन्तः प्लवगैरूर्ध्वं शिखरेष्वधोनितम्बेषु खण्डिता मध्ये भञ्जयित्वा गृहीता इत्यर्थः । दूरं महीतलप्रवेशात् सम्यक् चालिताश्चालयितुं प्रयत्नविषया अपि निष्कम्पा गुरुत्वाद्वहनासामर्थ्येन तदर्थं लघूकरणाय भुजानिघातेन[2] विषममितास्तत उत्खाताः शिलावेष्टा येषामीदृशाः सन्तः शैलाः शिखरार्धेषु च नितम्बस्य बन्धनेषु सन्धिषु प्लवगैः खण्डिता ऊर्ध्वं मध्ये च भग्ना[3] गृहीता इत्यर्थ इति **लोकनाथः** ॥७०॥

उण्णामिअम्मिव णहं दूरं ओसारिआ विव दिसाहोआ ।
[4]उन्मूलेन्तिहि धरे पसारिअं मिव पवङ्गमेहि महि-अलं ॥७१॥

[उन्नामितं इव नभः दूरं अपसारिताः इव दिगाभोगाः ।
उन्मूलयद्भिः धरान् प्रसारितं इव प्लवङ्गमैः मही-तलम् ॥ ]

धरान् पर्वतानुन्मूलयद्भिः प्लवङ्गमैर्दूरमुन्नमितमिव नभ उत्क्षिप्यमाणस्य गिरेः शिखरैरुत्क्षिप्यमाणस्येव नभसो दर्शनादिति भावः । दूरं अपसारिता इव दिशां आभोगाः सन्निवेशाः पर्वताच्छन्नानां तदुन्मूलनेन दूरमुपलभ्यमानत्वादिति भावः । महीतलं दूरं प्रसारितमिव शैलावरोधविरहादिति भावः ॥७१॥

1 ०र्निघा० Ms. 2 ०निर्घा० Ms.
3 भङ्गा Ms. 4 ०म्मूलन्ते० GB.

दीसइ कइ-णिवहुक्खअ-धराहर-ट्ठाण-गहिर-विवरुत्तिण्णो ।
उप्पाअअव-अम्बो सेसाहि-फणा-[1]मणि-प्पहा-विच्छड्डो ॥७२॥

[दृश्यते कपि-निवहोत्खात-धराधर-स्थान-गभीर-विवरोत्तीर्णः ।
उत्पातातप-ताम्रः शेषाहि-फणा-मणि-प्रभा-विच्छर्दः ॥ ]

कपिनिवहोत्खातानां धराधराणामधःस्थाने यद्गभीरं विवरं तस्मादुत्तीर्णः शेषाहिफणामणिप्रभाविच्छर्द उत्पातातपताम्रो दृश्यते, विच्छर्दः समूहे देशी ॥७२॥

केलास-दिट्ठ-सारं गरुअम्पि भुआ-बलं णिसाअर-[F34b]वइणो ।
पवएहि पाडिएक्कं एक्क-करुक्खित्त-महिहरेहि लहुइअं ॥७३॥

[कैलास-दृष्ट-सारं गुरुकं अपि भुजा-बलं निशाचर-पतेः ।
प्लवगैः प्रत्येकं एक-करोक्षिप्त-महीधरैः लघूकृतम् ॥ ]

कैलासेन [2]शिष्टसारं कथितोत्कर्षं गुरुकमपि निशाचरपतेर्भुजबलं प्लवगैः प्रत्येकमेकैकेन प्लवगेन लघूकृतमधरीकृतम्, अत्र हेतुरेककरोत्क्षिप्तमहीधरैरिति रावणेन हि विंशत्या भुजैरुत्क्षिप्तं महारम्भवतापि कैलासो मनाक् चालितः । वानरैस्तु प्रत्येकमेककरेण हेलोत्क्षिप्तमहीधरै रावणभुजबलमुपहसितमिति भावः ॥७३॥

उक्खअ-गिरि-विवरोवइअ-दिणअराअव-मिलन्त-तम-संहाअं[3] ।
जाअं पविरल-तिमिरं आवण्डुर-धूम-धूसरं पाआलं ॥७४॥

[उत्खात-गिरि-विवरावपतित-दिनकरातप-मिलत्-तमः-संघातम् ।
जातं प्रविरल-तिमिरं आपाण्डुर-धूम-धूसरं पातालम् ॥ ]

उत्खातानां गिरीणां विवरैरवपतितेन दिनकरातपेन मिलन् तमःसंघातो यत्र तत् पातालं प्रविरलतिमिरत्वादापाण्डुरधूमधूसरं जातं एतेन पातालगतमूलानामपि गिरीणामुन्मूलनं सूचितम् ॥७४॥

---

1 ०प्फणा० GB. 2 Evidently based on the reading सिट्ठ which occurs nowhere. 3 ०संघाअं GB.

पवएहि अ णिरवेक्खं कओ करन्तेहि गिरिस-वासुद्धरणं ।
सामिअ-कज्जेक्क-रसो अअस-मुहे वि जस-भाअणं अप्पाणो ॥७५॥

[प्लवगैः च निरपेक्षं कृतः कुर्वद्भिः गिरिश-वासोद्धरणम् ।
स्वामिक-कार्यैक-रसः अयशो-मुखे अपि यशो-भाजनं आत्मा ॥ ]

गिरौ शेरत इति गिरिशाः पर्वतस्थाः प्राणिनस्तेषां वासोद्धरणमाश्रयध्वंसं कुर्वद्भिः प्लवगैरयशोमुखेऽप्ययशसः प्रारम्भेऽपि आत्मा यशोभाजनं कृतः । कुत इत्याह स्वामिकार्ये एकः केवलो रसोऽनुरागो येषां, प्रभुकार्यसम्पादनादेव तदयशसः क्षालनादिति भावः । गिरय एव स्ववासाः स्वाश्रयास्तेषामुद्धरणमिति **कुलनाथः** । चकारः पूर्वापेक्षया समुच्चय इति **कुलनाथः** ॥७५॥

होन्ति गरुआ वि लहुआ [1]पवअ-भुआ-सिहर-णिमिअ-वित्थअ-मूला ।
रहसुद्धाइअ-मारुअ-[2]उक्खिप्पेन्तोज्झरा धराहर[3]-णिवहा ॥७६॥

[भवन्ति गुरुकाः अपि लघुकाः प्लवग-भुजा-शिखर-निहित-विस्तृत-मूलाः ।
रभसोद्धावित-मारुतोत्क्षिप्यमाण-निर्झराः धराधर-निवहाः ॥ ]

प्लवगैर्भुजशिखरे 'णिमिआणि' निहितानि विस्तृतानि मूलानि येषां ते धराधरनिवहा गुरवोऽपि लघवो भवन्ति । हेतुमाह—रभसेन शैलमादाय गच्छतां प्लवगानां वेगादुद्धावितेन मारुतेनोत्क्षिप्यमाणा निर्झरा येषां, प्लवगभुजाशिखरेति विशेषणेन गिरिविवहनपरिपाटी कथिता । एतेन प्रारब्धे कर्मणि दैवस्याप्यनुकूलता सूचितेति **हर्षपालः** ॥७६॥

---

1 पवंग-भुअ० GB. 2 ०दूरुक्खित्तो० GB. 3 धराधर० B.

अह वेएण पवङ्गा सअलं आअड्ढिऊण महिहर[1]-णिवहं ।
ओवअणाहि वि लहुअं विसज्जिअ-कलअला[2]णहं उप्पइआ ॥७७॥

[अथ वेगेन प्लवङ्गाः सकलं आकृष्य महीधर-निवहम् ।
अवपतनात् अपि लघुकं विसृष्ट-कलकलाः नभः उत्पतिताः ॥ ]

अथानया परिपाट्या पर्वतोन्मूलनानन्तरं प्लवङ्गाः सकलं महीधरनिवहमाकृष्या-वपतनादपि लघुकं शीघ्रं यथा स्यात्तथा वेगेन हर्षवशाद्विसर्जितकलकला नभ उत्पतिताः ॥७७॥

चडुलेहि णिप्पअम्पा उप्पइअव्व-लहुएहि वित्थअ-गरुआ ।
एक्क-क्खेवेण णहं पक्खेहि व महिहरा कईहि विलइआ ॥७८॥

[चटुलैः निष्प्रकम्पाः उत्पतितव्य-लघुकैः विस्तृत-गुरुकाः ।
एक-क्षेपेण नभः पक्षैः इव महीधराः कपिभिः विलगिताः ॥ ]

निष्प्रकम्पा विस्तृतगुरुका महीधराः पक्षैरिव प्लवङ्गमैरेकेन क्षेपेणैकेनैव कर्षणेन नभो विलगिताः प्रापिताः । कपिपक्षयोः साम्यमाह—चटुलैरस्थिरैः सकम्पैः उत्पतितव्य उत्पतने लघुकैः ॥७८॥

पवअक्कन्त-विमुक्कं विसमुद्ध-प्फुडि[F35a]अ-पत्थिअ-णिअत्तन्तं ।
घडिअं घडन्त-णइ-मुह-सन्दाणिअ-सेल-णिग्गमं महि-वेढं ॥७९॥

[प्लवगाक्रान्त-विमुक्तं विषमोर्ध्व-स्फुटित-प्रस्थित-निवर्तमानम् ।
घटितं घटमान-नदी-मुख-संदानित-शैल-निर्गमं मही-वेष्टम् ॥ ]

[पू]र्वं पर्वतोत्पाटनावसरे प्लवगैराक्रान्तमनन्तरं पर्वतमादाय गमनाद्विमुक्तं महीवेष्टम्, उत्पाटितगिरिविवराणि यत्र तद्विवरासन्नं महीवलयं घटितं समस्थलीभूतम् । कुत इत्याह

1 महिअर० Ms. 2 ०कलअलं GB.

प्लवङ्गपदभरेण विषममत्यर्थमितस्ततो वा, ऊर्ध्वं स्फुटितमुपरिविदीर्णं सत् प्रस्थितमवपातुकं ततो निवर्तमानं प्लवगचरणभरेण भिन्नतया पतद्भिर्भूखण्डान्तरैः परस्परावष्टम्भात् पतनाक्षममित्यर्थः। एवं निम्नगमनस्वभावादुत्पाटितानां निजप्रभवगिरीणां शिखरेषु प्रतिनिवृत्य पतनाद्घटमानैः परस्परं सङ्गच्छमानैर्नदीमुखैः सन्दानिताः सम्बद्धीकृताः शैलनिर्गमाः (यत्र*)। समुद्र इव नदीनां गिरिविवरेऽपि पतनशालित्वख्यापनाय मुखपदमिति **लो** ( लोकनाथः )। अयं भावः। उत्पाटितगिरिविवराणां तत्रत्यनदीमुखजलैः प्रत्यागत्य पूरितानां स्फुटितोत्पतितैर्भूपार्श्वभागैः पूरणाद्भूतलसमतैव जातेत्यर्थः ॥७९॥

## हीरन्त-महिहराहिं मईहि भअ-हित्थ-पत्थिअ-णिअत्ताहिं।
## सोहन्ति खण-विवत्तिअ-ससम्भमुम्मुह-पलोइआइ वणाइं ॥८०॥

**[ह्रियमाण-महीधराभिः मृगीभिः भयोद्विग्न-प्रस्थित-निवृत्ताभिः।**
**शोभन्ते क्षण-विवर्तित-ससम्भ्रमोन्मुख-प्रलोकितानि वनानि ॥ ]**

ह्रियमाणो महीधरो यासां, यद्वा परनिपातान्महीधरेण सह ह्रियमाणाभिरतो भयेन 'हित्था' व्याकुलाः प्रस्थिता अन्यत्रान्यत्र गन्तुं चलिताः पर्वतमुल्लङ्घ्य गमनेन निपतनभयात् प्रतिनिवृत्ताश्चेति ताभिर्मृगीभिः ससम्भ्रममुद्गतं मुखं यत्रैवं यथा स्यात्तथा प्रलोकितानि वनानि शोभन्ते प्रीतिहेतवो भवन्तीत्यर्थः ॥८०॥

## उन्मूलिआण खुडिआ उक्खिप्पन्ताण उज्जुअं ओसरिआ।
## णिज्जन्ताण णिराआ गिरीण मग्गेण पत्थिआ णइ-सोत्ता ॥८१॥

**[उन्मूलितानां खण्डितानि उत्क्षिप्यमाणानां ऋजुकं अपसृतानि।**
**नीयमानानां निरायतानि गिरीणां मार्गेण प्रस्थितानि नदी-स्रोतांसि ॥ ]**

उन्मूलितानामुत्पाटितुं चालितानां गिरीणां मार्गेण खण्डितान्युत्क्षिप्यमाणानां तेषां मार्गे(ण*)ऋजुकमपसृतान्यधःप्रस्थापितानीत्यर्थः नीयमानानां तेषां मार्गेण[1] निरायतानि नदीस्रोतांसि। आश्रयास्थैर्यादाश्रितस्याप्यस्थैर्यस्यौचित्यादिति भावः ॥८१॥

उम्मुह-सारङ्ग-अणं अफुन्दइ[1] पलअ-[2]मेह-सारं गअणं ।
विवरब्भन्तर-विहअं गिरि-आलं सिहर-परिब्भन्त[3]-रवि-
हअं ॥८२॥

[उन्मुख-सारङ्ग-गणं आक्रामति प्रलय-मेघ-सारं गगनम् ।
विवराभ्यन्तर-विहगं गिरि-जालं शिखर-परिभ्रान्त-रवि-हयम् ॥ ]

त्रासादुन्मुखः सारङ्गाणां मृगाणां गणो यत्र, प्रलयमेघवत् सारं नीलवर्णमथवा प्रलयमेघस्यैव सार उत्कर्षो यस्य, विवराभ्यन्तरेषु विहगा यस्य, शिखरेषु परिभ्रान्ता रवेर्हया अश्वा यस्य तद्गिरिजालं गगनं 'अप्फुन्दइ'[1] आक्रामति स्थगयतीति यावत् । वेगेन नीयमानतया प्रलयमेघस्येव सार उत्कर्षो यस्य, अतएवोन्मुखः सारङ्गस्य मृगस्य गणो यत्र विवराभ्यन्तरे विहगा यस्य, अर्थात् त्रासादपसृता यस्य निविडतया शिखरेषु परिभ्रान्ताः पन्थानमप्राप्य इतस्ततो भ्रमणशीला रविहया यत्तेदृशं गिरिजालं कर्तृ इति **लोकनाथः** ॥८२॥

अंस-ट्ठविअ-महिहरा ऊसिअ[4]-डाहिण[5]-करावलम्बिअ-सिहरा ।
उत्ताण-वाम-कर-अल-धरिअ-णिअम्ब-पसरा णिअत्तन्ति
कई ॥८३॥

[अंस-स्थापित-महीधराः उच्छ्रित-दक्षिण-करावलम्बित-शिखराः ।
उत्तान-वाम-कर-तल-धृत-नितम्ब-प्रसराः निवर्तन्ते कपयः ॥ ]

अंसस्थापितमहीधरा उच्छ्रितेनोत्क्षिप्तेन दक्षिणकरेणावलम्बितं शिखरं यैः । उत्तानेन वामकरतलेन धृतो नितम्बप्रसरः प्रकटविस्तरो यैस्ते कपयो निवर्तन्ते ॥८३॥

---

1 अप्फुरणइ Ms. Cf, Hemchandra VIII. 4. 258. 2 मलिअ॰ GB. 3 ॰परिभमन्त॰ GB. 4 उब्भिअ॰ GB. 5 ॰दाहिण॰ GB.

पत्थाणे[1] च्चिअ पढमं भुअ-मेत्त-पहाविआण जं ण पहुत्तं ।
कह तं चिअ[2] ताणं च्चिअ[3] पहुप्पइ कईण महिहराण अ
गअणं ॥८४॥

[प्रस्थाने एव प्रथमं भुज-मात्र-प्रधावितानां यत् न प्रभूतम् ।
कथं तत् एव तेषां एव प्रभवति कपीनां महीधराणां च गगनम् ॥ ]

भुजमात्रप्रधावितानां कपीनां प्रथमं प्रस्थान एव यद्गगनं न प्रभूतं न पर्याप्तं कथं तदेव गगनं तेषामेव कपीनां महीधराणाञ्च प्रभवति परिमाणक्षमं भवति स्म । कथंशब्दो विस्मये । सस्मिता एव ते तत्रेत्यर्थं इति **कुलनाथः** ॥८४॥

वहइ पवङ्गम-लोओ सम-तुलिउक्खित्त-मि[F35b]लिअ-
मूलद्धन्ते ।
[4]एक्केक्कम-सिहरुग्गम-णिहसुप्पुसिअ-सरिआ-मुहे धरणिहरे ॥८५॥

[वहति प्लवङ्गम-लोकः सम-तुलितोत्क्षिप्त-मिलित-मूलार्धान्तान् ।
एक-क्रम-शिखरोद्गम-निघर्षोत्प्रोञ्छित-सरिन्-मुखान् धरणीधरान् ॥ ]

[समं तुलिताश्चो[5]]त्क्षिप्ताश्चेति [तथान्योन्यं] मिलिता मूलार्धान्ता येष्विति [एकैक]-शिखरोद्गमानां निघर्षेणोत्प्रोञ्छितं सरिन्मुखं येषां तान् महीधरान् कपिलोको वहति परस्परजिगीषया युगपत्संघट्टनेन नयतीत्यर्थः । सममेकदा तुलितानुत्पाटितान् धृतान् वा उत्क्षिप्तानूर्ध्वं नीतान् मिलितमूलार्धान्तानिति **लोक** ( लोकनाथः ) ॥८५॥

---

1 ०णा GB. 2 तच्चिअ Ms. 3 चिअ GB. 4 एक्क० GB.
5 Some of the words in the commentary are extremely blurred.

णिव्वण्णेऊण चिरं पवआ बोलेन्ति महिहर-भरक्कन्ता ।
साअर-पडिरूवाइं[1] पढमुक्खअ-विअड-महिहर-ट्ठाणाइं ॥८६॥

[निर्वर्ण्य चिरं प्लवगाः अतिक्रामन्ति महीधर-भराक्रान्ताः ।
सागर-प्रतिरूपाणि प्रथमोत्खात-विकट-महीधर-स्थानानि ॥ ]

निकटवर्तिनः प्रथमोत्खाता ये विकटा विशाला महीधरास्तेषां स्थानानि[2] [ चिरोत्खात-महीधरत्वात् ? ]......जलपूर्णानि प्लवगाः महासागरेण......सागरप्रतिरूपाणि दूरस्थित-महीधराणामानयनगता महीधराक्रान्ताश्चिरं निर्वर्ण्य व्यपक्रामन्ति । अयमेव सागर इति संशयानन्तरं निश्चित्येति भावः ॥८६॥

खण-सन्धिअ-मेह-तडा[3] वेउक्खेप्पन्त[4]-गिरि-णिराअ-ट्ठविआ ।
परिवड्ढन्ताआमा वहन्ति व णहङ्गणे महा-णइ-सोत्ता ॥८७॥

[क्षण-संहित-मेघ-तटानि वेगोत्क्षिप्यमाण-गिरि-निरायत-स्थापितानि ।
परिवर्धमानायामानि वहन्ति इव नभोऽङ्गणे महा-नदी-स्रोतांसि ॥ ]

क्षणं संहिता मेघा एव तटाः कूलानि यैस्तानि, तथा वेगेनोत्क्षिप्यमाणेषु गिरिषु[5] निरायतस्थापितानि पर्वतानां वेगेन नीयमानत्वात् परिवर्धमान आयामो दैर्घ्यं येषां तानि, [महा]नदीस्रोतांसि[नभोऽङ्गणे] भूमण्डल इव वहन्ति । वेगेनोत्क्षिप्यमाणगिरेः सकाशान्नि-रायतप्रस्थितान्यतएव परिवर्धमानायामानीति **लो** ( लोकनाथः ) ॥८७॥

सेलेसु सेल-तुङ्गा णह-अल-मिलिएसु मिलिअ-दन्त-प्फलिहा ।
पवअ-विहुएसु विहुआ णिव्वडिएसु वि ण णिव्वडन्ति[6] वण-
गआ ॥८८॥

[शैलेसु शैल-तुङ्गाः नभस्तल-मिलितेषु मिलित-दन्त-परिघाः ।
प्लवग-विधुतेषु विधुताः निर्वलितेषु अपि न निर्वलन्ति वन-गजाः ॥ ]

---

1 ०आइं GB. 2 Some words are extremely blurred in the commentary here. 3 ०अडा GB. 4 ०क्खिप्प० GB.
5 This word is wanting in commentary. 6 ०लन्ति० GB.

शैलानां वनगजानाञ्च साधर्म्यमाह। शैलतुङ्गा वनगजा अर्थात् पर्वतस्थिताः शैलेषु पर्वतान्तरेषु नभस्तलमिलितेषु सत्सु मिलितदन्तपरिघाः स्वनिष्पीडनभयान्निहितदन्ता इत्यर्थः, प्लवगविधुतेषु तेषु विधुता निर्भरनिहितदन्ततया न स्खलिता इति भावः। निर्वलितेष्वाश्रयपर्वतात् पृथग्भूतेषु गिरिषु न पृथग्भवन्ति, ईदृशविपत्तौ बन्धुभिरिव पर्वतैः परित्यक्तमाश्रयपर्वतं न मुञ्चन्तीति भावः। यद्वा शैलेषु शैलगुरुका नभस्तले मिलितेष्वन्योन्यलग्नेषु मिलितदन्तपरिघा मिलितदन्तार्गलाः प्लवगैर्विधुतेषु विधुताः कम्पिता निर्वटितेष्वपि न निर्वटन्ति न पृथग्भवन्ति वनगजाः पर्वतात् पर्वतान्तरं गत्वा लग्नाः पृथग्भूतेष्वपि परस्परोषवन्तः पृथग्भवन्तीत्यर्थः ॥८८॥

वेविर-पओहराणं दिसाण गिरि-विवर-दिट्ठ-तणु-मज्झाणं।
कुसुमरएण-सुरहिणा अग्घाएण व णिमीलिआइ मुहाइं ॥८९॥

[वेपनशील-पयोधराणां दिशां गिरि-विवर-दृष्ट-तनु-मध्यानाम्।
कुसुम-रजसा सुरभिणा आघ्रातेन इव निमीलितानि मुखानि ॥]

गिरिक्षोभाद्वेपनशीलाः पयोधरा यासां तथा गिरीणां विवरेण च्छिद्रेण दृष्टस्तनुः [पर्वतावृतत्वात् क्षीणो (कृशो)] मध्यो यासां दिशां मुखानि [गतिवेगवशादुत्थितेन] सुरभिणा कुसुमरजसाघ्रातेनेव निमीलितानि छन्नानि। अन्या अपि नार्यो भाववशाद्वेपमानस्तना दृष्टकृशमध्यदेशाः कुसुमरजसाघ्रातसुखेन नयननिमीलनान्निमीलितमुख्यो भवन्तीति [व्याख्या] ॥८९॥

पवआ कर-अल-धरिए णह-मुह-णिब्भिण्ण-वेवमाण-विसहरे।
गइ-वस-विसट्ट-सिहरे [1]बीएहि करेहि सण्ठवेन्ति[2] महिहरे ॥९०॥

[प्लवगाः कर-तल-धृतान् नखमुख-निर्भिन्न-वेपमान-विषधरान्।
गति-वश-विशीर्ण-शिखरान् द्वितीयैः करैः संस्थापयन्ति महीधरान् ॥]

---

1 बिइअ-करेहि GB. 2 परिसंठवेन्ति GB ; सण्ठवन्ति Ms.

करतलेनार्धादेकेन धृतान् नखमुखैर्निर्भिन्ना वेपमाना विषधरा येषां, गतिवशाद्विशीर्णानि शिखराणि येषां, तान् महीधरान् द्वितीयैः[1] करैः प्लवगाः संस्थापयन्ति समीहितदेशे निवेशयन्ति। भग्नमपि स्वस्थानं नीत्वा धारयन्तीत्यर्थ इति **कुलनाथः** ॥८६॥

**णह-अल-वेअ-पहाविअ-पवङ्ग-हीरन्त-सेल-सि[F36a]हर-क्खलिआ।**
**मग्गागअ-सेलाणं होन्ति मुहुत्तोज्झरा महा-णइ-सोत्ता ॥९१॥**

**[नभस्तल-वेग-प्रधावित-प्लवङ्ग-ह्रियमाण-शैल-शिखर-स्खलितानि।**
**मार्गागत-शैलानां भवन्ति मुहूर्त-निर्झराः महा-नदी-स्रोतांसि ॥ ]**

[F36a] नभस्तले वेगेन प्रधावितैः प्लवङ्गैर्ह्रियमाणस्य शैलस्य शिखरात् स्खलितानि महानदीस्रोतांसि मार्गागतानां शैलानां मुहूर्तनिर्झरा भवन्ति। वेगवातेनाकाश एव तानि स्थितानि पश्चादागतशैलानां मुहूर्तनिर्झराणि भवन्ति महानदीस्रोतांसि। यद्वा, मुहूर्तनिर्झराणि नदीस्रोतांसि गतानां शैलानां मार्गा भवन्तीति रूपकम्। यद्वा, महानदी गगनगङ्गा तस्याः स्रोतांसि ह्रियमाणशैलशिखरखण्डितानि [पश्चादागतशैलानां मुहूर्त]-निर्झराणि भवन्ति। एतेनाकाशगङ्गापर्यन्तमुत्पाटिता इति ध्वनितम् ॥६१॥

**वेउक्खअ-दुम-णिवहे तड-पब्भार-णिह-णिव्वडन्त[2]-जलहरे।**
**णेन्ति जरढाअवाहअ-दरि-विवर-णिसण्ण-गअ-उले धरणिहरे ॥९२**

**[वेगोत्खात-द्रुम-निवहान् तट-प्राग्भार-निभ-निर्वलमान-जलधरान्।**
**नयन्ति जरठातपाहत-दरी-विवर-निषण्ण-गज-कुलान् धरणी-धरान् ॥ ]**

वेगोत्खाता द्रुमनिवहा येषां तटप्राग्भारनिभा 'णिव्वलन्त' पृथग्भवन्तो जलधरा येषां, सूर्यसन्निधानात् जरठेन[3] कठिनेनातपेनाहतं दरीविवरेषु निषण्णं गजकुलं येषु तान् तान् महीधरान्नयन्त्यर्थात् कपयः समुद्रकूलं प्रापयन्तीत्यर्थः ॥६२॥

---

1 °यै Ms. 2 °णिब्भ° Ms; °व्वल° GB.

3 जठरेण Ms.

धावइ वेअ-पहाविअ-पवङ्ग-हीरन्त-सेल-सिहरन्तरिओ ।
छाआणुमग्ग-लग्गो तुरिअं छिण्णाअवो[1] व्व मलउच्छङ्गो ॥९३॥

[धावति वेग-प्रधावित-प्लवङ्ग-ह्रियमाण-शैल-शिखरान्तरितः ।
छायानुमार्ग-लग्नः त्वरितं छिन्नातपः इव मलयोत्सङ्गः ॥ ]

वेगेन प्रधावितैः प्लवङ्गैः ह्रियमाणा[नां शैलानां शिख]रैरन्तरितो व्यवहितः कदाचिच्छादितः कदाचिन्मुक्त इत्यर्थः मलयोत्सङ्गः छायानुमार्गलग्नश्छिन्नातल इव त्वरितं धावति । यथा मेघमालान्तरालनिपतित आतपनिवहः पवनप्रेरितमेघच्छायाप्रसरणादधावन्नपि धावन्निव दृश्यते तथा मलयोत्सङ्गोऽपि शैलशिखरच्छायान्तरितः सन् धावन्निव दृश्यते इत्यर्थः ॥६३॥

आलोइआ ण दिट्ठा [2]सच्चविआ ण गहिआ समोवइएहिं ।
उम्मूलिआ वि जेहिं उअहिं[3] तेहि ण णिआ कईहि महि-
हरा ॥९४॥

[आलोचिताः न दृष्टाः सत्यापियाः न गृहीताः समवपतितैः ।
उन्मूलिताः अपि यैः उदधिं तैः न नीताः कपिभिः महीधराः ॥ ]

मायासौ गिरिरुत्पाट्य नीयत इति दू[रस्थैरालो]चिताः समवपतितैर्न दृष्टाः तन्निकटस्थेन नीतत्वात् । एवं सत्यापिता ग्रहीतुं धाविता न गृहीताः तदन्येन स्वीकृतत्वात्, यद्वा दूरस्थैरालोचिताः समीपं गत्वा न दृष्टास्तत्समीपस्थेन नीतत्वात् सत्यापिता ग्रहीतुमारब्धा अपि न गृहीताः कृष्टाकृष्टिकया अन्यैर्नीतत्वात् । 'संठविआ' **इति कुलनाथपाठे** संस्थापिताः इत्यर्थः सज्जीकृता अपि न गृहीताः ग्रहीतुं न प्राप्तास्तैः कपिभि[रन्यासक्ततया महीधरा उदधिं]नीताः सतात्पर्यै रेव नीतत्वात् । एतेन प्रभूतवानरबलस्योत्साहात् प्रभुकार्यसंभ्रमातिशयो दर्शितः ॥६४॥

---

1 ०अओ GB. 2 संठ० Ms, which has '०च्चा०' noted marginally.
3 This word is placed after तेहि ण in GB.

भग्ग-दुम-भङ्ग-भरिओ उक्खित्त-विसट्ट-पडिअ-महिहर-विसमो।
पवआण उअहि-लग्गो लक्खिज्जइ [1]बीअ-संकमो व्व गइ-वहो ॥९५

[भग्न-द्रुम-भङ्ग-भरितः उत्क्षिप्त-विशीर्ण-पतित-महीधर-विषमः।
प्लवगानां उद्धि-लग्नः लक्ष्यते द्वितीय-संक्रमः इव गति-पथः ॥ ]

भग्नानां द्रुमाणां भङ्गैः खण्डैर्भरितः प्रागुत्क्षिप्ताः पश्चाद्विघटिताः सन्तः पतिता ये महीधरास्तैर्विषमः प्लवगानामुदधिलग्नो गतिपथो द्वितीयसंक्रम इव अपरः सेतुरिव लक्ष्यते ॥६५॥

वेएण गहिअ-सेलं वेला-बोलन्त-[2]पडिणिअत्तोपइअं।
जाअं रामाहिमुहं अणुराउप्फुल्ल[3]-लोअणं कइ-सेण्णं ॥९६॥

[वेगेन गृहीत-शैलं वेला-व्यतिक्रान्त-प्रतिनिवृत्तावपतितम्।
जातं रामाभिमुखं अनुरागोत्फुल्ल-लोचनं कपि-सैन्यम् ॥ ]

राअ-सिरि-पवरसेणस्स एत्थ रावण-वहे महाकाव्यम्मि।
सेलुद्धलणो णाम छट्ठो आसासओ परिसम [F36b]त्तो ॥

राज-श्री-प्रवरसेनस्य अत्र रावण-वधे महाकाव्ये।
शैलोद्धरणः नाम षष्ठः आश्वासकः परिसमाप्तः ॥

गृहीतशैलं कपिसैन्यं वेगेन रामादिभिरध्यासितां वेलां कूलं व्यतिक्रम्य गतं ततः प्रतिनिवृत्तं सदनुरागोत्फुल्ललोचनं रामाभिमुखं जातम् ॥६६॥

इति षष्ठ आश्वासः ॥

---

1 बिइअ० GB. 2 ०बोले० GB. 3 अणुराअ० Ms.

## सत्तमो आसासओ

अह ते विक्कम-णिहसं दहवइण-पआव-लङ्घणग्ग-क्खन्धं ।
आढत्ता विरएउं सासअ-राम-जस-लञ्छणं सेउ-वहं ॥१॥

[अथ ते विक्रम-निकषं दशवदन-प्रताप-लङ्घनाग्र-स्कन्धम् ।
आरब्धाः विरचयितुं शाश्वत-राम-यशो-लाञ्छनं सेतु-पथम् ॥ ]

इदानीं सेतुबन्धाय प्रक्षिप्यमाणैः पर्वतैः समुद्रक्षोभमाह । अथ पर्वतागमनानन्तरं विक्रमस्य शौर्यसम्पदो निकषं परीक्षास्थानं उत्कर्षपरीक्षाहेतुरिति कु(कुलनाथः) विक्रमस्य तेजोमयत्वात् कनकसाम्यं [1]निकषपदव्यङ्ग्यं सेतोः पाषाणमयत्वात् हेतुतया च निकर्षसाम्यमिति श्री(श्रीनिवासः) दशवदनप्रतापलङ्घनायाग्रस्कन्धं सैन्याग्रसन्निवेशं शाश्वतं रामयशोलाञ्छनं चिह्नं सेतुपथं विरचयितुमारब्धा अर्थात् कपयः ॥१॥

णवरि अ [2]णह-अल-धरिआ मुक्का उअहिम्मि [3]वाणरेहि महिहरा ।
आइ-वराह-भुएहिं व पलउव्वहण-दलिआ महि-अलद्धन्ता ॥२॥

[अनन्तरं च नभस्तल-धृता मुक्ताः उदधौ वानरैः महीधराः ।
आदि-वराह-भुजैः इव प्रलयोद्वहन-दलिताः महीतलार्धान्ताः ॥ ]

उन्मूलनान्तरञ्च नभस्तले धृता महीधरा वानरैरुदधौ मुक्ताः । दृष्टान्तमाह—आदिवराहस्य विष्णोर्भुजैर्यदुद्वहनमुत्क्षेपणं तेन दलिता महीतलैकदेशा इव तेऽप्युदधौ मुक्ताः । प्रकृतेऽपि प्रलये राक्षसानां विनाशसमये पर्वता उदूढाः । तदुद्वहनमुत्तोलनमिति कु(कुलनाथः) ॥२॥

---

1 ॰व्यङ्ग्यं Ms.  2 महि॰ GB (But CKS णह॰)  3 ॰हिं Ms.

णिवडन्तम्मि ण दिट्ठो[1] दूरोवइअम्मि कम्पिओ गिरि-णिवहे ।
खण-वडिअम्मि[2] विलुलिओ अत्थमिअम्मि परिवड्ढिओ सलिल-
णिही ॥३॥

[निपतति न दृष्टो दूरावपतिते कम्पितो गिरि-निवहे ।
क्षण-पतिते विलुलितः अस्तमिते परिवर्धितः सलिल-निधिः ॥ ]

क्षेपणानन्तरं पतनमाह । निपतति गिरिनिवहे सलिलनिधिर्न दृष्टः तेनैव स्थगितत्वात् । दूरादवपतिते कम्पितस्तत्प्रेरितवाताहतत्वात्, क्षणात् पतिते विलुलितः पर्वतघातेनान्दोलितत्वात् । अस्तमिते परिवर्धितः शैलपूरितगर्भत्वात् ॥३॥

णिहउव्वत्त-जलअरं कड्ढिअ-काणण-भमन्त-[3]भरिउच्छङ्गं ।
जाअं कलुस-च्छाअं [4]पढमुच्छलिआगअं महोअहि-सलिलं ॥४॥

[निहतोद्वृत्त-जलचरं कृष्ट-कानन-भ्रमद्-भरितोत्सङ्गम् ।
जातं कलुषच्छायं प्रथमोच्छलितागतं महोदधि-सलिलम् ॥ ]

निहताः सन्त उद्वृत्ता उत्तानीभूता जलचरा यत्र, पर्वतपतनात् प्रथमोच्छलितगमनागमनेन कृष्टैः काननैर्भ्रमद्भिर्भरित उत्सङ्गो यस्य तन्महोदधिसलिलं कलुषच्छायं जातं समुद्रकूलरेणुभिराविलं जातमिति **लो** ( लोकनाथः )। अत्रापनीतादिपदपरीहारेण यत् कृष्टपदं दत्तं तेन काननस्य दृढमूलत्वं जलवेगस्य च तदुन्मूलनान्महत्त्वं सूचितम् ॥४॥

सलिलत्थमिअ-महिहरो पुणो वि अदिट्ठ-मिलिअ-गिरि-संघाओ ।
तह-घटिअ-पव्वओ विअ[5] दीसइ णह-साअरन्तरालुद्देसो ॥५॥

[सलिलास्तमित-महीधरः पुनरपि अदृष्ट-मिलित-गिरि-संघातः ।
तथा-घटित-पर्वतः इव दृश्यते नभः-सागरान्तरालोद्देशः ]

---

1 इ० Ms. (C also इ०) 2 ०प० GB. 3 ०भमिरु० GB.
4 पढ्ढमु० Ms. 5 विव Ms.

सलिले अस्तमिता महीधरा यत्तद्देशोऽपि नभःसागरयोरन्तरालोद्देशः, तथा पूर्ववद् घटितपर्वत इव दृश्यते, कीदृशः पुनरप्यदृष्टमिलितो गिरिसंघातो यत्र। तथा तेन प्रकारेण घटितपर्वत इव दृश्यत इति कु (कुलनाथः)। एतेन निर्झरसन्ततिः प्रतिक्षणं विच्छिद्यमानापि तथापि व्यवस्थितेव लक्ष्यते तथैवाविच्छिन्नमिलित उत्क्षिप्तपतितानां गिरीणां सन्तान इत्युक्तं भवति ॥५॥

**जणिअं पडिवक्ख-भअं तुलिआ सेला धुओ कईहि[1] समुद्दो ।**
**ण हु णवर हिअअ-सरा आरम्भा वि गरुआ महा-लक्खाणं॥६॥**

**[जनितं प्रतिपक्ष-भयं तुलिताः शैलाः धुतः कपिभिः समुद्रः ।**
**न खलु केवलं हृदय-साराः आरम्भाः अपि गुरुकाः महा-लक्ष्याणाम् ॥ ]**

महल्लक्ष्यमुद्देश्यं येषां, महल्लक्ष्यं सिषाधयिषितं येषामिति **लोकनाथः**। ते महालक्ष्यास्तेषां न खलु केवलं हृदयस्य सारा व्यवसायविशेषा गुरुकाः किन्त्वारम्भा कार्यसाधनोपाया अपि गुरुका अन्यैर्दुष्कराः। तदेवाह कपिभिर्जनितं प्रतिपक्षभयं तुलिताः शैला धुतः समुद्र इति ॥६॥

**जो दीसइ धरणिहरो[2] [F37a] णज्जइ तेणेअ[3] वज्झइ त्ति समुद्दो ।**
**उअहिम्मि[उण[4]] वडन्ता कत्थ गअ त्ति सलिले ण णज्जन्ति**
**धरा ॥७॥**

**[यः दृश्यते धरणीधरः ज्ञायते तेनैव बध्यते इति समुद्रः ।**
**उदधौ पुनः पतन्तः कुत्र गता इति सलिले न ज्ञायन्ते धराः ॥ ]**

[F37a] यो दृश्यते धरणीधरस्तेनैव समुद्रो बध्यत इति ज्ञायते, उदधौ पतन्तः पुनः पतनमात्रादेव सलिले धराः पर्वताः [5]कुत्र गता इति न ज्ञायन्ते। अत्र धरणीधर इत्येक-

---

1 °हिं Ms. 2 °णिवहो C. 3 एएण GB. (but C and Ms agree). 4 Ms left it out. 5 Ms has only क here.

वचनेन एकस्यैव समुद्रबन्धनक्षमत्वं, धरा इति बहुवचनेन शतशस्तथाविधा एव समुद्रे पतनमात्रादेव लीयन्त इति ध्वनितम् । [1]एएणेति पाठे एतेनेत्यर्थे एवकारस्य न्यूनता चिन्त्या, सलिल इति पदाज् जले मग्ना एव गिरयो न तु समुद्रतले इति ध्वन्यते ॥७॥

[2]वाणर-वेआविद्धा[3] णिअअ-वलन्तोज्झरावलि[4]-परिक्खित्ता ।
अप्पत्त च्चिअ उअहिं भमन्ति आवत्त-मण्डलेसु व सेला ॥८॥

[वानर-वेगाविद्धाः निजक-वलमान-निर्झरावली-परिक्षिप्ताः ।
अप्राप्ताः एव उदधिं भ्रमन्ति आवर्त-मण्डलेषु इव शैलाः ]

वानरैर्वेगेनाविद्धाः क्षिप्ता निजाभिर्वलन्तीभिर्निर्झरावलीभिः परिक्षिप्ता वेष्टिता उदधिमप्राप्ता एवावर्तमण्डलेष्विव शैला भ्रमन्ति ॥८॥

सअल-महि-वेढ-विअडो सिहर-सहस्स-पडिरुद्ध-रवि[5]-रह-मग्गो ।
[6]अइ-तुङ्गो वि महिहरो तिमिङ्गिलस्स वअणे[7]तणम्मिव णट्ठो ॥९॥

[सकल-मही-वेष्ट-विकटः शिखर-सहस्र-प्रतिरुद्ध-रवि-रथ-मार्गः ।
अति-तुङ्गः अपि महीधरः तिमिङ्गिलस्य वदने तृणमिव नष्टः ॥ ]

अतितुङ्गोऽपि महानपि महीधरस्तिमिङ्गिलस्य जलजन्तुविशेषस्य वदने तृणमिव नष्टो वडिशपिशितपिण्डमिवादृश्यतां गतः । कीदृशो महान् इत्याह सकलमहीवेष्टवद्विकटो विशालः शिखरसहस्रप्रतिरुद्धरविरथमार्गः अति[तुङ्ग]विशेषणेन उच्चैस्त्वं द्वितीयेन विस्तीर्णत्वं कथितम् ॥९॥

---

1 एशनेति Ms. 2 This verse stands as the 10th one in GB. (vide S). 3 ०इद्ध GB. 4 पिहुल-वलन्त-णिअओज्झर० GB. 5 ०रह० GB. 6 इअ तु० GB. 7 तणं व प० GB.

पव्वअ-सिहरुच्छित्तं धावइ जं जं जलं णहङ्गण-हुत्तं ।
तं तं[1] रअणच्छविहिं दीसइ णक्खओ-मण्डलं व पडन्तं ॥१०॥

[पर्वत-शिखरोत्क्षिप्तं धावति यत् यत् जलं नभोऽङ्गनाभिमुखम् ।
तत् तत् रत्न-च्छविभिः दृश्यते नक्षत्र-मण्डलं इव पतत् ॥ ]

पर्वतशिखरादुत्क्षिप्तं यज् जलं नभोऽङ्गनाभिमुखं धावति, तत्तदेव समं पतन् नक्षत्रमण्डलमिव रत्नच्छविभिर्दृश्यते ॥१०॥

खण-मेलिअपव्विद्धो[2] सिहरन्तर-णिन्त-रित्त-वाणर-लोओ ।
पच्छा पडइ समुद्दे अण्णो मिलइ पढमं णहे गिरि-णिवहो ॥११॥

[क्षण-मेलितापविद्धः शिखरान्तर-निर्यद्-रिक्त-वानर-लोकः ।
[पश्चात् पतति समुद्रे अन्यः मिलति प्रथमं नभसि गिरि-निवहः ॥ ]

क्षणादतर्कितं मेलितः समुपस्थापितः अपविद्धः क्षिप्तः, शिखराणामन्तरे निर्यन्निःसरन् रिक्तः शैलोत्क्षेपणात् तुच्छो वानरलोको यस्मात् स गिरिनिवहः पश्चात् समुद्रे पतितः, प्रथममन्यो नभसि मिलितः । एतेन वानराणां शीघ्रमहीधरोपस्थापनमुक्तम् । **लोकनाथस्तु** क्षणान्मेलित उपनीतोऽनन्तरं प्रक्षिप्तः क्षिप्यमाणानामुपनीतानाञ्च गिरीणां सान्द्रत्वाच्छिखराणामन्तरेणावकाशेन निर्यन् रिक्तः क्षिप्तपर्वततया शून्यहस्तो वानरलोको यत्र तादृशः । प्रभुकार्ये त्वरातिशयः सूचितः ॥११॥

दीहा वलन्त-विअडा रसन्ति उअहिम्मि मारुअ-भरिज्जन्ता ।
पाआलोअर-गहिरा रहसोसुद्धाण[3] महिहराण गइ-वहा ॥१२॥

[दीर्घाः वलमान-विकटाः रसन्ति उदधौ मारुत-भ्रियमाणाः ।
पातालोदर-गभीराः रभसावपातितानां महीधराणां गति-पथाः ॥ ]

---

1 रअणेहि समं G ; रअणेहिँ समं B. 2 अ-प्पविद्धो G ; मेलिआपविद्धो B.
3 ०सोविद्धाण GB.

गिरीणां रसातलप्रवेशाद् दीर्घा अधोगच्छत्-पर्वतानां वलनाद् वलन्तस्तिर्यग्भूता विकटा विशालाः पातालोदरवद्गभीराः पातालवदुदरे गभीरा वा, रभसाविद्धानां वेगक्षिप्तानां महीधराणां गतिपथा मारुतेन भ्रियमाणाः सन्त उदधौ रसन्ति शब्दायन्ते ॥१२॥

उक्खित्त-विमुक्काइं णहम्मि एक्केक्कमापडण-भिण्णाइं[1] ।
वज्ज-भउप्पित्थइं[2] व अइन्ति[3] रअणाअरं[4] गिरि-सहस्साइं ॥१३॥

[उत्क्षिप्त-विमुक्तानि नभसि एकैक-क्रम-पतन-भिन्नानि ।
वज्र-भयोद्विग्नानि इव यान्ति रत्नाकरं गिरि-सहस्राणि ॥ ]

उत्क्षिप्तानि स्कन्धदेशतो हस्ताभ्यां ऊर्द्धं कृत्वा क्षिप्तानि नभस्यन्योन्यपतनेन भिन्नानि गिरिमहस्राणि वज्रभयोद्विग्नानीव रत्नाकरमधिगच्छन्ति, रत्नाकरपदेन शरणागतपरित्राणकारित्वं सूचितम् ॥१३॥

भिण्ण-सिला-अल-सिहरा णिअअ-[F37b]दुमोसरिअ-कुसुम-
रअ-धूसरिआ ।
ढमं पडन्ति सेला पच्छा[5] वाउद्धआ[6] महाणइ-सोत्ता ॥१४॥

[भिन्न-शिला-तल-शिखराः निजक-द्रुमापसरत्-कुसुम-रजो-धूसरिताः ।
प्रथमं पतन्ति शैलाः पश्चात् वातोद्धृतानि महानदी-स्रोतांसि ॥ ]

[F37b] भिन्नानि दूरीभूतानि वा शिलातलानि शिखराणि च येषां तथा निजकद्रुमादपसृतैः कुसुमरजोभिर्धूसरिताः शैलाः प्रथमं पतन्ति पश्चाद्वातोद्धृतानि महानदीस्रोतांसि पश्चात्-पतने वातोद्धृतत्वं हेतुः। एतेन शिलातलशिखरयोः पर्वतस्य महानदीनाञ्च यथाक्रमं परिजनत्वं स्त्रीत्वञ्च समाहितम्। अन्यत्रापि स्वामिनि विपन्ने परिजनाः पृथग्भवन्ति स्त्रियश्च क्षिप्ताः पतन्ति ॥१४॥

---

1 Ms omits the first bar (stop). 2 ०इ G ; ०व्विग्णाइँ B.
3 पडन्ति GB. ( KS have यान्ति रत्नाकरं also अइन्ति ) 4 ०रे GB.
5 पच्चा Ms. 6 ०द्धुआ GB.

णिम्मल-सलिलब्भन्तर-विहत्त[1]-दीसन्त-विसम-गइ-सञ्चारा ।
णासन्ति णिच्चल-ट्ठिअ-पवङ्गमालोइआ चिरेण महिहरा ॥१५॥

[निर्मल-सलिलाभ्यन्तर-विभक्त-दृश्यमान-विषम-गति-सञ्चाराः ।
नश्यन्ति निश्चल-स्थित-प्लवङ्गमालोकिताः चिरेण महीधराः ॥ ]

निर्मलसलिलाभ्यन्तरे विभक्तं स्फुटं दृश्यमानो विवर्तनवशाद् विषमगतिसञ्चारोऽधःप्रवेशो येषां कलसकर्परादिवत्तिर्यग्दशापन्नः सञ्चारो येषां, 'गतिः स्त्रीज्ञान-दशयोर्मार्गे यात्राभ्युपाययो'-रिति **मेदिनी** इति **लोकनाथः** । ते महीधरास्तथाप्रमाणा अपि अस्तायन्ते इत्यवधानान्निश्चल-स्थितैः प्लवङ्गमैरालोकिताश्चिरेण नश्यन्त्यदर्शनं गच्छन्ति ॥१५॥

फेण-कुसुमन्तरुब्भिण्ण[2]-केसराआर-वेविर-मऊहाइं ।
सूएन्ति पवन्ताइं मूलक्खुहिअं[3] महोअहिं रअणाइं ॥१६॥

[फेन-कुसुमान्तरोद्भिन्न-केसराकार-वेपनशील-मयूखानि ।
सूचयन्ति प्लवमानानि मूल-क्षुभितं महोदधिं रत्नानि ॥ ]

फेना एव कुसुमानीव तन्मध्यादुत्तीर्णाः केशराकारा वेपमानाः सलिलान्दोलनादस्थिरा मयूखा येषां फेनस्य कुसुमस्येवान्तरान् मध्यादिति **कुलनाथः** । तानि प्लवमानानि रत्नानि मूलपर्यन्तं क्षुभितं महोदधिं कथयन्ति, मूलस्थितानां रत्नानामुद्गमात्तथाप्रतीति-र्जाता ॥१६॥

विहुणइ वेलं व महिं भिन्दइ समअं व धरणिहर-संघाअं ।
गेण्हइ भअं व गअणं मुअइ सहाअं व साअरो पाआलं ॥१७॥

[विधुनोति वेलां इव महीं भिनत्ति समयं इव धरणीधर-संघातम् ।
गृह्णाति भयं इव गगनं मुञ्चति स्वभावं इव सागरः पातालम् ॥

1 ०विमत्त० Ms. 2 ०हत्तिणं GB. 3 मूलु० GB. (Cf. K ०ल-क्षुभितं ; S ०लोत्खनितं)

सागरो वेलां सलिलसंघातमिव महीं विधुनोति सलिलकम्पात्तस्या अपि कम्पात्। वेलामिवेत्यादि सहोपमेयम्। न केवलं महीमपीत्यादि योज्यमिति **कुलनाथः**। समय [1]जगदलङ्घनमर्यादामिव धरणीधरसंघातं कूलगतं गर्भगतं भिनत्ति निपतितपर्वतजनितान्दोलना-जगदपि पर्वतानपि प्लावयतीत्यर्थः, भयमिव गगनं गृह्णाति गगनसाम्याद्भयस्य महत्त्वमुक्तं, स्वभावधैर्यमिव पातालं मुञ्चति पातालसाम्येन स्वभावस्यानभिभवनीयत्वमुक्तम्। प्रकृतोपमेयम् ॥१७॥

## पल्हत्थन्ति वलन्ता चल-विडवन्तर-णिअत्त-तरु-पारोहा।
## मूलुण्णामिअ-जलआ अहोमुहन्दोलिओज्झरा धरणिहरा ॥१८॥

**[पर्यस्यन्ति वलन्तः चल-विटपान्तर-निवृत्त-तरु प्ररोहाः।**
**[मूलोन्नामित-जलदाः अधोमुखान्दोलित-निर्झराः धरणीधराः ॥ ]**

वलन्तः प्लवगैरधःशिखरीकृत्य क्षिप्तत्वात् परिवृत्तिं गच्छन्त अतएव चला जलकम्पेनास्थिराः सन्तो विटपान्तरैर्निवृत्ता वैपरीत्येनास्तास्तरुप्ररोहा येषां तथा मूलैरुन्नामिता जलदा यैः। अधोमुखाः सन्त आन्दोलिता निर्झरा येषु। ईदृशाः सन्तो धरणीधराः पर्यस्यन्ति परिवर्त्तन्त इति कु ( कुलनाथः )। 'वलन्ता' इति पाठे आवर्तन्त इत्यर्थः ॥१८॥

## अट्ठिअ-पडन्त-महिहर-दूरुट्ठिअ-जल-रअन्धआरत्थमिए।
## साहइ णवर पडन्ते[2]पक्खुहिअ-समुद्द-पडिरवो[3] धरणिहरे ॥१९॥

**[अस्थित-पतन्-महीधर-दूरोत्थित-जल-रयान्धकारास्तमितान्।**
**शास्ति केवलं पततः प्रक्षुभित-समुद्र-प्रतिरवः धरणीधरान् ॥]**

[4]'अस्थितमनवरतं' पतद्भिर्महीधरैर्दूरोत्थितस्य जलस्य रजोभिः कणैर्योऽन्धऽकारस्तेन स्थगितानस्तमितान् वा पततो धरणिधरान् केवलं क्षुभितसमुद्रस्य प्रत्यग्रो रवः प्रतिरवः अथवा दिक्कुहरव्यापी प्रतिरवः प्रतिध्वनिः [ शास्ति* ] ॥१९॥

---

1 जगज० Ms. 2 Ms has खुहिअ० (without प before it) [Cf. संक्षु० KS.]
3 ०रओ GB. 4 अस्थिर० Ms.

दर-धोअ-केसर-सडा[1]पाआलुम्ह[2]-गिरि-धाउ-कद्दमिअ-मुहा ।
परिसक्कन्ति[3] पवङ्गा पल्हत्थिअ-महिहरूसस[F38a]न्त-
क्खन्धा ॥२०॥

[दर-धौत-केसर-सटाः पातालोष्म-गिरि-धातु-कर्दमित-मुखाः ।
परिवर्तन्ते प्लवङ्गाः पर्यस्त-महीधरोच्छ्वसत्-स्कन्धाः ॥ ]

उच्छलितेन सलिलेनेषद्धौतकेसरसटाः, तत्क्षणमुन्मूल्य स्कन्धारोपात् पातालस्थितेनोष्मेण गिरिधातुना कर्दमितमुखाः पातालरजःसंयोगाद् गिरिधातूनां द्रवीभावात् । एवं पर्यासितैः क्षिप्तैर्महीधरैः करणभूतैरुच्छ्वसन्तः स्कन्धा येषां ते प्लवङ्गाः परिसर्पन्ति[3] शैलान् क्षिप्त्वाऽपसरन्ति ॥२०॥

विअलन्तोज्झर-लहुआ पवणोहुव्वन्त[4]-पाअवुद्ध-पइण्णा[5] ।
पवएहि उद्ध-मुक्का [6]मूलेहि पडन्ति साअरम्मि महिहरा ॥२१॥

[विगलन्निर्झर-लघुकाः पवनावधूयमान-पादपोर्ध्व-प्रकीर्णाः ।
प्लवगैः ऊर्ध्व-मुक्ताः मूलैः पतन्ति सागरे महीधराः ॥ ]

[F38a] प्लवगैरूर्ध्वमुक्ता अधःशिखरीकृत्य क्षिप्ता महीधराः सागरे मूलैः पतन्ति । हेतुमाह, विगलद्भिर्निर्झरैर्लघवः पवनेनोद्धूयमानैरवधूयमानैर्वा पादपैरूर्ध्वप्रकीर्णा ऊर्ध्वप्रचला वा, पवनैर्विपरीतं धूयमानैः पादपैरूर्ध्वेन शिखरावच्छेदेन प्रकीर्णाः परिवर्तिता इति **लोकनाथः** । एतेन निर्झरजलापगमेन लाघवात् पवनेनोद्धूतपादपत्वाच्चाधःशिखरा अप्यूर्ध्वीभवन्तीत्यर्थः ॥२१॥

---

1 ०सटा Ms. 2 ०लुम्भ० Ms. 3 परिसप्पन्ति C.
4 ०ण-बिहु० GB. 5 ०पअल्ला G. 6 सिहरेहि G ; सिहरेहिँ B.

अत्थमिअ-सेल-मग्गा भिण्ण-णिअत्तन्त-सलिल-पुञ्जिअ-कुसुमा ।
होन्ति हरिआल-कविला दान-सुअन्धुप्पवन्त-गअदुम-भङ्गा ॥२२॥

[अस्तमित-शैल-मार्गाः भिन्न-निवर्तमान-सलिल-पुञ्जित-कुसुमाः ।
भवन्ति हरिताल-कपिलाः दान-सुगन्धोत् प्लवमान-गजद्रुम-भङ्गाः ॥]

अस्तमितानां शैलानां मार्गा ईदृशा भवन्ति । कीदृशा इत्याह, शैलघाताद्भिन्नैर्दूरगतैः पश्चान्निवर्तमानैः सलिलैः पुञ्जितानि कुसुमानि यत्र, हरितालैः कपिला दानसुगन्धाः सन्त उत्प्लवमाना [1]गजद्रुमभङ्गा गजभग्नद्रुमा यत्र, गजसंज्ञकस्य वृक्षविशेषस्य भङ्गाः खण्डा **इति हर्षपालः** ॥२२॥

अत्थाअन्ति सरोसा [2]विअड-अडत्थमिअ-सेल-सिहरापडिआ ।
एक्कावत्त-वलन्ता[3] धुव्वन्ताअम्ब-लोअणा वण-महिसा ॥२३॥

[अस्तायन्ते सरोषाः विकट-तटास्तमित-शैल-शिखरापतिताः ।
एकावर्त-वलन्तः धावमानाताम्र-लोचनाः वन-महिषाः ॥ ]

विकटतटस्यास्तमितस्य शैलस्य शिखरादवपतिता एकस्मिन्नावर्ते वलन्तो भ्रमन्तो लवणाम्बुना धावमानान्याताम्राणि लोचनानि येषां ते वनमहिषा अस्तायन्ते महिषाणां बहुत्वादावर्तस्य चैकत्वात्तस्य महत्त्वं सूचितम् । सङ्कटपतितानां महिषाणां रोषो जातिधर्मः । समुद्रे इति पाठे व्यक्त एवार्थ(:) । समस्ता इति पाठे श्रमेण वा संमुह्यन्त इत्यर्थः ॥२३॥

भिण्ण-मिलिअं पि भिज्जइ पुणो वि [4]एक्केक्कमावलोअण-सुहिअं ।
सेलत्थमण-णउण्णअ-तरङ्ग-हीरन्त-काअरं हरिण-उलं ॥२४॥

[भिन्न-मिलितं अपि भिद्यते पुनः अपि एकैकक्रमावलोकन-सुखितम् ।
शैलास्तमन-नतोन्नत-तरङ्ग-ह्रियमाण-कातरं हरिणकुलम् ॥ ]

---

1 जग० Ms. 2 सलिलदर० GB. ( But CS also have विअड० ).

3 Ms has ०वत्त-वओ० ( evidently a mistake of the scribe ).

4 एक्क० GB.

प्राग्भिन्नं पश्चान्मिलितमेकैकावलोकनेन सुखितं विस्मृतदुःखं शैलास्तमनेन नतोन्नतैस्तरङ्गैर्ह्रियमाणं नतोन्नतं सत् कातरं हरिणकुलं पुनरपि भिद्यते[1] ॥२४॥

**दाढा-विभिण्ण-कुम्भा करि-मअराण[2] थिर-हत्थ-कड्ढिज्जन्ता ।**
**[3]मोत्ता-गब्भिण-सोणिअ-भरन्त[4]-मुह-कन्दरा रसन्ति**
**मइन्दा ॥२५॥**

**[दंष्ट्रा-विभिन्न-कुम्भाः करि-मकराणां स्थिर-हस्त-कृष्यमाणाः ।**
**मुक्ता-गर्भित-शोणित-भ्रियमाण-मुख-कन्दराः रसन्ति मृगेन्द्राः ॥**

दंष्ट्रया विभिन्नः कुम्भो यैस्ते मृगेन्द्राः करिमकराणां [5]स्थिरैर्हस्तैराकृष्यमाणा मुक्तागर्भितेन शोणितेन भ्रियमाणमुखकन्दरा रसन्ति । दंष्ट्रया विभिन्नः कुम्भो यैरर्थात् करिमकराणां स्थिरैर्हस्तैः करदण्डैः कृष्यमाणा मुक्तागर्भितेनान्तःस्थितमुक्ताफलेन शोणितेन भ्रियमाणा मुखकन्दरा येषां ते मृगेन्द्रा रसन्ति शोणितमुक्तापूर्णमुखत्वादव्यक्तशब्दं कुर्वन्तीति **लोकनाथः** ॥२५॥

**उव्वत्तिअ-करि-मअरा पडन्ति पडिअ-गिरि-सम्भमुब्भड-रोसा ।**
**ओवइअ-मअर-णि [F 38b]द्दअ-लुअ-गत्तावर-विसंठुला**
**माअङ्गा ॥२६॥**

**[उद्वर्तित-करिमकराः पतन्ति पतित-गिरि-संभ्रमोद्भट-रोषाः ।**
**अवपतित-मकर-निर्दय-लून-गात्रावर-विसंष्ठुलाः मातङ्गाः ॥ ]**

---

1 After the number (24),
Ms has० ॥श्रीहरिः शरणं॥ put only to fill up the blank space and this proves that the text was written first in 4 lines at every page, and the commentary is so arranged by the scribe as to suit the portion of the text inserted on each page.

2 ०णं थि० Ms. 3 मु० Ms. 4 ०भरेन्त० GB.

5 Ms. has स्थिरैस्तस्तै०

उद्वर्तिता तरङ्गेण[1] पश्चाद्विमुखीकृताः करिमकरा यैः पतनकाले उद्वर्तिताः करिमकरा यैरिति **कुलनाथः**, पतितेन गिरिणा यः संभ्रमस्तेनोद्भटरोषाः । अवपतितेन मकरेण निर्दयलूनं यत् गात्रं पूर्वजङ्घाभागः, अवरं पश्चिमजङ्घाभागस्तेन विसंष्ठुला मातङ्गाः पतन्ति मज्जन्ति म्रियन्ते वा । द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमादित्य**मरः**[2] ॥२६॥

[3]विहुअ-पवाल-किसलअं [4]सलिल-दरत्थमिअ-दरि-मुह-वलन्तीहिं ।
आवेढ-पहुप्पन्तं वीईहि[5] दुमेसु वण-लआहि[6] व भमिअं ॥२७॥

**[विधुत-प्रवाल-किसलयं सलिल-दरास्तमित-दरी-मुख-वलन्तीभिः ।
आवेष्ट-प्रभवत् वीचीभिः द्रुमेषु वन-लताभिः इव भ्रमितम् ॥ ]**

विधुताः प्रवाला मणिविशेषा एव किसलया इव यत्रैवं यथा स्यात्तथा, शैलस्य दरास्तमित-दरीमुखेषु वलन्तीभिर्मण्डलायमानाभिर्वीचोभिर्भ्रान्तं यथास्यात्तथा धरण्याः सागरस्य च पातालं वायुभरितत्वाद् रसत् निरन्तरमुद्घाट्यते प्रकाश्यते । आवेष्टनस्य सम्यग्वेष्टने प्रभवद्, यस्मिन्नानाप्रमाणानुरूपदण्डावेष्टमिति यावदिति **लोकः** ( लोकनाथः ) ॥२७॥

गिरि-णिवहेहि रसन्तं उक्खम्मन्तेहि णिवडिएहि अ समअं ।
धरणीअ साअरस्स अ उग्घाडिज्जइ निरन्तरं पाआलं ॥२८॥

**[गिरि-निवहैः रसत् उत्खन्यमानैः निपतद्भिः च समम् ।
धरण्याः सागरस्य च उद्घाट्यते निरन्तरं पातालम् ॥ ]**

उत्खन्यमानैर्निपतितैश्च गिरिनिवहैः समं तुल्यं यथा स्यात्तथा धरण्याः सागरस्य च पातालं निरन्तरमुद्घाट्यते, कीदृशं बहुतराम्बुभृतत्वाच्छब्दायमानमुत्क्षेपणकाले धरण्यवच्छेदे निपतन-काले च समुद्रावच्छेदे पातालदर्शनादित्यर्थः समं युगपदिति **श्रीनिवासः** ॥२८॥

---

1 Ms ताङ्गेन Ms. 2 Ms has, after the number 26, the following :—॥ श्रीहरिः ॥

3 बिहुल० B. 4 GB सेल० GB. ( CKS have सलिल० )

5 हिं Ms. ; हिँ B. 6 ०हिं Ms.

वेआविद्ध-वलन्ता [1]मुहल-वलन्तोज्झरावलि-[2]परिक्खित्ता ।
संवेल्लिअ-घण-णिवहा वलिअ-लआलिङ्गिआ पडन्ति महि-
हरा ॥२९॥

[वेगाविद्ध-वलन्तः मुखर-वलन्निर्झरावलि-परिक्षिप्ताः ।
संवेल्लित-घन-निवहाः वलित-लतालिङ्गिता पतन्ति महीधराः ॥ ]

वेगेनाविद्धाः क्षिप्ताः सन्तो वलन्तो भ्रमन्तो भ्रमणवेगादेव मुखरं सशब्दं यथा स्यात्तथा वलन्तीभिर्वमन्तीभिर्निर्झरावलिभिः परिक्षिप्ता वेष्टिताः संवेल्लिताः संभ्रमादाकृष्टा घननिवहा येषु वलिताभिर्लताभिरालिङ्गिता महीधराः पतन्ति । अन्यत्रापि विपद्यमानः सहायकः क्रन्दनमुखरैः परिजनैर्वेष्ट्यते, प्रकृते निर्झरावलिरेव तथाविधा, सुहृद्भिश्च परिपाल्यते, प्रकृते घना एव तादृशाः, स्त्रीभिरालिङ्गयते, प्रकृते लता एव तद्वदिति हृदय**मिति लो** ( लोकनाथः ) ॥२९॥

[3]एक्केक्कमावडन्ता णिअअ-भुअ-क्खेव-भिण्ण-सेलद्धन्ता ।
णिन्ति धुअ-केसर-सडा[4] गअणुच्छलिअ-सलिलोत्थआ कइ-
णिवहा ॥३०॥

[एकैकक्रमापतन्तः निजक-भुज-क्षेप-भिन्न-शैलार्धान्ताः ।
निर्यन्ति धुत-केसर-सटाः गगनोच्छलित-सलिलावस्तृताः कपि-निवहाः ॥ ]

पूर्वं गिरीनुदधौ प्रक्षिप्य त्वरया निःसरणादन्योन्यमापतन्तस्ततः कियद्दूरे निजकभुजक्षेपैर्भिन्नः शैलानामर्थात् संमुखापतितानामर्धान्ता एकदेशा यैस्तादृशाः, ततोऽपि दूरे पर्वतघाताद्गगनोच्छलितैः सलिलैरवस्तृताः सन्तः सलिलदूरीकरणाय धुतकेसरसटाः कपिनिवहा निर्गच्छन्ति । यद्वा केचिदन्योन्यमापतन्तः केचिन्निजकभुजक्षेपभिन्नशैलार्धान्ताः केचित् सलिलावस्थगिताः सन्तो निर्गच्छन्ति भारापगमाद्धुतकेसरसटा **इति कुलनाथः** ॥३०॥

---

1 मुहल॰ is written in Ms. above the text as a correction for a wrong word ( सिहर ) inserted. 2 ॰क्खित्ता Ms. 3 एक्क॰ GB. 4 ॰सटा Ms.

दीसइ वारं वारं गिरि-घाउच्छित्त[1]-सलिल-रेइअ-भरिअं ।
पाआलं व[2] णह-अलं णह-विवरं व[2] विअडोअरं पाआलं ॥३१॥

[दृश्यते वारं वारं गिरि-घातोत्क्षिप्त-सलिल-रेचित-भृतम् ।
पातलं इव नभ-स्तलं नभोविवरं इव विकटोदरं पातालम् ॥ ]

वारं वारं गिरिघातोत्क्षिप्तैः सलिलै रेचितं पातालं नभोविवरमिव दृश्यते, भृतं नभोविवरं पातालमिव दृश्यते । अत्राभवन्मतयोगयथासंख्यक्रमभेदी चिन्त्यौ ॥ ३१॥

संखो[F39a]ह-भिण्ण-महि-अल-गलिअ-जलोलुग्ग-[2]पङ्कअ-
वणुच्छङ्गा ।
विहल-गइन्दालम्बिअ-फुडिअ-पडन्त-सिहरा पडन्ति महि-
हरा ॥३२॥

[संक्षोभ-भिन्न-मही-तल-गलित-जलावरुग्ण-पङ्कज-वनोत्सङ्गाः ।
विह्वल-गजेन्द्रालम्बित-स्फुटित-पतच्छिखराः पतन्ति महीधराः ॥ ]

[F39a] संक्षोभेण भिन्नं द्विधाभूतं यन्महीमण्डलं सरोजाधारभूमिस्तेन गलितजलत्वादवरुग्णपङ्कजवनानि उत्सङ्गा येषां, विह्वलैर्गजेन्द्रैरालम्बितानि स्फुटितानि पतन्ति शिखराणि येषां ते महीधराः पतन्ति ॥३२॥

रसइ गिरि-घाअ-भिण्णो तीरं लंघइ वलइ विसम-क्खलिओ ।
पावइ महणावत्थं णवर ण णिद्दअइ[3] साअरो अमअ-रसं ॥३३॥

[रसति गिरि-घात-भिन्नः तीरं लङ्घयति वलति विषम-स्खलितः ।
प्राप्नोति मथनावस्थां केवलं न निर्ददाति सागरः अमृत-रसम् ॥ ]

---

1 ०क्खित्त० GB. 2 ०पङ्कव-अणुच्छङ्गो Ms.

3 णिद्देइ GB.

रसति गिरिघातेन भिन्नो दुःसहं शब्दायते, तीरं लङ्घयति, विषमेषु स्थानेषु स्खलितः सन् वलति वा निवर्तते, अतः सागरो मथनावस्थां प्राप्नोति, केवलं प्रागिवामृतरसं न मुञ्चति 'निद्दअइ' नाविष्करोतीत्यर्थः न ददातीति **श्रीनिवासः** ॥३३॥

**उक्खअ-णिसुद्ध-सेलो संसइअ-समुद्द-घोर[1]-मुक्कक्कन्दो ।**
**रक्खस-उरीअ[2] कह आ गमणोवाओ वि दारुण-समारम्भो ॥३४॥**

**[उत्खात-निपातित-शैलः संशयित-समुद्र-घोर-मुक्ताक्रन्दः ।**
**राक्षस-पुर्याः कथं आः गमनोपायः अपि दारुण-समारम्भः ॥ ]**

आः शब्दः खेदे । आः कथं राक्षसपुर्या गमनोपायोऽपि दारुणो भयङ्करः प्रलयवत् परपराभव-हेतुर्वा आरम्भ उपक्रमो यस्य, आरम्भ एव गमनस्य ईदृगनर्थकारी गमने तु किं भविष्यतीति भावः । कुत इत्याह, उत्खाता 'णिसुद्धा' पतिताः शैला यत्र, संशयितेन समुद्रेण मुक्तो घोर आक्रन्द आर्तनादो यत्र । आःशब्दो विस्मये, आः कथं कोऽयं प्रकारो यतो राक्षसपुर्या गमनोपायोऽपि भीषणावस्थ **इति कुलनाथः** । कह-आःशब्दः कथं तावदितिशब्दप्रकृतिक इति **श्रीनिवासः** ॥३४॥

**वेउक्खुडिउ[3]द्धाइअ-णह-भमिर-फुरन्त-कञ्चण-सिला-वेढं ।**
**कुसुम-सुअन्ध-रआलं पल्हत्थइ पवअ-णोल्लिअं धर-आलं ॥३५॥**

**[वेगोत्खण्डितोर्ध्वायित-नभो-भ्रमणशील-स्फुरत्-काञ्चन-शिला-वेष्टम् ।**
**कुसुम-सुगन्ध-रजो-जालं पर्यस्यति प्लवग-नोदितं धर-जालम् ।**

अन्योन्याभिघातादुत्खण्डितो वेगेनोर्ध्वायितो नभोभ्रमणशीलः स्फुरत्काञ्चनशीलावेष्टो यत्र तत्तथा सुगन्धिरजोभिर्युक्त [4]आल्विल्लेत्यादिना मतुप आदेशः । प्लवगैः प्रेरितं धरजालं गिरिसमूहः पर्यस्यति निपतति ॥३५॥

1 Ms has ०घोर० inserted above. 2 ०पुरीअ GB.
3 ०उक्खलि० GB. 4 "आल्विल्लोल्लाल-वन्त-मन्तेत्तेर-मणा मतोः"—Hemachandra 8. 2. 159. Ms reads आलिल्ले०.

वड्ढइ पवअ-कलअलो वलइ वलन्त-वलवा[1]-मुहो सलिल-णिही ।
पवण-[2]विराविअ-रुक्खा[3] पडन्ति उद्ध-ट्ठिओज्झरा [4]धर-
णिवहा ॥३६॥

[वर्धते प्लवग-कलकलः वलति वलद्-वडवा-मुखः सलिल-निधिः ।
पवन-विरावित-वृक्षाः पतन्ति ऊर्ध्व-स्थित-निर्झराः धर-निवहाः ॥ ]

वर्धते प्लवगकलकलस्तथा वलन् भ्रमन् उद्वेल्लन् वा वडवामुखो यत्र, सलिलनिधिर्वलति भ्रमति उद्वेल्लति वा, पवनेन विराविता अत्यर्थं शब्दिता वृक्षा येषां पतनवेगादेवोत्थिता निर्झरा येषामीदृशा धरणीधराः पतन्ति । णिराइअ-रुक्खा इति **श्रीनिवासः**, व्याख्यातश्च तेन 'णिराइआ' ऋजूकृता इति ॥३६॥

दूराइद्ध-णिअत्ता मोडिअ-मलिअ-हरिचन्दण[5]-मइज्जन्ता ।
उअहिं रहसुक्खित्ता आसाएन्ति विरसं महाणइ-मच्छा ॥३७॥

[दूराविद्ध-निवृत्ताः मोटित-मृदित-हरिचन्दन-माद्यमानाः ।
उदधिं रभसोत्क्षिप्ताः आस्वादयन्ति विरसं महानदी-मत्स्याः ॥ ]

अभिमुखगिरिपतनेन दूरमाविद्धा नीतास्ततो निवृत्ता मोटितो भग्नो यो हरिचन्दनस्तेन माद्यमाना हर्षिता अतो रभसोत्थिता वेगेनोत्पतिता महानदीमत्स्याः क्षारत्वाद् विरसमुदधिजलमास्वादयन्ति पिबन्ति **इति कुल** ( कुलनाथः ) । कल्लोलेन दूरं नीतास्ततो निवर्तमानेन कल्लोलेन सह निवृत्ता मोटितेन भग्नेन मृदितेन हरिचन्दनेन माद्यन्तो हर्षेण विस्मृतात्मनः, अतएव रभसेन वेगेन हर्षेणोत्क्षिप्ता उत्प्लुता इति **लोकनाथः** साधुः ॥३७॥

---

1 ०वलआ० GB. 2 ०णिराइअ० GB. 3 ०रुक्खा Ms.
4 धरणिहरा GB. 5 ०हरिअन्दण० GB.

आसीवि[F39b]स-मणि-अम्बा पल्हत्थन्ति विहडन्त-विसम-
णिअम्बा ।
दुम-णिवहोवरि-हरिआ दरीसु सेला रवि-प्पहा-वरि-
हरिआ ॥३८॥

[आशीविष-मणि-ताम्राः पर्यस्यन्ति विघटमान-विषम-नितम्बाः ।
द्रुम-निवहोपरि-हरिताः दरीषु शैलाः रवि-प्रभा-परिहृताः ॥ ]

[F39b] आशीविषाणां मणिभिस्ताम्रास्तन्मणिकिरणैस्ताम्रा इत्यर्थः । विघटमाना विषमा महान्त विघटमानतया वा विषमा नितम्बा येषां ते तथा द्रुमनिवहैरुपरिदेशे हरिता हरितवर्णा दरीषु रविप्रभापरिहृताः शैलाः पर्यस्यन्ति । विशेषणचतुष्टयेन यथाक्रमं शैलानां दुर्गमत्वं पृथुत्वं स्निग्धत्वं तुङ्गत्वञ्च कथितमिति **श्रीनिवासः** ॥३८॥

धरिअं वेओवत्तं[1] गिरि-घाउक्खित्त[2]-पाणिअम्मि समुद्दे ।
वलिऊण भुअअ-वइणा कह वि तुलग्ग-विसमागअं[3] महि-
वेढं ॥३९॥

[धृतं वेगापवृत्तं गिरि-घातोत्क्षिप्त-पानीये समुद्रे ।
वलित्वा भुजग-पतिना कथं अपि तुलाग्र-विषमागतं मही-वेष्टम् ॥]

समुद्रे गिरिघातोत्क्षिप्तपानीये सति वेगादपवृत्तं टलितं टलित्वावनतमिति **लोकनाथः** । महीवेष्टं महीमण्डलमेकत्र सलिलशून्यतया लघुत्वादपरत्र सलिलभरेण गुरुत्वात् तुलाग्रवद् विषमागतं तिर्यग्भावापन्नं भुजगपतिनानन्तेन यदवच्छेदे वलित्वा फणामण्डलं समाधाय धृतम् ॥३९॥

1 ०न्तं Ms. 2 ०च्छित्त० GB. 3 ०माअअं GB.

वज्ज-भअं धरणिहरा आइ-वराह-खुर-पेल्लणाइ[1] वसुमई ।
समअं चिअ पम्हट्ठं सम्भरिआ[2] महण-सम्भमञ्च समुद्दो ॥४०॥

[वज्र-भयं धरणीधराः आदि-वराह-खुर-प्रेरणानि वसुमती ।
समकं एव प्रस्मृतं स्मृतवन्तः मथन-सम्भ्रमं च समुद्रः ॥ ]

[3]चिरप्रस्मृतं सममेकदैव स्मृतवन्तः कः किमित्याह । वज्रभयं धरणीधराः स्मृतवन्तः, चिरप्रस्मृतान्यादिवराहखुरप्रेरणानि वसुमती, मथनभयं चिरप्रस्मृतं समुद्रः, चिरप्रस्मृतमिति नपुंसकानपुंसकयोरिति नपुंसकत्वमेकवद्भावः ॥४०॥

मलअ-चन्दण-लआ-हरे संभरमाणओ
णिअअ-महण-दुक्खम्मिव[4] संभरमाणओ ।
रसइ सेल-सिहराहिहओ सरिआ-वई
दहसुहस्स दोसेण समो सरिआवई ॥४१॥

[मलय-चन्दन-लतागृहाणि संबिभ्राणः निजक-मथन-दुःखं इव संस्मरन् ।
रसति शैल-शिखराभिहतः सरित्-पतिः दशमुखस्य दोषेण समः सृतापत् ॥]

सरित्पतिः शैलशिखराहतः[5] सन् रसति परित्राणरवं करोति । कीदृशो मलयचन्दनलतागृहं पूरयन् व्याकुलतया स्वस्थानं मुक्त्वा लतागृहं श्रयन्निति भावः । मलयचन्दनलतागृहेषु भ्रियमाण इति **कुलनाथः** । निजकमथनदुःखमिव संस्मरन् दशमुखस्य दोषेण सीतापहारोपेक्षणेन समस्तुल्यः सृता[6] प्रसृता आपद् यस्य सः, सम्यगवसृता उपस्थिता आपद्यस्मिन्निति **लोकः** (लोकनाथः) । एतेन खलदुर्वृत्तं साधुषु फलतीति ध्वनिः ॥४१॥

---

1 °ईं B   2 °रिओ GB.   3 Cf. KS चिर° for चिअ
4 क्खं मिव GB.   5 °शिखाहतः Ms.   6 स्मृता Ms.

जल-वट्ठत्थमिएसु अ उद्धाइ गिरीसु मलिअ-विद्दुम-अम्बो ।
आवडिअ[1]-चुण्णिएसुं धुअ-धाउ-रओ व्व [2]सीभर-रउ-
ग्घाओ ॥४२॥

[जल-पृष्ठास्तमितेषु च उद्धावति गिरिषु मृदित-विद्रुम-ताम्रः ।
आपतित-चूर्णितेषु धुत-धातु-रजः इव शीकर-रज-उद्घातः ॥ ]

जलपृष्ठास्तमितेष्वन्योन्यमापतितत्वाच् चूर्णितेषु शीकररजसां [3]जलकणानामुद्घातः समूहः शैलघाते मृदितैर्विद्रुमैस्ताम्र अतएव धुतगैरिकरज इव ऊर्ध्वायते उद्गच्छति । **लोकनाथस्तु** शीकररजसामुद्घातः समूह ऊर्ध्वं धावति किमिव, आपतितचूर्णितेषु भूमौ निपत्य चूर्णितेष्वर्थाद्गिरिषु धुतधातुरज इव तदपि मृदितविद्रुमवत्ताम्रं भवति इत्याह ॥४२॥

सेल-सिहर-संखोहिअ-कल्लोलन्तअं
गलिअ-धाउ-रस-राइअ-क-ल्लोलन्तअं ।
रसइ[F40a]उअहि-सलिलं धरेसु वलमाणअं
भग्ग-चन्दण-रसोसहि-णिव्वलमाणअं ॥४३॥

[शैल-शिखर-संक्षोभित-कल्लोलान्तं
गलित-धातु-रस-राजित-कल्लोलान्तकम् ।
रसति उदधि-सलिलं धरेषु वलमानं
भग्न-चन्दन-रसौषधि-निर्वलमानकम् ॥ ]

धरेषु पर्वतेषु वलमानं भ्रमदुदधिसलिलं रसति कुम्भपूरणवद्गभीरशब्दं करोति, कीदृशं, शैलशिखरसंक्षोभितमतएव लोलान्तं कं जलं यस्य । अन्तशब्दः स्वार्थे वा । संक्षोभितमाकल्लोलायमानमिति **कुलनाथः** । गलितेन धातुरसेन गैरिकादिरसेन रञ्जितकल्लोलं, ततं विस्तृतं, भग्नानां चन्दनानां रस एवाविलजलविमलीकरणादोषधिरिव तेन निर्वलमानं

---

1 ०वलिअ० GB. 2 सीहर० GB. (But Cf. "शीकीरे भः" प्राकृतप्रकाश २।५)
3 लज० Ms.

विमलीक्रियमाणमिति **प्राञ्चः**। 'णिव्वलमाणं' आविलजलात् पृथगुपलभ्यमानमिति **केचित्**। भग्नचन्दनरसौषधिना सर्पादिवर्ग्निर्वलमतएवानतमिति **कुलनाथः**[1] ॥४३॥

**गिरि-णिव्वडिअ[1]-पडन्ता उद्धुअ[2]-जल-मूल-मिलिअ-पत्तल-विडवा।**
**लहुअत्तणुप्पअन्ता[3] [4]अअड्ढिआ वि गअणं विलग्गन्ति[5] दुमा ॥४४॥**

**[गिरि-निर्वलित-पतन्तः उद्धृत-जल-मूल-मिलित-पत्रल-विटपाः।**
**लघुत्वोत्प्लवमानाः अकृष्टाः अपि गगनं विलगन्ति द्रुमाः॥ ]**

[F40a] गिरेरर्थाद्विदीर्णात् पृथग्भूताः सन्तः पतन्तो लघुत्वादुत्प्लवमानास्तथा उद्धृतेषु वेगेनोर्ध्वं प्रसृतेषु जलेषु मूलेऽर्थात् स्वीये मिलिताः पत्रला बहुपत्रा विटपा येषां ते द्रुमा अकृष्टा अपि गगनं विलगन्ति जलोद्गमनवेगान्नभ आरोहन्तीत्यर्थः। गिरिसंक्षोभाद् गिरिभ्यो निर्वोटिताः पृथग्भूताः पतन्तो लघुत्वात् प्लवमाना उद्धृतस्य ऊर्ध्वप्रसृतस्य मूले मिलिताः पत्रला विटपा येषां ते तथा। अनाकृष्टा अपि जलोद्गमेन तन्मूललग्ना द्रुमा गगनमारोहन्तीति **कुलनाथः** ॥४४॥

**पवअ-बलेहि[6] राअ-सज्झाअ-मच्छरेहिं**
**गअण-णिवाअ[7]-भिण्ण-घण-भेसिअच्छरेहिं।**
**फुड-धवलग्ग-दन्त-[8]पडिवेल्लिआहरेहिं**
**भिज्जइ साअरस्स सलिलं धराहरेहिं[9] ॥४५॥**

---

1 After this, Ms has श्रीकृष्णः to fill up a little space in the long gap. 1 ०लिअ० GB. 2 उद्धअ० GB. 3 ०वन्ता GB. 4 C has अकड्ढिआ वि गअणं विल०, whereas GB. have गअणमणाअड्ढिआ. 5 Ms. has वलग्गन्ति 6 ०हि B. 7 ०णिराअ० GB. 8 ०पेल्लि० GB. 9 ०धरेहिं Ms.

[प्लवग-बलैः राग-सञ्जात-मत्सरैः
गगन-निपात-भिन्न-घन-भीषिताप्सरोभिः ।
स्फुट-धवलाग्र-दन्त-प्रतिप्रेरिताधरैः
भिद्यते सागरस्य सलिलं धराधरैः ॥ ]

गलितकमाह । रागेण परस्परस्पर्धानिवेशेन संजातो मत्सरः क्रोधो येषां तैः, स्फुटेन व्यक्तेन धवलदन्ताग्रेण पाटितोऽधरो यैस्तैः प्लवगबलैः सागरस्य सलिलं भिद्यते । कैः करणभूतैरित्याह, धराधरैः किंभूतैर्गगननिपाते भिन्नो यो घनो मेघस्तेन भीषितास्त्रासिता अप्सरसो यैस्तथाभूतैः । विद्याधराप्सरसां मेघ एवाश्रय इति सन्धानादिदमुक्तम् । गगननिपाताद्भिन्नेन घनेनार्थाच्छब्देन भीषिता अप्सरसो यैरिति **लोकनाथः** ॥४५॥

पवण-भरन्त-दरि-मुहं पवण-सुअक्कन्त-विहडिअ[1]-सिला-वेढं ।
पडइ सिहरोज्झरुग्गअ-महिन्द-धणु-गब्भिणं महिन्द-क्खण्डं ॥४६॥

[पवन-भ्रियमाण-दरी-मुखं पवन-सुताक्रान्त-विघटित-शिला-वेष्टम् ।
पतति शिखर-निर्झरोद्गत-महेन्द्र-धनुर्गर्भितं महेन्द्र-खण्डम् ॥ ]

पवनेनार्थाद्वेगजन्येन भ्रियमाणं पूर्यमाणं दरीमुखं यस्य, प्राक् लङ्कागमनार्थं समुद्रलङ्घनाय क्रमं कर्तुं पदभरं न्यस्यता पवनसुतेनाक्रान्तः सन् विघटितः शिलावेष्टो यत्र, शिखरनिर्झरोद्गतेन महेन्द्रधनुषा लक्षणया तदाकारेण गर्भितं महेन्द्रधनुःखण्डं [2]पतति, सलिलोज्झरे निर्झरसलिले उद्गतमुदितं यन्महेन्द्रधनुस्तेन गर्भितं जातगर्भं महेन्द्रपर्वतखण्डं पततीति **कुलनाथः** । शिखरस्य बहुधातुमयत्वात्तन्निर्झरस्य महेन्द्रधनुःसाम्यं । यद्वा बहुधातुचित्रत्वाच्छिखरनिर्झर एव उद्गतमूर्ध्वगतमृजूभूतमिति यावदीदृशं महेन्द्रधनुस्तेन गर्भितम् ॥४६॥

---

1 ०लिअ० GB. 2 महेन्द्रधनुःखण्डं Ms.

गअण-अलम्मि सेल-संघट्ट-वारिआणं
[1]ओत्थइअं रवेण जल-भरिअ-वारिआणं।
वहमाणं लआ-हराइं सअन्दलाइं
किं पडिअं ण होइ सिहरं सअं दलाइं ॥४७॥

[गगन-तले शैल-संघट्ट-वारितानां
अवस्तृतं रवेण जल-भृत-वारिदानाम्।
वहमानं लता-गृहाणि सकन्दलानि
किं पतितं न भवति शिखरं शतं दलानि ॥]

गलितकमाह। गगनतले शैलानां संघट्टेन वारितानामपसारितानां शैलानामित्यर्थाच्छिखरं पतितं सत् किं शतं दलानि शतं खण्डानि न भवति। शैलसंघट्टेन शिथिलत्वाद्भवत्येवेत्यर्थः। किंभूतं जलभरितवारिदानां रवेणावस्तृतं गर्जन्मेघाधिष्ठितमित्याशयः। अतएव सकन्दलानि सपल्लवानि, अथवा कन्दलीकुसुमसहितानि लतागृहाणि वहमानं, कन्दलः प्रणयकलहस्तद्युक्तानि लता एव गृहाणि वहमानमिति **श्रीनिवासध्वनिः** ॥४७॥

लक्खिज्जन्ति समुद्दे गिरि-घाउव्वत्त-मअर-विसमुक्कत्ता[1]।
छेद-पसरन्त-रुहि[F40b]रा फेण-मिलन्ता वि चमरि-
बालद्धन्ता ॥४८॥

[लक्ष्यन्ते समुद्रे गिरि-घातोद्वृत्त-मकर-विषमोत्कृत्ताः॥]
छेद-प्रसरद्-रुधिराः फेन-मिलन्तः अपि चमरी-बालार्धान्ताः॥]

गिरिघातेनोद्वृत्तैराकुलैर्विषममतिशयमुत्कृत्ता विषममस्तव्यस्तमुत्कृत्ता इति **कुः** (कुलनाथः) छिन्नाश्चमरीणां बालार्धाः पुच्छदेशाः श्वेतबालखण्डा इति **कुः** (कुलनाथः)। फेनैः सह

---

1 क्न्त (C. क्ता)

1 ०मुक्किता GB.

मिलन्तोऽपि धवलतयाभिन्नाकारा अपि समुद्रे लक्ष्यन्ते, कुत इत्याह छेदे छेदस्थाने प्रसरन्ति रुधिराणि येषाम्, उद्धृत्तं स्यात्त्रिषूत्क्षिप्ते परिभुक्तोज्झितेऽपि चेति **मेदिनी** ॥४८॥

सिद्ध-अणो भएण मुञ्चइ लआ-हराइं
सुरअ-विसेस-जाअ-हरिसोल्लआहराइं[1] ।
गिरि-सरिआ-मुहाइ[2] णासन्ति सासआइं
भमइ महोअहिस्स सलिलं दिसा-सआइं ॥४९॥

[सिद्ध-जनः भयेन मुञ्चति लता-गृहाणि
सुरत-विशेष-जात-हर्षार्द्राधराणि ।
गिरि-सरिन्-मुखानि नश्यन्ति शाश्वतानि
भ्रमति महोदधेः सलिलं दिक्-शतानि ॥ ]

[F40b] गलितकमाह । सुरतविशेषात् प्रौढसम्भोगाज् जातहर्षेण स्वेदेनार्द्राण्यधराण्युपान्तभागा येषामुत्सङ्गस्थानानीति **कुः (कुलनाथः)** । तानि क्रीडासम्पादकत्वात् प्रीत्या मुक्तान्यपि लतागृहाणि सिद्धजनः पर्वतसंक्षोभोद्भतेन मुञ्चति, गिरिसरिन्मुखानि शाश्वतानि नित्यप्रवृत्तानि नश्यन्ति, महोदधेः सलिलं दिक्शतानि भ्रमति गिरिभिरभिहतं सत् सर्वासु दिक्षु प्रसरतीत्यर्थः । सुरतविशेषेति विशेषणेन लतागृहाणां प्रेमास्पदत्वं सूचितमिति **लो (लोकनाथः)** ॥४९॥

भमइ समुक्खित्त-करं गअ-वइ-वारिअ-परित्त[3]-पङ्कग्गाहं ।
विहलुत्थंघिअ-कलहं विअडावत्त-मुहमाअअं [4]गअ-जूहं ॥५०॥

[भ्रमति समुत्क्षिप्त-करं गज-पति-वारित-परिगत-पङ्कग्राहम् ।
विह्वलोत्थापित-कलभं विकटावर्त-मुखं आगतं गज-यूथम् ॥ ]

1 ०सेओल्ल० GB. 2 ०इं B and Ms. 3 ०पवित्त० GB.
4 ०गअं GB.

समुत्क्षिप्तः करो यैः, गजपतिना यूथपतिना वारितो हिंसार्थं परिगतः पङ्कग्राहो यस्मात्, यद्वा गजपतिना वारितोऽपि परिगतः पङ्कग्राहो यत्र, अतएव विकलत्वादुत्थापितोऽर्थो-यूथपतिना करेणोत्क्षिप्य धृतः कलभो यत्र, ईदृशं गजयूथं विकटावर्तस्य मुखमापतितं सङ्क्रमति पङ्कशब्दः समर्थवचनो देश्यामिति **कुलनाथः** ॥५०॥

समुह-बडन्त[1]-विअड-गिरि-घाअ[2]-वेल्लिआणं
वीइ-परिक्खलन्त-पवण-वस-वेल्लिआणां।
दिट्ठिं देइ राहवो कह त्रि जा णईणं
ता सिढिलेइ[3] णवर हिअअम्मि जाणई णं ॥५१॥

[संमुख-पतद्-विकट-गिरि-घात-प्रेरितानां
वीचि-परिस्खलत्-पवन-वश-वेल्लितानाः।
दृष्टिं ददाति राघवः कथं अपि यावत् नदीनां
तावत् शिथिलयति केवलं हृदये जानकी एनम् ॥]

गलितकमाह। संमुखापततां गिरीणां शिखरेण प्रेरितानामिति सप्तम्यर्थे षष्ठी प्रेरितास्वित्यर्थः। प्रेरितानां प्रतिपथं नीतानामिति **लोकनाथः**। वीचीषु परिस्खलितस्य प्रतिहतगतेः पवनस्य वशेन वेल्लितानां नदीनां राघवः कथमपि दर्शनीयत्वाद्यावद् दृष्टिं ददाति तावत् केवलमेनं राघवं हृदये जानकी शिथिलयति विरहयति ॥५१॥

दर-दड्ढ-विदुम-वणा उद्धाअन्ति सिहि-कज्जलिअ-संख-उला।
पाआल-लग्ग-कड्ढिअ-राम-सरोलुग्ग-पत्तणा जल-निवहा ॥५२॥

[दर-दग्ध-विद्रुम-वनाः उद्धावन्ति शिखि-कज्जलित-शङ्ख-कुलाः।
पाताल-लग्न-कृष्ट-राम-शरावरुग्ण-पत्तणाः जल-निवहाः ॥]

---

1 ०पडन्त० GB. 2 ०सिहर० GB. 3 विरहेइ GB.

रामशरानलेन दरदग्धं विद्रुमवनं ( यत्र * ), शिखिना कज्जलितं श्यामीकृतं शङ्खकुलं यत्र, परनिपातात् पाताललग्नस्य रामशरस्य कृष्टा अवरुग्णा भग्नाः पत्रणाः पत्ररचना[1] यैस्ते जलनिवहा ऊर्ध्वं धावन्ति पातालादुद्गच्छन्तीत्यर्थः, शराणां पत्ररचना पत्रणेत्यभिधीयते ॥५२॥

भीअ-णिसण्ण-जलअरं पलोट्ट-णिअअ-भर-भग्ग[2]-वक्ख-महिहरं ।
दीसइ विभिण्ण-सलिलं कुविउद्धाइअ-भुअङ्गमं पाआलं ॥५३॥

[भीत-निषण्ण-जलचरं प्रलुठित-निजक-भर-भग्न-पक्ष-महीधरम् ।
दृश्यते विभिन्न-सलिलं कुपितोर्ध्वायित-भुजङ्गमं पातालम् ॥ ]

पर्वतघाताद्भिन्नसलिलं पातालमीदृशं दृश्यते । कीदृशमित्याह, भीता निषण्णा निश्चलस्थिता जलचरा यत्र, उपर्युपरि घातवशात् 'पलोट्ठा' पार्श्वेण पतिता अतएव निजकभरेण भग्नपक्षाः कुक्षिस्थमहीधरा यत्र, कुपिता ऊर्ध्वायिता भुजङ्गा यत्र तत्तथा ॥५३॥

खुहि [F41a]अ-समुद्दाहिमुहा तंस-ट्ठिअ-महिहरोसरन्त-क्खलिआ ।
करि-मअर-बद्ध-लक्खा करि-मअर-पडिच्छिआ पडन्ति गइन्दा ॥५४॥

[क्षुभित-समुद्राभिमुखाः तिर्यक्-स्थित-महीधरापसरत्-स्खलिताः ।
करि-मकर-बद्ध-लक्ष्याः करि-मकर-प्रतीष्टाः पतन्ति गजेन्द्राः ॥ ]

क्षुभितसमुद्राभिमुखास्त्र्यस्रस्थितान्महीधरादपसरन्त एव स्खलिताः करिमकरेषु बद्धलक्ष्या ग्राह्यत्वेन कृतनिश्चयाः करिमकरैर्गृहीता प्रतीष्टाः पतन्ति गजेन्द्रा इति **कु** ( **कुलनाथः** )। क्षुभितत्वात् पतनायोग्येऽपि समुद्रे गजेन्द्राणां करिमकरजिघृक्षया पतनसूचनाय इति **लोकनाथः**। समुद्रविशेषणमिति **केचित्** ॥५४॥

---

1 पत्तरना Ms. 2 ०भिण्ण० GB.

ण वि तह पवआइद्धा[1] विअड-णिअम्ब-गरुआ रसाअल-मूलं ।
जह उच्छलिउद्धाइअ-सलिल-भरोवाहिआ अइन्ति महिहरा ॥५५॥

[न अपि तथा प्लवगाविद्धाः विकट-नितम्ब-गुरुकाः रसातल-मूलम् ।
यथा उच्छलितोर्ध्वायित-सलिल-भरापवाहिताः आयान्ति महीधराः ॥ ]

'ण वि' शब्दो वैपरीत्ये, प्लवगैराविद्धाः क्षिप्ता विकटैर्विशालैर्नितम्बैर्गुरुका महीधरा न तथा रसातलमायान्ति यथोच्छलितोर्ध्वायितस्य उद्धतोर्ध्वीभूतस्य सलिलस्य भरेणावगाढा आयान्ति ॥५५॥

अद्धत्थमिअ-विसंठुल-गअ-जूहारूढ-सिहर-विहलस्स णहं ।
जीअं व समुप्पइअं[2] गिरिस्स कुहराहि णिग्गअं सुर-
मिहुनं ॥५६॥

[अर्धास्तमित-विसंष्ठुल-गज-यूथारूढ-शिखर-विह्वलस्य नभः ।
जीव इव समुत्पतितं गिरेः कुहरात् निर्गतं सुर-मिथुनम् ॥ ]

अर्धास्तमितमर्धमग्नं विसंष्ठुलं यद् गजयूथं तेनाक्रान्तशिखरत्वाद् विह्वलस्य व्याकुलस्य गिरेः कुहरान्निर्गतं सुरमिथुनं जीवितमिव नभः समुत्पतितम् ॥५६॥

धरिआ भुएहि सेला सेलेहि दुमा दुमेहि घण-संघाआ ।
ण वि णज्जइ किं पवआ सेउं बन्धेन्ति[3] ओ मवेन्ति[4] णह
अलं ॥५७॥

[धृताः भुजैः शैलाः शैलैः द्रुमाः द्रुमैः घन-संघाताः ।
न अपि ज्ञायते किं प्लवगाः सेतुं बध्नन्ति उत मापयन्ति नभस्तलम् ॥

धृताः कपीनां भुजैः शैलाः शैलैर्द्रुमा द्रुमैर्घनसंघाताः, न ज्ञायते प्लवगाः किं सेतुं बध्नन्ति अथवा मापयन्ति नभस्तलम् ॥५७॥

---

1 ०विद्धा GB. 2 भत्ति णज्जइ GB. 3 बन्ध० GB. 4 मिणेन्ति GB.

[1]उत्थङ्घिअ-दुम-णिवहा गिरि-घाउव्वत्त-मुच्छिअ-महा-मच्छा ।
वेला-सेल-क्खलिआ उद्धा[2] भिज्जन्ति उअहि-जल-कल्लोला ॥५८॥

[उत्तम्भित-द्रुम-निवहाः गिरि-घातोद्वृत्त-मूर्च्छित-महा-मत्स्याः ।
वेला-शैल-स्खलिताः ऊर्ध्वाः भिद्यन्ते उदधि-जल-कल्लोलाः ॥ ]

उत्तम्भितो द्रुमनिवहो यैर्गिरिघातेनोद्वृत्ता मूर्च्छिता महामत्स्यास्तिमिङ्गिलादयो येषु वेलाशैलेषु स्खलिताः सन्तस्ततो भिद्यन्ते स्फुटन्ति उदधिजलकल्लोलाः ॥५८॥

रहस-विसज्जिएक्कमेक्का-वडन्त[3]-धुअ-पडिअ-मणि-सिला साअ-
रम्मि णिवडन्ति धर-णिहाआ
मलिअ-महा-भुअङ्ग-भग्ग-[4]प्फणोअरोसरिअ-सम्पु[F41b]डं रसा-
अलञ्च दूमेन्ति[5] धरणि-हाआ ।
णासइ जं जलं समुद्दस्स[6] चुण्णिअ-मणोसिला-अल[7]-पडन्त-सेलं
मन्दारुणं[8] फलन्तं
दरिअ-णिसाअरिन्द[9]-हीरन्त-जाणई-बाह-णिब्भर-पुलोइअस्स
किर दारुणं फलं तं[10] ॥५९॥

[रभस-विसर्जितैकैक-पतद्-धुत-पतित-मणि-शिलाः सागरे निपतन्ति
धर-निघाताः
मृदित-महा-भुजङ्ग-भग्न-फणोदरापसारित-संपुटं रसातलं च दुन्वन्ति
धरणि-घाताः ।
नश्यति यत् जलं समुद्रस्य चूर्णित-मनःशिला-तल-पतत्-शैलं मन्दारुणं
फलत्
दृप्त-निशाचरेन्द्र-ह्रियमाण-जानकी-बाष्प-निर्भर-प्रलोकितस्य किल दारुणं
फलं तत् ॥ ]

---

1 This verse is numbered 56 in GB. 2 ०द्धं GB. 3 बल० GB. 4 ०फ० Ms. 5 ०लं दुम्मे० GB. 6 साअरस्स GB. 7 ०अड० GB. 8 ०ल-सन्दा० GB. 9 ०अरे० GB. 10 फलन्तं Ms.

रभसविसर्जिता एकैकमापतन्तोऽन्योन्यमास्खलन्तः, अतो धुतमणिशिला धरणिघाताः पर्वतनिवहाः सागरे निपतन्ति, किञ्च पतद्भिः पर्वतैर्ये धरणिघाताः पृथ्वीघातास्तेऽपि रसातलं दुन्वन्ति[1] पातालं पीडयन्ति, किम्भूतं मृदितस्य महाभुजङ्गस्य शेषस्य भग्नेभ्यः फणेभ्योऽपसारितं संपुटं विश्लेषितं फणाभूतलसम्बन्धिपुटद्वयं यत्र तत्तथा, धरण्याघातेन परस्परेण संश्लिष्टं फणाभूतलरूपपुटद्वयं विघटितमभूदित्यर्थः। **लोकनाथस्तु** मृदितस्य महाभुजङ्गस्यानन्तस्य भरभग्नफणोदरेभ्योऽपसृतं स्खलितं संपुटं भूतलरूपमुपरिच्छादनं यत्र इत्याह। किञ्च यत् समुद्रस्य जलं नश्यति क्षीयतेऽन्योन्यास्फालेन चूर्णितमनःशिलातटैः पतद्भिः[2] शैलैर्मन्दारुणमीषद्रक्तं 'फलन्त'मिति विसरत् तत् किल दशनिशाचरेन्द्रह्रियमाणाया जानक्याः पतिव्रताया बाष्पनिर्भरं यथा स्यात्तथा सकरुणं प्रलोकितस्य त्वयाऽस्मदन्येनापि पापेनानेनानीयमानाऽहमुपेक्षितेति निभालनस्य दारुणं फलं दुष्परिपाकः, कथमन्यथा महानुभावः समुद्र एवं कदर्थ्येत इति ॥५६॥

सेल-सिलहआ[3]समुद्दोअरे मणीणं
चुण्णिज्जन्ति वित्थरा रअण-गामणीणं।
भरइ[4] णहङ्गणं अणिव्विण्ण-मेह-लाणं
हंस-ऊलावलीण वणराइ-मेहलाणं ॥६०॥

[शैल-शिलाहताः समुद्रोदरे मणीनां
चूर्ण्यन्ते विस्ताराः रत्न-ग्रामणीनाम्।
भ्रियते स्मरति वा नभोऽङ्गणं अनिर्विण्ण-मेघ-लानं
हंस-कुलावलीनां वनराजि-मेखलानाम् ॥]

[F41b] रत्नग्रामणीनां रत्नप्रधानानां मणीनां वैदूर्यादीनां विस्ताराः समूहाः शैलशिखराहताः सन्तः समुद्रोदरे चूर्ण्यन्ते, किञ्च मेघाश्रयाणां पर्वतानामानीतत्वादनिर्विण्णानपरिखिन्नान् मेघान् लाति गृह्णात्यनिर्विण्णमेघलानं[5] नभोऽङ्गनं हंसकुलावलीनां भ्रियते पूर्यते,

---

1 धु० Ms. 2 ०द्भि Ms. 3 ०आणं Ms. 4 सम्भ० Ms.
5 ०मेघानां Ms.

पूरणार्थप्रयोगे तृतीयार्थे षष्ठी, हंसकुलावलीभिरित्यर्थः, किंभूतानां वनराजयो योषित इव तासां मेखलानाम् । **लोकनाथ**स्तु एतेन समुद्राश्रितानां हंसानां तादृशः क्षोभो जातो येन प्रतिपक्ष-मेघयुक्तमपि नभः श्रयन्ति स्मेति भावः । यद्वा, अनिर्विण्णानां मेघानां लानं संश्लेषो यत्रेदृशं नभोऽङ्गनं कर्तृ वनराजिमेखलानां हंसकुलावलीनां स्मरति, स्मृत्यर्थे कर्मणि षष्ठी, मेघदर्शनेन हंसानां दूरीभावात् स्मरणमात्राध्येयत्वं जातमित्यर्थ इति प्राह ॥६०॥

रसइ रसाअलं दलइ मेइणी णिसुम्भन्ति[1] जलअ-णिवहा परीइ गअणङ्गणे[2] कइ-अणो[3]

ओसुम्भन्ति[1] महिहरा महिहराहिहओ [4]साअरो वि सुइरं थलम्मि घोलइ अमुक्क-विअणो ।

कुसुम-पसाहणम्मिव समुद्ध-पल्लवं साअरम्मि पडिआण[5] विडव-लग्गं दुमावलीणं

जाअं भिण्ण-सिप्पि-उड-मज्झ-णिग्गअ-त्थोर-धवल-मोत्ता-विहूसणं विदुमावलीणं ॥६१॥

[रसति रसातलं दलति मेदिनी निपात्यन्ते जलद-निवहाः पर्येति गगनाङ्गने कपिगणः

अवपात्यन्ते महीधराः महीधराभिहतः सागरः अपि सुचिरं स्थले घूर्णते अमुक्त-वेदनः ।

कुसुम-प्रसाधनं इव समुग्ध-पल्लवं सागरे पतितानां विटप-लग्नं द्रुमावलीनां

जातं भिन्न-शुक्ति-पुट-मध्य-निर्गत-स्थूल-धवल-मुक्ता-विभूषणं विद्रुमा-वलीनम् ॥ ]

---

1 ०म्भन्ति GB. 2 गाह० Ms. 3 कवि० GB. 4 ०अओ Ms. 5 ०णं Ms.

अन्तर्गिरिप्रवेशाद् रसातलं रसति, समुद्रप्रेरणाद् दलति मेदिनी, शैलनिपातात्तदाश्रिता जलदनिवहा 'निसुम्भन्ति' निपात्यन्ते, अपरापरपर्वतानयनाय गगनाङ्गने कपिगणः पर्येति, तथा 'ओसुम्भन्ति' प्रक्षिप्यन्ते महीधराः, महीधराहतः सन् सागरोऽप्यमुक्तवेदनः सन् सुचिरं स्थले धूर्णते[1], [2]वेदनयोर्वैरण्येकारस्य इकारः[3] ॥ भिन्नशुक्तिसंपुटमध्यनिर्गतस्थूलधवलमुक्ताविभूषणं विद्रुमेषु प्रवालमणिष्ववलोनं सत् सागरे पतितानां द्रुमावलीनां तरुपंक्तीनां विटपेषु शाखासु लग्नं सत् समुग्धपल्लवं नवपल्लवसहितं कुसुमप्रसाधनमिव जातम् ॥६१॥

अत्थमिआइ[4] महिहराण समच्छरे[F42a]हिं
परिमलिआइ वण-गएहि समच्छरेहिं ।
साहइ कुसुम-रेणुमइओ धओ व्वणाइं
अविरल[5]-णिम्महन्त-महु-गन्ध-ओव्वणाइं ॥६२॥

**[अस्तमितानि महीधराणां समत्सरैः**
**परिमृदितानि वन-गजैः समं अप्सरोभिः ।**
**शास्ति कुसुम-रेणुमयः ध्वजः वनानि**
**अविरल-निर्यन्-मधु-गन्ध-यौवनानि ॥ ]**

संशब्दः सममित्यर्थे । रमणक्रीडावसतिभिरप्सरोभिः समं सागरेऽस्तमितानि महीधराणां वनानि कुसुमरेणुमयो ध्वजः कथयति, क्रीडासक्ताभिरप्सरोभिः समुद्रे सज्जनमपि न ज्ञातमिति भावः । वनानि कीदृशानि समत्सरैः[6] सकोपैर्वनगजैः परिमृदितानि । एवमविरतं 'णिम्महन्तो' निर्गच्छन् यो मधुगन्धो मकरन्दामोदः स एव यौवनं येषां तानि, कुसुमरेणूनां तुङ्गतयोत्थानाद्ध्वजत्वे निरूपणम् ॥६२॥

1 ॰न्ते Ms. 2 Cf. "एत इद्वा वेदना-चपेटा-देवर-केसरे" Hem. 8.1.146. 3 Ms treats the four lines of v. 61 as forming 2 verses and numbers them accordingly. 4 ॰आाण GB. 5 ॰रग्र॰ GB. 6 समच्छरैः Ms.

वहइ पवङ्गम-लोओ पहुप्पइ णहङ्गणं पडिच्छइ उअही।
देइ मही वि महिहरे तह वि अ[1] दूर-विअडोअरं पाआलं ६३॥

[वहति प्लवङ्गम-लोकः प्रभवति नभोऽङ्गणं प्रतीष्टे उदधिः।
ददाति मही अपि महीधरान् तथा अपि च दूर-विकटोदरं पातालम्॥]

वहति प्लवङ्गमलोको महीधरानिति योज्यं, पर्वतसम्मानाय प्रभवति नभोऽङ्गनं, प्रतीच्छत्युदराभ्यन्तरे स्थापयति समुद्रो नतु कल्लोलैः क्षिपति, मह्यपि महीधरान् ददाति, तथापि च दूरविकटोदरमिति विशालकुक्षिपातालं दुष्करमेवेत्यतिशयोक्तिः, एवञ्च क्वापि नास्ति प्रतिबन्धस्तथापि पातालावधिर्न प्राप्यत इति भाव इति **लोकनाथः** ॥६३॥

इअ खोहेन्ति पवङ्गा थोअ-विराअ-गिरि-पङ्क-णिव्वुअ-महिसं।
दुम-मिलिअ-विद्दुम-वणं थल[2]-सावअ-मिलिअ-जलअरं मअर-
हरं ॥६४॥

[इति क्षोभयन्ति प्लवङ्गाः स्तोक-विलीन-गिरि-पङ्क-निर्वृत-महिषम्।
द्रुम-मिलित-विद्रुम-वनं स्थल-श्वापद-मिलित-जलचरं मकरगृहम्॥]

षड्भिः कुलकमाह। इत्येवं प्रकारेण प्लवङ्गा मकरगृहं क्षोभयन्ति कीदृशं स्तोकविलीनगिरिपङ्केन निर्वृता महिषा निसर्गसोष्माणो यत्र तं द्रुमैः सह मिलितं विद्रुमवनं यत्र स्थलश्वापदैः सिंहव्याघ्रादिभिर्मिलिताः सिंहमकरादयो यत्र तं। आद्यविशेषणेन समुद्रस्य विपत्तावपि परहितकारित्वं, द्वितीयेन योग्यसङ्गमकर्तृत्वं, तृतीयेन वध्यघातकयोरप्यविरोधास्पदत्वं सूचितमिति **लोकनाथः** ॥६४॥

---

1 हु GB.; Ms having खु as a second reading. 2 खर० Ms.

वण-गअ-गन्धारोसिअ-जम्भाअन्त-पडिउद्ध-केसरि-मअरं ।
समुह-पडन्त-धराहर-भीअ-वलन्त-भुअइन्द-जणिआवत्तं ॥६५॥

[वन-गज-गन्धारोषित-जृम्भमाण-प्रतिबुद्ध-केसरि-मकरम् ।
संमुख-पतद्-धराधर-भीत-वलमान-भुजगेन्द्र-जनितावर्तम् ॥ ]

वनगजगन्धेनारोषिता जृम्भमाणा विवृतमुखाः प्रतिबुद्धाः केशरिमकरा यत्र, संमुखं पतद्भ्यो धराधरेभ्यो भीतैर्वलद्भिर्भुजगेन्द्रैर्जनित आवर्तो यत्र तं संमुखे पतता धराधरेण भीततया वलद्भिर्भुजगेन्द्रैर्जनिता आवर्ता यत्र तम् ॥६५॥

अत्थाअन्त-वण-त्थलि-परिणामोलुग्ग-पण्डु-वत्त[1]-त्थइअं ।
मअण-दुम-भङ्ग-णिग्गअ-कसाअ-रस-मलिअ-[2]विहल-घोलिर-
मच्छं ॥६६॥

[अस्तायमान-वन-स्थली-परिणामावरुग्ण-पाण्डु-पत्र-स्थगितम् ।
मदन-द्रुम-भङ्ग-निर्गत-कषाय-रस-मृदित-विह्वल-घूर्णमान-मत्स्यम् ॥ ]

अस्तायमानानां वनस्थलीनां परिणामेनावरुग्णैः पाण्डुभिः पत्रैरवस्थगितं मदनद्रुमस्य करहाटस्य भङ्गान्निर्गतकषायरसेन मृदिता विह्वला घूर्णनशीला मत्स्या यत्र, मदनरसो हि मत्स्यानां विषमिति श्रुतिः ॥६६॥

धरणिहर-सिहर[3]-वेल्लिअ-पल्लव-दल-मुद्ध-वेल्लिअ-लआ-जालं ।
विसवण्णवाअवा[F42b]हअ-पव्वाअन्त-विसवण्ण-वाअव-कुसुमं ॥६७॥

[धरणीधर-शिखर-प्रेरित-पल्लव-दल-मुग्ध-वेल्लित-लता-जालम् ।
विषवन्-नवातपाहत-प्रवायद्-विस-वर्ण-पादप-कुसुमम् ॥ ]

1 ०वत्तो० Ms. 2 मइत्र GB. 3 ०हर-भार० GB.

धरणिधरशिखरप्रेरितानि पल्लवैर्दलैः पत्रैर्मुग्धानि वेल्लितानि लताजालानि यत्र, मुग्धं यथा स्यात्तथा वेल्लितं लताजालं यत्र, एतेन विपद्यमानत्वेनाश्रयभूतैः शिखरैः परित्यागेऽपि निजप्रभवतया पल्लवैर्दलैश्चापरित्यागस्यौचित्य[1] सूचितमिति **लोकनाथः**। विषवन्नवातपेन विषतुल्यातपेन नवेन शरदातपेनाहतानि 'वाअन्ति' शुष्यन्ति विसवर्णानि[2] मृणालधवलानि पादपकुसुमानि यत्र ॥६७॥

**आवत्त-भमिर-महिहर-सिहरोज्झर-सीभरान्धआरिअ[3]-गअणं।**
**पडिओसहि-गन्धाहअ-पाआल-दलुच्छलन्त-[4]विहल-विसधरं ॥६८॥**

**[आवर्त-भ्रमणशील-महीधर-शिखरनिर्झर-शीकरान्धकारित-गगनम्।**
**पतितौषधि-गन्धाहत-पाताल-तलोच्छलद्-विह्वल-विषधरम् ॥ ]**

[F42b] आवर्तेषु भ्रमणशीलानां महीधराणां शिखरनिर्झरशीकरैरन्धकारितं गगनं येन, पतितानामोषधीनां गन्धेनाहताः सन्तः पातालतलादुच्छलन्तो विकला विषधरा यत्र तम् ॥६८॥

**आवत्त-मण्डलोअर-वलन्त-सेल-कडअ-प्पहामिज्जन्तं।**
**णिन्त-रसाअल-विसहर-वित्थिण्ण-फणा-मणि-प्पहा-**
**मिज्जन्तं॥६९॥ कु (कुलअं)।**

**[आवर्त-मण्डलोदर-वलच्-छैल-कटक-प्रभ्राम्यमाणम्।**
**निर्यद्-रसातल-विषधर-विस्तीर्ण-फणा-मणि-प्रभा-मीयमानम् ॥ ]**

आवर्तमण्डलोदरे भ्रमद्भिः शैलकटकैर्मन्थदण्डैरिव प्रभ्राम्यमाणं प्रकर्षेण भ्राम्यमाणमिति **कुलनाथः**। निर्गच्छन्तीभी रसातलसम्बन्धिनां विषधराणां विस्तीर्णाभिः फणामणि-प्रभाभिर्मीयमानमियत्तया गृह्यमाणतलपरिमाणम्। यद्वा मीयमानं प्रक्षिप्यमाणम्, 'उमिच्छ'-प्रक्षेपणे[5] इत्यस्य रूपम्। अनेन समुद्रसलिलादपि मणिप्रभाणां बाहुल्यं सूचितम् ॥६९॥

---

1 ०सौचित्य Ms. 2 विष० Ms. 3 ०सीहरान्ध० GB. 4 ०समुच्छ० GB. 5 But we have in Hemachandra "वज्जेर्वेहव-वेलव-जूरवोमच्छाः" (8. 4. 93.), the form here being उमच्छइ.

अव्वोच्छिण्ण-विसज्जिअ-णिरन्तराआम-मिलिअ-पव्वअ-घटिओ ।
दीसइ णह-णिम्माओ णासइ उअहिम्मि णिवडिओ सेउ-वहो ॥७०॥

[अव्यवच्छिन्न-विसर्जित-निरन्तरायाम-मिलित-पर्वत-घटितः ।
दृश्यते नभो-निर्मितः नश्यति उदधौ निपतितः सेतुपथः ॥ ]

अव्यवच्छिन्नं यथा स्यात्तथा विसर्जितैर्निरन्तरेणायामेन मिलितैः पर्वतैर्घटितः सेतुपथो नभसि मिलितो दृश्यते, उदधौ निपतितो नश्यति ॥७०॥

तो घेप्पिउं पउत्ता थोअ-त्थोअं परिस्समेण पवङ्गा ।
अणुराए व्व[1] विराए लङ्काणत्थ-घडण-क्खमे सेउ-वहे ॥७१॥

[ततः ग्रहीतुं प्रवृत्ताः स्तोक-स्तोकं परिश्रमेण प्लवङ्गाः ।
अनुरागे इव विलीने लङ्कानर्थ-घटन-क्षमे सेतु-पथे ॥]

इअ सिरि-पवरसेणस्स एत्थ रावणवहे महाकव्वम्मि ।
सेलवहणसण्णो सत्तमओ आसासओ परिसमत्तो ॥
इति प्रवरसेनस्य अत्र रावनवधे महाकाव्ये ।
शैलवहनसंज्ञः सप्तमः आश्वासः परिसमाप्तः ॥

ततः पर्वतप्रक्षेपणानन्तरं लङ्कानर्थघटनक्षमे सेतुपथेऽनुराग इव विलीने सति बन्धं न गते सतीति **कुलनाथः**। प्लवङ्गाः स्तोकं स्तोकं प्ररिश्रमेण ग्रहीतुं[2] प्रवृत्ताः परिश्रमेण कर्तृभूतेन ग्रहीतुं[2] प्रारब्धा इति **लोकनाथः**। यद्वा प्रयत्ताः प्रारब्धाः, यद्वा-प्रयत्नाः[3] प्रयत्नविषयीकृता इति **लोकनाथः**॥ इति **रावणवध-सेतुतत्त्व-चन्द्रिकायां** सप्तम आश्वासः ॥७१॥

---

1 म्ब Ms. 2 गृहीतुं Ms. 3 प्रयत्ना Ms.

# अट्ठमो आसासओ

इअ जाहे णिवडन्ता सिहरोज्झार-धोअ-सुर-विमाण-धअ-वडा।
अत्थाअन्ति[F42a]समुद्दे वित्थारत्थमिअ-णह-अला वि महि-
हरा ॥१॥

[इति यदा निपतन्तः शिखरनिर्झर-धौत-सुर-विमान-ध्वज-पटाः।
अस्तायन्ते समुद्रे विस्तारास्तमित-नभस्तलाः अपि महीधराः॥]

इदानीं समुद्रस्य गिरिक्षोभनिवृत्त्यवस्थापायपूर्वकं[1] सेतुबन्धनमाह। युग्मकं॥ इत्येवं प्रकारेण शिखरनिर्झरेण धौताः सुरविमानध्वजपटा यैः, [2]विस्तारेणावस्थगितनभस्तला अपि महीधराः समुद्रे निपतन्तोऽस्तायन्ते ॥१॥[3]

ताहे णिसुद्ध-सेसा वेवन्तुव्वत्त-कर-अलोसरिअ-अडा।
ठविआ वेलामूले खण-लक्खिअ-गोवरा[4] कईहिं महिहरा ॥कु २॥

[तदा निपातित-शेषाः वेपमानोद्वृत्त-करलतापसृत-तटाः।
स्थापिताः वेलामूले क्षण-लक्षित-गौरवाः कपिभिः महीधराः॥]

तदा 'णिसुद्धसेसा' क्षिप्तेभ्योऽवशिष्टा महीधरा वेलामूले कूलसमीपे कपिभिः स्थापिताः कथं पर्वताः प्रक्षिप्ता वृथा नाश्यन्त इति भावः। पर्वताः कीदृशाः, वेपमानात् पर्वतभरेणोद्वृत्तात् पृष्ठावच्छेदे परिवृत्तिं गच्छन्तः करतलादपसृततटा मस्तकनिहितभारावतारणसमये करतलस्य पृष्ठावच्छेदेपरिवृत्तिश्च सहजसिद्धैव, **वेवन्तुव्वाअ इति पाठे** वेपमानाच्छ्रान्तात् करतलादित्यर्थः क्षणलक्षितं गौरवं येषामुत्साहापगमात् क्षणलक्षितगौरवा **इति कु** (कुलनाथः)। यद्वा अवतारणसमये भारस्य गौरवं लक्ष्यत इति स्वभावः ॥२॥

---

1 ०स्था-अपाय Ms. 2 Cf. G(fn) ०र-त्थइओ (०स्थगित०) CKS.
3 Here ends F. 41. 4 ०गारवा GB.

गिरि-संखोह-विमुक्का झीणा अप्पत्त-पढम-गमणोआसा ।
मन्दन्दोलण-मउआ गआगअ च्चिअ समुद्द-सलिलुप्पीला[1]॥३॥

[गिरि-संक्षोभ-विमुक्ताः क्षीणाः अप्राप्त-प्रथम-गमनावकाशाः ।
मन्दान्दोलन-मृदुकाः गतागताः एव समुद्र-सलिलोत्पीडाः ॥ ]

इदानीं समुद्रस्य गिरिक्षोभनिवृत्त्यवस्थामाह गिरिसंक्षोभेण विमुक्ता अतः क्षीणा अनुच्छलिता अतश्चाप्राप्तप्रथमगमनावकाशाः । संक्षोभेण प्रथमं यावद् दूरंगतास्तावद् दूरं न गता इत्यर्थः, मन्दान्दोलनाश्च ते मृदुकाश्चेति ते तथा, ततश्च गतागता एव परं समुद्रस्य सलिलोत्पीडा जलसंघाता गिरिसंक्षोभेण विमुक्ता अतः पतितैर्गिरिभिः कर्दमितत्वात् क्षीणा शोषदशां प्राप्ता **इति लोकनाथः**। यद्वा गतागता एव क्षीणा गमनागमनादेव क्षीणा इत्यर्थः ॥३॥

भिण्ण-घडन्तावत्तो आवत्तन्तर-भमन्त-भिण्ण-महिहरो ।
महिहर-सम्भम-विहुओ विहुअ-णिअत्त-सलिलो णिअत्तइ
उअही ॥४॥

[भिन्न-घटमानावर्तः आवर्तान्तर-भ्रमत्-भिन्न-महीधरः ।
[महीधर-संभ्रम-विधुतः विधुत-निवृत्त-सलिलः निवर्तते उदधिः ॥]

पूर्वं गिरिघाताद्भिन्नः पश्चाद्घटमान आवर्तो यत्र । आवर्तान्तरेषु भ्रमन्तो भिन्ना महीधरा यत्र । महीधरेभ्यः संभ्रमो भयं तेन कर्तृभूतेन विधुतो दिगन्तं गतः । आदौ विधुतं कम्पितं पश्चान्निवृत्तं सलिलं यस्य एवंभूत उदधिर्निवर्तते ॥४॥

वोच्छिज्जन्त-कलअलं [2]जहोइअ-ट्ठाण-दर-पअत्तावत्तं ।
दीसइ खण-दुल्लक्खं[3]तच्चिअ थिमिअ[4]-सलिलत्तणं जलणिहिणो ॥५॥

---

1 ०डा GB. 2 जहोइअअ० Ms. 3 तं चिअ GB. 4 स्थि० Ms.

[व्यवच्छिद्यमान-कलकलं यथोचित-स्थान-दर-प्रवृत्तावर्तम् ।
दृश्यते क्षण-दुर्लक्ष्यं तदेव स्तिमित-सलिलत्वं जलनिधेः ॥ ]

व्यवच्छिद्यमानः कलकलो यत्र, यथोचितस्थानेष्वावर्तोचितपदेषु दरप्रवृत्त आवर्तो यत्र, गिरिसंक्षोभेण दुर्लक्ष्यं तदेव प्रकृतमेव स्थिमितसलिलत्वं सलिलनिधेर्दृश्यते, व्यतिकरापगमे सति समानशीलसुहृद्बन्धूनां सङ्गतिः स्यादित्यभिप्रायेणाह, एतेनविपदधीनतया महतां स्वभाव-परित्यागो न चिरं तिष्ठतीति ध्वनितमिति **लोकनाथः** ॥५॥

**मोत्ता-घडन्त-कुसुमं सम-मरगअ-पत्तभङ्ग[1]-भरिआवत्तं ।**
**विद्दुम-मिलिअ-किसलअं ससंख-धवल-कमलं पसम्मइ सलिलं ॥६॥**

[मुक्ता-घटमान-कुसुमं सम-मरकत-पत्रभङ्ग-भृतावर्तम् ।
विद्रुम-मिलित-किसलयं सशङ्ख-धवल-कमलं प्रशाम्यति सलिलम् ॥]

घटना हि द्विविधा भवति सङ्गमतः सादृश्याच्चेति उभयथाप्याह । तत्र सङ्गमे मुक्ता-भिर्घटमानानि मिलन्ति कुसुमानि[2] यत्र । सादृश्ये समस्तुल्यो मरकतो मणिर्येषां तादृशा ये पत्रभङ्गा भग्नपत्राणि तैर्भरितावर्तं, विद्रुमेषु मिलितं किसलयं यत्र सशङ्खानि धवलकमलानि यत्र, प्रशाम्यति सलिलं समुद्रस्येत्यर्थात् । एतेनाश्रयस्य विपदुपशमे आश्रिता अप्येकजातीयाः परस्परं मिलन्तीति सूचितम् ॥६॥

**दीसइ समोसिअन्ती खण-[3]णिव्वडिउत्तरन्त-विलुलिअ-कुसुमा ।**
**झिज्जन्तारुण-[F43b]अम्बा समुद्द-वट्टम्मि धाउ-वङ्क[4]-च्छाआ ॥७॥**

[दृश्यते समवसीदन्ती क्षण-निर्वलितोत्तराद्-विलुलित-कुसुमा ।
क्षीयमाणारुण-ताम्रा समुद्र-पृष्टे धातु-पङ्क-च्छाया ॥ ]

---

1 ०वत्त० GB 2 Ms. has here किसलयानि (for कुसुमानि) erroneously.
3 ०व्वलि० GB. 4 ०पङ्क० GB.

समवसीदन्तो मन्दतां गच्छन्ती, क्षीयमाणो योऽरुणः प्रत्यूषरागस्तद्वत्ताम्रा लोहिणी क्षणं निर्वेटितानि पृथगभूतानि विरलीभूतानीतियावदुत्तरन्त्युत्प्लवमानानि विलुलितानि म्लानानि कुसुमानि यत्र, सा धातुपङ्कच्छाया समुद्रपटे समुद्राभोगे समुद्रपृष्ठे वा दृश्यते। एतेन समुद्रस्य श्यामत्वान्नभःसाम्यं धातुशोभायाः सन्ध्यारागतुल्यता कुसुमानाञ्च तारागण-सादृश्यं समाहितम् ॥७॥

वणगअ-गन्धुत्तिण्णा पुणो णिअत्तन्ति आअवाहअ-विअला।
णिअअ-कर-[1]सीभरोल्लिअ-णिव्वाअन्त-मुह-मण्डला करिम-
अरा ॥८॥

[वन-गज-गन्धोत्तीर्णाः पुनः निवर्त्तन्ते आतपाहत-विह्वलाः।
निजक-कर-शीकरार्द्रित-निर्वाप्यमाण-मुख-मण्डलाः करिमकराः ॥ ]

वनगजानां गन्धेनोत्तीर्णा आतपाहतत्वाद्विह्वला निजकर-करशीकरार्द्रितानि निर्वान्ति शीतलायमानानि मुखमण्डलानि येषां ते तथाभूताः सन्तः करिमकरा निवर्तन्ते। आतप-भिया समुद्र एव मज्जन्तीति **लोकनाथः** ॥८॥

दुम-भङ्ग-कलुसिआइं कसाअ-रस-भिण्ण-पण्डुर-प्फेणाइं।
जाआइ णिण्णआण उत्थल-[2]वडण-रअ-धूसराइ मुहाइं ॥९॥

[द्रुम-भङ्ग-कलुषितानि कषाय-रस-भिन्न-पाण्डुर-फेनानि।
जातानि निम्नगानां उत्स्थल-वलन-रजो-धूसराणि मखानि ॥ ]

निम्नगानां नदीनां मुखानि समुद्रप्रवेशजलानि गिरिपतनसंमर्दैन द्रुमभङ्गैः कलुषितान्याविलानि कषायरसेन पीतशालादिनिर्यासेन भिन्ना मिश्रिताः पाण्डराः फेना येषामुत्स्थल-मुन्नतदेशस्ततः पतनेन रजोधूसराणि जातानि। **पाठान्तरे** परिधूसराणि जातानि। एतेन पत्युर्विपदि स्त्रीणामीदृशी दशा स्यादिति सूचितम् ॥९॥

---

1 ०सीहरो० GB. Cf. ०सीभ० C.    2 ०वलण० GB.

खुहिओअहि-विच्छूढा[1] महिन्द-कडएसु मलअ-भित्ति-च्छेआ ।
घडिआ मलिअ-गअ-उला मलअअडेसु अ महिन्द-सिहर-
द्धन्ता[2] ॥१०॥

[क्षुभितोदधि-विक्षिप्ताः महेन्द्र-कटकेषु मलय-भित्ति-च्छेदाः ।
घटिताः मृदित-गज-कुलाः मलय-तटेषु च महेन्द्र-शिखरार्धान्ताः ॥]

क्षुभितोदधिविक्षिप्ता इत्युभयत्र विशेषणम् । मलयस्य भित्तिच्छेदा महेन्द्रकटकेषु घटिताः श्लिष्टा मलयतटेषु महेन्द्रशिखरैकदेशा मृदितगजकुला इत्युभयत्र विशेषणम् । विपदुपशमे बन्धवः परस्परं मिलन्तीति भावः ॥१०॥

दीसन्ति विअड-धवला थिमिअ-णिअत्तन्त-जल-तरङ्गिअ-वट्टा[3] ।
वासुइ-णिम्मोअ-णिहा णिरन्तरालग्ग-मोत्तिआ पुलिण-वहा ॥११॥

[दृश्यन्ते विकट-धवलाः स्तिमित-निवर्तमान-जल-तरङ्गित-पृष्ठाः ।
वासुकि-निर्मोकनिभाः निरन्तरालग्न-मौक्तिकाः पुलिन-पथाः ॥ ]

विकटधवलाः स्तिमितं शनैः शनैर्निवर्तमानेन जलेन तरङ्गितपृष्ठा निरन्तरालग्नमौक्तिकाः पुलिनपथा वासुकिनिर्मोकनिभा दृश्यन्ते । तेऽपि विशालायतधवलास्तरङ्गिणः पुलकाचिताश्च भवन्तीत्यर्थः । स्तिमितं मन्दं मन्दं यथा स्यात्तथा निवर्तमानेन निजस्थानं प्राप्तेन जलेन भरितं सभङ्गीकृतं पृष्ठं येषां ते तथा निरन्तरालग्नमौक्तिका अतएव विकटधवला इति **लोकनाथः** ॥११॥

खोहेन्ति खुहिअ-णिहुअं उअहिं णह-वन्थ-पडिणिअत्तोवइआ ।
पव्वअ-घाउच्छित्ता[4] चिरआलालोइआ सलिल-संघाआ ॥१२॥

[क्षोभयन्ति क्षुभित-निभृतं उदधिं नभः-पथ-प्रतिनिवृत्तावपतिताः ।
पर्वत-घातोत्क्षिप्ताः चिरकालालोकिताः सलिल-संघाताः ॥ ]

---

1 °विच्छूडा B ; °विव्वूढा Ms. 2 °सेलद्धन्ता GB. 3 °ट्ठा G.
4 °क्खित्ता GB.

नभःपथात् प्रतिनिवृत्ताः सन्तोऽवपतिताः पर्वतघातेनोत्क्षिप्ता अतो दूरमुत्थाय पतने चिरकालमालोकिताः सलिलसंघाता क्षुभितनिभृतमुदधिं क्षोभयन्ति। पर्वतप्रहारोत्क्षिप्ता उत्क्षेपवेगेन दूरंगतत्वान्नभसोऽर्धपथात् प्रतिनिवृत्ताः सन्तोऽवपतिता एवं निपतिताः सलिलसंघातस्य बृहत्त्वात् किममी पर्वताः किंवा मेघा इति चिरकालमालोकिता दूरगमनाच्चिरकालेनालोकिता इति कुः ( कुलनाथः )। एतेन सलिलसंघातस्य पर्वतवन्महत्त्वमुक्तमिति **लोकनाथः** ॥१२॥

[1]अह णल-विइण्ण-णअणो जम्पइ विहडन्त-मणिसिलाण वट्टो[2]।
उव्वत्तिआअअ-ट्ठिअ-वाम-करा[3]रुहिअ-तिअ-भरो पवअवई ॥१३॥

[अथ नल-वितीर्ण-नयनो जल्पति विघटमान-मणिशिलासन-पृष्ठः।
उद्वर्तितायत-स्थित-वाम-करारूढ-त्रिक-भरः प्लवगपतिः ॥ ]

अथ पर्वतनयनानन्तरं नले वानरविशेषे वितीर्णं नयनं येनेदृशः सन् प्लवगपतिर्जल्पति। किंभूतः, ईषत् पश्चान्निविष्टेन नलेन सह संकथनायोद्वर्तित आवर्जितः सन्नायतस्थितो यो वामकरस्तत्रारूढस्त्रिकभरो यस्य। उद्वर्तितपदं त्रिकविशेषणं वा। उद्वर्तितस्तिर्यग्भूत आयतस्थितश्चासौ वामकरारूढत्रिकभरश्चेति **श्रीनिवासः**। त्रिकविवर्तनादेव विघटमानो मणिशिलासनपट्टो यस्य ॥१३॥

खविओ [4]पवङ्ग-लोओ दूर-ट्ठिअ-विरल-पव्वअं महि-वेढं।
ण अ दीसइ सेउ-वहो माहु णमेज्ज गरुअं पुणो राम-धणुं ॥१४॥

[क्षपितः प्लवङ्गलोकः दूरस्थित-विरल-पर्वतं महीवेष्टम्।
न च दृश्यते सेतु-पथो मा खलु नमेत् गुरुकं पुनः राम-धनुः ॥ ]

---

1 णहअल॰ Ms. which corrects अ by ण at the bottom but forgets to correct the first ण by अ. 2 वट्ठो GB. 3 ॰अरा॰ GB.
4 वाणर॰ GB.

ज्ञपितो निष्फलश्रमपीडितः प्लवङ्गमलोकः। दूरे स्थिता विरलाः पर्वता यत्र तत्तथा महीमण्डलं, न च दृश्यते सेतुपथः, मा खलु नमेत् प्राप्तावसरत्वान्नमदेव लक्ष्यते गुरुकं रामधनुः। गुरुकं यथा स्यात्तथा मा खलु नमेदिति **लोकनाथः**। पुनरिति पूर्वं नते तावद् वालिसमुद्रादिव्यापत्तिस्तादृशी जाता, पुनर्नते न जाने किं भविष्यतीति भावः। गुरुतरनमने कस्यापि परित्राणं न भविष्यतीति भाव इति **लोकनाथः** ॥१४॥

**मइरा मुद्ध-मिअङ्को अमअं लच्छी [1]सकोत्थुहं दुम-रअणं।**
**किं सेउ-बन्ध-लहुअं जं वोत्तूण रअणाअरेण ण दिण्णं ॥१५॥**

**[मदिरा मुग्ध-मृगाङ्कः अमृतं लक्ष्मीः सकौस्तुभं द्रुम-रत्नम्।**
**किं सेतुबन्ध-लघुकं यत् उक्त्वा रत्नाकरेण न दत्तम्॥]**

मदिरा मुग्धमृगाङ्कोऽमृतं लक्ष्मीः सकौस्तुभं द्रुमरत्नं पारिजाततरुः किं सेतुबन्धाल्लघुकम्, एतानि किं लघूनि सेतुबन्धाद् यतो देवेभ्यस्तानि दत्तानि, अयं तु घडिअगिरिसेतुबन्धमित्यादि वज्रकरेणोदित्वाप्यस्मभ्यो न दत्तः। एतदुक्तं भवति यद्यत् प्रत्येकं त्रैलोक्यसारं मदिरादिकं तदेवानेन देवासुरेभ्यो दत्तं यत् प्रार्थितमभ्युपगम्यापि न दत्तमित्यहो गरीयानस्माकं परिभव इति भावः। घटितगिरिसेतुबन्धमित्युक्त्वास्माकमुपदिष्टमेव। तथापि यदि वयं सेतुबन्धे न शक्तास्तदा महानेव पराभव इति **लोकनाथः** ॥१५॥

**धूमाअन्ति च्चिअ से अज्ज वि पाआल-देह-दूरालग्गा।**
**आअट्टन्त-जलाहअ-ससद्द-विज्झविअ-हुअवहा राम-सरा ॥१६॥**

**[धूमायन्ते एव तस्य अद्यापि पाताल-देह-दूरालग्नाः।**
**आवर्त्यमान-जलाहत-सशब्द-विध्यापित- हुतवहा राम-शराः॥]**

'से' तस्य समुद्रस्य पाताल एव देहे दूरालग्ना रामशरा आवर्त्यमानेन क्वाथ्यमानेन क्षीयमाणेन वा जलेनाहतः सशब्दं सचमत्कारं विध्यापितो निर्वापितो हुतवहो येषां तेऽद्यापि धूमायन्त एव नैतावन्निर्वान्तीत्यर्थः। एतेन समुद्रस्यात्र परिपन्थिता नाशङ्कनीयेति दर्शितम् ॥१६॥

1 ०कोत्तहं Ms.

तं बन्धसु धीर तुमं सेउं अज्जेअ जाव दूरन्तरिआ।
एक्कं मलअ-सुवेला होन्तु दुहाअ-विअडा समुद्दद्धन्ता ॥१७॥

[तत् बन्धय धीर त्वं सेतुं अद्यैव यावत् दूरान्तरितौ।
एकौ मलय-सुवेलौ भवतः द्विभाग-विकटौ समुद्रार्धान्तौ ॥ ]

यत एवं तत्तस्माद् भो धीर कार्यपरिडत सेतुं बन्धय। अद्यैवेति विज्ञानमाहात्म्यमुक्तम्, दिनान्तरापेक्षाप्यत्र नास्तीत्यर्थः। यावद्भवतो भविष्यत इत्यर्थः। यावद् द्वावेतौ योजनशतव्यवहितौ मलयसुवेलौ एकावभिन्नौ। न केवलमेतावभिन्नौ भविष्यतः समुद्रार्धान्तौ द्विभागविकटौ भविष्यतः सेतुना दूरदेशावस्थितभागावित्यर्थः। एतेन सेतुपथस्यायामपरिणाहमाहात्म्यमुक्तम्। एक्कं[1]होन्तु इति एकौ भवतो यावदित्यर्थः ॥१७॥

तो पवअ-बलाहि फुडं विण्णाणासङ्ग-णिव्वडन्त-[2]च्छाओ।
पवअ-वइ-संभमुम्मुह-विइण्ण-भयहित्थ-लोअणो भणइ णलो ॥१८॥

[ततः प्लवग-बलात् स्फुटं विज्ञानासंघ-निर्वर्टत्-छायः।
प्लवगपति-संभ्रमोन्मुख-वितीर्ण-भयव्याकुल-लोचनः भणति नलः ॥ ]

ततः सुग्रीववचनानन्तरं नलः स्फुटं भणति व्यक्तं स्वकर्मकौशलं विज्ञापयति, कीदृशः प्लवगबलात् स्फुटविज्ञानव्यवसायो निर्वर्टन्ती विलक्षणा भवन्ती छाया कान्तिर्यस्य। प्लवगबलाद्विज्ञानस्य सेतुनिर्माणशिल्पस्य य आसंघः संभावना तेन निर्वर्टन्ती निष्पाद्यमाना छाया शोभा यस्येति **लोकनाथः**। प्लवगपतेः सम्भ्रमेणादरेण उन्मुखं यथा स्यात्तथा वितीर्णे भयव्याकुले लोचने येन, भयव्याकुलत्वं प्रभोरत्यादरात् परिभवशङ्कयेति **कुलनाथः**। वालिसमुद्रावस्थां दृष्ट्वा, रामादिति **केचित्**। यद्वा परनिपातात् संभ्रमोन्मुखेन प्लवगपतिना वितीर्णे भयव्याकुले लोचने यस्मै इति **केचित्** ॥१८॥

1 ०क्का Ms. 2 ०लन्त० GB.

भण्णइ पवङ्ग-पुरओ रहुणाहस्स अ[1] पवङ्ग-वइ वीसत्थं ।
तुह सेउ-बन्ध-जणिआ ममम्मि सम्भावणा ण होहिइ अलिआ ॥१९॥

[भण्यते प्लवङ्ग-पुरतः रघुनाथस्य च प्लवग-पतेः विश्वस्तम् ।
तव सेतु-बन्ध-जनिता मयि सम्भावना न भविष्यति अलीका ॥ ]

हे प्लवगपते सजातीनां प्लवङ्गानां रघुनाथस्य च पुरतो विश्वस्तं यथाभूतं भण्यते, न हि कर्तुमशक्यं (इति) स्वामिनो ज्ञातीनाञ्च पुरतः कथ्यत इति भावः। किं तदित्याह सेतुबन्धजनिता तव संभावना मय्यलीका न भविष्यति, अद्यैव तव संभावनां सफलीकरिष्यामीति भावः। सेतुर्बद्ध एवेत्यवगच्छ इत्याशयः। एतदेव द्रढयन्नाह ॥१९॥

[F. 44a ends]

खविओ[2] व्व सेल-णिवहो [3]दलिअं व रसा[F44a]-अलं धुओ व्व समुद्दो ।
जीअं व परिच्चत्तं अज्ज [4]व सम्भावणा [5]तुह ण णिव्वूढा ॥२०॥

[क्षपितः वा शैल-निवहः दलितं वा रसातलं धुतः वा समुद्रः ।
जीवितं वा परित्यक्तं अद्य वा सम्भावना तव न निर्व्यूढा ॥ ]

क्षपितो वा शैलनिवहः, दलितं वा रसातलं, धुतो वा समुद्रः, जीवितं वा परित्यक्तमर्थात् कपिभिः, अद्य वा तव संभावनाऽध्यवसायो न निर्व्यूढा। नापरः पक्ष इत्यर्थः। एतत् पक्षचतुष्टयं यदि स्यात् तदैव तव संभावना न निर्वहति नान्यथेत्यर्थः। 'अज्ज हु संभावणा तुह व णिव्वूढा' इति श्रीनिवासपाठे शैलप्रलय-महीघूर्णन-समुद्रोत्सारणानि भवन्तु नाम, अद्य मया जीवितं वा त्यक्तं तव संभावना वा निर्व्यूढेत्याशंसायां भूतवच्चेति क्तः ॥२०॥

---

1 After अ Ms has a superfluous letter appearing like च or व.
2 पव्वअ॰ GB. 3 Ms has omitted the anusvāra. 4 वि Ms.
5 GB तुहं.

तं [1]पेच्छसु महि-विअडं[2] महि-वट्टम्मि व मए[3] महोअहि-वट्टे ।
घडिअं घडन्त-महिअर-घडिअ-सुवेल-मलअन्तरं सेउ-वहं ॥२१॥

[तत् प्रेक्षस्व मही-विकटं मही-पृष्ठे इव मया महोदधि-पृष्ठे ।
घटितं घटमान-महीधर-घटित-सुवेल-मलयान्तरं सेतु-पथम् ॥ ]

ततस्मान्महीपृष्ठे इव महोदधिमध्ये मया घटितं महीवद्विकटं विशालं घटमानैः परस्परं श्लिष्यद्भिर्महीधरैर्घटितं मिलितं मलयसुवेलान्तरं ( यत्र तादृशं ) सेतुपथं प्रेक्षस्व । गतागतसहतया महीपृष्ठेन सह समुद्रसाधर्म्यं वानरप्रोत्साहनाय ॥२१॥

किं उत्तरउ णिरन्तर-घडन्त-धरणिहर-संकमेण समुद्दं ।
ओ वोलेउ धुओअहि-थोउक्खित्त[4]-महि-मण्डलेण कइ-बलं ॥२२॥

[किं उत्तरतु निरन्तर-घटमान-धरणीधर-संक्रमणेन समुद्रम् ।
उत व्यतिक्रामतु धुतोदधि-स्तोकोत्क्षिप्त-मही-मण्डलेन कपिबलम् ॥ ]

चतुर्भिः स्कन्धकैः स्वसामर्थ्यशौर्यश्चाविष्कुर्वन् । आस्तां तावत् सेतुबन्धः प्रभुप्रसादादतोऽप्यधिकः करणीय इत्यध्यवस्यन्नाह । किं निरन्तरघटमानधरणीधरसंक्रमेण कपिबलं समुद्रमुत्तरतु । ओ-शब्दो विकल्पे । अथवा, धुतादुदधेः स्तोकं यावतोत्तरितुं पार्यते तावदुत्क्षिप्तं यन्महीमण्डलं तेन व्यतिक्रामतु । अत्राकृतप्रयोजनस्य कपिबलस्य प्रभुहितकांक्षिणः स्वजातीयोत्साहवर्धनार्थं दर्पाविष्करणमुचितमेव इति कु (कुलनाथः) । यद्यप्यात्मनात्मदर्पाविष्करणमनुचितमेव तथापि प्रभुहितार्थं वानरप्रोत्साहनाय तन्न दोषायेति भावः ॥२२॥

---

1 पेक्खसु GB. 2 ०लं GB. 3 मह GB.
4 ०त्तिरण० GB.

[1]ओ पेच्छसु[2] मलओ च्चिअ पत्थन्तो पडिगअं गओ व्व सुवेलं ।
मह भुअ-दढ-संरुद्धो आइद्धं धुणउ मुह-वडं व समुद्दं ॥२३॥

[उत प्रेक्षस्व मलयः एव प्रार्थयमानः प्रतिगजं गज इव सुवेलम् ।
मम भुज-दृढ-संरुद्धः आविद्धं धुनोतु मुख-पटं इव समुद्रम् ॥ ]

ओ-शब्दः पक्षान्तरे । अथवा, मम भुजाभ्यां दृढं संरुद्धो विधुतः, प्रतिगजं गज इव, मलय एव सुवेलं प्रार्थयमानोऽभियुञ्जान आविद्धं मुखपटमिव समुद्रं धुनोतु विधूय क्षिपतु तत् प्रेक्षध्वमिति वाक्यार्थस्यात्र कर्मता । यथा हस्तिपकनिरुद्धोऽपि गजो विपक्षगजमभियुञ्जानो मुखपटं विधुनोति तथा मद्भुजविधुतो मलयः सुवेलं प्रतिष्ठमानः समुद्रं विधुनोत्वित्यर्थः ॥२३॥

ओ विरएमि णह-अले तुरिअ-पहाविअ-पवङ्ग-सञ्चरण-सहं ।
अणुपरिवाडि-परिट्ठिअ-घण-कूड-घडन्त-महिहरं सेउ-वहं ॥२४॥

[उत विरचयामि नभस्तले त्वरित-प्रधावित-प्लवङ्ग-सञ्चरण-सहम् ।
अनुपरिपाटी-परिस्थित-घन-कूट-घटमान-महीधरं सेतु-पथम् ॥ ]

अथवा, त्वरितानां प्लवङ्गमानां सञ्चरणसहम्, अनुपरिपाट्यानुक्रमेण परिस्थितो यो घनकूटो मेघसंघातस्तद्वद् घटमानाः श्लिष्यन्तो महीधरा यत्र तं सेतुपथं विरचयामि । अतः संघटनहेतुत्वात् घनकूटानां कर्दमत्वं व्यङ्ग्यमिति श्रीनिवासः ॥२४॥

ओ साअरोअरब्भन्तराणिओवरि-परिट्ठविअ-णिप्फन्दा ।
[3]जल-भर-लम्बिअ-वक्खा घडेन्तु लङ्का-वहं रसाअल-सेला ॥२५॥

[उत सागरोदराभ्यन्तरानीतोपरि-परिस्थापित-निःस्पन्दाः ।
जलभर-लम्बित-पक्षाः घटयन्तु लङ्का-पथं रसातल-शैलाः ॥ ]

---

1 तं GB. 2 पेक्खसु GB. 3 जलहर० GB.

अथवा, सागरोदराभ्यन्तरादानीता उपर्युपरि स्थापिता निष्पन्दा निश्चला जलभरेण लम्बितपक्षा इति स्थैर्यहेतुः रसातलशैला लङ्कापथं घटयन्तु पातालादेव सपक्षपर्वतानानीय सेतुं बध्नामीत्यर्थः ॥२५॥

तं मह मग्गालग्गा विरएह जहा-णिओअ-मुक्क-महिहरा ।
अणुवाअ-दि[F45a]ट्ठ-दोसं अइरा-होन्त-सुह-बन्धणं सेउ-वहं ॥२६

[तत् मम मार्गालग्ना विरचयत यथा-नियोग-मुक्त-महीधराः ।
अनुपाय-दृष्ट-दोषं अचिराद्-भवत्-सुख-बन्धनं सेतु-पथम् ॥ ]

यस्मादित्थमशक्यं मे नास्ति तत्तस्मान्मम मार्गालग्ना यथानियोगं मदीयनियोगानतिक्रमेण मुक्तमहीधरा येनोपायेन नियोजयामि तथा मुक्तमहीधरा इति कु (कुलनाथः)। उपायापरिज्ञानेन दृष्टो दोषोऽसंघटनरूपो यत्र ईदृशं सेतुपथं मन्नियोगेनाचिराद् भवत् सुखेन बन्धनं यत्रैवं यथा स्यात्तथा रचयत भोः प्लवङ्गमा इति शेषः। अचिरादित्यादि सेतुपथविशेषणं वा। कुलनाथस्तु यथानियोगे दोषमाह, अनुपायेन दृष्टो दोषोऽनिष्पत्ति-लक्षणो यत्रेत्याह ॥२६॥

इअ णल-वअण-हरिसिअं गलिअ-परिस्सम-णिराअ-मुक्क-कल-अलं ।
चलिअं तुलिअ-धराहर-कअ-णिब्भर-दस-दिसं पवङ्गम-सेण्णं ॥२७॥

[इति नल-वचन-हर्षितं गलित-परिश्रम-निरायत-मुक्त-कलकलम् ।
चलितं तुलित-धराधर-कृत-निर्भर-दश-दिक् प्लवङ्गम-सैन्यम् ॥ ]

[F45a] इति नलवचनेन हर्षितं हर्षादेव गलितपरिश्रमत्वान्निरायतं यथा स्यात्तथा मुक्तकलकलमुच्चैर्मुक्तकिलकिलाशब्दं तुलितैर्धराधरैः कृता निर्भरा पूर्णा दश दिशो येन तत् प्लवङ्गमसैन्यश्चलितम्, सेतुबन्धार्थमुत्तरणं जातम् ॥२७॥

तो[1] णेण सुह-प्फरिसे पिउणो सलिलम्मि मज्जिऊण सणिअमं ।
राम-चरणाण पढमं पच्छा काऊण रवि-सुअस्स पणामं ॥२८॥

[ततः अनेन सुख-स्पर्शे पितुः सलिले मङ्क्त्वा सनियमम् ।
राम-चरणयोः प्रथमं पश्चात् कृत्वा रवि-सुतस्य प्रणामम् ॥ ]

कुलनाथादिमते एतत् पद्यं नास्ति । ततोऽनेन नलेन सुखस्पर्शान् प्रथमं प्रणामं कृत्वा एवं पितुर्विश्वकर्मणः प्रणामं कृत्वा पश्चाद् रविसुतस्य सुग्रीवस्य रविसुतस्य प्रणामं कृत्वा सनियमं ( सलिले ) मङ्क्त्वा[2] आगामिपद्येनान्वयः ॥२८॥

अह [1]कणअ-धाउ-अम्बो [2]सपल्लवासोअ-विडव[3]-भरिअ-दरिमुहो ।
पढमं णलेण णिमिओमङ्गल-कलसो व्व जलणिहिम्मि महिहरो ॥२९
जुग्गअं ॥

[अथ कनक-धात्वाताम्रः सपल्लवाशोक-विटप-भरित-दरी-मुखः ।
प्रथमं नलेन निहितः मङ्गल-कलसः इव जलनिधौ महीधरः ॥ युग्मकम् ॥ ]

क्त्वाप्रत्ययेनैव पूर्वकालाभिधानाद्थेत्यस्योपादानं तत इति वा अव्यवहितानन्तर्य-बोधनाय । सुग्रीवप्रतिवचनानन्तरं कपीनां पर्वतानयनानन्तरं वा । ततः कनकधातुना सुवर्णगैरिकादिनाताम्रः सपल्लवाशोकविटपभरितदरीमुखः प्रथमं नलेन 'णिमित्तो' निहितो मङ्गलकलस इव जलधौ महीधरः ॥२९॥

तह पढममंच्चिअ[1] मुक्को वेला-अड-संठिओ णलेण महिहरो ।
जह दीसिउं पअत्तं[2] लङ्काणत्थस्स सेउ-बन्धस्स मुहं ॥३०॥

[तथा प्रथमं एव मुक्तः वेला-तट-संस्थितः नलेन महीधरः ।
यथा द्रष्टुं प्रवृत्तं लङ्कानर्थस्य सेतु-बन्धस्य मुखम् ॥ ]

---

1 तो GB. 2 मज्जित्वा Ms. 2 सवल्ल० Ms.
3 ०विअड० Ms. 1 ०मं चिअ GB. 2 पउत्तं GB.

वेलातटसंस्थित इति य एव पूर्वं कपिभिरानीय वेलातटसंस्थिताः शैलास्तेषामेकतम इत्यर्थो, महीधरस्तथा नलेन प्रथममेव मुक्तो निवेशितो, यथा लङ्कानर्थस्य सेतुबन्धस्य मुखं द्रष्टुं प्रवृत्तं दर्शनगोचरं गतम्। उपक्रमं द्रष्टुमारब्धम् ॥३०॥

**भमिओ अ तह धराहर-पहरुच्छित्त-सलिलो णहम्मि समुद्दो।**
**महिहर-रअ-मइलाइं जह धोआइ समअं दिसाण[1]मुहाइं ॥३१॥**

**[भ्रमितः च तथा धराधर-प्रहारोत्क्षिप्त-सलिलः नभसि समुद्रः।**
**महीधर-रजो-मलिनितानि यथा धौतानि समं दिशां मुखानि ॥]**

सेतुबन्धमुखदर्शनोद्भूतहर्षोत्साहाभ्यां कपिभिर्गाढक्षिप्तानां महीधराणां प्रहारोत्क्षिप्त-सलिलो नभसि समुद्रस्तथा भ्रान्तश्च यथा पूर्वमुन्मूलनसमये महीधराणां रजोभिर्मलिनितानि दिशां मुखानि समं युगवद्धौतानि। एतेन दिक्प्रसादेनारम्भस्य कुशलहेतुत्वं सूचितम्। महीधरस्य राज्ञो रावणस्य रजोगुणमलिनितानि तत्पीडयाऽप्रसन्नानि दिशां मुखानि धौता-न्याश्वास्य विमलीकृतानीति ध्वनिः ॥३१॥

**जल-तण्णाअ-घडन्ता[2] अविभाविज्जन्त-घडण-मग्गोआसा।**
**ण मुहन्ति एक्कमेक्कं खुहिअ-समुद्द-विसमाहआ वि महि[F45b]हरा ॥३२॥**

**[जलार्द्र-घटमानाः अविभाव्यमान-घटन-मार्गावकाशाः।**
**न मुञ्चन्ति एकैकं क्षुभित-समुद्र-विषमाहताः अपि महीधराः ॥]**

जलेन 'तण्णाआ' आर्द्रा, स्तिमिता घटमानाः श्लिष्यन्तः, अविभाव्यमानघटनमार्गावकाशाः[3] एकतां गच्छन्त इत्यर्थः, अतएव क्षुभितसमुद्रसलिलाहता अपि महीधरा एकैकमन्योन्यं न मुञ्चन्ति यथा बन्धवश्चिरेणालिङ्गितबन्धुं न मुञ्चन्तीति भाव इति **लोकनाथः** ॥३२॥

---

1 ०णं Ms. 2 न्त-अवि० G. 3 ०वकाशः Ms.

पडिवह-[1]पत्थिअ-सलिला वेला-अड-पडिअ-महिअर-समक्कन्ता[2] ।
जे च्चिअ अहिगइ[3]-मग्गा जाआ ते च्चेअ विग्गमा वि णईणं ॥३३॥

[प्रतिपथ-प्रस्थित-सलिलाः वेला-तट-पतित-महीधर-समाक्रान्ताः ।
ये एव अभिगति-मार्गाः जाताः ते एव निर्गमाः अपि नदीनाम् ॥ ]

[F45b] वेलातटपतितेन महीधरेण समाक्रान्ता निरुद्धाः सन्निरोधादेव प्रतिपथे प्रतिमार्गे प्रस्थितसलिला अतएव निम्नगानां य एव अभिगतिमार्गास्त एव निर्गममार्गा इव जाता पर्वतनिरोधात् कान्तं समुद्रं दृष्ट्वा पुनरपि कान्ता इव नद्यो नाभिगृहं यान्तीति भावः ॥३३॥

णिवडन्ति तुङ्ग-सिहरा पवअ-विमुक्का अहोमुहा[4] वि णल-वहे ।
भमिऊण मूल-गरुआ जहेअ उम्मूलिआ तहेअ महिहरा ॥३४॥

[निपतन्ति तुङ्ग-शिखराः प्लवग-विमुक्ताः अधोमुखाः अपि नल-पथे ।
भ्रमित्वा मूल-गुरुकाः यथैव उन्मूलिताः तथैव महीधराः ॥ ]

तुङ्गशिखरा महींधरा नलपथेन नलविरच्यमानसेतुपथेऽधोमुखाः सन्तः प्लवगविमुक्ता अपि यथैवोन्मूलितास्तथैव भ्रान्त्वा पतन्ति । अधोमुखमुक्तरयोन्मूलनरीत्या पतने हेतुमाह । मूलावच्छेदे गुरुकाः 'अहोहअं' इति पाठे क्रियाविशेषणम् ॥३४॥

विहुणेन्ति विहुव्वन्ता करि-मअर-मुहाइ थिर-णिहित्त-णह-मुहा ।
मुह-पज्जत्त[5]-दढुक्खअ-कुम्भ-अड-भमन्त-केसरा केसरिणो ॥३५॥

[विधूनयन्ति विधूयमानाः करि-मकर-मुखानि स्थिर-निहित-नख-मुखाः ।
मुख-पर्याप्त-दृढोत्खात-कुम्भ-तट-भ्रमत्-केसराः केसरिणः ॥ ]

---

1 ०वत्थिअ० Ms. 2 समु० Ms. 3 ०गम० GB.
4 Ms. marginally has another reading अहोहअं. 5 ०न्त० Ms.

विधूयमाना अर्थात् करिमकर[1]शुण्डादण्डैः सलिलकल्लोलैर्वा स्थिरनिहितं दृढमारोपितं नखस्य मुखमग्रं यैः, मुखेषु पर्याप्ताः सम्मिता दृढोत्खाता ये कुम्भतटास्तेषु भ्रमन्तः केसरा येषामीदृशाः केसरिणः[2] करिमकरमुखानि विधुन्वन्ति विधूनयन्ति[3] वा ॥३५॥

पडिगअ-गन्ध-पसारिअ-करि-मअर-च्छिण्ण-गलिअ-कर-
पब्भारे ।
जाणन्ति णवर कुविआ लवण-जलालिद्ध-वण-मुहे वण-हत्थी ॥३६॥

[प्रतिगज-गन्ध-प्रसारित-करि-मकर-च्छिन्न-गलित-कर-प्राग्भारान् ।
जानन्ति केवलं कुपिताः लवण-जलालीढ-व्रण-मुखान् वन-हस्तिनः ॥]

प्रतिगजगन्धेन रोषेण प्रसारितानन्तरं करिमकरैश्छिन्नान् छिन्नतया गलितान् करप्राग्भारान् लवणजलालीढव्रणमुखान् केवलं वनहस्तिनो जानन्ति । छेददशायामपरिज्ञाने हेतुमाह कुपिता इति रोषाद्धेतोः पूर्वं न ज्ञातवन्तोऽनन्तरं लवणजलस्पर्शवेदनया ज्ञातवन्त इत्यर्थः ॥३६॥

दर-घडिअ-सेउ-बन्धा उप्पइऊण पवआ [4]समुद्दुप्पइए ।
कड्ढन्ति जमल-कर-अल-सन्दाणिअ-वक्ख-संपुडे [5]धरणि-
हरे ॥३७॥

[दर-घटित-सेतु-बन्धाः उत्प्लुत्य प्लवगाः समुद्रोत्पतितान् ।
कर्षन्ति यमल-कर-तल-संदानित-पक्ष-संपुटान् धरणीधरान् ॥ ]

ईषद्घटितसेतुबन्धाः प्लवगाः संभ्रमेण पक्षच्छेदत्रासाद्वा समुद्रादुत्पतितान् धरणीधरान् यमलकरतलद्वयेन युगलकरतलद्वयेनेति केचित् । सन्दानितौ परस्परनिबद्धौ पक्षसंपुटौ येषामीदृशानुत्प्लुत्य कर्षयन्ति, एतेन दूरे पर्वतार्थिनां वानराणां तत्रैव तत्सम्पादनेन दैवस्यानुकूल्यं दर्शितम् ॥३७॥

---

1 ०मकशु० Ms, 2 करिणः Ms. 3 धूनयन्ति Ms.
4 समुद्द० Ms. 5 ०संउडे Ms.

बन्धइ णलो वि तक्खण-विसमुच्छलिअ-चल-केसर-सडुग्घाओ ।
तिअ-वलिअ-कर-पसारिअ-हरि-हत्थुक्खिओ-महिहरो सेउ-
वहं ॥३८॥

[बध्नाति नलः अपि तत्क्षण-विषमोच्छलित-चल-केसर-सटोत्घातः ।
त्रिक-वलित-कर-प्रसारित-हरि-हस्तोत्क्षिप्त-महीधरः सेतु-पथम् ॥ ]

तत्क्षणे सेतुनिर्माणसमये विषमं पर्वतग्रहणाय परिवृत्तमुखत्वात् तिर्यक् 'विसमुच्छलिओ'-चलोऽस्थिरः केसरसटोत्घातो यस्य, तेषामस्थिरत्वं पुरतः पृष्ठतश्च पर्वतनयनानयनाभ्याम् । एवं त्रिके पृष्ठवंशाधरे वलिताभ्यां प्रसारिताद् हरिहस्तात् क्षिप्तो महीधरो येन, यद्वा परनिपाताद् वलिते त्रिके प्रसारितयोः करयोर्हरिहस्ताभ्यां क्षिप्तो महीधरो यस्य स नलोपि सेतुं बध्नाति । न केवलं प्लवगाः पर्वतान् कर्षन्ति नलोऽपि सेतुं बध्नातीत्यर्थः । एतेन नलस्य पर्वतग्रहणे सेतुनिर्माणे च शीघ्रत्वं सूचितम् ॥३८॥[1]

जं बहु-पव्वअ-जणिअं[F46a]विच्छुढ-समुद्द-पाअडं महि-विवरं ।
तं एक्को पडिरुम्भइ वित्थारब्भहिअ-संठिओ धरणिहरो ॥३९॥

[यत् बहु-पर्वत-जनितं विक्षिप्त-समुद्र-प्रकटं महीविवरम् ।
तत् एकः प्रतिरुणद्धि विस्ताराभ्यधिक-संस्थितः धरणीधरः ॥ ]

[F46a] बहुभिः पर्वतैरर्थात् पूर्वनिपातितैरुत्थायपलायितैरिति **केचित्** । विवरपतितैरित्य**न्ये** । जनितमिदानीं प्रक्षिप्ते समुद्रे प्रकटं महीविवरं पातालं तद्विस्ताराभ्यधिकसंस्थितो धरणीधर एकः प्रतिरुणद्धि । एतेन तादृशविवरपूरणयोग्यस्य गिरेर्विन्यासेन नलस्य कौशलमुक्तम् ॥३९॥

साअर-लद्ध-त्थाहं णिमेन्ति जं जं धराहरं कइ-णिवहा ।
बज्झइ पुरओ-हुत्तो काऊण पअं तहिं तहिं सेउ-वहो ॥४०॥

---

1 After this the scribe puts the words श्रीहरिः.

[सागर-लब्ध-स्थाघं नियोजयन्ति यं यं धराधरं कपि-निवहाः ।
बध्यते पुरतोऽभिमुखः कृत्वा पदं तत्र तत्र सेतु-पथः ॥ ]

नलप्रभावात् सागरे लब्धः स्थाघो येन तं धराधरं यं यं कपिनिवहा 'णिमेन्ति' प्रक्षिपन्त्यारोपयन्तीति कुः (कुलनाथः), तत्र तत्रैव पदं कृत्वा पुरतोऽभिमुखः सेतुपथो बध्यतेऽर्थान्नलेन। थाहं थाइ इति प्रसिद्धम् ॥४०॥

समअं पवअ-विमुक्के सेउ-वहम्मि समअं अभाअ-पडन्ते ।
पडिपेल्लइ[1] रएइ अ समअं च णलो पडिच्छिऊण महिहरे ॥४१॥

[समकं प्लवग-विमुक्तान् सेतु-पथे समकं अभाग-पततः ।
प्रतिप्रेरयति रचयति च समकं च नलः प्रतीक्ष्य महीधरान् ॥ ]

समं युगपत् प्लवगैर्विमुक्तान्, अस्तव्यस्तक्षेपणादस्तव्यस्तविमोचनेन, अभागेऽस्थाने पतितान् महीधरान् गृहीत्वा 'पडिच्छिऊण' प्रतिगृह्य नलः समं सेतुपथे परिप्रेरयति रचयति यथास्थानं नियोजयति। प्रतिप्रेरयति स्थानान्तरे स्थापयत्यनन्तरं रचयति यथास्थानं निवेशयति च, समकं चेति चकारः प्रेरयति क्रियायामभ्येति तथाच क्रियाद्वयस्यैव तुल्यं प्राधान्यं सूचितम्। एतेन नलस्य शीघ्रहस्तत्वं बलवत्त्वञ्च सूचितम् ॥४१॥

अवलम्बइ णल-घडिए अभाअ-पडिआणिए[2] घडइ महिहरे ।
सेउ-वहस्स समुद्दो उव्वेल्लन्त-सलिलो पवड्ढइ पुरओ ॥४२॥

[अवलम्बते नल-घटितान् अभाग-पतितानीतान् घटयति महीधरान् ।
सेतु-पथस्य समुद्रः उद्वेलत्-सलिलः प्रवर्धते पुरतः ॥ ]

नलेन घटितान् महीधरान् समुद्रोऽवलम्बते स्थिरीकृत्य धारयति। अभागपतितानीतान् अस्थानपतिताश्च ते आनीताश्चेति तान् घटयति यथास्थानं योजयति। एतेन सेतुबन्धे

1 परि० GB.    2 ०वलिआ० GB.

समुद्रस्यानुकूल्यं सूचितम् तथोद्वेल्लदुत्तरङ्गायमाणं सलिलं यस्येदृशः सन् सेतुपथस्य पुरतो वर्धते, लङ्कां प्रति प्रयाणाभिमुखस्य सेतोः पुरो गत्वा यात्रानुकूल्यं दर्शयतीति भावः ॥४२॥

**जं जं आणेइ गिरिं रइ-रह-चक्क[1]-परिमट्ठ-सिहरं हणुमा ।**
**तं तं वीढाइ[2] णलो वाम-करुत्थल्लिअं[3]रएइ समुद्दे ॥४३॥**

**[यं यं आनयति गिरिं रवि-रथ-चक्र-परिमृष्ट-शिखरं हनुमान् ।**
**तं तं लीलया नलः वाम करोत्थापितं रचयति समुद्रे ॥ ]**

रविरथचक्रेण परिमृष्टशिखरं यं यं गिरिं हनुमाननयति तं तं वामकरेणोत्क्षिप्तं 'वीढाइ'[4] अवलीलया नलः समुद्रे रचयति वामहस्तेनैव लीलया तादृशः पर्वतस्य ग्रहणात् सामर्थ्यं परीक्षितुमिच्छतो हनूमतः स्वसामर्थ्यमवज्ञया दर्शयतीति ध्येयम् । वामकरेणोत्थापितमुन्नामितं वा इति **केचित्** । आणेन्तीति **कुलनाथमते पाठः** ॥४३॥

**वित्थअ-सर-कमल-सिरे सेले दर-घडिअ-सेउ-संकम-लसिरे ।**
**जलणिहि-सेवा[5]लग्गा पाआल-धरा धरेन्ति सेवालग्गा ॥४४॥**

**[विस्तृत-सरः-कमल-शिरसः शैलान् दर-घटित-सेतु-संक्रम-लसनशीलान् ।**
**जलनिधि-सेवा-लग्नाः पाताल-धराः धारयन्ति शैवालाग्राः ॥ ]**

जलनिधौ ममत्वात्तदीयसेवायां लग्नाः, एवं तत्र निवासाच्छैवालमग्रं येषां, यद्वा जलनिधेः शैवालमग्रं येषां चन्द्रचूडादिवद्व्यधिकरणो बहुव्रीहिर्न दोषाय, एवं सेवायां लग्ना अर्थाद्रामस्येदृशः पातालसम्बन्धिनो धराः पर्वता विस्तृतानि सरःकमलानि यत्र, एवं भूतानि शिरांसि येषां, यद्वा परनिपाताद्विस्तृतानि कमलप्रधानानि सरांसि येष्वेवंभूतानि शिरांसि येषां

---

1 ०अक्क० GB. 2 लीलाइ GB. 3 ०करुत्थल्लि० G, ०करुत्थल्भि० B. 4 'बीतया' Ms. 5 ०सेआ० GB.

दरघटितात् सेतुसंक्रमात् लसनशीलान् स्खलनोद्यतान् शैलान् धारयन्ति सेतुपथ एव स्थिरीकुर्वन्तीत्यर्थः। यथा श्रमार्गप्रस्थिता बान्धवा बन्धुभिः स्थिरीक्रियन्त इति भावः ॥४४॥

वेला-अड-सम्बद्धा गओणिअत्तन्त-जल-रअ-विहुव्वन्ती।
हल्लन्त[F46b]किरण-विडवा आन्दोलइ मरगअ-प्पहा-वण[1]-
राई ॥४५॥

[वेला-तट-सम्बद्धा गतापनिवर्तमान-जल-रय-विधूयमाना।
लसत्-किरण-विटपा आन्दोलते मरकत-प्रभा-वन-राजी ॥]

वेला जलविकृतिर्वेला समुद्रतटोऽथवा वेलैव तटस्तत्र सम्बद्धाः गतापनिवर्तमानेन जलरयेण विधूयमाना मरकतप्रभाश्च वनानि च, अथवा मरकत[2]प्रभा एव वनानि तेषां, राजिः पंक्तिः, 'हल्लन्तः' प्रेङ्खन्तः किरणविटपा[3] किरणा एव विटपा यस्याः सा तथान्दोलते गतागतं करोति, प्रभाः किरणद्युतयः। मरकतप्रभैव वनराजिः श्यामत्वात् प्रच्युतत्वाच्चा-न्दोलते गतागतिं करोति इति लो ( लोकनाथः ) ॥४५॥

दन्तेसु वलिअ-लग्गा खोहुप्पित्थ-गअ-संपहारुच्छित्ता[4]।
करि-मअराण भुअङ्गा पडन्ति कालास-मण्डल[5]-
पडिच्छन्दा[6] ॥४६॥

[दन्तेषु वलित-लग्नाः क्षोभोद्विग्न-गज-संप्रहारोत्क्षिप्ताः।
करि-मकराणां भुजङ्गाः पतन्ति कालायस-मण्डल-प्रतिच्छन्दाः ॥ ]

---

1 G separates the words ०प्पहा and वण०. 2 मकत० Ms.
3 किरणा० Ms. 4 ०क्खित्ता० GB. 5 ०लि Ms.
6 ०ण्णा Ms.

करिमकराणां दन्तेषु वलितलग्ना भुजङ्गाः क्षोभेनार्थात् प्रतिगजदर्शनेन रोषभरिता ये गजास्तेषां प्रहारेणोत्क्षिप्ता दूरीकृताः[1] पाठान्तरे उच्छलिता अस्थिरीभूताः, अतः कालायस-मण्डलस्य लोहवलयस्य प्रतिच्छन्दाः सदृशाः सन्तः पतन्ति कालायसस्येति[2] यकारस्य लोपः ॥४६॥

पव्वअ-[3]पडणाइद्धो जो च्चिअ उअहिस्स पडिणिअत्तइ पढमं ।
सो च्चिअ सलिलद्धन्तो [4]अण्ण-अहुत्त-विसमं वलेइ णल वहं ॥४७॥

[पर्वत-पतनाविद्धः यः एव उदधेः प्रतिनिवर्तते प्रथमम् ।
सः एव सलिलार्धान्तः अन्यतः अभिमुख-विषमं वलयति नल पथम् ॥ ]

पर्वतपतनेनाविद्धः क्षिप्तो य एवोदधेः सलिलैकदेशः प्रतिनिवर्तते स एवान्याभिमुखविषमं नलपथं सेतुं प्रथमं वलयति प्रगुणयति, ऋजूकरोतीत्यन्ये पश्चान्नल इत्यर्थः । यद्वा, प्रथमं पर्वतपतनाविद्धः सन् य एवोदधेः सलिलार्धान्तो निवर्तते स एवान्यतोमुखविषमं नलपथं वलयति नलस्तूपलक्षणमिति भावः । एतेन समुद्रस्य रामकार्यानुकूल्यं दर्शितम् ॥४७॥

खुहिअ-जलद्धत्थमिआ[5] खुडेन्ति अक्खुडिअ-मअ-जलोज्झर-पसरा ।
चलणालग्ग-भुअङ्गे पासे व्व णिराअ-कड्ढिए माअङ्गा ॥४८॥

[क्षुभित-जलार्धास्तमिताः खण्डयन्ति अखण्डित-मद-जल-निर्झर-प्रसराः ।
चरणालग्न-भुजङ्गान् पाशान् इव निरायत-कृष्टान् मातङ्गाः ॥ ]

क्षुभितजलार्धास्तमिता अखण्डितमदजलनिर्झरप्रसरा मातङ्गाश्चरणालग्नभुजङ्गान् पाशानिव निरायतकृष्टान् 'खुडेन्ति' खण्डयन्ति ॥४८॥

1 ०ता Ms. 2 ०यास० Ms. 3 ०वडणा० GB. 4 अण्णो-हु० GB. 5 ०समुद्दत्थ० GB.

रअण-च्छपि-विमलअरा फल-रस-हरिअ-[1]दर-भिण्ण-मरगअ-णिवहा।
ओहुव्वन्ति[2] तरङ्गा चुण्णिअ-संख-उल-[3]पण्डरअर-प्फेणा ॥४९॥

[रत्न-च्छवि-विमलतराः फल-रस-हरित-दर-भिन्न-मरकत-निवहाः
[अवधूयन्ते तरङ्गाः चूर्णित-शङ्ख-कुल-पाण्डरतर-फेनाः ॥ ]

रत्नानां माणिक्यादीनां या छविर्द्युतिस्तया विमलतराः फलानामर्थाद् गलितानां रसैर्हरिततरा भिन्नाश्चूर्णिता मरकतनिवहा येषु। यद्वा, फलरसैर्हरिता दरभिन्ना ईषद्दलिता मरकतनिवहा येषु, चूर्णितैः शङ्खकुलैः पाण्डरतरा अतिधवलाः फेना येषु ते तरङ्गाः शैलसम्पातवशादवधूयन्ते महता जलवेगेन दिक्षु विक्षिप्यन्ते। यद्वा, चूर्णितैः शङ्खैरुद्वर्तनाद् रत्नच्छविफलरसैर्विमलीकृतत्वादवधाव्यन्त प्रक्षाल्यन्त इति **श्रीनिवासः**। एवञ्च रत्न-च्छवीनामरुणत्वाद् मरकतानां हरितत्वात् फेनानाञ्च पाण्डरत्वात् तरङ्गानां चित्ररूपतया शोभातिशयो जात इति भावः ॥४६॥

घडमाणेहि अ समअं जिव्वइ[4] सेलेहि जेत्तिअं चिअ[5] उअही।
उच्छलइ तेत्तिअं चिअ उत्थंघिअ-मूल-सलिल-पडिपूरन्तो[6] ॥५०॥

[घटमानैः च समं जीयते शैलैः यावन्मात्रं एव उदधिः।
उच्छलति तावन्मात्रं एव उत्तम्भित-मूल-सलिल-प्रतिपूर्यमाणः ॥ ]

सममेकदा च यद्वा, समं युगपत् क्रमेण इत्यर्थः, घटमानैरन्योन्यं श्लिष्यद्भिः शैलैरुदधिर्यावदेव जीयते सेतुवर्त्मनाक्रम्यते। उच्छलितेन बहुपर्वतपूरितोदरत्वादुत्थापितमूलसलिलेन प्रतिपूर्यमाणस्तावदेवोच्छलति वर्धते, ईदृशैः पर्वतैर्यावन्मात्रमुदधिर्जीयते शोष्यते मूलसलिलैः पातालजलैः पूर्यमाणस्तावदेवोच्छलतीति **श्रीनिवासः** ॥५०॥

---

1 ०मरिअ० GB. 2 ओधु० GB. 3 ०पण्डुर० GB. 4 भिज्जइ GB. 5 ०अचिअ Ms. 6 ०परि० GB.

[1]णिम्माओ व्व[2] मुणिज्जइ दूराइद्धम्मि साअरे सेउ-वहो ।
सो च्चिअ सलिल-भरन्तो थोआरद्धो[F47a]व्व दीसइ णि-
अत्तन्ते ॥५१॥

[निर्मितः इव ज्ञायते दूराविद्धे सागरे सेतु-पथः ।
स एव सलिल-भ्रियमाणः स्तोकारब्धः इव दृश्यते निवर्तमाने ॥ ]

पर्वतनिपातेन दूरमाविद्धे सागरे सेतुपथो निर्मित इति ज्ञायते गिरीणां विशालत्वदर्शनादिति भावः । स एव निवर्तमाने समुद्रे सलिलभ्रियमाणः स्तोकारब्ध इव दृश्यते । तथा च तावदेव सर्वेषां महिमा यावत् तस्मादधिकेन नाभिभूयन्त इति भावः ॥५१॥[3]

उद्ध-प्फुडिअ-णइ-मुहा णिअअ-ट्ठाण-सिढिलोसरन्त-महिहरा ।
अन्दोलन्त-समुद्दा अन्दोलेन्ति[4]व णहं धरिणि-संखोहा ॥५२॥

[ऊर्ध्वे-स्फुटित-नदी-मुखाः निजक-स्थान-शिथिलापसरन्-महीधराः ।
आन्दोलत्-समुद्राः आन्दोलयन्ति इव नभः धरणी-संक्षोभाः ॥ ]

[F47a] पर्वताभिहन्यमानसमुद्रजलप्रतिघातादूर्ध्वानि सन्ति स्फुटितानि नदीमुखानि येषु, निजकस्थानाच्छिथिला अपसरन्तो महीधरा येषु, आन्दोलायमानाः समुद्रा येषु, ते धरण्याः संक्षोभा नभ आकाशमान्दोलयन्तीव जलकम्पनवशात्तत्र प्रतिविम्बितस्यापि कम्पदर्शनान् मेघजालस्य निष्क्रियस्यापि नभसः कम्प उपलभ्यत इति भावः ॥५२॥

अद्धुट्ठिअ-सेउ-वहं होइ खणं अद्ध-दिण्ण-हरि-हिअअ-सुहं ।
अद्धोवइअ-महिहरं अद्धोसारिअ-रसाअलं उअहि-जलं ॥५३॥

---

1 This verse is numbered as 53 in GB. (Cf. CKS which agree with Ms. in numbering it as verse 51). 2 त्ति GB. 3 After this the scribe writes 'श्रीहरिः शरणं हि नः'. 4 °लन्ति GB.

[अर्धोत्थित-सेतु-पथं भवति क्षणं अर्ध-दत्त-हरि-हृदय-सुखम् ।
अर्धावपतित-महीधरं अर्धापसारित-रसतलं उदधि-जलम् ॥ ]

अर्धावपतिता महीधरा यत्र, अतएवार्धत्थितसेतुपथम्, अतः क्षणमर्धदत्तहरिहृदयसुखम्, अतएवार्धेनापसारितमाच्छादितं रसातलं यत्रेदृशमुदधिजलं क्षणं क्षणाद् भवतीत्यपसारितं दूरीकृतमिति **केचित्** ॥५३॥

अवि पूरइ पाआलं ण अ कुविअ-दिसा-गइन्द-गमण-विहाआ ।
उअहि-विइण्णोआसा[1]पूरेन्ति महा-वराह-पअ-णिक्खेवा ॥५४॥

[अपि पूर्यते पातालं न च कुपित-दिग्-गजेन्द्र-गमन-विघाताः ।
उदधि-वितीर्णावकाशाः पूर्यन्ते महा-वराह-पद-निक्षेपाः ॥ ]

पातालमपि पूर्यत अर्थात् पर्वतैर्वृहत्त्वाद् गभीरत्वाच्च कुपितानां गजेन्द्राणां गमनविघाताः । विहन्यत अनेन अस्मिन्निति वा घञ् । उदधयेऽपि वितीर्णो दत्तोऽवकाशोऽवस्थानं यैः । एतेन समुद्रादपि महत्त्वमुक्तम्, ईदृशा महावराहपदविक्षेपा न च पूर्यन्ते । उदधिना वितीर्णोऽवकाशो येभ्य इति **श्रीनिवासः** । चकारः पुनरर्थे ॥५४॥

जीअं महिहर-महिअं धाउ-अड-क्खलण-सरस-पल्लव-राअं ।
दुम-भङ्ग-तुवर-सुरहिं उप्पजन्त-मइरं व साअर-सलिलं ॥५५॥

[जातं महीधर-मथितं धातु-तट-स्खलन-सरस-पल्लव-रागम् ।
द्रुम-भङ्ग-तुवर-सुरभि उत्पद्यमान-मदिरं इव सागर-सलिलम् ॥ ]

महीधरेण मथितं धातुना गैरिकेण तटपतनात् तटस्खलनेन सरसपल्लवानामिव रागो लौहित्यं यस्येत्यर्थः, द्रुमाणां भङ्गेन तुवरं कषायं सुरभि च, अतः सागरसलिलमुत्पद्यमानमदिरमिव जातं मदिरोत्पत्तिदशायामपि महीधरेण मन्दरेण मथितं सरसपल्लवरागं द्रुमस्य भङ्गेन तुवरं मदिरया सुरभि च ॥५५॥

---

1 ०वासा Ms.

सञ्चालेइ समुद्दो जह जह विरल-ट्ठिअं धराहर-णिवहं ।
तह तह विराअ-सिहरो पूरिअ-विवर-त्थिरो घडइ सेइ-
वहो ॥५६॥

[सञ्चालयति समुद्रः यथा यथा विरल-स्थितं धराधर-निवहम् ।
तथा तथा विशीर्ण-शिखरः पूरित-विवर-स्थिरः घटते सेतु-पथः ॥ ]

विरलस्थितं धराधरनिवहं समुद्रो यथा यथा सञ्चालयति तथा तथा विशीर्णैः शिखरैरव-पूरितानि शैलविवराणि परस्परगिरिसन्धयो यत्र, अतः सेतुपथो विघटते श्लिष्यति निविड-सन्धिर्भवतीत्यर्थः। यद्वा, तथा तथा विशीर्णशिखरः सलिलैः पूरितविवरत्वात् स्थिरः सेतुपथो घटते भग्नानां शिखराणां पातेन बाहुनापि चालयितुमशक्यत्वाज्जलपूरितकन्दरत्वाच्च स्थिरीभवतीत्यर्थः ॥५६॥

पडइ णु णह-अल-घडिओ कड्ढिज्जइ णु मलआहि चिर-णिम्माओ।
घडइ णु समुद्द-सलिले घडिओ णीइ णु रसाअलाहि णल[F47b]
वहो ॥५७॥

[पतति नु नभस्-तल-घटितः कृष्यते नु मलयात् चिर-निर्मितः ।
घटते नु समुद्र-सलिले घटितः निरेति नु रसातलात् नल-पथः ॥ ]

सहसा सेतुवृद्धिदर्शनाद् वितर्कयति नभस्तले घटितो निर्मितः सन् पतति नु अर्थात् समुद्रे, चिरनिर्मितो मलयात् कृष्यते नु, [1]समुद्रसलिले [2]घटितो नु स्वयं समुद्रो बन्धनं गच्छतीति भावः। घटितः सन् रसातलात् स्वयं निर्गच्छत्यलक्षितवृद्धिदर्शनान् नु। नु प्रश्ने च वितर्के च **इत्यमरोक्तेः** ॥५७॥[3]

1 समुस॰ Ms. 2 ॰ते Ms. 3 After this the scribe writes 'श्रीदुर्गा' to fill up the page space.

[1]अइद्ध-महिहर-णिहं उअहि-जल-पलोट्ठ-मेह-अड-पब्भारं ।
पडइ व पुरओहुत्तं टङ्क-च्छिण्णं व सेउ-बन्धस्स णहं ॥५८॥

[आक्षिप्त-महीधर-निभं उदधि-जल-पर्यस्त-मेघ-तट-प्राग्भारम् ।
पतति इव पुरतोऽभिमुखं टङ्क-छिन्नं इव सेतु-बन्धस्य नभः ॥ ]

सेतुबन्धस्य पुरतोऽभिमुखं टङ्कच्छिन्नमिव नभः पतति, टङ्कः पाषाणदारणे इति नभसः पाषाणसादृश्यं समाहितं टङ्करूपेण सेतुना छिन्नं यत् पुरोऽभिमुखं पततीवेत्यर्थः । हेतुमाह । आक्षिप्तमहीधरनिभं यथा स्यात्तथा उदधिजलपर्यस्ता मेघतटप्राग्भारा अर्थाद् गिरिशिखरप्रेरिता यस्माद् । एतेन मेघानां टङ्कच्छिन्नस्य नभसोऽवयवसाम्यमुक्तम् । यद्वा, उदधिजलपर्यस्तमेघतट-प्राग्भारश्चेदतः प्रक्षिप्तमहीधरनिभं नभ इत्यर्थः ॥५८॥

[2]गअणम्मि उअहि-सलिलं सलिल-विमुक्के रसाअलम्मि णह-अलं ।
दीसइ तीसु वि समअं णह-सलिल-रसा-अलेसु पव्वअ-जालं ॥५९॥

[गगने उदधि-सलिलं सलिल-विमुक्ते रसातले नभस्-तलम् ।
दृश्यते त्रिषु अपि समं नभः-सलिल-रसातलेषु पर्वत-जालम् ॥ ]

वेलालाण-णिअलिओ रसिऊण रसाअल-ट्ठिअं पि समुद्दो ।
चालेइ सेउ-बन्धं खम्भं आरण्ण-कुञ्जरो व्व वळन्तो ॥६०॥

[वेलालान-निगडितः रसित्वा रसातल-स्थितं अपि समुद्रः ।
चालयति सेतुबन्धं स्तम्भं आरण्य-कुञ्जरः इव वलन् ॥ ]

---

1 This verse does not occur in GB. 2 The text only of this verse occurs in the Ms, but not its commentary, but in GB it is marked as verse 58.

वेला तीरलेखा सैव दीर्घत्वादालानं बन्धनरज्जुरिव तेन निगडितः समुद्रो वलन् परितः प्रसरन् महाशब्दं कृत्वा अरण्यगज इव रसातलस्थितमपि दूरप्रसारितमूलमपि सेतुबन्धं स्तम्भं च चालयत्यान्दोलयति, बन्धस्याकृष्टपूर्वत्वादारण्यकुञ्जरेण सह समुद्रस्योपमा। आलानपदेन रज्जुरप्युच्यते, यथालानं करिणां लग्ने (?) इत्यादि। आलानं बन्धस्तम्भ इत्यत्रामरटीकायां समाहारं कृत्वा बन्धनरज्जौ स्तम्भे चेति व्याख्यातम् ॥६०॥

पेल्लिज्जन्ति दढअरं जह जह पवएहि खुहिअ-जल-तण्णाआ।
ओहट्टन्ताआमा तह तह एक्केक्कम[1] अइन्ति महिहरा ॥६१॥

[प्रेर्यन्ते दृढतरं यथा यथा प्लवगैः क्षुभित-जलार्द्राः।
अवघट्टमानायामाः तथा तथा एकैकं आयान्ति महीधराः ॥]

यथा यथा महीधराः प्लवगैर्दृढतरं प्रेर्यन्ते परस्परं संघटन्ते तथा तथा क्षुभितजलार्द्रा अवघट्टमानायामा निष्पीडनाद्विगलद्विस्तारा एकैकमायान्त्यन्योन्यं श्लिष्यन्ति निविडसन्धयो भवन्तीति यावत्। यथोपाध्यायभूतेन कारुणा निर्मितं खड्गादिकं तत्पश्चाद्वर्तिभिः शिल्पिभिर्नैव विज्यं नीयते तथा नलपश्चाद्वर्तिभिरपि वानरैः सेतुरिति भावः ॥६१॥

पवअ-भुअ-गलत्थल्लिआ विप्पइण्ण-रअणा
धरणिहरा पडन्ति डअ-हित्थ[2]-इण्णर-अणा।
खुहिओ[3] साअरो रसइ उण्णअं ण-ईणं
मोएन्तो[4]व्व तिव्व-भअ-उण्णअं णईणं ॥६२॥

[प्लवग-भुज-गलहस्तिताः विप्रकीर्ण-रत्नाः
धरणीधराः पतन्ति भय-व्याकुल-किन्नर-गणाः।
क्षुभितः सागरः रसति उन्नतं न-दीनं
लोचयन् इव तीव्र-भय-पूर्णतां नदीनाम् ॥]

---

1 एक्क० GB. 2 ०चुराण० GB. 3 After this word Ms. has अ. 4 मोअ० GB.

गलितकमाह। प्लवगभूजैर्गलत्थल्लिआ' गलहस्तिताः प्रेरिता अतएव विप्रकीर्णरत्नाः, यद्वा विप्रकीर्णरचना विप्रकीर्णा रचना संस्थानं येषां इति [1]भयव्याकुलाः किन्नरगणा येषु ते धरणीधराः पतन्त्यर्थात् समुद्रे, पर्वतपातादेव क्षुभितः सागर उन्नतमुच्चै र्न-दीन-मनाकुलञ्च यथा स्यात्तथा रसति नदीनां तीव्रेण भयेनार्थात् पत्युर्विपत्तिजनितेनेदृशस्य भयस्य वा पूर्णतां सामग्र्यं मोचयन्निव मा भैष्ट मा भैष्टेति नदीराश्वासयतीवेत्यर्थः। अन्यत्रापि पत्युः सावष्टम्भशब्देन स्त्रीणां तद्विपत्तिजन्या विकलताऽपगच्छतीति भावः ॥६२॥

## भरइ व दूराइद्धो धुव्वइ व पडन्त-धरणिहर-कद्दमिओ।
## रुम्भइ व पडिणिअत्तो भिण्णो घडइ व मणि-प्पहाहि समुद्दो ॥६३॥

**[भ्रियते इव दूराविद्धः धाव्यते इव पतद्-धरणीधर-कर्दमितः।**
**रुध्यते इव प्रतिनिवृत्तः भिन्नः घटते इव मणि-प्रभाभिः समुद्रः ॥]**

दूरमाविद्धः पर्वतघातादुत्सारितजलः समुद्रः क्वापि मणिप्रभाभिर्भ्रियत इव पूर्यत इव पतद्धरणीधरकर्दमितस्ताभिरेव क्वापि धाव्यत इव प्रक्षाल्यत इव क्वचित् प्रतिनिवृत्तो व्याघुट्टितो रुध्यत इवागमने वाध्यत इवेत्यर्थः। एवं भिन्नः पाषाणादिघातेन विदीर्णः क्वापि घटत इव मणिप्रभाणां जलाकारत्वादिति भावः। **अन्ये** तु पतद्भिर्धराधरैः कर्दमितो धाव्यत इव विमलोक्रियत इव प्रतिनिवृत्तो रुध्यत इव भिन्नो भिदां लम्भितो घट्यत इव निर्विवरः क्रियत इवेत्याहुः ॥६३॥

## [F48a] करि-मअराण खुहिअ-साअर-विसासि आणं
## सेउ-वहम्मि पडिअ-गिरि-वर[2]-विसासि आणं।
## समअं वण-गआण णिवहा धरोसिआणं
## समुहं[3] आवडन्ति मअ-गन्ध-रोसिआणं ॥६४॥

---

1 ०व्याकुल० Ms. 2 ०णिवह० GB. 3 सम्मुहं Ms.

[करि-मकराणां क्षुभित-सागर-विषाश्रितानां
सेतु-पथे पतित-गिरि-निवह-विशासितानाम्।
समकं वन-गजानां निवहाः धरोषितानां
सम्मुखं आपतन्ति मद-गन्ध-रोषितानाम्॥ ]

[F48a] गलितमाह। धरेषु पर्वतेषु उषितानां करिमकराणां मदगन्धेन रोषितानां वनगजानां निवहाः सेतुपथे स्फुटितस्य सागरस्य विषं जलमाश्रितानां पतितैर्गिरिनिवहैर्विशेषेण शासितानां धर्षितानां करिमकराणां सम्मुखं युगपदापतन्ति समं तुल्यमापतन्तीति **कुः** ( कुलनाथः ) ॥६४॥

**उत्थंघिअ-डुम-णिवहा सुइरं परिमलिअ-सेउ-वह-पासल्ला।**
**धाउ-कलङ्क-क्खउरा दूरं गन्तूण उव्वमन्ति तरङ्गा॥६५॥**

[उत्थापित-द्रुम-निवहाः सुचिरं परिमृदित-सेतु-पथ-पार्श्वाः।
धातु-कलङ्क-कलुषाः दूरं गत्वा उद्वमन्ति तरङ्गाः।। ]

उत्थापितद्रुमनिवहाः पाठान्तरे उत्तम्भितद्रुमनिवहा अतएव तत्पत्रनिवहैराविलाः सुचिरं परिमृदितसेतुपथपार्श्वीकृतत्वेन कर्दमिताः सुचिरपरिमृदितसेतुपथपार्श्वैकदेशा इति **केचित्**। सेतुपथपार्श्वायिता इति **लोकनाथः**। धातुकलङ्केन कलुषाः 'खउरा' मिश्रकलुषा इति **कुः** ( कुलनाथः )। धातुकलङ्केन खचिता **इत्यपरे**। तरङ्गा दूरं गत्वा उद्वमन्तथाविलत्वं त्यजन्ति प्रसन्ना भवन्तीत्यर्थ इति **कुलनाथः**। लीयन्त इति **श्रीनिवासः**। शनैः शनैः पुनर्निवर्तत इति **हर्षपालः** ॥६५॥

**दीसइ मअ-उलेहि उअही णलो अणेहिं**
**समअं [1]सेल-पडण-भअ-उण्ण-लोअणेहिं।**
**जं खलिअं अईइ सलिलं णईण-[2]तूरं**
**तं उद्दाह पवअ-कलअल-विइण्ण-तूरं[3] ॥६६॥**

---

1 सेल(उ)० B. 2 ऊरं GB. 3 ०रन्तं Ms.

[दृश्यते मृग-कुलैः उदधिः नलः एभिः
समकं शैल-पतन-भय-पूर्ण-लोचनैः।
यत् स्खलितं अत्येति सलिलं नदीनां तूरं
तत् उद्धावति प्लवग-कलकल-वितीर्ण-तूर्यम् ॥ ]

शैलपतनभयादुद्विग्नलोचनैर्मृगकुलैरुदधिर्दृश्यते, एभिर्मृगकुलैर्नलश्च सममेकदा दृश्यते द्वयोरपि त्रासजनकत्वादिति भावः। किञ्च यन्नदीनां सलिलं त्वरमाणं सद् अतिगच्छति समुद्रं प्रविशति तत् स्खलितं दूरस्थपर्वतघातात् प्रतिहतं सत् प्लवगकलकलेन वितीर्णतूर्यं यथा स्यात्तथा ऊर्ध्वायते ऊर्ध्वं धावतीत्यर्थः ॥६६॥

इअ सअल-महि-अलुक्खअ-महिहर-संघाअ-णिम्मिअ-महारम्भं।
णिअअ-च्छाआ-वइअर-सामलइअ-साअरोअर-जलद्धन्तं ॥६७॥

[इति सकल-मही-तलोत्खात-महीधर-संघात-निर्मित-महारम्भम्।
निजक-च्छाया-व्यतिकर-श्यामलित-सागरोदर-जलार्धान्तम् ॥ ]

पञ्चभिः कुलकमिति नलपथं घटयन्तीति शेषस्कन्धकेनान्वयः। कीदृशमित्युक्तप्रकारेण सकलान्महीतलादुत्खातेन महीधरसंघातेन निर्मितो महारम्भो यस्य, निजकायाः स्वस्याश्छायायाः प्रतिविम्बस्य व्यतिकरेण सम्पर्केण समूहेन वा श्यामलितो जलैकदेशो येन, अत्युच्चत्वेनाधस्तात् सागरार्धव्यापकं तस्य प्रतिविम्बं[1] महदित्यर्थः ॥६७॥

विसमावडिअ[2]सिला-अल-दढ-घाउक्खुडिअ[3]-मच्छ-पच्छिम-भाअं।
मज्झ-च्छिण्ण-भुअङ्गम-वेढुप्पीडण-विआरिअ[4]-सिला-वेढं ॥६८॥

[विषमापतित-शिला-तल-दृढ-घातोत्खण्डित-मत्स्य-पश्चिम-भागम्।
मध्य-च्छिन्न-भुजङ्गम-वेष्टोत्पीडन-विदारित-शिला-वेष्टम् ॥ ]

---

1 ०म्ब Ms. 2 ०मोसरिअ० GB. 3 ०उक्खित्त GB.
4 ०विराविअ० Ms.

विषमं तिर्यगापतितस्य शिलातलस्य शिलातटस्य वा दृढघातेनोत्खण्डितशिछन्नो मत्सस्य तिमिङ्गिलादेः पश्चिमभागोऽन्त्यभागो यत्र, मध्यशिछन्नभुजङ्गमेनामर्षाद् गाढवेष्टोत्पीडनेन चूर्णितः[1] शिलावेष्टो यत्र, विदारितो विदीर्णो[2] वा शिलावेष्टो यत्रेति **लोकनाथः**। 'विराविअ' इति पाठो **लोकनाथ**सम्मतः, अतएवेदृशी व्याख्या ॥६८॥

सेलुम्मूलण-सम्भम-गहिअ-ष्फिडिअ[3]-गअ-मग्ग-धाविअ[4]-सी [F48b] हं।
गिरि-सिहर-णिसण्णाणिअ[5]-गिरि-पेल्लिअ-णिन्त-मुहल-जलहर-सलिलं ॥६९॥

[शैलोन्मूलन-संभ्रम-गृहीत-भ्रष्ट-गज-मार्ग-धावित-सिंहम्।
गिरि-शिखर-निषण्णानीत-गिरि-प्रेरित-निर्यन्-मुखर-जलधर-सलिलम् ॥]

शैलोन्मूलनसंभ्रमेण गृहीतोऽपि भ्रष्टो यो गजस्तन्मार्गे धावितः सिंहो यत्र, गृहीतभ्रष्टस्य ग्रहणमात्रादेवापसृतस्य गजस्येति **लोकनाथः**। आदौ गृहीतः शैलोन्मूलनसंभ्रमात् पश्चात् पलायित **इत्यन्ये**। परनिपाताद्गिरिशिखरनिषण्णानीतानां गिरिभिरन्यैः प्रेरितानामतएव मुखराणां जलधराणां निर्गच्छत् सलिलं यत्र ॥६९॥

पासल्ल-पडिअ-वण-गअ-रुद्ध-[6]मुहोज्झर-दुहा-पहाविअ-सलिलं।
धरणिहरन्तरिअ-ट्ठिअ-चन्दण-वण-मुणिअ-मलअ-सिहर-क्खण्डं ॥७०॥

[पार्श्व-पतित-वन-गज-रुद्ध-मुख-निर्झर-द्विधा-प्रधावित-सलिलम्।
धरणी-धरान्तरित-स्थित-चन्दन-वन-ज्ञात-मलय-शिखर-खण्डम् ॥]

---

1 ०त Ms. 2 ०दि० Ms. 3 ०प्फिलि० GB. 4 ०धाइअ० GB. 5 ०मिअ० Ms. 6 महो० GB. (But Cf. CKS which have the reading of our Ms.).

पार्श्वेपतितेन वनगजेन रुद्धस्य महानिर्झरस्य, रुद्धमुहेति पाठे ईदृशेन वनगजेन रुद्ध-मुखस्य निर्झरस्य द्विधाप्रधावितं सलिलं यत्र, धरणीधरैरन्तरितस्थितं चन्दनवनेन छाद्यमान-मलयशिखरखण्डं यत्र तम् ॥७०॥

[1]वीई-प्पडिऊलाहअ-थोउव्वेल्लिअ-दुमावलम्बन्त-लअं ।
विरल[2]-सिहरन्तरागअ-संपीडिअ[3]-साअरं[4] घडन्ति णलवहं ॥७१
कु(लअं) ॥

[वीचि-प्रतिकूलाहत-स्तोकोद्वेल्लित-द्रुमावलम्बमान-लतम् ।
विरल-शिखरान्तरागत-संपीडित-सागरं घटयन्ति नल-पथम् ॥ ]

वीच्या सपत्न्येव प्रतिकूलमाहताः स्तोकमुद्वेल्लिता विश्लेषिता द्रुमं पतिमिवावलम्बमाना नायिका इव यत्र । **लोकनाथस्तु** पत्नीसदृश्या वीच्या प्रतिकूलमाहताः सत्यः स्तोकोद्वेल्लिता ईषद्विश्लेषिताः पतिप्रायेषु द्रुमेष्ववलम्बमाना योषित इव लता यत्र **इत्याह** । विरलेन शिखराणामन्तरेणागतः संवेल्लितो निविडद्रुमपाषाणादिभिः सम्यग्वेष्टित सागरो यत्र, संवेल्लितः शैलान्तरेण पीडित इति **कुलनाथः** । तं नलपथं घटयन्त्यर्थात् कपयः । अत्र [5]मुख्यतया नलस्य कर्तृत्वेऽपि तदनुकूलव्यापारशालितया सर्वेषां कर्तृत्वमुक्तम् ॥७१॥

वित्थरइ सेउ-बन्धो विहुव्वइ धराहराहओ सलिलणिही ।
दिट्ठ-सुवेलुच्छङ्गं रसइ दिसा-दिण्ण[6]-पडिरवं कइ-सेण्णं ॥७२॥

[विस्तरति सेतु-बन्धः विधूयते धराधराहतः सलिलनिधिः ।
दृष्ट-सुवेलोत्सङ्गं रसति दिग्-दत्त-प्रतिरवं कपि-सैन्यम् ॥ ]

विस्तरति विस्तारं गच्छति सेतुपथः, विस्तीर्यते वर्धत इति **लोकनाथः** । धरा-धरेणाहतः सन् सलिलनिधिर्धूयते पर्वतपूरितगर्भत्वात् प्लावितभूभागः क्रियतेऽर्थान्नलेन,

---

1 वोई-प० GB. 2 विसम० GB. 3 ०संवेल्लिअ० GB.
4 घडेन्ति GB. 5 मुख० Ms. 6 ०इण्ण० GB.

विधूयते कम्पते कर्मकर्तरि प्रयोग इति **कुलनाथः**। दृष्टः सुवेलोत्सङ्गो[1] येन तद्दर्शनहर्षाद् दिक्षु मुक्तः प्रतिरवो येन, ईदृशं कपिसैन्यं रसति सांराविणं करोति यद्वा। दिक्षु दत्तप्रतिरवं यथा स्यादिति क्रियाविशेषणम् ॥७२॥

दीसन्ति भिण्ण-सलिले समुद्द-मज्झम्मि सेउ-बन्धक्कन्ता।
सम्भम-कड्ढण-लुग्गा भअ-चुण्ण-पलाअ-सेल-पक्खद्धन्ता ॥७३॥

**[दृश्यन्ते भिन्न-सलिले समुद्र-मध्ये सेतु-बन्धाक्रान्ताः।**
**सम्भ्रम-कर्षण-रुग्णाः भयोद्विग्न-पलायित-शैल-पक्षार्धान्ताः ॥]**

भिन्नं शैलपाताद् द्विधाभूतं सलिलं यत्र तस्मिन् समुद्रमध्ये सेतुबन्धेनाक्रान्ताः संभ्रमेण त्वरयाकर्षणेन रुग्णा भग्नाः सेतुबन्धाक्रान्तत्वान्न पुनराकृष्टा इति भावः। 'भयचूर्ण' त्रासोद्विग्नस्य पलायितस्य शैलस्य पक्षार्धान्ता दृश्यन्ते सलिलेनावृतत्वात् पूर्वत्र दृष्टा इदानीं पर्वतपातेनोत्सारितसलिले दृश्यन्त इत्यर्थः। 'चुण्ण'शब्दो देशीय उद्विग्ने ॥७३॥

महिहर-पहर-क्खोहिअ-सलिल-परिक्खअ-विराअ-मूल-महिहरं।
थोअ-त्थोओसरिअं बन्धेन्ति पवङ्गमा पुणो वि णल-वहं ॥७४॥

**[महीधर-प्रहार-क्षोभित-सलिल-परिक्षत-विशीर्ण-मूल-महीधरम्।**
**स्तोक-स्तोकापसृत बध्नन्ति प्लवङ्गमाः पुनः अपि नल-पथम् ॥ ]**

महीधरप्रहारक्षोभितेन सलिलेन परिक्षतत्वा'द्विराअ'मूला विघटितमूला महीधरा यत्र, सलिलाहतत्वादेव स्तोकस्तोकापसृतं नलपथं प्लवङ्गमाः पुनरपि दृढं घटयन्ति, अशक्यतया गुरुभूतस्य नलेनेव निर्वाहितत्वात्। **कुलनाथस्तु** सलिलेन परिक्षतत्वात् 'विराआ' विलीना मूलमहीधरा मुखपतितपर्वता यत्र तमतः स्तोकस्तोकेनापसृतं अष्टायामं नलपथं प्लवङ्गमाः पुनरपि वर्धयन्ति पर्वतान्तरेणेत्याह तदा वड्ढेन्तीति पाठः ॥७४॥

1 ०लोच्छङ्गो Ms.

जह जह अच्चासण्णो उअहिं जेऊणहोइ सेउ-वह-वरो ।
[F49a] उच्छलइ धराहिहअं दूरं [1]थोत्वत्तणेण तह तह
सलिलं ॥७५॥

[यथा यथा अत्यासन्नः उदधिं जित्वा भवति सेतु-पथ-वरः ।
उच्छलति धराभिहतं दूरं स्तोकत्वेन तथा तथा सलिलम् ॥ ]

यथा यथा उदधिं जित्वा सेतुपथवरोऽत्यासन्नो भवति, तथा तथा धरैः पर्वतैराहतं सलिलं स्तोकत्वेन दूरमुच्छलति । अगाधदेशे पर्वतनिपाताद्यावद्दूरं सलिलमुच्छलितं स्थाघ(गाध ?)देशे तन्निपाते स्तोकत्वात्ततोऽपि दूरमुच्छलतीत्यर्थः, अनुभवसिद्धमिदमिति लो ( लोकनाथः ) ॥७५॥

महिहर-पहरुच्छित्ता उअरिं सेउस्स जे पडन्ति खलन्ता ।
ते च्चिअ सलिलुप्पीला[2] होन्ति वलन्त-विसमा महाणइ-
सोत्ता ॥७६॥

[महीधर-प्रहारोत्क्षिप्ताः उपरि सेतोः ये पतन्तिस्खलन्तः ।
ते एव सलिलोत्पीडाः भवन्ति वलद्-विषमाः महानदी-स्रोतांसि ॥ ]

[F49a] य एव सलिलोत्पीडा महीधरप्रहारोत्क्षिप्ताः सेतोरुपरि स्खलन्तः स्रंसमानाः सन्तः पतन्ति, त एव वलद्विषमास्तिर्यग्वलन्तः सन्तो महानदीस्रोतांसि भवन्ति ॥७६॥

देइ सनत्त-च्छाअं [3]दर-मिलिअ-सुवेल-महिहर-तडद्धन्तो ।
[4]विइअद्धन्त-पहाविअ-तिमि-पूरिअ-साअरन्तरो सेउ-वहो ॥७७॥

[ददाति समाप्त-च्छायां दर-मिलित-सुवेल-महीधर-तटार्धान्तः ।
द्वितीयार्धान्त-प्रधावित-तिमि-पूरित-सागरान्तरः सेतुपथः ॥ ]

---

1 थोव॰ Ms. 2 ॰प्पीडा GB. 3 परि॰ Ms. which has a second reading. 4 वीओआस॰ GB.

दरम् ईषन्निमिलितस्य सुवेलस्य महीधरस्य पर्वतान्तरस्य तटैकदेशो यत्र, ईदृशोऽपि सेतुपथः समाप्तच्छायां ददाति समाप्त इति कपिभिर्ज्ञातमित्यर्थः, कुत इत्याह द्वितीयार्धान्त' द्वितीयार्धाद्वा प्रसारितेन तिमिना पूरितः सागरान्तरोऽबद्धभागो यस्य ॥७७॥

**जाहे सेउ-णिबद्धं धुणइ णलो विसम-संठिअ-महा-सेलं ।**
**ताहे चिरेण सअलो सअलक्कन्त-वसुहो णिअत्तइ उअही ॥७८॥**

**[यदा सेतु-निबद्धं धुनोति नलः विषम-संस्थित-महा-शैलम् ।**
**तदा चिरेण सकलः सकलाक्रान्त-वसुधाः निवर्तते उदधिः ॥ ]**

सेतौ निबद्धं विषमसंस्थित' महाशैलं यदा नलो धुनोति समीकरणाय चालयति, तदा सकलाक्रान्ता वसुधा येन ईदृशः सन् सकल एव उदधि[1]श्चिरेण निवर्तते स्वस्थानमायाति ॥७८॥

**लहुइअ-पेसण-हरिसिअ-कइ-णिवह-णि[2]सुद्ध-सेल-पहर-वलन्तो ।**
**णइ-सोत्तो व्व समुद्दो सेउ-सुवेलन्तरे[3]मुहुत्तं वूढो ॥७९॥**

**[लघुकृत-प्रेषण-हर्षित-कपि-निवह-निपातित-शैल-प्रहार-वलमानः ।**
**नदी-स्रोतः इव समुद्रः सेतु-सुवेलान्तरे मुहूर्त' व्यूढः ॥ ]**

लघुकृतप्रेषणेन लघुकृतप्रेषणतया वा हर्षितेन कपिनिवहेन 'णिसुद्धस्य' निपातितस्य शैलस्य प्रहारेण वलन् साचीभूय वहन् समुद्रः सेतुसुवेलयोरन्तरे मुहूर्त' नदीस्रोत इव व्यूढः पश्चाद्बन्धं प्राप्त इति भावः ॥७९॥

**जह जह णिम्माविज्जइ[4] [5]कइ-वर-वसहेहि[6] सेउ-सङ्कम-सिहर' ।**
**तह तह दहमुह-हिअअं फालि[7]ज्जइ साअरस्स सलिलेण समं ॥८०**

---

1 °धि Ms. 2 °होसुद्ध° Ms. 3 °रे सु Ms. 4 °णिज्जइ Ms. 5 वाणर° GB. 6 °विस° Ms. 7 फाडि° GB.

[यथा यथा निर्मीयते कपि-वर-वृषभैः सेतु-संक्रम-शिखरम्।
तथा तथा दशमुख-हृदयं पाट्यते सागरस्य सलिलेन-समम्॥ ]

कपिवरवृषभैः सेतुसंक्रमस्य यथा शिखरं पुरोभागोऽग्रभाग इति कुः (कुलनाथः) तथा सागरस्य सलिलेन समं दशमुखस्य हृदयं पाट्यते, हृदयपक्षे भिद्यते, समुद्रपक्षे द्विधा भवतीत्यर्थः। कार्यधुरन्धरत्वाद् वरवृषभतया कपीनां निरूपणम्॥८०॥

पाआल-मिलिअ-मूलो अव्वोच्छिण्ण-पसरन्त-सरिआ-सोत्तो।
ठाण-ट्ठिओ वि पडिओ मुहम्मि धरणिहर-सङ्कमस्स सुवे[F49b]
लो॥८१॥

[पाताल-मिलित-मूलः अव्यवच्छिन्न-प्रसरत्-सरित्-स्रोताः।
स्थान-स्थितः अपि पतितः मुखे धरणीधर-संक्रमस्य सुवेलः॥ ]

पाताले मिलितं मूलं यस्य तथा, अव्यवच्छिन्नं निरन्तरं प्रसरन्ति सरितां स्रोतांसि यत्र एवम्भूतः सुवेलः स्थानस्थितोऽपि रावणभिया पर्वतान्तरवद्वानरैरनुपनीतोऽपि धरणीधर-संक्रमस्य मुखे पुरोभागे निपतितः, एतेन मलयतटाबद्धस्य शतयोजनस्यापि सेतोरवक्रतया सुवेलपर्यन्तानुगमनान्नलस्य शिल्पकौशलमुक्तम्॥८१॥

मलउच्छङ्ग-गएण वि रहुवइ-पास-ट्ठिएण वाणर-वइणा।
कइ-कलअलेण णाओ णिप्पच्छिम-सेल-पूरिओ सेउ-वहो॥८२॥

[मलयोत्सङ्ग-गतेन अपि रघुपति-पार्श्व-स्थितेन वानर-पतिना।
कपि-कलकलेन ज्ञातः निष्पश्चिम-शैल-पूरितः सेतु-पथः॥ ]

[F49b] रघुपतिपार्श्वस्थितेन वानरपतिना सुग्रीवेण मलयोत्सङ्गगतेनापि निष्पश्चिम-श्चरमशून्यः सर्वशेष इति यावत्, निर्गतः पश्चिमः पश्चाद्भागो यस्य इति वा तेन शैलेन पूरितः सेतुपथः कपीनामर्थात् कार्यसम्पादनहर्षितानां कलकलेन ज्ञातो निर्णीतः कपिकलकलेन सेतुसमाप्तिजनितहर्षजन्यपरिचयः सुग्रीवस्यैव तादृशनिर्णयो जातः, रामस्य पुनस्तथात्वेन-परिचयाभावात् स न जात इति रघुपतिपार्श्वस्थितेनेति व्यज्यते॥८२॥

आरम्भन्ते सअलो तिहाअ-विसमो दरुट्ठिअम्मि णल-वहे ।
होइ दहा अ समत्ते सो च्चिअ अण्णो पुणो पुणोव्व[1] समुद्दो ॥८३॥

[आरभ्यमाणे सकलः त्रिभाग-विषमः दरोत्थिते नल-पथे ।
भवति द्विधा च समाप्ते स एव अन्यः पुनः पुनः एव समुद्रः ॥ ]

पूर्वमारभ्यमाणे नलपथे सेतौ सकल एव समुद्रः, अनन्तरं दरोत्थितेऽर्धबद्धे त्रिभाग-विषमः पार्श्ववर्तिना भागद्वयेन संमुखवर्तिना भागैकेन च विषम इत्यर्थः, समाप्ते च द्विधा भवति, अतः स एव समुद्रोऽवस्थाभेदात् पुनः पुनरन्य एव जात इत्यर्थः ॥८३॥

मलअ-णिअम्बोसरिओ[2] वलन्त-वाणर-भरोणओ सेउ-वहो ।
गरुओ तिऊड-गिरिणा पल्हत्थन्तो दुमो दुमेण व धरिओ ॥८४॥

[मलय-नितम्बापसृतः वलद्-वानर-भरावनतः सेतु-पथः ।
गुरुकः त्रिकूट-गिरिणा पर्यस्यन् द्रुमः द्रुमेण इव धृतः ॥ ]

वलतां वानराणां भरेणावनतत्वान्मलयनितम्बादपसृत ईषत्स्खलितोऽतएव गुरुको दुर्वहः सेतुपथस्त्रिकूटगिरिणा सुवेलेन धृतः, स्खलितस्य बन्धोर्बन्धुना धरणमुचितमिति भावः । दृष्टान्तमाह पर्यस्यन् पतन् द्रुमो द्रुमेणेव ॥८४॥

दीसइ सेतु-महा-वह-दोहाइअ[3] जलधि पुव्व-पच्छिम-भागअं ।
[4]ओव्वत्तोहअ-पासं मज्झुक्खित्त-विसमं[5]णमन्तं व णहं ॥८५॥

[दृश्यते सेतु-महापथ-द्विधायित-जलधि-पूर्व-पश्चिम-भागकम् ।
अपवृत्तोभय-पार्श्वं मध्योत्क्षिप्त-विषमं नमत् इव नभः ॥ ]

1 वि GB. (Cf. CKS व्व) 2 मलउच्छङ्ग-पउत्तो GB. 3 ०दोखइअ पुव्व-पच्छिम-दिमाभागक GB. 4 ओहुत्तो० Ms. 5 ०माणमन्तो Ms.

सेतुमहापथेन द्विधाकृतौ गगनैकदेशप्रायौ जलधिपूर्वपश्चिमभागौ यत्र, ईदृशं नभस्तुङ्गेन सेतुना मध्याक्षिप्तविषमं सदपवृत्तावनतावुभयपार्श्वौ यस्य, एवं यथा स्यात्तथा नमदिव दृश्यते। **कुलनाथ**सम्मते पतदिवेत्यर्थः ॥८५॥

**मलअ-सुवेलालग्गो परिट्ठिओ[1] णह-णिहम्मि साअर-सलिले।**
**उअअत्थमण[2]-णिराओ रवि-रह-मग्गो व्व पाअडो सेउ-वहो ॥८६॥**

**[मलय-सुवेलालग्नः परिस्थितः नभो-निभे सागर-सलिले।**
**उदयास्तमन-नीरागः रवि-रथ-मार्गः इव प्रकटः सेतु-पथः ॥ ]**

मलय-सुवेलयोरालग्नो नभोनिभे सागरसलिले परिस्थितः सेतुपथ [3]उदयास्तशैलयोर्निरायतो रविरथमार्ग इव प्रकट उदयास्ताचलतुल्यौ मलयसुवेलावुदयास्ततया नीरागो रागरहितः। अस्तमय इति स्वार्थे मयट इति **केचित्** ॥८६॥

**दीसइ पवण-विहिज्जन्त[4]-साअरोअर-परिट्ठिअ-महा-सिहरो।**
**विअड-पसारिअ-वक्खो उप्पअमाणो व्व महिहरो सेउवहो ॥८७॥**

**[दृश्यते पवन-विभिद्यमान-सागरोदर-परिस्थित-महाशिखरः।**
**विकट-प्रसारित-पक्षः उत्प्लवमानः इव महीधरः सेतु-पथः ॥ ]**

पवनविभिद्यमानसागरोदरे परिस्थितं महाशिखरं यस्य पवनप्रचाल्यमानसागरोदरे परिस्थितमुभयतः स्थितं पार्श्वद्वयप्रतिविम्बितमिति, एवंभूतं महाशिखरं यस्य इति **लोकनाथः**। ईदृशः सेतुपथो विकटप्रसारितपक्षः सन्नुत्प्लवमानः कृतोड्डयनारम्भ इव महीधरो दृश्यते, पवनचाल्यमाने पार्श्वद्वये प्रतिविम्बितस्य शिखरस्य[5] प्रसारितपक्षसाम्यम् ॥८७॥

---

1 पडि GB. 2 °अत्थमिण° Ms, 3 उदयशैलयो° Ms.
4 °विहुव्वन्त° GB. 5 शिखरप्रसारित° Ms.

अरई थोरूसासा णिद्दा-णासो विवण्णआ [1]दोब्बल्लं ।
सेउम्मि रइ अमे[F50a]त्ते[2] रामादो रावणम्मि संकन्ताइं ॥८८॥

[अरतिः स्थूलोच्छ्वासाः निद्रा-नाशः विवर्णता दौर्बल्यम् ।
सेतौ रचितमात्रे रामात् रावणे-संक्रान्तानि ॥ ]

सेतुबन्धादुत्साहेन रामस्यारत्यादिनाशदर्शनाद्रावणस्य तु विषाददर्शनादुत्प्रेक्ष्यते, रमणीयेऽपि वस्तुन्यप्रीतिररतिः, स्थूलनिश्वासा निद्रानाशो विवर्णता दौर्बल्यं सेतौ रचितमात्रे रामाद्रावणे संक्रान्तानि । नपुंसकानपुंसकयोर्नपुंसकत्वं, एकवचनस्य वैकल्पिकत्वाद्बहुवचनम् ॥८८॥

अह थोर-तुङ्ग-विअडो णेउं णिहणं सबन्धवं [3]दसवअणं ।
दोहाइअ-सलिलणिही कअन्त-हत्थो व्व पसरिओ सेउ-वहो ॥८९॥

[अथ स्थूल-तुङ्ग-विकटः नेतुं निधनं सबान्धवं [3]दशवदनम् ।
द्विधाकृत-सलिलनिधिः कृतान्त-हस्तः इव प्रसृतः सेतु-पथः ॥ ]

[F50a] अथ स्थूलः पीवरस्तुङ्ग उन्नतो विकटो भयानकः सेतुपथः सबान्धवं दशवदनं निधनं नेतुं द्विधाकृतसलिलनिधिः कृतान्तहस्त इव प्रसृतः ॥८९॥

विसमेण पअइ-विसमं महिहर-गरुएण समर-साहस-गरुअं ।
दूरत्थेण वि भिण्णं सूलेण व सेउणा दसाणण-हिअअं ॥९०॥

[विषमेण प्रकृति-विषमं महीधर-गुरुकेण समर-साहस-गुरुकम् ।
दूरस्थेन अपि भिन्नं शूलेन इव सेतुना दशानन-हृदयम् ॥ ]

विषमेण नतोन्नतेन शूलपक्षे दुर्वारेण महीधरैर्गुरुकेण, पक्षे महीधरवद्गुरुकेण दूरस्थेनापि सेतुना शूलेनेव दशाननहृदयं भिन्नं, कीदृशं समरसाहसेन गुरुकमरतिभरं प्रकृत्या स्वभावेन विषमं, एवञ्च विषमत्वेन गुरुत्वेन च सेतोर्दशाननहृदयेन सह साम्याद्भेदनक्षमत्वमुक्तं

---

1 ०दा GB. 2 रइजन्ते GB. 3 दह० GB.

दूरस्थेनापीत्यपिर्विरोधे, तथाच दूरस्थेनापि हृदयवर्तिना शूलेनेव भिन्नमित्यर्थः। एतेन मेद्यानुरूपत्वं शूलस्योक्तमिति कुः ( कुलनाथः ) ॥६०॥

दीसन्ति खुहिअ-साअर-सलिलोल्लिअ-कुसुम-णिवह-लग्ग-महु-अरा।

सेउस्स पास-महिहर-[1]पअलन्तोवत्त[2]-किसलआ कडअ-दुमा ॥९१॥

[दृश्यते क्षुभित-सागर-सलिलार्द्रीकृत-कुसुम-निवह-लग्न-मधुकराः।

सेतोः पार्श्वे-महीधर-प्रगलदपवृत्त-किसलया कटकद्रुमाः ॥ ]

क्षुभितेन सागरसलिलेनार्द्रीकृते कुसुमनिवहे लग्ना मधुकरा येषामार्द्रीकृतेऽपि कुसुमे मधुकराणां लग्नत्वं रजःपङ्कमग्नत्वाच्चिरपरिचयादराद्वा, एवं पार्श्वमहीधरेषु सेतोः प्रगलन्त एव जलकणा अपवृत्ताः सलिलभरेणानताः किसलया येषां ते सेतोः कटकद्रुमा दृश्यन्ते। एतेन कटकद्रुमाणां क्षोभेऽप्याश्रितमधुकरापरित्यागः पार्श्वमहोधरापेक्षया तुङ्गत्वं सूचितम् ॥६१॥

थिमिओअहि-सच्छाआ कत्थ वि दीसन्ति महिहरन्तर-वडिआ।

[3]फलिअ-सिला-अल-घडिआ मज्झ-च्छिण्ण व्व सेउ-बन्धो आसा[4] ॥९२॥

[स्तिमितोदधि-सच्छायाः कुत्र अपि दृश्यन्ते महीधरान्तर-पतिताः।

स्फटिक-शिला-तल-घटिताः मध्य-च्छिन्नाः इव सेतु-बन्धावकाशाः ॥]

कुत्रापि महीधरयोरन्तराले पतिताः स्फटिकशिलातलेन घटिताः सेतुबन्धावकाशाः स्वच्छत्वात् स्तिमितोदधिसच्छायाश्चेदतो निश्चलजलधिसमानरूपत्वान्मध्यच्छिन्ना इव दृश्यन्ते ॥६२॥

---

1 पअड० GB.; पलअ० Ms. 2 ०न्तोव्वत्त० GB. 3 फलिह० GB. 4 ०वासा Ms.

हिम-पडणोत्थइआइं घडिआइ वि णल-वहम्मि णज्जन्ति फुडं ।
सिहराइ [1]सिहरि-वइणो मलअस्स अ मलिअ-चन्दण-सु-
अन्धाइं ॥९३॥

[हिम-पतनावस्थगितानि घटितानि अपि नल-पथे ज्ञायन्ते स्फुटम् ।
शिखराणि शिखरि-पतेः मलयस्य च मृदित-चन्दन-सुगन्धानि ॥]

नलपथे सेतौ घटितान्यपि शिखरिपतेर्हिमालयस्य मलयस्य च शिखराणि स्फुटं ज्ञायन्ते । पूर्वत्र हेतुमाह हिमपटलावस्थगितानि, उत्तरत्र मृदितचन्दनसुगन्धीनि ॥६३॥

जाआ फुड-वित्थारा गओणिअत्तन्त-जल-रअ-विहुव्वन्ता ।
पङ्कग्गाह-सगब्भा[2] सेउम्मि वि साअरस्स वेला-मग्गा ॥९४॥

[जाताः स्फुट-विस्ताराः गतापनिवर्तमान-जल-रय-विधाव्यमानाः ।
पङ्कग्राह-सगर्भाः सेतौ अपि सागरस्य वेला-मार्गाः ॥ ]

सागरस्य वेलामार्गास्तटपथाः सेतावपि जाता अन्यत्र तावत् सन्त्येवेत्यपेरर्थः, कीदृशाः स्फुटः प्रकटितः विस्तारो येषां, गतापनिवर्तमाने जलरयेण विधाव्यमानाः प्रक्षाल्यमाना विधूयमाना इति **कुलनाथः**। पङ्कग्राहेण जलसिंहेन समर्थग्राहेण वा समग्राः पूर्णाः 'पङ्कग्गाहसगब्भा' इति पाठे गर्भस्थसमर्थजलचरा इत्यर्थः । सेतौ सति सागरस्य वेलामार्गास्तीरप्रदेशा लहरीमार्गा इति **श्रीनिवासः** ॥६४॥

सेला-इञ्छण-पडि[F50b]आ सलिलोल्लिअ-गरुअ-केसर-भरक्कन्ता ।
दीसन्ति दरुत्तिण्णा सङ्कम-पासल्ल-संठिआ केसरिणो ॥९५॥

[शैलातिक्रम-पतिताः सलिलार्द्रीकृत-गुरुक-केसर-भराक्रान्ताः ।
दृश्यन्ते दरोत्तीर्णाः संक्रम-पार्श्व-संस्थिताः केसरिणः ॥ ]

---

1 सिहर० Ms. 2 ०समग्गा GB.

'सेलाइञ्छणेन' गिरिप्रेरणेन पतिताः सलिलेनार्द्रीकृतत्वाद् गुरुकेण केसरभरेणाक्रान्ता अतएव दरमीषदुत्तीर्णाः संक्रमणपार्श्वस्थिताः केसरिणो दृश्यन्ते। शैलाकर्षणात् पतिता इति **केचित्** ॥६५॥

[1]पुव्वाअरे गइ-गआ दट्ठुं [2]पुव्वाअरोअहि-समुप्पण्णा।
सेउ-पडिसिद्ध-पसरा पुणो ण पेच्छन्ति कुल-हराइ जलअरा ॥९६

[पूर्वापरौ गति-गताः द्रष्टुं पूर्वापरोदधि-समुत्पन्नाः।
सेतु-प्रतिषिद्ध-प्रसराः पुनः न प्रेक्षन्ते कुल-गृहाणि जलचराः॥]

ये जलचरास्तिमिङ्गिलादयः पूर्वापरयोरुदध्योरुदधिभागयोः समुत्पन्नाः पूर्वापरावुदधी द्रष्टुमागताः सेतुबन्धनात् पूर्वं स्वस्थानमतिक्रम्य गताः तेऽधुना बद्धेन सेतुना प्रतिसिद्धप्रसराः सन्तः पुनः कुलगृहाणि जन्मस्थानानि न प्रेक्षन्ते, एतेन पातालमूलमवगाह्य स्थितः सेतुरित्युक्तं पूर्वोदधिसमुत्पन्ना अपरोदधिं द्रष्टुं गता, अपरोदधिसमुत्पन्नाः पूर्वमुदधिं द्रष्टुं गता इति यथाक्रमं योज्यमिति **केचित्** ॥६६॥

दीसन्ति धाउ-अम्बा मारुअ-विहुअ[3]-धवलोज्झर-पडद्धन्ता।
सेउस्स तुङ्ग-सिहरा [4]उहअ-तल-परिट्ठिआ धअ व्व महि-
हरा ॥९७॥

[दृश्येते धातु-ताम्रौ मारुत-विधुत-धवल-निर्झर-पटार्धान्तौ।
सेतोः तुङ्ग-शिखरौ उभय-तट-परिस्थितौ ध्वजौ इव महीधरौ॥]

सेतोरुभयत्र परिस्थितौ महीधरावर्थान्मलयसुवेलौ ध्वजाविव दृश्येते। ध्वजसाधर्म्यमाह, धातुभिस्ताम्रौ मारुतविधुतौ धवलनिर्झरौ पटार्धान्तौ यत्र, तुङ्गं शिखरं शृङ्गमग्रभागश्च ययोः ॥६७॥

---

1 पुव्वावरोअहि-गआ GB. 2 पुव्वावरो० GB. 3 ०विअडो० Ms.
4 उराणअ-अट० Ms.

अह णिम्मिअ-सेउवहं-सेउ-वहब्भहिअ-अल-पइण्ण-महिहरं ।
चलिअं चलन्त-राहव-हिअअ-णिहिप्पन्त-रण-सुहं कइ-
सेण्णं ॥९८॥

[अथ निर्मित-सेतु-पथं सेतु-पथाभ्यधिक-स्थल-प्रकीर्ण-महीधरम् ।
चलितं चलद्-राघव-हृदय-निधीयमान-रण-सुखं कपि-सैन्यम् ॥ ]

अथ सेतुनिर्माणानन्तरं कपिसैन्यं चलितं, कीदृशं निर्मितः सेतुपथो येन, सेतुपथाभ्यधिकाः स्थले विप्रकीर्णा युद्धसमयेऽङ्गीकरणाय भूमौ स्थापिता महीधरा येन, चलता राघवेण हृदये निधीयमानं रणसुखं यस्य, विधाप्यमानं रणसुखं यस्य इति **केचित्** ॥९८॥

वोलेन्ति अ पेच्छन्ता[1] संकम-दोहाइअ-क्खविअ-वित्थारं ।
वलवा[2]-मुह-णिट्ठविएक्क-[3]वास-वोच्छिण्ण-पाणिअं मअर-
हरं ॥९९॥

[व्यतिक्रामन्ति च प्रेक्षमाणाः संक्रम-द्विधाकृत-क्षपित-विस्तारम् ।
वडवा-मुख-निष्ठापितैक-पार्श्व-व्यवच्छिन्न-पानीयं मकर-गृहम् ॥ ]

मकरगृहं [4]प्रेक्षमाणाः साश्चर्यं पश्यन्तो व्यतिक्रामन्ति । आश्चर्यबीजमाह संक्रमेण सेतुना द्विधाकृतोऽतएव क्षयितो विस्तारो यस्य, वडवामुखेन वडवाग्निना निर्वापितं शोषितमतएव एकपार्श्वे व्यवच्छिन्नं पानीयं यस्य, एवंभूतस्य समुद्रस्य दर्शनादाश्चर्यमुचितमेव । वडवामुखेऽभितापितमेकपार्श्वे व्यवच्छिन्नं पानीयं यस्य, सेतुना द्विधाकृतत्वात् । यद्वा वडवामुखे प्राप्तनिम्नत एकपार्श्वे परिच्छिन्नं समीभूतं पानीयं यस्य इति **केचित्** ॥९९॥

---

1 पेच्छन्ति अ वोलेन्ता GB. 2 वलआ० GB. 3 ०पास० GB.
4 प्रेक्ष्यमाणाः Ms.

संङ्ख-उल-धवल-कमले फुड-मरगअ-हरिअ[1]-पत्त-भङ्ग-णिहाए ।
विद्दुम-मिलिअ-किसलए उहअ-तडाबद्ध-संकमम्मि णल-वहे ॥१००

[शङ्ख-कुल-धवल-कमले स्फुट-मरकत-हरित-पत्र-भङ्ग-निघाते ।
विद्रुम-मिलित-किसलये उभय-तटाबद्ध-संक्रमे नल-पथे ॥ ]

नलपथे वानरबलं सञ्चरतीति वक्ष्यमाणस्कन्धकेनान्वयः। कीदृशे नलपथे शङ्ख-कुलानीव धवलानि कमलानि यत्र, स्फुटमरकतप्रायहरिताः पत्रभङ्गनिघाता यत्र, विद्रुम इव मिलिताः किसलया यत्र, तथा उभयतटाबद्धश्चासौ संक्रमश्चेति तस्मिन्, अन्यत्र उभयतटे आबद्धः संक्रमो यत्र तस्मिन्नलपथे समुद्रे च ॥१००॥

सञ्चरइ वाणर-बलं णमइ विसट्टन्त-महिहरो सेउ-वहो ।
[2]ओआहि[F51a]अ-पाआलं सव्व-त्थाम-गरुअं धरेइ
समुद्दो ॥१०१॥

[सञ्चरति वानर-बलं नमति विसंघटमान-महीधरः सेतु-पथः ।
अवगाढ-पातालं सर्व-स्थाम-गुरुकं धारयति समुद्रः ॥ ]

सञ्चरति वानरबलमाक्रमभरेण विसंघटमाना महीधरा यत्र स सेतुपथो नमत्यवगाढ-पातालं पातालमूले दत्तभरं यथा स्यात्तथा सर्वस्थाम्ना गुरुकञ्च यथा स्यात्तथा धारयति समुद्रोऽर्थात् कपिचरणावनतं सेतुपथं रामशराघातशङ्कयेति भावः ॥१०१॥

सञ्चालेइ णिअम्बं धरेइ उअरिं तरङ्ग-कर-पब्भारं ।
खम्भम्मि वण-गओ विअ आबद्धो[3] सेल-सङ्कमम्मि समुद्दो ॥१०२॥

[सञ्चालयति नितम्बं धारयति उपरि तरङ्ग-कर-प्राग्भारम् ।
स्तम्भे वन-गजः इव आबद्धः शैल-संक्रमे समुद्रः ॥ ]

---

1 ०वत्त० GB.  2 ओवाहि० Ms.  3 सेतु० GB.

[E51a] नितम्बं कटकमर्थाच्छैलानां सञ्चालयति नितम्बं मध्यभागं सेतोरित्यर्थादिति **कुलनाथः**। धारयति उपरि तरङ्गकरप्राग्भारं स्तम्भे वनगज इव शैलसंक्रमे आबद्धः समुद्रः। वनगजोऽपि स्तम्भे आबद्धः सन् नितम्बं चालयति उपरि प्राग्भारञ्च धारयति ॥१०२॥

उत्तिण्णा अ पवङ्गा सेल-भरुव्वहण-जणिअ-सेअ-तुसारा।
धाउ-मइले करअले पास-ट्ठिअ-महीहरोज्झरेसु धुवन्ता ॥१०३॥

[उत्तीर्णाः च प्लवङ्गाः शैल-भरोद्वहन-जनित-स्वेद-तुषाराः।
धातु-मलिनानि करतलानि पार्श्व-स्थित-महीधर-निर्झरेषु धावयन्तः ॥]

उत्तीर्णाश्च प्लवङ्गाः; कीदृशाः, शैलभरोद्वहनजनितस्वेदतुषाराः, तथा [1]धातुमलिनानि [करतलानि] पार्श्वस्थितेषु महीधरनिर्झरेषु धावयन्तः क्षालयन्तः ॥१०३॥

पत्ता अ दहमुहाणिअ-णन्दण-वण-पाअवोइअ-वणुद्देसं।
जल-भर-णिसण्ण-जलहर-भर-मोडिअ-वण-लअं सुवे-
लुच्छङ्गं ॥१०४॥

[प्राप्ताः च दशमुखानीत-नन्दन-वन-पादपोचित-वनोद्देशम्।
जल-भर-निषण्ण-जलधर-भर-मोटित-वन-लतं सुवेलोत्सङ्गम् ॥]

प्राप्ताश्च सुवेलोत्सङ्गमर्थात् कपयः। कीदृशं, दशमुखानीतानां नन्दनवनपादपानामुचितो योग्यस्तैरुदितो वा वनोद्देशो यत्र, आसन्नस्य समुद्रस्य जलभरनिषण्णानां जलधराणां भरेण मोटिता वनलता[2] यत्र ॥१०४॥

---

1 ०मलिनान् Ms. 2 वनगजा Ms.

**सोऊण समुत्तिण्णं उअहिमविद्दविअ-विक्कमं कइ-सेण्णं ।**
**जाओ राक्खस-लोओ रक्खस-णाहस्स पेलवाणत्तिअरो ॥१०५॥**

[श्रुत्वा समुत्तीर्णं उदधिं अविद्रावित-विक्रमं कपि-सैन्यम् ।
जातः राक्षस-लोकः राक्षस-नाथस्य पेलवाज्ञप्तिकरः ॥ ]

अविद्रुतोऽखण्डितो विक्रमो यस्य तत्, कपिसैन्यमुदधिमुत्तीर्णं श्रुत्वा राक्षसलोको राक्षसनाथस्य पेलवाऽल्पा या आज्ञा तत्करो जातः । पेलवं यथा स्यात्तथा आज्ञप्तिमाज्ञां करोतीति तथाविधो जात इति **कुलनाथः** । लक्ष्मीविहीनः प्रतापरहितो यस्मात् प्रभुरभूदित्यर्थः ॥१०५॥

**जाव अ सुवेल-कडए[1] आवास-ग्गहण-वावडं कइ-सेण्णं ।**
**ताव कअन्तेण कओ [2]दहमुह-सीसम्मि वाम-हत्थ-प्पणओ[3] ॥१०६**

[यावत् च सुवेल-कटके आवास-ग्रहण-व्यापृतं कपि-सैन्यम् ।
तावत् कृतान्तेन कृतः दशमुख-शीर्षे वाम-हस्त-प्रणयः ॥ ]

यावच्च विश्रामार्थं सुवेलकटके आवासग्रहणव्यापृतं कपिसैन्यं तावद्दशमुखस्य शीर्षे कृतान्तेन वामहस्तप्रणयः कृतः, अनन्तरमेव वानरसैन्यं यमभिलषितं पूरयिष्यतीत्य-विघ्नार्थं कृतान्तेन दैवेन वामहस्तस्य सिद्धिहेतुत्वात् तेन सिद्धिकरीमिव रक्षामकरोदित्यभि-प्रायः । प्रणयः स्वीकारः, मयास्य शीर्षे आवासः [4]कर्तव्य इति स्थानं निश्चितमित्यर्थः । संकटपतिताद्दशमुखान् निर्भयत्वख्यापनाय वामपदं हस्तविशेषणम् ॥१०६॥

**रामस्स रावणस्स अ लोआलोअन्तराल-णीसामण्णे ।**
**वड्डन्त-णिअत्तन्ते पाआरन्तर-[5]दुहाविअम्मि पआवे ॥१०७॥**

[रामस्य रावणस्य च लोकालोकान्तराल-निस्सामान्ये ।
वर्धमान-निवर्तमाने प्राकारान्तर-द्विधाकृते प्रतापे ॥ ]

---

1 महोअहि-अडे GB. 2 रावण॰ GB. 3 ॰प्फंसो GB.
4 कर्तव्यमिति Ms. 5 ॰दुहाइ॰ GB.

रामस्य रावणस्य च प्रतापः पूर्वं लोकालोकपर्वतमध्ये व्यापकत्वात् साधारण[1] आसीत्, इदानीं लोकालोकमध्ये तयोः प्रतापे निःसामान्येऽसाधारणतां गते सति मथितस्य पर्वतक्षोभितस्य सागरस्य शोभा प्रसन्नाऽनाविला जातेति वक्ष्यमाणस्कन्धकेनान्वयः। असाधारणतामेवाह। वर्धमाननिवर्तमाने रामस्य प्रतापे वर्धमाने रावणस्य प्रतापे निवर्तमान इत्यर्थः। प्रतापस्य वर्धमानत्वाच्च प्राकाररूपेणान्तरेण व्यवधानेन द्विधाकृते प्राकारमध्ये रावणस्य तद्बहिः सर्वत्र रामप्रतापस्य दृश्यमानत्वादित्यर्थः ॥१०७॥

**जाआ लच्छीअ समं सोहा महिअस्स [F51b]साअरस्स पसण्णा।**
**तिअस-जणिआणुराए उत्तिण्णम्मि मअलञ्छणम्मि व रामे ॥१०८॥**

**[जाता लक्ष्या समं शोभा मथितस्य सागरस्य प्रसन्ना।**
**त्रिदश-जनितानुरागे उत्तीर्णे मृगलाञ्छने इव रामे ॥]**

[F51b] लक्ष्म्या विजयलक्ष्म्या समं त्रिदशजनितानुरागे जगदाह्लादकत्वान् मृगलाञ्छन इव समुत्तीर्णे पारं गते सति यथा पूर्वं मन्दरमथितस्य सागरस्य मध्याल्लक्ष्म्या कमलया सह सुधामयत्वात् त्रिदशजनितानुरागे चन्द्रे उत्थिते सति शोभा प्रसन्नानाविला जाता। प्रकृष्टस्तापो यस्य तस्मिन् सूर्ये पूर्वं वर्धमाने पश्चान्निवर्तमानेऽस्तं गते सति मृगलाञ्छनस्याप्युदयो भवत्येवेति **केचित्** ॥१०८॥

राअ-सिरि-पवरसेणस्स एत्थ रावणवहे महाकव्वम्मि।
रअणाअर-लञ्छण अट्ठमओ आसासओ परिसमत्तो ॥

[ राजश्री-प्रवरसेनस्य अत्र रावणवधे महाकाव्ये।
रत्नाकर-लञ्छनः अष्टमकः आश्वासकः परिसमाप्तः ॥ ]

इति अष्टम[2] आश्वासः ॥

---

1 साधारणमा॰ Ms. 2 सप्तम Ms.

# णवमो आसासओ

अह पेच्छन्ति पवङ्गा सअल-जअक्कमण-वड्ढिअ-महा-सिहरं ।
णिट्ठविअ-दक्खिण[1]-दिसं सेस-दिसा-मुह-[2]पहाविअं व सुवेलं ॥१॥

[अथ प्रेक्षन्ते प्लवङ्गाः सकल-जगदाक्रमण-वर्धित-महाशिखरम् (or महासि-गृहम्) ।
निष्ठापित-दक्षिण-दिशं शेष-दिङ्-मुख-प्रधावितं इव सुवेलम् ॥ ]

नवमेनाश्वासेन महाकाव्याङ्गभूतं सुवेलस्य गिरेर्वर्णनमाह । अथ समुद्रलङ्घनानन्तरमावासग्रहणानन्तरं वा प्लवङ्गाः सुवेलं प्रेक्षन्ते । आश्वाससमाप्तिपर्यन्तं यावत् सर्वत्र क्रिया । कीदृशं, सकलजगदाक्रमणाय वर्धितं महाशिखरं यस्य, शिखरस्य वर्धिष्णुतामालोक्येयमुत्प्रेक्षा । सकलस्य विश्वस्य जयेन यदाक्रमणं वशीकरणं तदर्थं वर्धितो महानसिश्चन्द्रहासो यस्य स रावणस्तस्य गृहम् । अथवा कलया सहितः सकलश्चन्द्र एव तस्य जयेन यदाक्रमणं तदर्थं वर्धितमहाशिखरमिति **श्रीनिवासः** । निष्ठापिता आक्रान्ता दक्षिणदिग् येन, एतदावृतत्वाद्दक्षिणदिशोऽनुपलभ्यमानत्वाच्छेषेषु दिङ्मुखेषु प्रधावितमिवानुदिवसवर्धमानपरिणाहवत्त्वादित्यर्थः ॥१॥

[3]भुअणस्स व महुमहणं भुअण-भर-ज्झीण[4]-महुमहस्स व सेसं ।
सेसस्स व सलिलणिहिं सरिआ-वइणो [5]णिसम्मिअव्व-भर-सहं ॥२॥

[भुवनस्य इव मधुमथनं भुवन-भर-क्षीण-मधुमथनस्य इव शेषम् ।
शेषस्य इव सलिलनिधिं सरित्-पतेः निषत्तव्य-भर-सहम् ॥ ]

---

1 ०दाहिण० GB. 2 ०वहावि० GB. 3 भुव० GB.
4 ०रा-म्फी० Ms. 5 विस० GB.

भुवनस्य पृथिव्याः समुद्रस्यापि निषत्तव्यं निषदनमवलम्बनमिति यावत् तस्य भरसहम्। दृष्टान्तमाह, भुवनस्य निषदनभरसहं मधुमथनमिव, भुवनभरक्षीणस्य मधुमथनस्य शेषमिव, शेषस्यार्थात् त्रिभुवनसहितमधुमथनभरशालिनः सलिलनिधिमिवं। दृष्टान्तत्रयेण यथाक्रमं वैरिभिरलंघनीयत्वं धरणीधरसमत्वं विस्तीर्णत्वञ्च सुवेलस्य प्रतिपादितम् ॥२॥

धरणि-हरेअव्व-सहं उअहि-भरेअव्व-पब्बल-णइ-प्पवहं।
णह-माअव्व-समत्थं खअ-मारुअ-रुम्भिअव्व-जोग्ग-णिअम्बं ॥३॥

[धरणी-धर्तव्य-सहं उदधि-भर्तव्य-प्रबल-नदी-प्रवाहम्।
नभो-मातव्य-समर्थं क्षय-मारुत-रोद्धव्य-योग्य-नितम्बम् ॥ ]

धर्तव्यं धरणं, सर्वत्र भावे तव्यप्रत्ययः। धरण्या धरणे सहं क्षमं, उदधेर्भर्तव्ये भरणे पूरण इति यावत्, 'पव्वलाः' समर्था नदीप्रवाहा यस्य तं, नभसो 'माअव्वे' इयन्मात्रमिति माने समर्थं, क्षयमारुतस्य 'रुम्भिअव्वे' रोधने योग्यो नितम्बो यस्य तम्। विशेषणचतुष्टयेन यथाक्रमं धैर्यविस्तारतुङ्गत्वनिष्कम्पत्वानि गिरेर्दर्शितानि ॥३॥

दूर-[1]पडिवेल्लिअ-दिसं[2]दूरोवाहिअ-समत्थ[3]-पाआल-अलं।
दूरअरुक्खित्त-णहं णवर करासण्ण-पाअव-प्फल-कुसुमं ॥४॥

[दूर-प्रतिप्रेरित-दिशं दूरावगाढ-समाप्त-पाताल-तलम्।
दूरतरोत्क्षिप्त-नभसं केवलं करासन्न-पादप-फल-कुसुमम् ॥ ]

दूरं प्रतिप्रेरिताः पीडयित्वाऽपसारिता दिशो येन दूरं प्रतिप्रेरिता आक्रम्यापसारिता दिशो येनेति **लोकनाथः**। दूरावगाढमतः समाप्तं पातालं येन; 'समत्थ' इति पाठे दूरावनतं समस्तं पातालं येन, दूरतरोत्क्षिप्तनभसं 'णवर' केवलं करासन्नानि पादपानां फलानि कुसुमानि च यस्य तम्। एतेनाविर्भूतानामपि दिगादीनामप्रयोजकतया दूरप्रेरणादुपकारहेतूनाञ्च फलकुसुमानां निकटदेशावस्थापनात् पर्वतस्य हेयोपादेयाभिज्ञता दर्शिता ॥४॥

1 ०परिपेल्लिअ० GB. 2 दूरोणामिअ० GB. 3 Ms. has the reading 'समत्त' also, put marginally.

पासल्लाअअ[1]-सरिअं अमुक्क-पाआल-साअर-जलुच्छङ्गं ।
आइ-वराहुव्वत्तण-खण-[2]वलिउद्ध-[F52a]ट्ठिअं व मेइणि-वेढं ॥५॥

[पार्श्वागत-सरितं अमुक्त-पाताल-सागर-जलोत्सङ्गम् ।
आदि-वराहोद्वर्तन-क्षण-वलितोर्ध्व-स्थितं इव मेदिनी-वेष्टम् ॥ ]

[F52a] पार्श्वागताः सरितो यस्य, अमुक्तः पातालसागरयोरुत्सङ्गो येनेति सुवेले मेदिनीखण्डे च समानम्, आदिवराहस्योद्वर्तनेनोत्क्षेपणेन क्षणाद्वलितोर्ध्वस्थितं तिर्यगूर्ध्वीभूतं मेदिनीवेष्टमिव तिर्यगूर्ध्वीभूतस्य मेदिनीवेष्टस्यापि सरितः पार्श्वगता भवन्ति तिर्यग्भावेनोत्थानात् पातालसागरजलापरित्यागश्च स्यादिति **केचित्**। **अन्ये** तु सुवेलस्य पार्श्वगतसमुद्रत्वात् पार्श्वगतसरितममुक्तपातालसागरजलमादिवराहोद्वर्तनेन वलितं मण्डलाकारं समुत्थितं मेदिनीवेष्टमिव। 'पासल्ल'शब्दः पार्श्वे देशी ॥५॥

पाआल-भरिअ-मूलं वज्ज-मुहाओडण-ट्ठविअ-णिक्कम्पं ।
आलाण-क्खम्भंमिव सुर-हत्थि-क्खन्ध-णिहस-मसिणिअ-[3]वासं ॥६

[पाताल-भरित-मूलं वज्र-मुखाकोटन-स्थापित-निष्कम्पम् ।
आलान-स्तम्भं इव सुर-हस्ति-स्कन्ध-निघर्ष-मसृणित-पार्श्वम् ॥ ]

पाताले भरितं मूलं यस्य तम्, आलानवद् दूरनिखातमित्यर्थः। वज्रमुखस्याकोटनेन पक्षच्छेदार्थमाघातेन स्थापितनिष्कम्पमुपरि मुद्गरादिघातेन स्थिरीकृत्य स्थापितमित्यर्थः। तथा इन्द्रं जित्वा नीतस्य सुरहस्तिन ऐरावतस्य निघर्षणमसृणितपार्श्वमत आलानस्तम्भमिव इति **लो** (लोकनाथः) ॥६॥

विमलिअ-रसाअलेण वि विसहर-वइणा अदिट्ठ-मूल-च्छेअं ।
अप्पत्त-तुङ्ग-सिहरं तिहुअण-हरण-परिवड्ढिएण वि हरिणा ॥७॥

[विमर्दित-रसातलेन अपि विषधर-पतिना अदृष्ट-मूल-च्छेदम् ।
अप्राप्त-तुङ्ग-शिखरं त्रिभुवन-भरण-परिवर्धितेन अपि हरिणा ॥ ]

---

1 ०ल्लागअ० GB. 2 ०पडिउद्ध० GB. 3 ०पासं GB.

विमर्दितं रसातलं येन, यद्वा फणामणिप्रभाभिर्विमलीकृतं रसातलं येन, तेनापि विषधरपतिना शेषेणादष्टो मूलस्य छेदपर्यन्तो यस्य, त्रिभुवनहरणाय वर्धितेन हरिणा त्रिविक्रमेणाप्यप्राप्तं[1] तुङ्गशिखरं यस्य। अत्र त्रिविक्रमप्राप्तत्वादेव शिखरस्य तुङ्गत्वे प्राप्ते तुङ्गपदमनुचितमेवेति ध्येयम् ॥७॥

**विच्छूढोअहि-सलिलं कडअ-भमन्त-भुअइन्द-दिण्णावेढं।**
**पास-ट्ठिएण रइणा करेहि [2]हरिण व्व मन्दरं उपऊढं ॥८॥**

**[विक्षिप्तोदधि-सलिलं कटक-भ्रमद्-भुजगेन्द्र-दत्तावेष्टम्।**
**पार्श्वस्थितेन रविणा करैः हरिणा इव मन्दरं उपगूढम् ॥ ]**

विक्षिप्तोदधिसलिलं सुवेलं मन्दरञ्च तथा कटकभ्रमता भुजगेन्द्रेण पन्नगश्रेष्ठेन, पक्षे वासुकिना दत्तावेष्टं पार्श्वस्थितेन रविणा करैः किरणैरुपगूढं करैश्चतुर्भुजैर्हरिणा[3] मन्दरमिव कराभ्यां वा, प्राकृते द्विवचनस्य बहुवचनत्वात् ॥८॥

**सेस-सिर-रअण-घट्टिअ-मणि-मूलुज्झोअ-हअ-रसाअल-तिमिरं।**
**विसमुद्ध-सिहर-सङ्कड-पणट्ठ-रवि-मण्डलन्धआरिअ-गअणं ॥९॥**

**[शेष-शिरो-रत्न-घट्टित-मणि-मूलोद्योत-हत-रसातल-तिमिरम्।**
**विषमोर्ध्व-शिखर-संकट-प्रनष्ट-रवि-मण्डलान्धकारित-गगनम् ॥ ]**

शेषस्यानन्तस्य शिरसां रत्नैः समं घटितं यन्मणिप्रधानं मूलं तस्योद्योतेनाहतं रसातल-तिमिरं येन, विषममत्यर्थमुर्ध्वाणां शिखराणां संकटे गहनदेशे प्रनष्टं रविमण्डलं यस्य, एवंभूतत्वादन्धकारितगगनम्। एतेनान्धकारस्य प्रकाशकरणात् प्रकाशस्य चान्धकारत्वापादनात् सुवेलस्य स्वभावपरिवृत्तित्तमवैभवं सूचितम् ॥९॥

---

1 अप्राप्त तुङ्ग० Ms.    2 हरिणा B.    ३ ०जैहरि० Ms.

ससि-बिम्ब-पास-णिहसण[1]-कसण-सिला-भित्ति-पसरिआमअ-लेहं ।
जोण्हा-जल-पब्बालिअ-विसमुम्हाअन्त-मुणिअ-रइ[2]-रह-मग्गं ॥१०॥

[शशि-बिम्ब-पार्श्व-निघर्षण-कृष्ण-शिला-भित्ति-प्रसृतममृत-लेखम् ।
ज्योत्स्ना-जल-प्रप्लावित-विषमोष्मायमाण-ज्ञात-रवि-रथ-मार्गम् ॥]

शशिबिम्बस्य पार्श्वनिघर्षणेन कृष्णशिलाभित्तिषु प्रसृता अमृतलेखा यत्र, शशिबिम्बेन पार्श्वे निकषिता या कृष्णशिलाभित्तिस्ततः प्रसृता अमृतलेखा यत्र इति **कुलनाथः**। अमृतलेखायाः स्फुटत्वख्यापनाय कृष्णपदं शिलाविशेषणं, एवं ज्योत्स्नाजलेन प्लावितत्वाद् विषममत्यर्थमुष्मायमाणोऽतएव ज्ञातः प्रकटमुपलभ्यमानो रविरथमार्गो यत्र । एतेन चन्द्रसूर्यपर्यन्तानुधाविता गिरेः सूचिता ॥१०॥

सिहरल्लीण[3]-मिअङ्कं विरल-ट्ठिअ-गहिअ-सलिल-जलअ-क्खण्डं ।
खुडिउव्वूढ-मुणालं णिसासु विसम-हिअ[4]-कद्दमं व सुर-गअं ॥११॥

[शिखरालीन-मृगाङ्कं विरल-स्थित-गृहीत-सलिल-जलद-खण्डम् ।
खण्डितोद्व्यूढ-मृणालं निशासु विषम-हृत-कर्दमं इव सुर-गजया ॥ ]

शिखरालीनो मृगाङ्को यस्य, विरलस्थिता गृहीतसलिलाः श्यामा इति यावज् जलदखण्डा यत्र, अतो निशासु विषमहृतकर्दमं क्वचित् क्वचित्[5] लग्नपङ्कं खण्डितोद्व्यूढमृणालं सुरगजमिव गजानां रात्रिगमनप्रियत्वान्निशास्विति पदमिति **कुलनाथः**। चन्द्रोदये ज्योत्स्नाप्लावितत्वेन शुक्लतया सुरहस्तिसाम्यकथनायेति **केचित्** ॥११॥

---

1 °णिहसिअ° Ms. 2 °रवि° GB. 3 °राली° GB.
4 °ठिअ° Ms. 5 . There is a third क्वचित् hereafter.

हरिअ-वण-राइ-पिसुणिअ-[F52b]दूरअरालोअ-सिहर-सरिआ-मग्गं ।

पवणुक्खुडिअ[1]-किलमिअ-मिअङ्क-पुट्ठि[2]-पडिऊससन्त[3]-किसलअं ॥१२॥

[हरित-वन-राजि-पिशुनित-दूरतरालोक-शिखर-सरिन्-मार्गम् ।
पवनोत्खण्डित-क्लान्त-मृगाङ्क-पृष्ठ-पतितोच्छ्वसत्-किसलयम् ॥ ]

[F52b] हरिताभिर्वनराजिभि पिशुनिताः, अतएव दूरतरे आलोक्यन्त इति दूरतरालोका [4]शिखरसरिन्मार्गा यस्य तं पवनोत्खण्डितानि अतएव क्लान्तानि मृगाङ्कस्यामृतमयत्वात् तत्पृष्ठपतिततया उच्छ्वसन्ति किसलयानि यस्य मृगाङ्केन प्रष्ठ(?) किसलयानीत्यर्थः ॥१२॥

दूरुद्धाइअ-सिहरं जलणिहि-जल-दिट्ठ-विअड-पाअड-पडिमं ।
उप्पाआसणि-पहअं उद्धप्फुडिअ-पडिएक्क-[5]वासं व ठिअं ॥१३॥

[दूरोद्धावित-शिखरं जलनिधि-जल-दृष्ट-विकट-प्रकट-प्रतिमम् ।
उत्पाताशनि-प्रहतं ऊर्ध्व-स्फुटित-पतितैक-पार्श्वं इव स्थितम् ॥]

दूरोद्धावित-शिखरं शिखरस्य तुङ्गत्वाज्जलनिधिजलमध्ये दृष्टा विकटा विशाला प्रतिमा प्रतिबिम्बं यस्य तं, एवंरूपत्वादुत्पाताशनिप्रहतमूर्ध्वस्फुटितपतितैकपार्श्वमिव स्थितम् ॥१३॥

गुरु-भर-सेसाहि-प्फण-वारंवार-पडिरुद्ध-मूलुच्छङ्गं ।
खअ-मारुउक्खआणिअ-तुङ्ग-अडावडिअ-भिण्ण-सेस-महिहरं ॥१४॥

[गुरु-भर-शेषाहि-फण-वारंवार-प्रतिरुद्ध-मूल[illegible] ।
क्षय-मारुतोत्खातानीत-तुङ्ग-तटापतित-भिन्न-शेष-महीधरम् ॥ ]

---

1 °डण° Ms. 2 Ms has 'वट्ठ' in the text and 'पुट्ठि' marginally.
3 °उस्ससन्त° B. 4 शिखरि° Ms. 5 °पासं GB.

गुरुभरेण सुवेलमूलद्वयमध्यवर्तितया यन्त्रवन्निष्पीडनेन हेतुना शेषाहिफणेन वारंवारं प्रतिरुद्धः प्रसारिततया निष्पीडनाच्चमीकृतो मूलदेशो यस्य, गुरुभरैः शेषाहिफणैर्विश्रामार्थं वारंवारं प्रतिरुद्धमूलोत्सङ्गमिति **कुलनाथः**। क्षयमारुतोत्खातानीतास्तुङ्गतटे आपतिताः सन्तो भिन्नाः शेषमहीधरा यस्य तम्। एतेन पर्वतान्तरादतिदाढ्र्यमुक्तम् ॥१४॥

**गहिअ-जल-मेह-पेल्लिअ-णिव्वाअन्त-णिहुअ-ट्ठिअ-महा-महिसं।**
**निहअ-गअ-कुम्भ-लोहिअ-सिला-अलोसुक्ख-बद्ध-[1]मोत्ता-**
**वडलं[2] ॥१५॥**

**[गृहीतजल-मेघ-प्रेरित-निर्वाप्यमाण-निभृत-स्थित-महा-महिषम्।**
**निहत-गज-कुम्भ-लोहित-शिला-तलावशुष्क-बद्ध-मुक्ता-पटलम् ॥]**

[No commentary available in our Ms.]

**लवण-जल-सीहराहअ-दरुव्वमन्त-दुम-मुद्ध-पल्लव-राअं।**
**सीह-रव-भीअ-पत्थिअ-णिउञ्चिएक्क-चलण-ट्ठिउक्कण्ण-मअं ॥१६॥**

**[लवण-जल-शीकराहत-दरोद्वमद्-द्रुम-मुग्ध-पल्लव-रागम्।**
**सिंह-रव-भीत-प्रस्थित-निकुञ्चितैक-चरण-स्थितोत्कर्ण-मृगम् ॥]**

लवणजलशीकरैराहततया दरमीषदुद्वमन् विच्छायीभवन् द्रुमसम्बन्धिनां पल्लवानां रागो यत्र, द्रुमादस्खलितानामपि पल्लवानां लवणजलशीकराहततया विच्छायत्वख्यापनाय द्रुमपदम्। सिंहरवभीताः सन्त प्रस्थिता धाविताः कियद्दूरं गत्वा निकुञ्चितैकचरणाः स्थिता उत्कर्णा मृगा यत्र तम्। यद्वा, सिंहरवात् केचित् भीताः प्रस्थिताः केचिच्च निकुञ्चितैकचरणाः स्थिता उत्कर्णा मृगा यत्र ॥१६॥

---

1 ०मु० GB. 2 The Ms. has the text only of this verse and not its commentary too.

कडअ[1]-पडिपेल्लिआणं [2]रवि-अर-पाअडिअ-कन्दरा-भरिआणं ।
अब्भन्तर-ट्ठिआणं परिल्ल-पास-परिसण्ठिअं वदिसाणं ॥१७॥

[कटक-प्रतिप्रेरितानां रवि-कर-प्रकटित-कन्दरा-भृतानाम् ।
अभ्यन्तर-स्थितानां पर-पार्श्व-परिसंस्थितं इव दिशाम् ॥ ]

कटकैः प्रतिप्रेरितानां तदाक्रान्तत्वाद्बहिरदृश्यमानानामित्यर्थः। रविकरप्रकटितासु कन्दरासु कन्दराणां बृहत्त्वात्तत्रैव दिशामुपलभ्यमानत्वात् तत्प्रविष्टानामित्यर्थः। अतोऽभ्यन्तर-स्थितानां सर्वासामेव दिशां परपार्श्वे संस्थितमिव ॥१७॥

[3]राइआसु दूरुग्गअ-सिह-रअणं[4]तअं
सुह-णिसण्ण-मअ-खण्डिअ-सिह[F53a]र-अणंतअं[5] ।
कुविअ-राम-भिण्णोअहि-दढ-सर-नोल्लिअं
सिहर-लग्ग-ससि-मण्डल-णीसरणोल्लिअं ॥१८॥

[रात्रिषु दूरोद्गत-शिख-रत्नान्तकं ( ०रत्नं ततं )
सुख-निषण्ण-मृग-खण्डित-शिखर-तृणान्तम् ।
कुपित-राम-भिन्नोदधि-दृढ-शर-नोदितं
शिखर-लग्न-शशि-मण्डल-निःसरणार्द्रितम् ॥ ]

गलितकमाह। रात्रिषु दूरोद्गतशिखानि रत्नानि यत्र तं, ततं विस्तृतं सुखनिषण्णेन मृगेण खण्डित शिखरतृणानामन्त एकदेशो यत्र, कुपितस्य रामस्य भिन्नोदधिभिर्दृढशरैः प्रेरितं, ननु समुद्रवत् क्षोभितमिति भावः। शिखरलग्नस्य शशिमण्डलस्य निःसरणेन निःस्यन्देनार्द्रीकृतं, सुखासक्तैर्मृगैः खण्डितशिखरतृणोऽन्तः पर्यन्तो यस्य, कुपितस्य रामस्य

1 ०परि० GB. 2 रइ० GB. 3 रअणि आसु GB.
4 ०णन्तअं Ms 5 ०न्तअं GB.

भिन्नोदधिभिद्दृढशरं 'ग्गोल्लिअ' प्रेरितं, शिखरलग्नशशिमण्डलनिःसरणेन निर्गमेण अमृतनिःसारित्वात् 'ओल्लिअ' आर्द्रमिति **कुलनाथः** ॥१८॥

दूरोवाहिअ-मूलं रवि-अर[1]-वोलीण-सिहर-णट्ठालोअं ।
अद्धत्थमिआआमं जहेअ उअहि-सलिले तहेअ णह-अले ॥१९॥

**[दूरापवाहित-मूलं रवि-कर-व्यतिक्रान्त-शिखर-नष्टालोकम् ।
अर्धास्तमितायामं यथा एव उदधि-सलिले तथा एव नभस्तले ॥]**

दूरावगाढं पातालप्रविष्टं मूलं यस्य, उपरि च रविकरान् व्यतिक्रान्तानि, अत्युच्चतया रविकरानप्यतिक्रम्य दूरमुद्गतानि शिखराणि, तेषु नष्टालोकमदृश्यतां गतं, रविकरान् व्यतिक्रान्तेषु तुङ्गतया अर्ककरानप्याक्रम्य समुत्थितेषु शिखरेषु शिखरावच्छेदेषु नष्टालोक इति **लोकनाथः**। आलोकौ दर्शनोद्योताविल्य**मरः**। अतएव मध्यभागस्य दृश्यमानत्वाद्यथैव [उदधिसलिले] तथैव नभस्तलेऽर्धास्तमितायाममुपर्यधश्चादर्शनादिति भावः। अर्धपदमसमप्रविभागे ॥१९॥

पवणन्दोलिअ-चन्दण-संघट्टुट्ठिअ-सुअन्ध[2]-धूमुप्पीलं[3] ।
दर-पीओअहि-गरुइअ-सेसद्धन्त-जलआवलम्बिअ-सिहरं ॥२०॥

**[पवनान्दोलित-चन्दन-संघट्टोत्थित-सुगन्ध-धूमोत्पीडम् ।
दर-पीतोदधि-गुरुकायित-शेषार्धान्त-जलदावलम्बित-शिखरम् ॥]**

पवनेनान्दोलितानां चन्दनानां संघट्टनोत्थितः सुगन्धधूमोत्पीडो यत्र, दरमीषत् पीतोदधित्वाद् गुरुकायितः शेषार्धान्तोऽधरभागो येषां तैर्जलदैः पतनभयादवलम्बितं गृहीतं शिखरं यस्य तम् ॥२०॥

---

1 ०रह० Ms. which has '०अर०' marginally, 2 ०न्धि० GB.
3 ०डं GB.

[1]ससि-पुरओ पसरिअ-अं कुहरेसु [2]णिराअ-णिप्पअम्प-सरिअअं ।
मणिमअ-पासुत्तमअं कणअ-सिलासीण-सुहिअ-पासुत्त-मअं ॥२१॥

[शशि-पुरतः प्रसृतकं कुहरेषु-निरायत-निष्प्रकम्प-सरित्कम् ।
मणिमय-पार्श्वोत्तमस्कं कनक-शिलासीन-सुखित-प्रसुप्त-मृगम् ॥]

शशिनः पुरतः प्रसृतं कं शिरो यस्य, कुहरेषु गुहासु निरायता दीर्घाः, पाठान्तरे निवाताः पवनशून्या निष्प्रकम्पाः पवनशून्यत्वादविलोलाः [3]सरितो यस्य ; बहुव्रीहौ कः । मणिमयेषु पार्श्वेषूत्तमस्कमुत्क्षिप्तान्धकारं, कनकशिलासु क्षीणतया सुखितप्रसुप्ताः सुषुप्तसुखिता मृगा यत्र, कनकशिलासीनेति पाठे कनकशिलासु केचिदासीनाः केचित् सुखितप्रसुप्ता मृगा यत्र इत्यर्थः । आदित्यादपि दूरस्थितस्य शशिनः पुरतः प्रसृतं कं शिरो यस्य, कुहरेषु निरायतनिष्प्रकम्पाः सरितो यत्र, अथवा सरितां[4] कं पानीयं यस्य, मणिमयैः पार्श्वैरुत्तमस्कमुत्क्षिप्ततिमिरं, उत्तमं वेति **कुलनाथः** ॥२१॥

[5]भिण्णुक्खित्त-परम्मुह-वलन्त-सद्दूल-गहिअ-गअ-कुम्भ-अडं ।
बिल-[6]पासुत्त-भुअङ्गम-जल-धाराआर-णिग्गअ-मणि-च्छाअं ॥२२॥

[भिन्नक्षिप्त-पराङ्मुख-वलमान-शार्दूल-गृहीत-गज-कुम्भ-तटम् ।
बिल-[6]प्रसुप्त-भुजङ्गम-जल-धाराकार-णिग्गअ-मणि-च्छायम् ॥ ]

प्रथमं गजेन भिन्नोत्क्षिप्तः सन् परांमुखं वलन् कवलयितुमभिमुखीभवन् यः शार्दूलस्तेन गृहीतौ गजकुम्भतटौ यत्र,···[7]इति **कुलनाथः** । बिले प्रसुप्तस्य भुजङ्गमस्य स्वच्छतया जलधाराकारा निर्गता मणिच्छाया यत्र ॥२२॥

---

1 The verse, numbered 21 in GB. does not occur in our Ms.
2 णिवात॰ GB. 3 परितो Ms. 4 सरिता Ms. 5 भिण्ण Ms.
6 ॰वासुत्त॰ Ms. 7 Some letters before इति are quite effaced.

अट्ठिअ-समुद्द-सीभर[1]-दुप्परिमास-णिह-कण्टअन्त-मणि-अडं ।
णह-लग्ग-मोत्तिअ-प्फल[2]-गअ-सीसारूढ-णीहरन्त-मइन्दं ॥२३॥

[अस्थित-समुद्र-शीकर-दुष्परिमर्ष-निभ-कण्टकायमान-मणि-तटम् ।
नख-लग्न-मौक्तिक-फल-गज-शीर्षारूढ-निर्हरन्-मृगेन्द्रम् ॥ ]

अस्थितमविच्छिन्नं लवणजलसमुद्रस्य शीकरैरम्बुकणैर्दुष्परिमर्षनिभेन कण्टकायमानमणितटं, नखलग्नमौक्तिकफला गजशीर्षारूढा निर्हरन्तो मृगा यत्र तं, समुद्रशीकराणां दुष्परिमर्षादीषत्परिमृष्ट[3] निभेन कण्टकायमानो मणितटो यत्रेति **लोकनाथः** ॥२३॥

ओवट्ट-कोमलाइं वहमाणं मेह-विमलि[F53b]अ-विमुक्काइं ।
कप्प-लआ-वसुआविअ[4]-पवणुद्धुअ-धवलंसुआइं[5] वणाइं ॥२४॥

[अववृष्ट-कोमलानि वहमानं मेघ-विमर्दित-विमुक्तानि ।
कल्प-लता-शोषित-पवनोद्धूत-धवलांशुकानि वनानि ॥ ]

मेघैर्मर्दितान्याक्रान्तान्यनन्तरं विमुक्तानि मेघाक्रान्तत्वादेवाववृष्टेनाववर्षणेन कोमलानि मेघविमुक्तत्वात् कल्पलतानां शुष्काणि, अतएव पवनोद्धूतानि धवलांशुकानि यत्र, ईदृशानि वनानि वहमानम् । एतेन स्वर्गवद्रम्यता दर्शिता 'ओवट्ट'-शब्दो मेघजलसेके देशीति **श्रीनिवासः**[6] ॥२४॥

आरूढोअहि-सलिले अद्धुक्खअ-सरस-विसम-पासल्ल-दुमे ।
कुसुम-भरिए वहन्तं फलिह-अडुत्ताण-पत्थिए णइ-सोत्ते ॥२५॥

[आरूढोदधि-सलिलानि अर्धोत्खात-सरस-विषम-पार्श्वायित-द्रुमाणि ।
कुसुम-भृतानि वहन्तं स्फटिक-तटोत्तान-प्रस्थितानि नदी-स्रोतांसि ॥]

---

1 ०सीहर० GB. 2 ०त्ता-फ० GB. 3 Two or three letters are effaced here. 4 ०इअ० GB. 5 धवल-अंसुआइ GB.
6 Ms does not indicate the number of the verse at the end.

आरूढानि वेगातिशयादधःकृतान्युदधिसलिलानि यैश्चन्द्रोदयसमये[1] आरूढान्युदधेः सलिलानि कर्तृभूतानि इति वा विग्रहः। वेगवत्त्वादेवाधौतत्खाताः सरसा जलसम्बन्धात् स्निग्धा विषमं तिर्यक् पार्श्वायिता द्रुमा यत्र, स्फटिकतटेभूत्तानमगभीरं यथा स्यात्तथा प्रस्थितानि, स्फटिकोपरि प्रस्थितत्वादेव स्वच्छधवलत्वात् कुसुमसदृशानि तिर्यक्पतितद्रुमाणां कुसुमानि, नदीस्रोतांसि वहन्तं कुसुमभृतानीति **कुलनाथ**सम्मतपाठः ॥२५॥

**रवि-रह-तुरङ्गमाणं वाआइद्ध-सिहरोज्झरेहि धुवन्तं[2] ।**
**थोओल्ल-पग्गहाइं[3] लाला-फेण-लव-गब्भिणाइ मुहाइं ॥२६॥**

**[रवि-रह-तुरङ्गमाणां वातोद्धूत-शिखर-निर्झरैः धावयन्तम् ।**
**स्तोकार्द्र-प्रग्रहाणिलाला-फेन-लव-गर्भितानि मुखानि ॥ ]**

लालाफेनगर्भितानि स्तोकार्द्रप्रग्रहाणि रविरथतुरङ्गमाणां मुखानि वाताविद्धैः पवनद्वारा प्रेरितैः शिखरनिर्झरैः धावयन्तं[4] प्रक्षालयन्तम् । एतेन पर्वतस्य परिश्रान्तश्रमापहारित्वं पवनस्य तदाज्ञावहत्वं सूचितम् ॥२६॥

**दीहर-सिहरालग्गं पज्जलिओसहि-सिहाहअं वहमाणं ।**
**पाअडिअ-मअ-कलङ्कं णिसासु कज्जलइओअरं व मिअङ्कं ॥२७॥**

**[दीर्घ-शिखरालग्नं प्रज्वलितौषधि-शिखाहतं वहमानम् ।**
**प्रकटित-मृग-कलङ्कं निशासु कज्जलितोदरं इव मृगाङ्कम् ॥]**

दीर्घेषु शिखरेष्वालग्नं प्रकटितमृगकलङ्कं[5], अतो निशासु प्रज्वलितौषधिशिखाहतत्वात् कज्जलितोदरमिव मृगाङ्कं वहमानम् ॥२७॥

---

1 ०समए Ms. 2 ०व्वन्तं Ms. 3 ०ग्गआइं Ms.
4 न्ति Ms. 5 ०मृगाङ्कक० Ms.

उद्धरिअ-धरणि-विअडं आइ-वराह-हिअ-पङ्क-दूरोआढं[1] ।
णइ-सोत्तेहि भरन्तं खअ-रवि[2]-सन्ताव-सोसिअं मअर-हरं ॥२८

[उद्धृत-धरणी-विकटं आदि-वराह-हृत-पङ्क-दूरावगाढम् ।
नदी-स्रोतोभिः भरमाणं क्षय-रवि-सन्ताप-शोषितं मकर-गृहम् ॥]

उद्धृता धरणिर्यस्मादेवंरूपत्वाद्विकटं विशालम् । आदिवराहहृतपङ्कत्वाद् दूरावगाढमेवंभूतं, क्षयरविसन्तापशोषितं मकरगृहं नदीस्रोतोभिः पूरयन्तम् । एतेन विपद्ग्रस्तस्य महतः पूरणक्षमत्वं समुद्रशोषकेणापि क्षयरविणा [3]निजस्रोतसामनुशोषणान्महत्वञ्च प्रतिपादितम् । उद्धतधरणिवद्विकटमिति **श्रीनिवासः** । उद्धृतधरणित्वेन विकटमिति **कुलनाथः** ॥२८॥

अण्णाआगमण-दिसे पुरओ पडिसद्द-भेसिअ-णिअत्त-मए ।
विवर-भरिए वहन्तं उक्कण्णिअ-वण-गए मइन्द-णिणाए ॥२९॥

[अज्ञातागमन-दिशः पुरतः प्रतिशब्द-भीषित-निवृत्त-मृगान् ।
विवर-भरितान् वहन्तं उत्कर्णित-वन-गजान् मृगेन्द्र-निनादान् ॥]

सर्वतः प्रतिशब्दाकुलत्वादज्ञातागमनदिशः पुरतः प्रतिशब्दभीषितनिवृत्तमृगान् प्रतिशब्दभीषिताः सन्तः पुरतो निवृत्ता मृगेन्द्राभिमुखं प्रस्थिता मृगा येभ्य इत्यर्थः । उत्कर्णिता वनगजा यैस्तान्, विवरभरितान् मृगेन्द्रनादानावहन्तम् । अत्र मृगाणां प्रतिशब्दादपि भयेऽल्पप्राणत्वं वनगजानां चोत्कर्णितस्थितत्वेन महाप्राणत्वं हेतुरिति **लोकनाथः** । प्रतिशब्दभीषितमुखान् सिंहाभिमुखमेव यातान् मृगानित्यर्थ इति **केचित्** ॥२९॥

---

1 ०बाहं Ms. 2 रइ० GB. 3 सा अप० Ms.

तामरस-रआअम्बं सरेसु सुव्वन्त-महुर-सर-आअम्बं ।
गहिआमिस-हरि-दइअं[1] वेलाणिल-सीभरोल्ल[2]-व[F54a]ण-हरि-
दइअं ॥३०॥

[तामरस-रज-आताम्रं सरःसु श्रूयमाण-मधुर-स्वर-कादम्बम् ।
गृहीतामिष-हरि-दयितं वेलानिल-शीकरार्द्र-वन-हरितायितम् ॥]

तामरसानां पद्मानां रजोभिराताम्रं सरःसु श्रूयमाणा मधुरस्वराः कादम्बा यत्र तं, गृहीतामिषाणां [3]मांसार्थिनामित्यर्थः । गृहीतामिषाणां मांसप्रियाणां [4]हरीणां सिंहानां दयितमिति लो ( लोकनाथः ) ; हरीणां[4] सिंहानां प्रचुरामिषस्थानत्वाद् दयितमिति **कुलनाथः** । वेलानिलशीकरैरार्द्रीकृतेन वनेन हरितायितं हरितवर्णीकृतम् । यद्वा, परनिपाताद्वेलानिलशीकरैरार्द्रेण हरितवनेनाचितं व्याप्तम् ॥३०॥

मिलिअ-समुद्दद्धन्ते पाअड-णह-मण्डले पहुत्त-दस-दिसे ।
उअअत्थमिअ-दिणअरे भुअण[5]-विहाए व्व कन्दरे वहमाणं ॥३१॥

[मिलित-समुद्रार्धान्तान् प्रकट-नभो-मण्डलान् प्रभूत-दश-दिशः ।
उदयास्तमित-दिनकरान् भुवन-विभागान् इव कन्दरान् वहमानम् ॥]

[F54a] भुवनविभागानिव कन्दरान् वहमानं, भुवनविभागसाधर्म्यमाह मिलितसमुद्रा अर्धान्ता एकदेशा येषां तान्, प्रकटं नभोमण्डलं येषु तान्, प्रभूताः सम्मिलिता[6] दशदिशो येषु तान्, उदितास्तमितो दिनकरो येषु तानित्युभयोरपि योज्यम् । कन्दरानिति बहुवचनेन च तादृशप्रचुरकन्दरगर्भतया पर्वतस्य महत्त्वमुक्तम् ॥३१॥

---

1 ०अइअ' GB. 2 ०सीह० GB. 3 मासार्थि० Ms. 4 Placed after सिंहानां in Ms. 5 ०भुवण० GB. 6 सम्मिता Ms.

उच्छलिओअहि-भरिए थोअ-[1]थोओसरन्त-णिव्वूढ-जले ।
आइ-महुरे वहन्तं पुरओहुत्त-लवणे सिहर-णीसन्दे ॥३२॥

[उच्छलितोदधि-भृतान् स्तोक-स्तोकापसरन्-निर्व्यूढ-जलान् ।
आदि-मधुरान् वहन्तं पुरतोऽभिमुख-लवणान् शिखर-निःस्यन्दान् ॥

चन्द्रोदयसमये उच्छलितोदधिना भृतान् पुनश्च प्रत्यावृत्ततया समुद्रस्यादौ स्तोकस्तोकमपसरत् पश्चाद्विक्षिप्तं परितो धावज्जलं येषां निर्व्यूढं[2] यथास्थानप्राप्तं सत् स्तोकस्तोकेनापसरज्जलं यस्येति **केचित्**। आदौ मूलेन मधुरान् पुरतोऽभिमुखे लवणान् शिखरस्य स्तम्भवत्त्वादादिमधुरान् [3]समुद्रसम्बन्धात् पुरतोऽभिमुखलवणान् शिखरनिःस्यन्दान् वहन्तम् ॥३२॥

रअण-च्छवि-हुव्वन्तं वलन्त-सेस-पिहुल-प्फण-विहुव्वन्तं ।
सर-परिवड्ढिअ[4]-कमलं कडअ-अडालग्ग[5]-सूर-रह-चक्क[6]-मलं ॥३३॥

[रत्न-च्छवि-धाव्यमानं वलच्छेष-पृथुल-फण-विधूयमानम् ।
सरः-परिवर्धित-कमलं कटक-तटालग्न-सूर-रथ-चक्र-मलम् ॥ ]

रत्नानां छविभिर्जलैरिव धाव्यमानं प्रक्षाल्यमाणं विमलीक्रियमाणमित्यर्थः। वलतः परिवर्तमानस्य शेषस्य पृथुलैः फणैर्विधूयमानं, सरःसु परिवर्धितानि कमलानि यत्र, कटकतटालग्नसूररथचक्रम् अलमत्यर्थम्। वलत उपरिभरेणाङ्गभङ्गीमाचरतः शेषस्य पृथुलैः फणैर्विधूयमानमिति **लोकनाथः** ॥३३॥

---

1 ०थोअस० Ms. 2 निर्वू० Ms. 3 समुद्रसमुद्र० Ms, 4 ०परिवड्ढि० Ms. 5 ०लग्ग-लग्ग० GB. 6 ०अक्क० GB.

णह-णीले वहमाणं उम्हाहअ-महिस-मग्गिओअरण[1]-वहे ।
पास-पसरन्त-किरण मअ-तण्हावेढिए सरे व्व मणि-अडे ॥३४॥

[नभो-नीलान् वहमानं उष्माहत-महिष-मार्गितावतरण-पथान् ।
पार्श्व-प्रसरत्-किरणान् मृग-तृष्णावेष्टितान् सरांसि इव मणि-तटान् ॥]

नभ इव नीलानर्थादिन्द्रनीलमयान् नीलत्वसाहचर्याद्विस्तीर्णत्वमप्यायाति धर्मयोरेकतरनिर्देशे इति न्यायाद्, उष्माहतैर्महिषैर्मार्गितोऽन्विष्टोऽवतरणपथो येषां जलबुद्धयेत्यर्थः, तथा मृगतृष्णाया पिपासया वेष्टितान्। मृगतृष्णा मरीचिका तया वेष्टितानि इति **केचित्**। पार्श्वप्रसरत्किरणान् मणितटान् सरांसीव वहन्तम् ॥३४॥

गअ-मलिअ-तमाल-वणं सीह-मुहोलुग्ग[2]-रअअ[3]-सिहर-क्खण्डं ।
महिसाहअ-कसण-सिलं अणुरूव[4]-ट्ठाण-मुक्क-वणअर-रोसं ॥३५॥

[गज-मृदित-तमाल-वनं सिंह-मुखावरुग्ण-रजत-शिखर-खण्डम् ।
महिषाहत-कृष्ण-शिलं अनुरूप-स्थान-मुक्त-वनचर-रोषम् ॥ ]

गजैः प्रतिगजबुद्धया मृदितानि तमालवनानि यत्र, सिंहैः[5] प्रतिसिंहबुद्धया मुखेनावरुग्णं रजतशिखरखण्डं यत्र, महिषैः प्रतिमहिषबुद्धया आहताः कृष्णशिला यत्र, अतोऽनुरूपस्थाने मुक्तो वनचरै रोषो यत्र तम् ॥३५॥

केसरि-चरण[6]-तलाहअ-भिण्ण-पइण्ण-गज-कुम्भ-[7]मुत्ता-रअणं ।
वण-दव-भीअ-पहाविअ-गअ-उल-मलिअ-णइ-[F54b]सङ्ग-
[6]मुत्तार-अणं ॥३६॥

[केशरि-चरण-तलाहत-भिन्न-प्रकीर्ण-गज-कुम्भ-मुक्ता-रत्नम् ।
वन-दव-भीत-प्रधावित-गज-कुल-मृदित-नदी-सङ्गमोत्तार-तृणम् ॥]

---

1 °ओअवरण° Ms. 2 °रुद्ध° GB. 3 °रअद° Ms.
4 °रूअ° GB. 5 °हः Ms. 6 °चलण° GB. 7 °मोत्ता° GB.

केशरिचरणतलेनाहतोऽतएव भिन्नो यो गजकुम्भस्ततः प्रकीर्णानि मुक्तारत्नानि यत्र तं, प्राकृतत्वात् पूर्वनिपातानियमः। वनदवाद्भीतप्रधावितगजकुलैर्मृदितानि नदीसङ्गमोत्तारस्य नदीसङ्गमतीरस्य तृणानि यत्र तम्। नदीसङ्गमसम्बन्धिनोऽवतरस्य घट्टस्य तृणानि यत्र घट्टतृणानामार्द्रतया तत्र वनदवभयाभावादिति भाव इति **लो** ( लोकनाथः ) ॥३६॥

**कडअ-वलन्त-रवि-रहं तड[1]-वण-राइ-पडिघोलिरुब्भड-तारं।**
**पासल्ल-णिसण्णस्स वि उअरिं[2] [3]वीअ-भुवणस्स व[4]णिस-**
**म्मन्तं ॥३७॥**

**[कटक-वलद्-रवि-रथं तट-वन-राजि-प्रतिघूर्णमानोद्भट-तारम्।**
**पार्श्व-निषण्णस्य अपि उपरि द्वितीय-भुवनस्य इव निषीदन्तम्॥ ]**

कटके वलन् रविरथो यत्र, तटवनराजिषु परिभ्रमणशीला उद्भटास्तारा यत्र गगनायतशिखरत्वात् स्वरूपोर्ध्वनिषण्णस्यापि द्वितीयभुवनस्य गगनस्योपरीव निषीदन्तं तद्गतचन्द्रादित्यग्रहनक्षत्राणामधो लक्ष्यमाणत्वादिति भावः। पार्श्वनिषण्णस्य द्वितीयभुवनस्यापि भुवर्लोकस्य सूर्यस्याधस्तस्योपरि निषीदन्तमिति **श्रीः** ( श्रीनिवासः ) ॥३७॥

**अद्ध-च्छिण्ण-रवि-अरे असमत्त-पहुत्त-सअल-चन्द-मऊहे।**
**छिण्ण-कडए वहन्तं [5]उव्वाअ-णिअत्त-गरुल[6]-मग्गिअ-**
**सिहरे ॥३८॥**

**[अर्ध-च्छिन्न-रवि करान् असमाप्त-प्रभूत-सकल-चन्द्र-मयूखान्।**
**छिन्न-कटकान् वहन्तं उद्वात-निवृत्त-गरुड-मार्गित-शिखरान्॥ ]**

दूरप्रसरत्वादर्धेषु छिन्ना विच्छिन्ना रविकरा यत्र, असमाप्तेऽसमग्रप्रदेश एकदेश इत्यर्थः प्रभूताः सम्मिताः सकलचन्द्रस्य पूर्णशशिनो मयूखा यत्र, 'उव्वाअ' परिश्रान्तो विश्रामार्थं

1 तल॰ GB. 2 ॰रि B. 3 विदिअ॰ Ms. 4 णिस्सं॰ B.
5 उद्धाअ॰ GB. 6 ॰ड॰ GB.

वा, अतएव निवृत्तो यो गरुडस्तेन मार्गितं प्रार्थितं शिखरं येषां तान् वज्रघातादिना छिन्नकटकान् वहन्तम्, एतेन तदीयच्छिन्नकटकानामपीयान् परिणाहातिशय इति भावः ॥३८॥

सुर-वहूण हिअअच्छिअ[1]-रअ-णव-सारअं
साअरस्स रइअम्मिव रअण-वसारअं ।
णलिणि-वत्त-उड-जाअ-महुर-सामोअअं
वउल-वण-विणिम्महिअ-[2]महु-रसामोअअं ॥३९॥

[सुर-वधूनां हृदयेप्सित-रत-नव-सारकं
सागरस्य रचितं इव रत्न-प्रसारकम् ।
नलिनी-पत्र-पुट-जात-मधुर-श्यामोदकं
वकुल-वन-विनिर्गत-मधु-रसामोदकम् ॥ ]

गलितमाह सुरवहूणेति । सुरवधूनां हृदयेप्सितस्य रतस्य नवसारकमभिनवसम्पादकं रमणीयविजनस्थानमयत्वादिति भावः । नवमपूर्वं सारकं सम्पादकमिति **कुः** ( कुलनाथः ) । रत्नमयत्वात् सागरस्य रचितमिव रत्नानां प्रसारकं विपणिं सागरस्य आढ्यवणिज इव इति **कुः** ( कुलनाथः ) । नलिनीपत्रपुटे [3]जातमनुगतं मधुरं स्वादु श्यामं शुकपक्षसदृशमुदकं यत्र तं, मधुकरेण श्यामोदकं यत्र तमिति **श्रीः** ( श्रीनिवासः ) । वकुलवनेभ्यो 'णिम्महिओ' विनिर्गतो मधुरसस्य मदिरारसस्येवामोदो यस्मात्तं, मधुरसैरामोदजनकमिति **लो** ( लोकनाथः ) ॥३९॥

[4]दरिअ-रक्खसामोअअं विसअ-रुप्पहाअन्तअं ।
दरि-अरक्ख-सामोअअं विस-अरु-प्पहाअन्तअं ॥४०॥

[दृप्त-राक्षसामोददं विशद-रूप्य-प्रभाकान्तकम् ।
दरीचराक्ष-(दरितरक्ष-)श्यामोदकं विष-तरु-प्रभावान्तकम् ॥ ]

---

1 °ट्ठिअ° GB. 2 °णिम्महन्त° GB. 3 या° Ms.
4 This verse is numbered 44 in GB and in the latter its second *pāda* is read as the third and the third as the second.

दसराक्षसा रावणादयस्तेषामामोददम्, अन्यत्र दरीचरैरक्षैर्बिभीतकैः श्याममुदकं यत्र तम्, अथवा दरितान् भीतान् रक्षतीति दरितरक्षः सहामोदेन सौरभ्येण वर्तते को वायुर्यत्र स तथा दरितरक्षश्चासौ सामोदकश्चेति तथा तम्, अथवा दरीसम्बन्धिनी या वराख्या गन्धद्रव्यं सिह्लकस्तेन श्यामोदं जलं यत्र तं, विशदाभिः रूप्यस्य प्रभाभिः कान्तं कं शिरः शिखरं यस्य तम्, अन्यत्र विषतरुप्रभावेण तेजसा अन्तयति विनाशयति विषतरुप्रभान्तकं क-ग-च-जेत्यादिना व-लोपः ॥४०॥

तिव्व-जरठाअवाहअ-हरिआलामोअ-विम्हराविअ[1]-हरिणं।
संखाओअहि-सीभर-लवण-रसासाअ-महिस-लिब्भन्त-सिलं ॥४१॥

[तीव्र-जरठातपाहत-हरितालामोद-विस्मापित-हरिणम्।
संस्त्यानोदधि-शीकर-लवण-रसास्वाद-महिष-लिह्यमान-शिलम् ॥]

तीव्रजरठेनातिकठोरेणातपेनाहतं यत् हरितालं तस्यामोदेन विस्मापिता अपस्माररोगिणः कृताः, अथवा नष्टचेतनीकृता विह्वला इति यावद् हरिणा यत्र तं, तीव्रं यथा स्यादिति **लोकनाथः**। हरितालामोदेन हरिणानां व्यामोह इत्यागमः। आतपेनाहतं यद्धरितालं द्रवीकृतं गलितमिति यावत् तदामोदेन मूर्च्छितहरिणं, विस्मापितेति **कश्चित्**। तत्र, 'विम्हरावेइ' इति मूर्च्छिते देशीइति **देशीसार**दर्शनात्। संस्त्यान उपर्युपरिपातात्लवणरूपो घनीभूतो य उदधिशीकरस्तस्य लवणरसस्यास्वादेन महिषैर्लिह्यमाना शिला[2] यत्र तं, 'स्त्याने संखाअसंखाआ' इति **देशीसारः** ॥४१॥

तुङ्ग-रअद[3]-सिहरुग्गमेहि तारङ्गअं
सीह-णिहअ-गअ-लोहिअ-मोत्ता-रङ्गअं।
गरु[F55]अ-धीर-णिव्वाहिअ-बहु-जुअ-संखअं
उअहि-सलिल-संकन्त-सरुज्जुअ-संखअं ॥४२॥

1 ०राइअ० GB. 2 ०शला Ms. 4 ०रअअ० GB.

[तुङ्ग-रजत-शिखरोद्गमैः तारां गतं
सिंह-निहत-गज-लोहित-मुक्ता-रङ्गदम् ।
गुरुक-धैर्य-निर्वाहित-बहु-युग-संक्षयं
उदधि-सलिल-संक्रान्त-शर-ऋजुक-शङ्खगम् ॥ ]

गलितकमाह । तुङ्गानां रजतशिखराणामुद्गमैरुच्छ्रायैस्तारां गतं प्राप्तं तैरेव तारं विषद-मङ्गं यस्येति वा । सिंहनिहतानां गजेन्द्राणां लोहितेन मुक्तानां रङ्गं रागं ददातीति तादृशं गजमुक्तानामिति **कुः** ( कुलनाथः ) । गुरुणा धैर्येण निर्वाहिता अतिक्रान्ता बहवो युगसंज्ञया[1] युगान्ता येन तं, कः स्वार्थे बहुत्वगसंख्या इति **केचित्** । उदधिसलिल-संक्रान्तशरैरर्थाद्रामस्य ऋजुकाः शंखा यत्र तमिति **केचित्** । उदधिसलिलात् संक्रान्ताः सरसि ऋजुकाः शङ्खा यत्र, यस्य सरसि समुद्रादागत्य शङ्खा विहरन्तीत्यर्थः । सरसि ऋजुकाः प्रगुणपंक्तय इति **लोकनाथः** ॥४२॥

[2]मणि-पहम्म-सामोअअं सरस-रण्ण-णिद्दावअं ।
मणिप-हम्म-सामोअअं सर-सरण्ण-णिद्दावअं ॥४३॥

[मणि-प्रहर्म्य-श्मामोदयं सरसारण्य-निर्दावकम् ।
मणिप-हर्म्य-स्वामोददं स्मर-शरण्य-निद्राप्रदम् ॥ ]

गलितकान्तरमाह । मणिप्रहर्म्यैरिन्द्रनीलमरकतादिबद्धनिलयैः श्याम उदय उच्छ्रायो यस्य तं, प्रधर्मः खातं कन्दरादिकमिति यावत् । मणिभिरिन्द्रनीलादिभिर्युक्तेषु प्रधर्मेषु श्मामुदकं यस्येति **लोकनाथः** । अन्यत्र मणीन् पान्तीति मणिपा निधिपतयो यक्षा इत्यर्थस्तेषां हर्म्यैः प्रासादैः सुष्ठु आमोदं हर्षं ददातीति तम्, आमोदसम्पादकमामोदः सौरभस्तद्युक्तं वेति **लोकनाथः** । सरसानि जलसेकात् स्निग्धान्यरण्यानि यत्र स सरसारण्योऽतएव निर्दावको दावाग्निरहितस्तम्, अन्यत्र स्मरः शरण्यो येषां ते स्मर-शरण्या मन्मथविधेयास्तेषां निद्राप्रदं शीतलत्वेन सन्तापहारित्वादिति भावः । निधुवन-

1 ०संख्याया Ms. 2 In GB. the second *pāda* is read as the third and the third as second.

क्रीडाश्रान्तानां निद्रासुखदमित्यर्थ इति **कु**ः ( कुलनाथः )। अथवा, सरःशरण्याः करिमकरादयस्तेषां निद्रायकं निद्राजनकं तेषां, निद्रायाः पदं स्थानमिति वेति **लो** ( लोकनाथः ) ॥४३॥

[1]जढर-विसोसहि-वेढिअ-भुअङ्ग-परिहरिअ-चन्दण-दुम-क्खन्धं।
बोलन्त-विसहर-प्फण-मणि-प्पहाहअ-विराइअ-दुम-च्छाअं ॥४४॥

[जठर-विषौषधि-वेष्टित-भुजङ्ग-परिहृत-चन्दन-द्रुम-स्कन्धम्।
व्यतिक्रान्त-विषधर-फण-मणि-प्रभाहत-विराजित-द्रुम-च्छायम्॥]

जठरविषौषधिभिर्वेष्टितत्वाद् भुजङ्गैः परिहृता चन्दनद्रुमाणां [2]स्कन्धाः प्रकाण्डा यत्र तं व्यतिक्रान्ताभिर्निर्गच्छन्तीभिर्विषधरणां फणमणिप्रभाभिराहता अतएव 'विराइआ' विलीनीकृता द्रुमाणां छाया आतपाभावो यत्र तम् ॥४४॥

[3]फलिह-किरण-णिवहेहि धरणि-धवलावअं[4]
सुव्वमाण-सुर-सुन्दरि-मुद्ध-वलावअं[5]।
पलअ-समअ-सलिलेण वि असअल-धोअअं
विवर-णिन्त-णव-अन्द[6]-सरिस-अलधोअअं ॥४५॥

[स्फटिक-किरण-निवहैः धरणी-धवलायकं
श्रूयमाण-सुर-सुन्दरी-मुग्ध-प्रलापकम्।
प्रलय-समय-सलिलेन अपि असकल-धौतं
विवर-निर्यन्-नव-चन्द्र-सदृश-कलधौतकम्॥]

गलितकमाह। स्फटिककिरणनिवहैर्धरणीं धवलां करोतीति तं धरण्या धवलायकं श्रूयमाणः सुरसुन्दरीणां मुग्धः प्रलापो यत्र तं, प्रलयसमयसलिलेनाप्यत्युच्चतया असकल-

1 जरढ० GB. 2 स्कन्धा Ms 3 फडिह० GB. 4 ०लाअअं GB. 5 ०पलावअं Ms 6 ०चन्द० GB.

मसमग्रं धौतं स्वार्थे कन्। विवरान्निर्गच्छता नवेनोदयरागलोहितेन चन्द्रेण सदृशं कलधौतं यत्र तम् ॥४५॥

रम्म-अन्दरा-अच्छअं रम्म-अन्द-राअ-च्छअं ।
सग्ग-[1]ग्गहणि-सामग्गअं सग्ग-ग्गह-णिसामग्गअं ॥४६॥

[रम्य-कन्दरा-कच्छकं रम्य-चन्द्र-राग-च्छदम् ।
स्वर्ग-ग्रहणी-सामग्र-दं साग्र-ग्रह-निःश्यामग्रकम् ॥ ]

गलितकान्तरमाह । रम्याः कन्दराः कच्छा उपान्तभूमयः, कन्दराणां कच्छा उपान्तभूमयो यत्र तमिति **लो** ( लोकनाथः )। कन्दरमूलानि वा यत्र तं, रम्यं चन्द्ररागस्य चन्द्रकान्तस्य मणेरच्छं कं पानीयं यत्र तम्। अथवा रम्यचन्द्रस्य राग एव 'छदं' च्छादनं यस्य। स्वर्गग्रहणीनां रावणाकृष्टसुरसुन्दरीणां सामग्र्यं समुदयं दयते रक्षतीति तं, देङ् रक्षणे इति तस्य प्रयोगः। अन्यत्र सहाग्रैः श्रेष्ठैश्चन्द्रगुरुशुक्रादिभिर्वर्तन्ते ये ग्रहास्तैः सञ्चारिभिर्दीपैरिव दायति समविषमप्रकाशनेन शोधयतीति साग्रग्रहनिशामार्गदं, दैप् शोधने इत्यस्य रूपम्। यद्वा, एवंभूतैर्ग्रहैश्चन्द्रतारकादिभिर्निःश्यामम्, शुभ्रमग्रम्। अथवा, स्वग्रं शोभनमग्रञ्च तत् ग्रहाणां नक्षत्राणां निशामार्गदञ्च । गौरवादन्यदुपेक्षितम् ॥४६॥

पङ्कुत्तरन्त-लङ्घिअ-परिअत्त[2]-वराह-वञ्चिआहअ-सीहं ।
सर-सलिलोअर-णिवडिअ-णिअअ-भरत्थमिअ-कणअ-पल्लव-
गोच्छं ॥४७॥

[पङ्कोत्तरल्-लङ्घित-परिवृत्त-वराह-वञ्चिताहत-सिंहम् ।
सरः-सलिलोदर-निपतित-निजक-भरास्तमित-कनक-पल्लव-गुच्छम् ॥]

---

1 ०गह० Ms. 2 ०वत्त० GB.

पङ्कादुत्तरन्तः सिंहैर्लङ्घिता आक्रान्ताः पश्चात् परिवृत्ता ये वराहास्तैर्वञ्चिता आहताश्च सिंहा यत्र तं, तैर्वञ्चितास्त्यक्तप्रहारा इति **कुलनाथः**। सलिलोदरे निपतितो निजकभरेणास्तमितः कल्पवृक्षादिसम्बन्धी कनकमयेन पल्लवेन सहितो गुच्छो यत्र तम्। एतेन कल्पवृक्षवत्ता कथिता[1] ॥४७॥

णह-सिरिं सअल-मेह-णील[2]-लावण्णिअं
बद्ध-[F55a]जोइसाउव्व-मेहला-वण्णिअं।
सिहरेहिं बाहूहि [3]व पच्छाएन्तअं[4]
मण्णुअं दिसाण म्मिव पच्छाएन्तअं ॥४८॥

[नभः-श्रियं सजल-मेघ-नील-लावण्यितां
बद्ध-ज्योतिरपूर्व-मेखला-वर्णिताम्।
शिखरैः बाहुभिः इव प्रछादयन्तं
मन्युं दिशां इव पश्चात् आयान्तम्॥]

[F55b] गलितकमाह। सजलैरतएव स्निग्धैर्मेघैर्लावण्यितां लावण्यीकृतां ज्योतींषि नक्षत्राण्येवापूर्वमेखला तया बद्धया वर्णितां जातस्तुतिं नभोऽङ्गनश्रियं वल्लभामिव, शिखरैर्बाहुभिरिव प्रच्छादयन्तमुपगूहयन्तमिव, अतएव पश्चादनन्तरं दिशामपरनायिकानामिव[5] मन्युमपराधं यान्तं प्राप्नुवन्तं ददतं वा। अन्ये तु सजलस्यार्थान्नीलस्य मेघस्यैव लावण्यं[6] यस्यास्तद्वल्लावण्यवतीं वा उत्तमश्यामामिति [7]यावद्, दिशामपरनायिकानामिव मन्युं[8] क्रोधम्, आयान्तं प्राप्नुवन्तमिति प्राहुः ॥४८॥

---

1 After this the scribe fills up the space by writing श्रीहरिः शरणम्.
2 Ms. omits ०णील० 3 मिव Ms. 4 ०अन्तअ' GB.
5 ०नायिकामिव Ms. 6 ल्लावण्यं Ms. 7 ०श्यामा इति Ms.
8 मन्यु Ms.

असुर-वन्दि-साहारणं असु-रवं दिसा-हारणं।
सूरअं[1] तम-णिवासअं[2] सूरअन्त-मणि-वासअं ॥४९॥

[असुर-वन्दि-साधारणं असु-रवं दिशा-हारणम्।
सूरगं तमो-निवासदं सूर-कान्त-मणि-पार्श्वकम्॥]

असुरा बन्दिन इव रावणविधेयतया चाटुकारिण इत्यर्थः, तेषां सर्वेषां साधारणत्वेन साधारणं सामान्यम्। अथवा, रावणासुरबन्दीनां साधारणम्, अन्यत्र-अशोभनो भयजनकत्वात् रवः सिंहव्याघ्रादिभिः कृतो ध्वनिर्यत्र तं, दिशां ककुभां हारमनेकशिखर-गण्डशैलादिभिर्व्याप्तसमस्तदिगन्तत्वाद् दिशो हारयति निह्नुत इत्यर्थः। अन्ये तु दिशां धारणमाश्रयं हरकं वा इत्याहुः। सूर्यकान्तमणिः पार्श्वा यस्य, अथवा[3], शूराः कान्ताश्च ये मणिपा यक्षास्तेषामाश्रयम्, अन्यत्र शोभना उरगा यत्र तं सूरगं, तमसां गुहादिषु निवासं ददातीति तमोनिवासदं। यद्वा, नानारत्नमयत्वात्तमसां निर्वासदम्॥४९॥

हरिणा बलि-महि-हरणे समए जलएहि जलणिहीहि जुअन्ते।
जण्ण चइअं भरेउं तं[4]देहेण भुअणं भवेऊण ठिअं ॥५०॥

[हरिणा बलि-मही-हरणे समये जलदैः जलनिधिभिः युगान्ते।
यत् न शकितं भर्तुं तत् देहेन भुवनं भृत्वा स्थितम्॥]

बलिदानवस्य सकाशान्महीहरणे हरिणा विष्णुना, युगान्ते समं जलदैर्जलनिधिभिश्च[5] यद्भर्तुं पूरयितुं न 'चइअ' न शकितं न पारितं तद्भुवनं देहेन भृत्वा पूरयित्वा स्थितं पूरयितव्याभावान्निर्व्यापारीभूय[6] स्थितमित्यर्थः। अत्र हरिणेत्यनेन पृथिव्या जलदैरित्यनेन नभसो जलनिधिभिरित्यनेनन पातालस्य युगपत् पूरणाक्षमत्वं सूचितमिति **केचित्**। 'शकेस्तीरचआ' इति प्राकृतसूत्रम्॥५०॥

---

1 ०अन्त० Ms. 2 Ms has ०णिवाल० marginally, but has णिवाल in the original as in GB. 3 ०वाः Ms. 4 तन्तेण Ms. 5 ०निधयस्य Ms. 6 ०निव्या० Ms.

[1]अत्थ-गअं व वहन्तं जालन्तर-णिस्सउद्ध-अम्ब-मऊहं ।
आसण्ण-सिहर-वण-दव-बोलीण-पणट्ठ-मण्डलं दिअसअरं ॥५१॥

[अस्तगतं इव वहन्तं ज्वालान्तर-निर्गतोर्ध्व-ताम्र-मयूखम् ।
आसन्न-शिखर-वन-दव-व्यतिक्रान्त-प्रनष्ट-मण्डलं दिवसकरम् ॥]

अस्तगतमिवानस्तगतं दिवसकरं वहन्तं कथमित्याह । आसन्नस्य अर्थात् सूर्यनिकटवर्तिनः शिखरस्य वनदवेन वनाग्निना 'बोलीणं' आक्रान्तं व्यतिक्रान्तमिति **कुः** ( कुलनाथः ) । अतएव प्रनष्टं मन्दप्रभं मण्डलं यस्य, अतः प्रनष्टमदर्शनं गतं मण्डलं यस्य तमिति **कुः** । जालानां शिखरपादपच्छिद्राणामन्तरान्मध्यान् निर्गता ऊर्ध्वा ज्वालासंपर्कादेवाताम्रा मयूखा यस्य तमिति **लोः** ( लोकनाथः ) । ज्वालानां वनाग्निशिखानांमन्तरान्तरालेन निर्गता ऊर्ध्वा ज्वालासंपर्कादेवाताम्रा मयूखा यस्येति **कुः** । अस्तसमयेऽपि सूर्यमण्डलस्य मन्दप्रभत्वं किरणानाञ्च ताम्रतया ऊर्ध्वगमनशीलत्वं स्यादिति **केचित्** ॥५१॥

[2]वलवा-मुह-सन्तावं[3] भिण्ण-अडे अ गरुए तरङ्ग-प्पहरे[4] ।
अविरहिअ-कुल-हराणं[5] सरिआण कएण साअरस्स सहन्तं ॥५२॥

[वडवा-मुख-सन्तापं भिन्न-तटान् च गुरुकान् तरङ्ग-प्रहारान् ।
अविरहित-कुल-गृहाणां सरितां कृतेन सागरस्य सहमानम् ॥ ]

वडवामुखेन वह्निना कृतं सन्तापं भिन्नास्तटा यैस्तान् गुरुकान् च प्रहारान् सागरस्य सहमानं[6], सहने हेतुमाह—अविरहितकुलगृहाणां सरितां दुहितॄणामिव कृते, यथाऽत्यक्तनाभिगृहायाः प्रेमास्पदस्य दुहितुरन्यत्र नयनशङ्कया महामहिम्नो जामातुः परिजनकृतं दोषं श्वशुरः सहते तथात्रापीत्यर्थः । एतेन समुद्र-शैल-सरिद्वडवादीनां यथाक्रमं श्वशुरत्वं जामातृत्वं परिजनत्वञ्च समाहितमिति **लोः** ( लोकनाथः ) ॥५२॥

---

1 अत्थाअं GB. 2 वडवा० GB. 3 ०वे GB. 4 ०प्पवहे Ms. 5 ०हराण व GB. 6 वहमानं Ms.

रअणीसु उव्वहन्तं [1]एक्केक्काअम्ब-मणि-सिला-सङ्कन्तं ।
[2]अद्ध-मिअङ्क-च्छाअं खुर-मुह-मग्गं व रवि[3]-तुरङ्गाण
ठिअं ॥५३॥

[रजनीषु उद्वहन्तं एकैकाताम्र-मणि-शिला-संक्रान्ताम् ।
अर्ध-मृगाङ्क-च्छायां खुर-मुख-मार्गं इव रवि-तुरङ्गाणां स्थितम् ॥ ]

एकैकास्वाताम्रासु मणिशिलासु[4] संक्रान्तामर्धमृगाङ्कस्य छायां प्रतिबिम्बं रवितुरङ्गाणां खुरमुखमार्गमिव स्थितमविनष्टं रजनीषूद्वहन्तम् । ताम्रविशेषणेन प्रतिबिम्बस्फुटता ध्वनितेति केचित्[5] ॥५३॥

विसम-[6]पडिसंविएहिं विसमुद्धाइअ-लआ-[7]हरोत्थइ [F56a]एहिं ।
कञ्चण-सिला-अलेहिं छिण्णाअव-मण्डलेहि व परिक्खित्तं ॥५४॥

[विषम-प्रतिसंस्थितैः विषमोर्ध्वायित-लता-गृहावस्थगितैः ।
काञ्चन-शिला-तलैः छिन्नातप-मण्डलैः इव परिक्षिप्तम् ॥ ]

[ F56a ] विषममस्तव्यस्तं प्रतिसंस्थितैर्विषमोर्ध्वायितलतागृहावस्थगितैर्विषममत्यर्थं परिसंस्थितैरिति केचित्। विषमोर्ध्वायितेन क्वचित् क्वचिदुद्गतेन लतागृहेणावस्थगितैः काञ्चनशिलातलैः काञ्चनशिलानां दलैः खण्डैर्वा छिन्नातपानां खण्डमेघादिच्छायासहचरातपानां मण्डलैरिव परिक्षिप्तं वेष्टितम् । अत्र विषमग्रहणमातपस्याधःपतने कारणम् ॥५४॥

---

1 एक्कक्का० GB. 2 मुद्ध० GB. 3 रइ० GB. 4 ०शिलासं० Ms. 5 Ms has 'श्रीहरिः' after the end of the commentary. 6 परि० GB. 7 ०हर० Ms.

अप्पत्त-दिनअराइं आअव-भअ-सिहर-सण्ठिअ-भुअङ्गाइं ।
कडएहि उव्वहन्तं वणाइ उद्ध-परिवड्ढिअ-च्छाआइं ॥५५॥

[अप्राप्त-दिनकराणि आतप-भय-शिखर-संस्थित-भुजङ्गानि ।
कटकैः उद्वहन्तं वनानि ऊर्ध्व-परिवर्धित-च्छायानि ॥ ]

अधःस्थितत्वादप्राप्तोऽमिलितो दिनकरो येषु तानि, आतपभयेन शिखरसंस्थिता भुजङ्गा येषां तानि, तथा अधःस्थितदिनकरत्वादेवोर्ध्वपरिवृद्धच्छायानि वनानि कटकैरुद्वहन्तम् ॥५५॥

तुङ्गत्तण-पज्जत्ते वित्थअ-[1]विक्कम्भ-सिट्ठ-मुह-वित्थारे ।
तिअस-गआण वहन्तं दन्त-प्फलिअ-जुअलङ्किए[2] [3]फलिअ-अडे ॥५६॥

[तुङ्गत्व-पर्याप्तान् विस्तृत-विष्कम्भ-शिष्ट-मुख-विस्तारान् ।
त्रिदश-गजानां वहन्तं दन्त-परिघ-युगलाङ्कितान् स्फटिक-तटान् ॥]

तुङ्गत्वेन पर्याप्तान् सम्पन्नान् तुङ्गानित्यर्थः । विस्तृतेन विष्कम्भेण दन्तयोरन्तरालेन मध्यभागेन शिष्टः कथितो मुखविस्तारो यैस्तान्, त्रिदशगजानामैरावतादीनां दन्तपरिघयुगलैः स्वबिम्बदर्शनात् प्रतिगजबुद्धयाऽङ्कितान् स्फटिकतटान् वहन्तम् ॥५६॥

तिअस-गआण वहन्तं हत्थुम्हाहअ-किलन्त-पल्लव-राए ।
कड-परिघोलण-कविले चिर-वूढ-विमुक्क-पारिआअअ-विडवे ॥५७॥

[त्रिदश-गजानां वहन्तं हस्तोष्माहत-क्लाम्यत्-पल्लव-रागान् ।
कट-परिघूर्णन कपिलान् चिर-व्यूढ-विमुक्त-पारिजातक-विटपान् ॥ ]

---

1 ०विक्खं० GB. 2 ०लक्खाए Ms. 3 कडअ-अभे GB.

त्रिदशगजानां हस्तोष्माहतक्लान्तपल्लवरागान् तेषामेव कटेषु गण्डेषु घूर्णनेन मदेन कपिलान् चिरव्यूढविमुक्तस्वर्गानीतपारिजातकविटपान् वहन्तं, चिरव्यूढप्रमुक्तस्य चिरकालव्यूढस्य पश्चादिन्द्रस्यानुनयेन परित्यज्य दत्तस्येत्यर्थः। ईदृशस्य पारिजातस्येति **लोः** (लोकनाथः) ॥५७॥

**पासागअं[1]वहन्तं मणि-कडअ-मऊह-धवलिअ-मअ-च्छाअं।**
**[2]पट्ठोवइअ-महोज्झर-जल-घाउव्वत्त-मण्डलं व मिअङ्कं ॥५८॥**

**[पार्श्वागतं वहन्तं मणि-कटक-मयूख-धवलित-मृग-च्छायम्।**
**पृष्ठावपतित-महानिर्झर-जल-घातोद्वृत्त-मण्डलं इव मृगाङ्कम्।]**

पार्श्वागतं पार्श्वमिलितं स्फटिकतटस्य अर्थादधोवर्तिनो मयूखेन धवलिता मृगच्छाया यत्र, ईदृशं मृगाङ्कं पृष्ठावपतितमहानिर्झरजलाघातेनोद्वृत्तं मण्डलं यस्य तादृशमिव वहन्तं, चन्द्रस्योपरिभागे कलङ्कशून्यत्वादियमुत्प्रेक्षा पाश्चात्यभागमिह सानुषु सन्निषण्णा इति। **माघेऽपि** चन्द्रस्योपरिभागे कलङ्कशून्यत्वं वर्णितम्, उत्सङ्गसङ्गिहरिणस्य मृगाङ्कमूर्तेरित्यपि **माघे** दृष्टत्वात् ॥५८॥

**सलिल-रअ[3]-धोअ-कुसुमं दीसन्तोवरि-परिल्ल[4]-जरढालोअं।**
**मअर-हरस्स वहन्तं अब्भासब्भहिअ-सामलं वण-राइं ॥५९॥**

**[सलिल-रजो-धौत-कुसुमां दृश्यमानोपरि-परिगत-जरठालोकाम्।**
**मकरगृहस्य वहन्तं अभ्याशाभ्यधिक-श्यामलां वन-राजिम्॥]**

सलिलरजोभिरर्थात् पवनोद्धृतैर्धौतकुसुमां, दृश्यमान उपरि परिगतो जरठः कर्कश आलोकः सूर्यद्युति[5]र्यत्र तां, मकरगृहस्य अभ्याशात् सान्निध्यादधिकश्यामलां वनराजिं वहन्तम्। एतेन श्रान्तानां कपिसैन्यानां विश्रामयोग्यता कथितेति **श्रीनिवासः**। वस्तुतस्तु

---

1 ०अअं GB. 2 पु० GB. 3 ०दर० GB. 4 ०विहाअ० Ms. 5 ०द्युतिभि० Ms.

विशेषणत्रयमहिम्ना संभुक्ताया बालायाः साम्यं समाहितम्। सा हि संभोगजन्यपरिश्रम-सलिलरयेण धौतकुसुमा दृश्यमानस्य पुनःसंभोगादधिकसलिला भवतीत्यर्थ इति **लोः** ( लोकनाथः ) ॥५६॥

तिअस-गआण वहन्तं दूरण्णिअ[1]-मग्ग-[2]पडिणिअत्त-महुअरे।
ओवअण-पअत्तन्ते उप्प[F56b]अण-पणट्ठ-णिग्गमे गइ-मग्गे ॥६०॥

**[त्रिदश-गजानां वहन्तं दूरोन्नीत-मार्ग-प्रतिनिवृत्त-मधुकरान्।
अवपतन-प्रवृत्तान् उत्पतन-प्रनष्ट-निर्गमान् गति मार्गान् ॥ ]**

त्रिदशगजानामर्थाज् जलनिधिजलपानार्थिनां गतिमार्गान् वहन्तम्। कीदृशान् अनु-पतनेन तेषामेव जलपानार्थमवतरणेन प्रवृत्तान, अवतरणेन वृक्षतृणादीनामधोमुखीभावादिति भावः। उत्पतनेन प्रनष्टनिर्गमान् आरोहणेन वृक्षतृणादीनां पुनरुत्थानादिति भावः। मदजलपानार्थं दूरान्वितमार्गा अशक्तया च प्रतिनिवृत्ता मधुकरा येषु तान् प्रनष्टमार्गान्, अविभावितगमनचिह्नानिति **केचित्**[3] ॥६०॥

थोआहअ-तिमिराइं वहमाणं थोअ-णिग्गअ-मऊहाइं।
णिन्तग्गि-गब्भिणाइ व थोउब्भिण्ण[4]-रअणङ्कुर-ट्ठाणाइं ॥६१॥

**[स्तोकाहत-तिमिराणि वहमानं स्तोक-निर्गत-मयूखानि।
निर्यदग्नि-गर्भितानि इव स्तोकोद्भिन्न-रत्नाङ्कुर-स्थानानि ॥ ]**

स्तोकोद्भिन्नरत्नाङ्कुराणां स्थानानि निर्यदग्निगर्भितानीव वहमानं, कीदृशानि रत्नाङ्कुराणां स्तोकोद्भिन्नत्वात् स्तोकनिर्गतमयूखान्यतएव स्तोकाहततिमिराणि ॥६१॥

---

1 ०ण्णिअ० Ms. दूरु GB. 2 ०णाह-णि० GB. 3 के Ms. After this the scribe, evidently a Vaiṣṇava, fills up the space by writing श्रीकृष्णः. 4 ०उत्ति० GB. But CKS have ०उब्भि०

मोडिअ-पव्वाअ-दुमे उव्वेल्लावेढ-भग्ग-पुञ्जइअ-लए ।
वण-गअ-जुज्झ-परिमले वहमाणं पहर-वडिअ[1]-दन्त-
प्फलिहे[2] ॥६२॥

[मोटित-प्रवाल-द्रुमान् उद्वेल्लावेष्ट-भग्न-पुञ्जित-लतान् ।
वन-गज-युद्ध-परिमलान् वहमानं प्रहार-पतित-दन्त-परिघान् ॥ ]

मोटिता भग्ना अतएव शुष्का द्रुमा येषु, उद्वेल्लावेष्टा उन्मोचितावेष्टना रुग्णा भग्नाः पुञ्जिताश्च लता येषु तान्, प्रहारेणापतिता दन्तपरिघा येषु तान्। वनगजयुद्धपरिमलान् वहमानं, युद्धपरिमलान् विमर्दस्थानानीति **लोकनाथः**। अस्तमावेष्टनं वृक्षादिर्यासामत-एव भग्नाः पुञ्जिता लता यत्रेति **केचित्** ॥६२॥

मन्दर-पहरुच्छलिए अज्ज वि वित्थिण्ण-मणि-पहम्म-णिहित्ते ।
जलणिहि-जल-वोच्छेए अणिग्गआमअ-रसे समुव्वहमाणं ॥६३॥

[मन्दर-प्रहारोच्छलितान् अद्य अपि विस्तीर्ण-मणि-प्रहर्म्य-निहितान् ।
जलनिधि-जल-व्यवच्छेदान् अनिर्गतामृत-रसान् समुद्वहमानम् ॥ ]

मन्दरप्रहारोच्छलितान् विस्तीर्णेषु मणीनां प्रहर्म्येषु[3] रत्नकन्दरादिष्वर्थादमृतयोग्य-स्थानेषु मणीनां प्रहर्म्येषु देवखातेष्विति **कुलनाथः**। निहितान् जलनिधिजलस्य व्यवच्छेदा-नेकदेशान्, अद्याप्यनिर्गतामृतरसान् समुद्वहमानम्। विस्तीर्णत्वेनैवाद्यापि स्थितिरिति **केचित्**।

[4]जल-संखोहालग्गं वहमाणं विसम-भग्ग-पत्तण-णिवहं ।
राहव-बाण-समूहं[5] वज्ज-मुह-च्छिण्ण[6]-पक्ख-सेसं वठिअं ॥६४॥

[जल-संक्षोभालग्नं वहमानं विषम-भग्न-पत्रणा-निवहम् ।
राघव-बाण-समूहं वज्र-मुख-च्छिन्न-पक्ष-शेषं इव स्थितम् ॥ ]

---

1 °पडिअ° GB. 2 °प्फडिहे GB. 3 प्रथर्म्मेषु Ms. 4 Ms. has शर° (evidently a mistake for सर°) marginally. 5 °सर-संघाअं GB. 6 °क्खुडिअ° GB.

जलानां संक्षोभात् कल्लोलाघातादालग्नं विषमं निःशेषं भग्नः पवणानिवहो यस्य तं राघवशरसंघातं वज्रमुखोत्खण्डितयोः पक्षयोः शेषं नलकदण्डमिव स्थितं वहमानम्। 'सरसंखोहालग्ग'मिति पाठे शरं[1] जलरयस्तत्क्षोभादालग्नमित्यर्थः। लोमरहितकाष्ठिकासमूहमिव स्थितमिति केचित् ॥६४॥

**कुम्भोवग्गण-णिवडिअ-करि-हत्थुक्खुडिअ-सीह-केसर-भारं।**
**सहअरि-विरुआअण्णण-वलन्त-भमर-परिवत्तिअ-लआ-**
**कुसुमं ॥६५॥**

**[कुम्भावक्रमेण-निपतित-करि-हस्तोत्खण्डित-सिंह-केसर-भारम्।**
**सहचरी-विरुताकर्णन-वलद्-भ्रमर-परिवर्तित-लता-कुसुमम् ॥]**

परनिपातात् कुम्भाक्रमणाय निपतितस्य सिंहस्य करिहस्तेन खण्डितः केशरभारो यत्र, सहचरीविरुताकर्णनाद्वलता भ्रमरेण परिवर्तितं न पुनर्मधुलोमेन दृढदष्टतया परित्यक्तं लताकुसुमं यत्र तम् ॥६५॥

**हिम-सीअले वहन्तं पवणोमास-विसमूससिअ[2]-सेआले।**
**दिअसासार-क्खुडिए दर-वसुआअ-सलिले ससि-मणि-[F 57a]**
**प्पवहे ॥६६॥**

**[हिमशीतलान् वहन्तं पवनावमर्ष-विषमोच्छ्वसित-शैवालान्।**
**दिवसासार-खण्डितान् दर-शुष्क-सलिलान् शशि-मणि-प्रवाहान् ॥]**

शशिमणीनां प्रवाहान् वहन्तं कीदृशान् हिमवच्छीतलान्, आसरणमासार आगमनमिति यावत्। दिवसेऽवतारेण प्रसारेण खण्डितान् दिवसे प्रस्यन्दशून्यतया खण्डितप्रसरानित्यर्थः, दरमीषच्छुष्कसलिलान् दिवसे तप्तत्वादिति भावः। ईषच्छुष्कत्वादेव पवनावमर्षेण विषममितस्ततः समुच्छ्वसितशैवालान् पूर्णे सलिले पवनेन शैवालस्य कम्पयितुमशक्यत्वादिति भावः ॥६६॥

---

1 शरो Ms. Cf. "शरं जले" इति मेदिनी. 2 ०मोससिअ० GB.

विसमुल्लसिअ[1]-परिमले[2]कमलिणि-पत्त[3]-परिघोलिर-जल-च्छाए ।
[4]मरगअ-सिला-अलोवरि-पवित्त-पारअ-रसे समुव्वहमाणं ॥६७॥

[विषमोल्लसित-परिमलान् कमलिनी-पत्र-परिघूर्णनशील-जल-च्छायान् ।
मरकत-शिला-तलोपरि-प्रवृत्त-पारद-रसान् समुद्वहन्तम् ॥ ]

विषमं विस्पष्टं यथा स्यात्तथोल्लसितः परिमलो येषां, विषमलयन्तं वा, उल्ललित-श्वलितोऽज्ञात इति यावत् परिमलो गमनागमनविशेषो यस्येति **कुलनाथः**। विषममुल्ल-लितान् परि सर्वतश्चलानिति व्याख्यानात् परिचलेति पाठः **श्रीनिवास**मते। परिमलो लक्षणया मलोत्तर इति **हर्षपालः**, तदा कर्मधारयः। मरकतशिलातलोपरि परिगतान् पारदरसान् कमलिनीपत्रघूर्णनशीलानां जलानामिवच्छाया येषामीदृशान्[5] समुद्वहमानम् ॥६७॥

आरुहइ व [6]दिअस-मुहे [7]उद्धाअन्तुद्ध-मण्डलाउर-तुरओ ।
सम-मण्डल-वोलीणो ओअरइ व जं दिणावसाणम्मि रवी[8] ॥६८॥

[आरोहति इव दिवस-मुखे ऊर्ध्वायमानोर्ध्व-मण्डलातुर-तुरगः ।
सम-मण्डल-व्यतिक्रान्तः (व्यवलीनः) अवतरति इव यं दिनावसाने रविः ॥ ]

ऊर्ध्वायमाना ऊर्ध्वं गच्छन्तश्च ते ऊर्ध्वेन ऊर्ध्वं धावता मण्डलेनातुराश्चेति ऊर्ध्वमुखीभूय ऊर्ध्वं धावतो मण्डलस्य वहनादातुरा इत्यर्थः, ईदृशास्तुरगा यस्य, एवंभूतः सन् रविर्यं दिवसमुखे आरोहति, एवं सममण्डलं व्यवलीनस्तिर्यङ्मण्डलतया त्यक्तसममण्डल इत्यर्थः, ईदृशः सन् दिनावसाने अवतरति यस्मादित्यर्थाल्लभ्यते। एतेन रवेरस्तमनमस्तमनञ्च तत्रैव पर्यस्यतीति **केचित्**। **कुलनाथस्तु** दिवसमुखे ऊर्ध्वायमानमूर्ध्वं गच्छदूर्ध्वमतिर्यङ् मण्डलं यस्य सः, ऊर्ध्वायमानोर्ध्वमण्डलश्चासौ अतएवोर्ध्वोत्क्षेपणेनातुरा निःसहायास्तुरगा यस्य स चासाविति तथोक्तः सन् रविरारोहति, आरुह्य च सममण्डलः सन् व्यवलीनोऽर्थाद्

1 ०लिअ० GB. 2 ०परिचले Ms. marginally. 3 ०वत्त० GB.
4 मअगअ० Ms. 5 ०शानि Ms. 6 ०दिवस० GB.
7 ०उद्धान्त० Ms. 8 रई GB.

दिवसमध्ये व्यवक्रान्तो दिनावसाने च यस्मादवतरतीत्याह। **अन्ये** तूद्गच्छन्नूर्ध्वमण्डलत्वेनातुरतुरगः सन्निव यमारोहति, आरोहण एव तुरगाणां दुःखमत्युच्चत्वादवरोहणे पुनर्न किमपि दुःखं यतोऽस्तस्थानमन्वितस्य शिखरेण व्याप्तत्वादतएव सममण्डलव्यतिक्रान्त एवावरोहतावेत्याहुः ॥६८॥

[1]छुन्दन्ति जत्थ [2]पन्थे णिसासु विसम-परिहार-परिअत्तन्ता।
कडएसु कउज्जोआ पुरओ बोलेन्त[3]-तारआहि वणअरा ॥६९॥

**[क्षुन्दन्ति यत्र पथः निशासु विषम-परिहार-परिवर्तमानाः।**
**कटकेषु कृतोद्योताः पुरतः व्यतिक्रान्त-तारकाभिः वनचराः ॥]**

पुरतो व्यतिक्रान्ताभिस्तारकाभिर्हस्तदीपिकाभिरिव कृतोद्योताः सन्तो वनचराः पशवः किराता वा यत्र निशासु कटकेषु पथः क्षुन्दन्ति विषमप्रदेशानां परिहाराय परिवर्तमानाः 'छन्दन्ति', अतिक्रामन्तीति **केचित्**। विवरस्योन्नतानतदेशस्य परिहाराय त्यागाय प्रवर्तमानाः प्रयतमाना वा। क्षोदयन्ति प्रथमं वर्त्मापा विचयाद्? विषमदेशं गत्वा प्रतिनिवृत्य दीपिकाभिरिव ताभिः प्रत्यभिज्ञाय यान्तीत्यर्थ इति **लोकनाथः** ॥६९॥

पिअअम-विओइआणं जत्थ अ सिहर-मिलिअं चिलाअ-वहूणं।
बोलेइ बाह-मइलिअ-कुसुमञ्जलि-समुह-ताडिअं ससि-बिम्बं ॥७०॥

**[प्रियतम-वियोजितानां यत्र च शिखर-मिलितं किरात-वधूनाम्।**
**व्यतिक्रामति बाष्प-मलिनित-कुसुमाञ्जलि-सम्मुख-ताडितं शशि-बिम्बम् ॥]**

यत्र पर्वते शिखरमिलितं प्रियतमवियोजिताभिः किरातवधूभिर्बाष्पमलिनितकुसुमाञ्जलिसंमुखताडितं शशिबिम्बं व्यवलीयते पन्थानं लङ्घयति प्रियसंयोगार्थमेव गौरीं पूजयितुं किरातवधूभिर्यः कुसुमाञ्जलिरूपात्तश्चन्द्रालोकजनितेन बाष्पनिपातेन देवपूजाप्रतिबन्धात् त्वय्यैव गृह्यतामयं कुसुमाञ्जलिरिति तेनैव बाष्पम्रक्षितेन कुसुमाञ्जलिना ताभिश्चन्द्रस्ताडित इत्यर्थः।

---

1 छन्दन्ति Ms, 2 वन्थे GB. 3 वोलन्त॰ GB.

"किराते च" इत्यनेन ककारस्य[1] चकारः, हरिद्रादित्वाद्रेफस्य लत्वमिति **लोकनाथः**। 'वोलेइ' व्यतिक्रामतीति **कुः** ( कुलनाथः )। हन्त अयमपि मदनानलदीपकः कृतान्तः समागत इति वाष्पमलिनितकुसुमाञ्जलिभिः संमुखताडितं शशिबिम्बं 'बोलेइ' पन्थानं लङ्घयतीति **कुः** ( कुलनाथः ) ॥७०॥

णह-अलं व गह-सोहिअं सविमाणअं
सिहर-रुद्ध-खअ-मारुअ-रहस-विमाणअं ।
[2]दरि-मुहेसु-गुप्पन्त-सीह-घण-राअअं
रअण-सिहर-किरणुग्गमेहि घण-राअअं ॥७१॥

**[नभस्तलं इव ग्रह-शोभितं सविमानकं
शिखर-रुद्ध-क्षय-मारुत-रभस-विमानदम् ।
दरी-मुखेषु व्याकुलायमान(ओप्यत्)-सिंह-घन-रावकं
रत्न-शिखर-किरणोद्गमैः घन-रागदम् ॥ ]**

ग्रहैश्चन्द्रसूर्यादिभिः शोभितं सविमानकं दशमुखाराधनार्थमागतानां देवतानां विमानसहितमतएव नभस्तलमिव, शिखरैः रुद्धस्य क्षयमारुतस्य यो रभसः स्वेच्छाप्रसरणं तस्य विमानदं[3]मपमानदं, रत्नप्रधानस्य [शिख]रस्य किरणोद्गमैर्घनानां मेघानां रागप्रदं, दरीमुखेषु गुप्यतामनुपालब्धदिक्तया व्याकुलीभवतां सिंहानां घनः सर्वत्र प्रतिरवसम्बलितत्वान्निविडो रावो यत्र ॥७१॥

जम्मि समत्त व्व दिसा झीण व्व मही कआवसाणं व ण[F57b]हं ।
[4]अत्थमिओ व्व समुद्दो णट्ठं व रसाअलं णिसण्णं व जअं ॥७२॥

**[यस्मिन् समाप्ताः इव दिशः क्षीणा इव मही कृतावसानं इव नभः ।
अस्तमितः इव समुद्रः नष्टं इव रसातलं निषण्णं इव जगत् ॥ ]**

---

1 लकारस्य Ms. 2 This *pāda* is read as the fourth *pāda* in GB.
3 विमादनं Ms. 4 ०मओ Ms.

[F57b] यस्मिन् पर्वते समाप्ता इव दिशस्तत्रस्थैस्तस्मिन्नेव सर्वासां दिशामुपलम्भात्, क्षीणेव मही अन्यत्रानुपलम्भाद्, गतावसानमिव नभस्तेनाच्छादितत्वाद्, अस्तमित इव समुद्रस्तदतिरिक्तस्थाने समुद्रस्यानुपलम्भान्, नष्टमिव रसातलं तद्व्याप्तकुक्षित्वान्, निषण्णमिव जगत् क्षितिनभःसुरलोकनिवासिनां तत्रैवावस्थानात् ॥७२॥

जस्स सिहरेसु बहुसु वलन्ति वलमाण-जुअ-वलन्त-क्खन्धा ।
भीआरुण-परिवट्टिअ-घोणा-घोलन्त-चामरा रइ-तुरआ ॥७३॥

[यस्य शिखरेषु बहुशः वलन्ति वलमान-युग-वलत्-स्कन्धाः ।
भीतारुण-परिवर्तित-घोणा-घूर्णमान-चामराः रवि-तुरगाः ॥ ]

यस्य शिखरेषु रवितुरगा बहुशो वलन्ति शिखराणां विषमतया वारं वारं वलितग्रीवा भवन्ति, कीदृशाः शिखराणां वैषम्याद्दशमुखसान्निध्याद्वा भीतेनारुणेन सारथिना परिवर्तितघोणा अतो वलमानयुगत्वाद् वलत्स्कन्धा अतएव घूर्णमानचामरा बहुशो वलन्ति ग्रीवाभङ्गेनावर्जिता भवन्ति, भीतारुणत्वं रावणसन्निधानादिति भावः ॥७३॥

दीसन्ति जोइस-वहे णिसासु वोड्ढूण[1]कुसुम-णिवहे[2] व्व[3] जहिं ।
गहिअ-पढमोच्चआइ व पहाअ-वोच्छिण्ण-तारआइ वणाइं ॥७४॥

[दृश्यन्ते ज्योतिः-पथे निशासु ऊढ्वा कुसुम-निवहान् इव यत्र ।
गृहीत-प्रथमोच्चयानि इव प्रभात-व्यवच्छिन्न-तारकाणि वनानि ॥ ]

यत्र निशासु ज्योतिषां तारकाणां वहान्निवहान् कुसुमनिवहानिवोढ्वा प्रभातव्यवच्छिन्न-तारकाणि वनानि गृहीतप्रथमोच्चयानीव दृश्यन्ते। गृहीतः स्वीकृतः प्रथमग्रहणात् पश्चादुच्चेतव्यपुष्पयोगो वनेषु सूचितः। अथवा, ज्योतिषां पन्था ज्योतिष्पथो गगनं तस्मिन् वर्तमानानि वनानि यत्र निशासु कुसुमनिवहानिवेत्यर्थात् तारकानिवहानूढ्वा प्रभातव्यवच्छिन्न-तारकाणि सन्ति गृहीतप्रथमोच्चयानीव दृश्यन्त इति व्याख्या ॥७४॥

---

1 वोढ्डूण GB.; Ms. having also संरूढ० marginally. 2 ०हं GB.
3 व GB.

जत्थ अ गमेन्ति णिद्दं णिसासु णीसास-विहुअ-पेलव-जलआ[1] ।
चन्द-परिमास-पअलिअ[2]-ससि-मणि-सलिलोज्झराहआ वण-
महिसा ॥७५॥

[यत्र च गमयन्ति निद्रां निशासु निःश्वास-विधुत-पेलव-जलदाः ।
चन्द्र-परिमर्ष-प्रगलित-शशि-मणि-सलिल-निर्झराहताः वन-महिषाः ॥]

यत्र च निशासु निश्वासेन विधुतः क्षिप्तः पेलवो मूर्धजलदो यैस्ते वनमहिषाश्चन्द्रपरिमर्ष-प्रगलितशशिमणिसलिलनिर्झरहताः सन्तो निद्रां गच्छन्ति, यत्र च निश्वासविधूतपेलव-जलदा निद्रायां तेषां निश्वासातिरेकादिति भावः समयन्ति प्रापयन्ति ॥७५॥

[3]उम्मोइअ-पाआलो जस्स खउप्पाअ-कम्प-णिद्दअ-विहुओ ।
पव्वालेइ महि-अलं [4]अवडिक्खिअ-सेस-साअरो मअरहरो ॥७६॥

[उन्मोचित-पातालः यस्य क्षयोत्पात-कम्प-निर्दय-विधुतः ।
प्लावयति मही-तलं अप्रतीक्षित-शेष-सागरः मकरगृहः ॥ ]

यस्य चोत्पातकम्पेन निर्दयं विधूतः सन्नुन्मोचितपातालो मकरगृहः समुद्रोऽप्रतीक्षितशेषसागरो महीतलं प्लावयति, अप्रतीक्षितशेषसागरोऽतिसान्निध्यात् प्रथममस्यैव तटं प्लावयति, प्लावने च पर्वतस्य विस्तीर्णत्वादलैव सकलः समुद्रः पर्याप्त इत्यस्य सागर-सम्बन्धो न जात इत्यर्थः । (क्षयः) प्रलयस्तत्कालीनेनोत्पातेन विपदतिशयेन यः कम्पस्तेन निर्दयविधूतः सन्नुन्मोचितं पातालं येन स सागरोऽप्रतीक्षितशेषसागरः सन् यस्य महीतलं प्लावयति तत्र क्षयजनितोऽपघाताभावादित्यर्थः । अप्रतीक्षितेत्यादिविशेषणेन यथा विपद्गतं सुहृदन्तरमनपेक्ष्य अपरो भयार्तः कथमपि शरण्यं भजते तथात्रापीति समाहित-मिति **लोकनाथः** ॥७६॥

---

1 ०अरा Ms. 2 ०डिअ GB. 3 आमोइअ० GB.
4 अवलिच्छिअ० GB.

[1]जत्थ भमन्ति णहङ्कुस-सिहर-समासण्ण-मुहल-कड्डिअ-जलआ।
मुह-पडिअ-विज्जु-मण्डल-दर-पज्जालिअ-धुअ[2]-केसरा केस-
रिणो ॥७७॥

[यत्र भ्रमन्ति नखाङ्कुश-शिखर-समासन्न-मुखर-कृष्ट-जलदाः।
मुह-पतित-विद्युन्-मण्डल-दर-प्रज्वलित-धुत-केसराः केसरिणः॥ ]

परनिपातात् समासन्नः करिबुद्धया नखाङ्कुशैः शिखरैः [3]कृष्टाः सन्तो मुखरा जलदा येभ्यः शिखरसमासन्ना इति वान्वयः, मुखपतितेन विद्युन्मण्डलेन दरप्रज्वलिता धूताः केसरा यैः, ईदृशा केसरिणो यत्र भ्रमन्ति स्थैर्यं न लभन्ते ॥७७॥

ओज्झर-मज्जण-सुहिआ जत्थ पुणो वि दि[F58a]असाअव-किल-
म्मन्ता[4]।
णिव्वाअन्ति णिसण्णा खन्धुग्घुट्ठ-हरिअन्दण-वणेसु[5] गआ ॥७८॥

[निर्झर-मज्जन-सुखिताः यत्र पुनः अपि दिवसातप-क्लाम्यमानाः।
निर्वान्ति निषण्णाः स्कन्धोद्धृष्ट-हरिचन्दन-वनेषु गजाः॥ ]

यत्र अवझरमज्जनेन सुखिता निशाखित्यर्थात् पुनरपि दिवसातपेन क्लाम्यमानाः स्कन्धोद्घृष्टेषु हरिचन्दनवनेषु गोशीर्षचन्दनतरुषु निषण्णा निर्वाणा भवन्ति गजाः प्रशान्ततापा भवन्तीत्यर्थः। **लोकनाथस्तु** दिवसातपेन क्लान्ता अतएव निर्झरमज्जनेन सुखिता नीचशाखतया स्कन्धोद्धृष्टेषु हरिचन्दनवनेषु निषण्णाः सन्तो वनगजा यत्र पुनरपि निर्वान्ति प्रशमिततापा भवन्ति, पुनरपीत्यनेन रात्रौ गजानां सुखनिषण्णत्वं सूच्यते। परनिपातादुद्धृष्टाः स्कन्धाः प्रकाण्डा येषामिति वा ॥७८॥

---

1 जत्त Ms. 2 ०धुअ० omitted in Ms. 3 ०ष्टा Ms.
4 ०किलि० GB. 5 ०दुमेसु GB.

[1]जत्थ अ सिहरावडिअं वलइ सिला-विसम-भित्ति[2]-पसल्लिइअं ।
भुअइन्द-मणि-णिहंसण-पणट्ठ-[3]पज्जोअ-सञ्चअं ससि-बिम्बं ॥७९॥

[यत्र च शिखरापतितं वलति शिला-विषम-भित्ति-पार्श्वायितम् ।
भुजगेन्द्र-मणि-निघर्षण-प्रनष्टप्रद्योत-सञ्चयं शशि-बिम्बम् ॥ ]

यत्र च शिखरापतितं शिलाविषमभित्तिपार्श्वीकृतं, पार्श्वागतं पार्श्वपर्यस्तं वा भुजगेन्द्रमणिनिघर्षणेन प्रनष्टप्रद्योतसञ्चयं शशिबिम्बं वलति तिर्यग् गच्छति। भुजगेन्द्रमणीनां पाषाणकर्कशत्वात् तन्निघर्षेण दर्पणादीनामिव प्रनष्ट उद्योतसञ्चयो यस्येदृशं शशिबिम्बं वलति वर्णान्तरेण गच्छतीति **लो** (लोकनाथः) ॥७९॥

जत्थ अ भमिर-महुअरं कडअ-लआ-लग्ग-धवल-चामर-पम्हं ।
ससिउद्धुअ-कुसुम-रअं णज्जइ तुरिआण [4]रवि-तुरङ्गाण
गअं ॥८०॥

[यत्र च भ्रमणशील-मधुकरं कटक-लता-लग्न-धवल-चामर-पक्ष्मम् ।
श्वसितोद्धुत-कुसुम-रवाः ज्ञायते त्वरितानां रवि-तुरङ्गाणां गतम् ॥ ]

यत्र रवितुरङ्गाणां गतं ज्ञायते, कीदृशं तुरङ्गाणां त्वरितगत्यैव श्वसितोद्धुतानि कुसुमरजांसि यत्र, अतएव भ्रमणशीला मधुकरा यत्र, कटतटे आलग्नानि धवलचामरपक्ष्माणि यत्र, रावणभिया सारथिप्रेरितत्वात्तुरङ्गाणां त्वरितगमनमिति **केचित्** ॥८०॥

अञ्जण-राएण सइ धूसरन्ताइं
गण्डअलेसु खलिअ-विसमोसरन्ताइं ।
सुर-बन्दीण णअण-गलिआइं अंसुआइं
कप्प-लआण जत्थ मइलेन्ति अंसुआइं ॥८१॥

---

1 This verse is numbered 77 in GB. 2 ०भित्ति-विसम GB.
3 ०उज्जोअ० GB. 4 रइ० GB.

[अञ्जन-रागेण सदा धूसरायमाणानि
गण्ड-तलेषु स्खलित-विषमापसरन्ति ।
सुर-बन्दीनां नयन-गलितानि-अश्रूणि
कल्प-लतानां यत्र मलिनयन्ति अंशुकानि ॥ ]

अञ्जनस्य कज्जलस्य रागेणानुरञ्जनेन सदा धूसरं यथा स्यात्तथा ततानि विस्तृतान्यञ्जनरागेण सदा धसरान्तान्याविलरूपाणि मलिनानीत्यर्थः, गण्डतलेषु स्खलितविषमं यथा स्यात्तथा अपसरन्ति सुरसुन्दरीणां सुरबन्दीनां नयनगलितान्यश्रूणि यत्र कल्पलतानामंशुकानि मलिनयन्ति ॥८१॥

एक्क-सिहरे समप्पइ जस्स अ सोसविअ-मलिअ-दुम-संघाओ ।
सइ दक्खिणुत्तराअण-णह-गमणागमण-विलुलिओ [1]रवि-
मग्गो ॥८२॥

[एक-शिखरे समाप्यते यस्य च शोषित-मृदित-द्रुम-संघातः ।
सदा दक्षिणोत्तरायण-नभो-गमनागमन-विलुलितः रवि-मार्गः ॥ ]

यस्य चैकशिखरे क्वचिच्छोषिताः क्वचिन्मृदिताश्च द्रुमसंघाता यत्र, सदा दक्षिणोत्तरायणाभ्यां दक्षिणोत्तरायणयोर्वा नभोगमनागमनाभ्यां विलुलितो रविपथः समाप्यते ॥८२॥

जेण भर-भिण्ण-वसुहं अप्फुण्ण-वसाअलं समोत्थइअ-णहं ।
सव्व-दिसा-णिव्बूढं[2] परिवड्ढन्तेण वड्ढिअं व तिहुअणं ॥८३॥

[येन भर-भिन्न-वसुधं आक्रान्त-रसातलं समवस्थगित-नभः ।
सर्व-दिग्-निर्व्यूढं परिवर्धमानेन वर्धितं इव त्रिभुवनम् ॥ ]

1 रइ-वन्थो GB. 2 ०विच्छूढं GB.; विव्वूढं Ms.

येन गिरिणा भरेणार्थात् परिणाहातिशयेन भिन्ना आक्रम्य आक्रम्य दूरं दूरं नीता वसुधा यत्र। आक्रान्तं[1] रसातलं यत्र, सम्यगवस्थगितं[2] नभो यत्रेदृशं त्रिभुवनं तथोक्तं; वर्धनक्रियाविशेषणं वा। अतः सर्वासु दिक्षु तिर्यगूर्ध्वमधस्ताच्च निर्व्यूढं विक्षिप्तं प्रेरितम्, अतश्च विष्णुनेव परिवर्धमानेन येन त्रिभुवनं वर्धितमिव ॥८३॥

ग[F58b]न्धाबद्ध-महुअवा वसन्ति जन्थ समअं सुर-वणाणु-
रआ[3]।
[4]अण्णोण्ण-प्पडिऊला एक्क-क्खम्भ-णिअलिआ[5] सुर-गअ व[6]
उदू ॥८४॥

[गन्धाबद्ध-मधुकराः वसन्ति यत्र समकं सुर-वनानुरताः।
अन्योन्य-प्रतिकूलाः एक-स्तम्भ-निगडिताः सुर-गजाः इव ऋतवः ॥]

[F58b] एकत्र कुसुमानामन्यत्र मदस्य गन्धेनाबद्धा मधुकरा यैस्ते तथा, सुरवनं[7] नन्दनादि तत्रानुरता अनुगताश्चेत्युभयत्र सममन्योन्यप्रतिकूला एकस्मिन् स्तम्भे 'णिअलिआ' निगडिताः सममेककालं यत्र रावणप्रभावान् नन्दनादौ च शक्रादिप्रभावात्, 'उदू' ऋतवः बहुवचनेऽप्येकवचनवन्महाराष्ट्रभाषायां, सुरगजा इव वसन्ति ॥८४॥

दीसइ विवलाअन्तो[8] जत्थ समासण्ण-दसमुह-भउव्विग्गो[9]।
सिहरन्तराल-पडिलग्ग-मोइआणिक्क-मण्डलो दिअसअरो ॥८५॥

[दृश्यते विपलायमानः यत्र समासन्न-दशमुख-भयोद्विग्नः।
शिखरान्तराल-प्रतिलग्न-मोचित-तिर्यङ्-मण्डलः दिवसकरः ॥]

---

1 ०न्त Ms. 2 ०त Ms. 3 ०गआ GB. 4 अएणोएं प० GB. 5 ०लिआ GB. 6 व्व GB. 7 सुरनं Ms. 8 वि वला० B. 9 भआवि० GB.

यत्र समासन्नदशमुखभयोद्विग्नः सत्वरगमनेन शिखरान्तरालप्रतिलग्नं सत्वरमेव मोचितं 'आणिक्कं' त्र्यस्रं मण्डलं येन स दिवसकरो विपलायमान इव दृश्यते, परनिपातात्तिर्यङ् मोचितं मण्डलं येनेति **लोकनाथः**। आणिक्क-शब्दस्तिर्यगर्थे देशीति **लोकनाथः** ॥८५॥

**जत्थ अ मआण मणहर-किण्णर-गीअ-सुहिओणिमिल्लच्छाणं।**
**[1]विहडिअ-रोमन्थाणं एइ विउद्धं चिरेण रोम-न्थाण ॥८६॥**

**[यत्र च मृगाणां मनोहर-किन्नर-गीत-सुखितावनिमीलदक्षाणाम्।**
**विघटित-रोमन्थानां एति विबुद्धं चिरेण रोमस्थानम्॥]**

यत्र च मनोहरेण किन्नरगीतेन सुखितानां सुखेनैव निमीलिताक्षाणां विघटितरोमन्थानां विघटितो रोमन्थः खादितोद्गीर्णाहारचर्वणं येषां मृगाणां विबुद्धं हृषितं रोम चिरेण स्थानमेति प्राप्नोति। मृगाणां विबुद्धं गीतानुभवामोदेन उद्भिन्नं रोम चिरेण स्थानमेतीति **केचित्** ॥८६॥

**तीर-पवित्त[2]-मुहल-कलहंस-रोअएसुं**
**कुविअ-गइन्द-बद्ध-कलहं सरोअएसुं।**
**कुमुअ-वणाण जत्थ णह-अन्द-लग्गआणं**
**रवि-अर-दंसणे वि ण हअं[3] दलग्गआणं ॥८७॥**

**[तीर-प्रवृत्त-मुखर-कलहंस-रोचकेषु**
**कुपित-गजेन्द्र-बद्ध-कलहं सर-उदकेषु।**
**कुमुद-वनानां यत्र नभश्चन्द्र-लग्नानां**
**रवि-कर-दर्शने अपि न हतं दलाग्रतानम्॥]**

गलितकमाह। यत्र सरउदकेषु कुपितैर्गजेन्द्रैर्बद्धकलहं यथा स्यात्तथा तीरे परीताः परिगता मुखरा विरुवन्तो ये कलहंसास्तेषां रोचकेषु रुचिकारकेषु कुमुदवनानां नभसि चन्द्रलग्नानां रविकरदर्शनेऽपि दलाग्राणां तानं विस्तारो न हतम्। विनाशश्चन्द्रलग्नत्वादिति भावः ॥८७॥

---

1 विसमिश्र० GB. 2 परिन्त० G. 3 इअन्द० Ms.

वलमाणम्मि महुमहे जत्थ अ[1]विसमुच्छलन्त-रअणुज्जोअं ।
विअड[2]-प्फण-पब्भारं गाढ-भरुत्ताणिअं णिमेइ अणन्तो ॥८८॥

[वलमाने मधुमथने यत्र च विषमुच्छलद्-रत्नोद्योतम् ।
विकट-फण-प्राग्भारं गाढ-भरोत्तानितं निक्षिपति अनन्तः ॥ ]

मधुमथने वलमाने पार्श्वान्तरेण स्वपिति सति पार्श्वपरिवर्तनजन्येन गाढभरेणोत्तानितं तिर्यगूर्ध्वीकृतं तिर्यग्भारादेव विषमं तिर्यगुच्छलन् रत्नोद्योगो यत्र तं विकटं विशालं फणस्य प्राग्भारं ऊर्ध्वदेशमनन्तो नागराजो 'णिमेइ' अर्पयति निक्षिपतीति **केचित्**। विश्वाधारभूतोऽप्यनन्त एवमाश्रयति ॥८८॥

दीसइ कडअल्लीणो जस्स अ विवर-सरिसुब्भड-मअ-च्छाओ ।
अव[F59a]होवास-मऊहो सिहरोज्झर-भिण्ण-मण्डलो व्व
मिअङ्को ॥८९॥

[दृश्यते कटकालीनः यस्य च विवर-सदृशोद्भट-मृग-च्छायः ।
उभयावकाश-मयूखः शिखर-निर्झर-भिन्न-मण्डलः इव मृगाङ्कः ॥]

[F59a] कटकालीनो विवरसदृशोद्भटमृगच्छायः, मृगकान्तमध्यत्वादेवोभयपार्श्वमयूखो मृगाङ्कः शिखरनिर्झरभिन्नमण्डल इव दृश्यते ॥८९॥

मज्झ-करालाइ जहिं तिण्णि वि समअं णिरन्तर-पहुत्ताइं ।
थोरुण्णए हरि-भुए वलआइ व भुअण-मण्डलाइ ठिआइं ॥९०॥

[मध्य-करालानि यत्र त्रीणि अपि समकं निरन्तर-प्रभूतानि ।
स्थूलोन्नते हरि-भुजे वलयानि इव भुवन-मण्डलानि स्थितानि ॥ ]

---

1 विसउ० Ms.; पांउ० GB. 2 विअड' फण० GB.

स्थूलोन्नते हरिभुजे वलयानीव निरन्तरं निरवकाशमशिथिलमिति यावदीदृशं यथा सात्तथा प्रभूतानि सम्मितानि मध्यकरालानि पर्वतेन भुजेन चाक्रान्तमध्यत्वान्मध्ये सावकाशानि त्रीण्यपि भुवनानि यत्र समं युगपत् स्थितानि। यथा हरिभुजं वेष्टयित्वा वलयानि तथैनमपि वेष्टयित्वा भुवनानि स्थितानीत्यर्थः ॥६०॥

सोसिअ-दुमा रवि-वहा[1]णव-वण-राइ-सुह-सीअला[2] ससि-
वन्था।
जत्थ वणन्तर-तणुआ णवर ण णज्जन्ति तारआ-गइ-मग्गा ॥९१॥

[शोषित-द्रुमाः रवि-पथाः नव-वन-राजि-सुख-शीतलाः शशि-पथाः।
यत्र वनान्तर-तनुकाः केवलं न ज्ञायन्ते तारका-गति-मार्गाः ॥ ]

यत्र शोषितद्रुमा रविपथाः एवं नववनराज्या सुखशीतलाः शशिपथा ज्ञायन्ते वनान्तरे, अर्थाद्रविशशिपथातिरिक्तपथे, तनुकाः सूक्ष्मास्तारकागतिमार्गा न ज्ञायन्ते, द्रुमाणां निग्रहेण रवेः पन्थास्तेषामार्द्रीकरणानुग्रहेण शशिनः पन्थाः परिचितः। निग्रहानुग्रहक्षमत्वविरहात्तारकागतिमार्गः परं न ज्ञायत इति भावः ॥६१॥

अलअ-पभिलग्ग-गन्धं तिअस-वहूणं सिला-अलोत्थअ-मलिअं।
अक्खिवइ जत्थ पवणो [3]ओसुक्खन्त-सुरहिं तमाल-किस-
लअं ॥९२॥

[अलक-प्रतिलग्न-गन्धं त्रिदश-वधूनां शिला-तलावस्तृत-मृदितम्।
आक्षिपति यत्र पवनः अवशुष्यत्-सुरभिं तमाल-किसलयम् ॥ ]

त्रिदशवधूनामलकेभ्यः प्रतिलग्नश्चूर्णादिगन्धो यत्र तं शिलातलेषु सुरतार्थमास्तृतश्चासौ मृदितश्चेति तथा तमवशुष्यत्सुरभिं तमालकिसलयं पवनः सौरभ्यतृष्णयेवाकर्षयत्याक्षिपति।

1 रइ० GB.; ०पहा Ms. 2 ०सीअरा GB. 3 ओसुक्कन्त० Ms

अलकप्रतिलग्नगन्धत्वेनाधोमुखमुद्रितं सूचितम् । अवशुष्यत्सुरभिं यथा यथा शुष्यति तथा तथा दमनकादिवत् सुरभीभूतमित्यर्थं इति **लोकनाथः** ॥९२॥

पवणाहअ-पल्थत्था दरीसु जस्स[1] अ पुणो [2]विलग्गन्ति णहं ।
पडिसोत्त-पत्थिउम्मुह-मुहुत्त-पीअ-सिहरो[3]ज्झरा सलिलहरा ॥९३॥

[**पवनाहत-पर्यस्ताः दरीषु यस्य च पुनः विलगन्ति नभः ।**
**प्रतिस्रोतः-प्रस्थितोन्मुख-मुहूर्त-पीत-शिखर-निर्झराः सलिलधराः ॥**]

यस्य दरीषु पवनाहतपर्यस्ताः सलिलधरा मेघाः प्रतिस्रोतः स्रोतसः प्रतीपं प्रस्थितैरूर्ध्वैर्मुखैः पीताः शिखरनिर्झरा यैः, ईदृशाः सन्तः पुनरपि नभो विलगन्ति आरोहन्ति । पवनाघातेन दरीषु निपत्य मूर्छिताः सन्तः प्रतिस्रोतोऽभिमुखाः शिखरनिर्झरं पीत्वा स्फीताः सन्तो नभो विलगन्तीत्यर्थः ॥९३॥

अद्दिट्ठ-गअ-पणोल्लिअ-पडन्त-तड-घाअ-मुच्छिउट्ठिअ-सीहे ।
सद्दूल-रव-विसंठुल-णिवडिअ-अण्णोण्ण[4]-लग्ग-किण्णर-
मिहुणे ॥९४॥

तुङ्ग-अडोज्झर-मुहले जस्स अ कसण-मणिगण्ड-सेलच्छन्ते ।
सेवन्तीण ण पत्तो तिअस-वहूण[5] सिढिलत्तणं अणुराओ ॥९५॥

राअ-सिरि-पवरसेणस्स एत्थ रावणवहे महाकव्वम्मि ।
[F59b] ससुवेल-वण्णणा-पओ णवमो आसासओ परिसमत्तो ॥

1 जम्म Ms. 2 व० Ms. 3 सलिलो० GB. Ms.; but Cf. CKS for our reading. 4 ०अण्णोल्ल० Ms. 5 ०ण' Ms.

[अदृष्ट-गज-प्रणोदित-पतत्-तट-घात-मूर्छितोत्थित-सिंहान् ।
शार्दूल-रव-विसंष्ठुल-निपतित-अन्योन्य-लग्न-किन्नर-मिथुनान् ॥

तुङ्ग-तट-निर्झर-मुखरान् यस्य च कृष्ण-मणि-गण्ड-शैलार्धान्तान् ।
सेवमानानां न प्राप्तः त्रिदश-वधूनां शिथिलत्वं अनुरागः ॥]

युग्मकमिदं अद्दिट्टेति । यस्य तुङ्गतटनिर्झरमुखरान् कृष्णमणिगण्डशैलार्धान्तान् सेवमानानां त्रिदशवधूनामनुरागः शिथिलत्वं न प्राप्त इति वक्ष्यमाणस्कन्धकेनान्वयः। कीदृशान् अदृष्टेन गजेन प्रेरितस्य पततस्तटस्याघातेन मूर्छिता अनन्तरं उत्थिताः सिंहा यत्र, शार्दूलरवेण विसंष्ठुलानि सन्ति निपतितान्यन्योन्यालग्नानि किन्नरमिथुनानि यत्र। स्कन्धकमिदं **कुलनाथेन** धृतम् ॥६४-६५॥

राजश्रीप्रवरसेनस्य अत्र रावणवधे महाकाव्ये ।
ससुवेलवर्णनपदो नवमः आश्वासकः परिसमाप्तः ॥

इति रावणबधटीकायां नवमः आश्वासः ॥

---

# दसमो आसासओ

अह णिअअ-महिहरेसु व सुवेल-सिहरेसु णिव्वडिअ-वीसत्थं ।
परिसंठिअं हअम्मि व अहअम्मि वि दहमुहे पवङ्गम-सेण्णं ॥१॥

[अथ निजक-महीधरेषु इव सुवेल-शिखरेषु निर्वलित-विस्रब्धम् ।
परिसंस्थितं हते इव अहते अपि दशमुखे प्लवङ्गम-सैन्यम् ॥ ]

[F59b] अथ सर्वतः सुवेलदर्शनानन्तरं सुवेले सैन्यनिवेशं प्रदोषञ्च वर्णयन्नाह । प्लवङ्गमसैन्यमहतेऽपि दशमुखे हत इव निजकमहीधरेषु ऋष्यमूकादिष्विव 'णिव्वडिअवीसत्थं' विश्वस्ततया पृथग्भूतं सत् सुवेलशिखरेषु परि सर्वतः संस्थितं आवासस्थानेषु । सुवेलशिखरेषु स्वीयमहीधरसाम्येन अहतस्यापि दशमुखस्य हतप्रायत्वेन च तज्जन्य-भयापायात् प्लवङ्गमानां विश्वस्ततया शौर्यातिशयो दर्शितः । एकैकः स्पर्धितो लङ्कां जिगीषु-रिति **श्रीनिवासः** ॥१॥

रविणा[1] वि अणोच्छुण्णा[2]वीसत्थं मारुएण वि अणालिद्धा ।
तिअसेहि वि परिहरिआ पवङ्गमेहि मलिआ सुवेलद्धन्ता[3] ॥२॥

[रविणा अपि अनवक्षुण्णा विस्रब्धं मारुतेन अपि अनालीढाः ।
त्रिदशैः अपि परिहृताः प्लवङ्गमैः मृदिताः सुवेलार्धान्ताः ॥ ]

सुवेलार्धान्ताः प्लवङ्गमैर्विश्वस्तं मृदिता अन्यालंघितचरा अपि क्षोभिता इत्यर्थः, कीदृशाः रविणाप्यनवक्षुण्णास्तुङ्गत्वादिति भावः । मारुतेनाप्यस्पृष्टाः पर्वतान्तरवचालयितुमशक्यत्वा-दिति भावः । त्रिदशैरपि परिहृता रावणभयादिति भावः । विशेषणत्रयेण वानराणां सूर्यादपि तेजस्वित्वं, पवनादपि सामर्थ्यं, त्रिदशादपि निर्भयत्वं सूचितम् ॥२॥

---

1 रइ० GB. 2 अणोच्छु० Ms ; अण० G, अणु B. 3 ०लुच्छङ्गा GB.

रिउ-णअरि त्ति सरोसं [1]एत्थ महं वसइ पिअअम त्ति सहरिसं ।
पहुणो[2] लङ्काहिमुही [3]पडिबद्धोहअ-रसा णिवडिआ दिट्ठी ॥३॥

[रिपु-नगरी इति सरोषं अत्र मम वसति प्रियतमा इति सहर्षम् ।
प्रभोः लङ्काभिमुखी प्रतिबद्धोभय-रसा निपतिता दृष्टिः ॥ ]

रिपोर्दशमुखस्य नगरीति सरोषम् । अत्र मम प्रियतमा वसतीति सहर्षं यथा स्यात्तथा । प्रभो रामस्य लङ्काभिमुखी दृष्टिर्निपतिता, अतएव प्रतिबद्धौ परस्परविरुद्धौ उभयरसौ रौद्रशृङ्गारौ यस्याम्, एतयोर्विरोधश्च कारणभेदात्तु स्यात् । यथा "आतङ्काद्विकलं द्रुतं करुणया विक्षोभितं विस्मयादि"त्यादि **मालतीमाधवे** ॥३॥

तो सुअ-रामागमणो पवअक्कन्त-सिहरेणजाआमरिसो ।
रोसेण गलिअ-धीरो समं सुवेलेण कम्पिओ दहवअणो ॥४॥

[ततः श्रुत-रामागमनः प्लवगाक्रान्त-शिखरेण जातामर्षः ।
रोषेण गलित-धैर्यः समं सुवेलेन कम्पितः दशवदनः ॥ ]

ततः कपीनां सुवेलावस्थानानन्तरं श्रुतरामागमनः, अतएव जातामर्षो दशवदनो गलितधैर्यः सन् प्लवगाक्रान्तशिखरेण सुवेलेन सह रोषेण कम्पितः । रोषेण गलितधैर्य इति वान्वयः । यथा प्लवगामर्दात् सुवेलः कम्पितस्तथा रामागमनश्रवणाद्दशाननोऽपीत्यर्थः । कोपः कृतापराधेषु स्थिरोऽमर्षत्वमश्नुते इत्यनेन रोषामर्षयोर्भेदो दर्शितः ॥४॥

---

1 जणअ-सुआ एत्थ णिवसइ त्ति GB. 2 ०णा GB. 3 उहअ-रसन्दोलिआ विइण्णा GB. ; Ms also has marginally only the words उहअ-रसन्दोलिआ.

तात्र अ आसण्ण-ट्ठिअ-कइ-बल-णिग्घोम-कलुसिअस्स भअअरं ।
दहवअणस्स समोसरिअ-पारअणं मुअइ दिट्ठि-वाअं दिअहो[1] ॥५॥

[तावत् च आसन्न-स्थित-कपि-बल-निर्घोष-कलुषितस्य भयङ्करम् ।
दशवदनस्य समपसृत-परिजनं मुञ्चति दृष्टिपातं दिवसः ॥ ]

यावदेव रोषेण रावणः कम्पते तावदेव आसन्नस्थितकपिबलनिर्घोषेण कलुषितस्य विकलचित्तस्य दशवदनस्य दृष्टिपातं दिवसो मुञ्चति । कीदृशं भयङ्करं भ्रुकुट्यादिक्रोधविकारवशादिति भावः । अतएव समपसृतः परिजनो यस्मात्तथाभूतं दिवसस्यास्तम(न)त्वे उत्प्रेक्षेयम् । परिजनवद् दिवसोऽपि भूत इत्यर्थ इति **कुलनाथः** । दशवदनेति युक्तपदं यतो न कुत्राप्यवस्थाने दृष्टिपातः परिहृतो भवतीतीति **केचित्** ॥५॥

सुर-गअ-णिहस्स रविणो[2] कड्ढन्तस्स[F60a] णलिणिं व दिअस-च्छाअं ।
वलइ हरिआल-कविलो कमल-रअ-क्खउरिओ व्व कर-पब्भारो ॥६॥

[सुर-गज निभस्य रवेः कर्षतः नलिनीं इव दिवस-च्छायाम् ।
वलति हरिताल-कपिलः कमल-रजः कलुषितः इव कर-प्राग्भारः ॥]

[F60] सुरगजनिभस्य रवेरर्थाद् गगनसरःकृतविहारस्य ! नलिनीमिव दिवसच्छायां कर्षतो दूरं नयतः । सन्ध्याकालीनत्वाद् हरितालवत् कपिलः, अतएव कमलरजःकलुषित इव करप्राग्भारो रश्मिसमूहः शुण्डाग्रदेशश्च वलति प्रतीच्यामावर्जितो भवति ॥६॥

---

1 ०सो GB. 2 रइ० GB.

ओलुग्ग-प्फरिसाणं झिज्जान्त-[1]प्पसरिआअव-णिराआणं ।
[2]आआसिज्जन्तीण व जाअं तलिणत्तणं दुम-च्छाआणं ॥७॥

[अवरुग्ण-स्पर्शानां क्षीयमाण-प्रसारितातप-निरायातानाम् ।
आयास्यमानानां इव जातं तलिनत्वं द्रुम च्छायानाम् ॥]

अवरुग्णस्पर्शानां पूर्वमातपप्राचण्ड्याच्छायासुशीतलस्पर्शो गृहीत आसीद्, इदानीमातपमान्द्येन स्पर्शानुपलब्धेरिति भावः। आतपस्य विरलत्वात्तस्य तदभावस्य विशेषाग्रहणात् स्पर्शविशेषोऽपि न गृह्यते इति **केचित्**। क्षीयमाणप्रसृतः पूर्वं प्रसृतः पश्चात् क्षीयमाणो य आतपस्तेन निरायातानामृजूभूय दूरं गतानां क्षीयमाणातापप्रसारितायातानां पूर्वनिपातनियमादिति **केचित्**। रज्जूनामिव निरायतानामिति **कुलनाथः**। आयास्यमानानामाकृष्यमाणानामिव तलिनत्वं तनुत्वं जातं यथा खिन्न-जतु-खण्डादयः कृष्यमाणा दीर्घाश्च भवन्तीति भावः ॥७॥

दीसइ विद्दुम-अम्बं सिन्दूराहअ-गइन्द-कुम्भ-च्छाअं ।
मन्दर-धाउ-कलङ्किअ-वासुइ-मण्डल-णिअक्कलं [3]रवि-बिम्बं ॥८॥

[दृश्यते विद्रुम-ताम्रं सिन्दूराहत-गजेन्द्र-कुम्भ-च्छायम् ।
मन्दर-धातु-कलङ्कित-वासुकि-मण्डल-निश्चक्रलं रवि-बिम्बम् ॥]

विद्रुमवदाताम्रं सिन्दूरच्छुरितस्य[4] वा गजेन्द्रकुम्भस्येव छाया यस्य। मन्दरधातुना कलङ्कितस्य शोणीकृतस्य लिप्तस्येति **कुलनाथः**। वासुकेरर्थात् मन्दरभ्रमणायासेन कुण्डलीभूतस्य मण्डलवन्निश्चक्रलं वर्तुलं रविबिम्बं दृश्यते ॥८॥

---

1 ॰प्पसा॰ GB. 2 ॰मि॰ GB. 3 रइ॰ GB.
4 ॰च्छु॰ Ms.

मउलेन्ति दिसाहोआ छाआ-सामलइओअरं महि-वट्ठं[1] ।
दिअसो कलावसेसो [2]सिहरालग्ग-तणुआअवा धरणिहरा ॥९॥

[मुकुलन्ति दिशाभोगाः छाया-श्यामलितोदरं मही-वेष्टम-(पृष्ठम्) ।
दिवसः कलावशेषः शिखरा-लग्न-तनुकातपाः धरणिधराः ॥]

मुकुलन्ति संकुचन्ति दिशाभोगाः, तिमिरावृतत्वात् संकुचिता इव दृश्यन्त इत्यर्थः । महीपृष्ठं छाययेषदातपाभावेन श्यामलितोदरं पृथिव्या उपान्ते घनतिमिरावृतत्वेन लक्ष्यमाणत्वात् पृष्ठे उपरिदेशे छाया दृश्यत इत्यर्थः । दिवसः कलावशेषः "त्रिंशत् तु ताः कलाः"[3] दिवसस्य कलावशिष्टत्वाच्छिखरालग्नतनुकातपा धरणिधराः । दिवसस्य क्षीयमाणत्वादेकरूपाणामपि दिङ्महीपर्वतानां भिन्नरूपत्वं जातमित्यर्थः ॥९॥

अत्थ-णिअम्ब-परिणए हिआअव[4]-रअम्मि सुर-गअम्मि व[5]
दिअसे ।
दीसइ पल्हत्थन्तं विहडिअ-धाउ-सिहरं व दिणअर-बिम्बं ॥१०॥

[अस्त-नितम्ब-परिणते हृतातप-रजसि सुरगजे इव दिवसे ।
दृश्यते पर्यस्यत् विघटित-धातु-शिखरं इव दिनकर-बिम्बम् ॥ ]

हृता आतपा रजांसि इव यस्य अर्थाद् धातुधूलिरिव, हृत आतपो येन तस्मिन् दिवसे सुरगज इव अस्तपर्वतस्य नितम्बे परिणते निषण्णे कृतदन्ताघाते च सति । पर्यस्यत् पतद्दिनकरबिम्बं विगलितं धातुशिखरमिव दृश्यते । "गाढदन्तकृताघातो गजः परिणतः स्मृतः" ॥१०॥

---

1 ०वेढं GB. 2 ०र-ल० Ms. 3 See Amarr's lexicon.
4 हिआह० Ms. 5 Ms omits this word.

कमलाण दिअस-विरमे[1] सम्बज्झन्ति गलिआअव-मिलन्ताइं[2] ।
मअरन्द-मत्त-महुअर-चल-पक्खुप्पुसिअ-महु रसाइ[3]
दलाइं ॥११॥

[कमलानां दिवस-विरमे सम्बध्यन्ते गलितातप-मिलन्ति ।
मकरन्द-मत्त-मधुकर-चल-पक्षोत्प्रोञ्छित-मधु रसानि दलानि ॥ ]

गलितेनातपेन मिलन्ति श्लिष्यन्ति मकरन्दमत्तमधुकराणां चलपक्षः प्रोञ्छितमधुरसानि कमलानां दलानि दिवसविरामे मकरन्दरसापायाल्लघुत्वेन सम्बध्यन्ते। प्रकाशकस्य दिवसस्यापायादप्रकाशकतां गच्छन्तीति भावः। कमलानां दलानि गलितातपत्वात् संकुचन्ति सम्बध्यन्ते मुकुलीभवन्तीत्यर्थ इति **कुलनाथः** ॥११॥

दीसन्ति दो वि सरिसा कइ-चलणाइद्ध-महि-रअ-समक्कन्ता ।
अत्थाअन्तो अ रवी[4][F60b]आसण्ण-विणास-णिप्पहो [5]अ दह-
मुहो[5] ॥१२॥

[दृश्येते द्वौ अपि सदृशौ कपि-चरणाविद्ध-मही-रजः-समाक्रान्तौ ।
अस्तायमानः च रविः आसन्न-विनाश-निष्प्रभः च दशमुखः ॥ ]

दृश्येते द्वावपि सदृशौ कपिचरणाविद्धमहीरजःसमाक्रान्तौ अस्तायमानश्च रविः आसन्नविनाशनिष्प्रभश्च दशवदनः। रावणोऽप्यासन्नविनाशेन प्रभाशून्यो जात इत्यर्थ इति **हर्षपालः** ॥१२॥

---

1 ०गमे GB. 2 ०किलिन्ताइं GB. 3 ०इं Ms.
4 ०ई GB. 5 दहवअणो GB.

अद्धत्थमिअ-दिणअरो तुङ्गोवास-परिसण्ठिआअव-सेसो ।
गअणे मुक्क-महि-अलो परिप्पवन्त-तलिणो किलिम्मइ
दिअसो ॥१३॥

[अर्धास्तमित-दिनकरः तुङ्गावकाश-परिसंस्थितातप-शेषः ।
गगने मुक्त-महीतलः परिप्लवमान-तलिनः क्लाम्यति दिवसः ॥

[E60b] अर्धास्तमितो दिनकरो यत्र । तुङ्गावकाशपरिसंस्थापितातपशेषः, अतएव, मुक्तमहीतलो गगने परिप्लवमानतलिनः क्लाम्यति ग्लायति दिवसः अस्तायते । गगने परिप्लवचञ्चलीभवदतएवान्यत्रादृश्यमानत्वादिति केचित् ॥१३॥

दिअसेण वण-गएण व [1]परम्मुहाइद्ध-पाअवस्स व रविणो ।
दीसइ थोर-करालो उद्धो मूल-णिवहो व्व कर-पब्भारो ॥१४॥

[दिवसेन वन-गजेन इव पराङ्मुखाविद्ध-पादपस्य इव रवेः ।
दृश्यते स्थूल-करालः ऊर्ध्वः मूल-निवह इव कर-प्राग्भारः ॥ ]

वनगजेनेव दिवसेन पराङ्मुखाविद्धस्याधःशिखरीकृतनिपातितस्य पादपस्येव रवेः स्थूलः करालस्तरुविटपान्तरस्थितत्वात् स्थूलः करालो विरलस्थित इत्यर्थः । कराणां प्राग्भारः समूह ऊर्ध्वो मूलनिवह इव दृश्यते ॥१४॥

णवरि अ दिणअर-बिम्बं सञ्झामइअम्मि णिअअ-रुहिर-[2]प्पङ्के ।
दहवअणस्स भअअरं पढम-सिर-च्छेअ-मण्डलं व णिउत्तं[3] ॥१५॥

[अनन्तरं च दिनकर-बिम्बं सन्ध्यामये निजक-रुधिर-पङ्के ।
दशवदनस्य भयङ्करं प्रथम-शिरश्छेद-मण्डलं इव निमग्नम् ॥ ]

---

1 परंमुहोसुद्ध॰ Ms. 2 ॰रुहिरु॰ Ms. 3 ॰डुं G., ॰डूढं B.

अनन्तरञ्च दिनकरबिम्बं सन्ध्यामये स्वकीयरुधिरपङ्के आसन्नविनाशस्य दशवदनस्य भयङ्कर[1] प्रथमशिरश्छेदमण्डलमिव निमग्नम्। सन्ध्यामये सन्ध्यायां स्वार्थे मयट्। यद्वा, सन्ध्यामये सन्ध्यायां निमग्नं रविबिम्बं दशवदनस्य भयङ्करं जातमित्यर्थः। यद्वा, भयंकरं सन्निमग्नं। कथं भयंकरता[2], निजरुधिरपङ्के स्वशिरःखण्डमिव "निउत्तं निमग्नवानि"ति **देशीसारः** ॥१५॥

भमर-भरोवग्गाइं[3] परिणअ-केसर-पलोट्ट-रअ-गरुआइं ।
रवि-विरह-मिलन्ताइं[4] वि होन्ति करालाइ पङ्कआण
दलाइं ॥१६॥

[भ्रमर-भरावक्रान्तानि परिणत-केसर-पर्यस्त-रजो-गुरुकाणि ।
रवि-विरह-मिलन्ति अपि भवन्ति करालानि पङ्कजानां दलानि ॥ ]

भ्रमरभरैरपक्रान्तान्यवनतानि भ्रमरभरावभग्नानीति वा। परिणतात् केशरात् पर्यस्तेन रजसा गुरुकाण्यतो हेतुतुल्यत्वेन रविविरहेण मिलन्त्यपि पङ्कजानां दलानि करालानि भवन्ति विषमाणि भवन्ति। पङ्कजानां परिणततया सामग्र्यभावान्निजाश्रितयोरपि भ्रमर-परागयोरुद्वहनाक्षमत्वं जातमिति भाव इति **लोकनाथः** ॥१६॥

अवर-दिसा-वित्थिण्णो दीह-मऊह-विसमो[5] पहा-संघाओ ।
रअ-णिब्भरो व्व दीसइ काल-मुह-क्खित्त-दिअस-कड्ढण-
मग्गो ॥१७॥

[अपर-दिग्-विस्तीर्णः दीर्घ-मयूख-विषमः प्रभा-संघातः ।
रजो-निर्भरः इव दृश्यते काल-मुख-क्षिप्त-दिवस-कर्षण-मार्गः ॥ ]

---

1 ०र Ms. 2 भय० Ms. 3 ०वत्ताइं GB. 4 ०इं Ms.
5 ०म-प्प GB ; Ms also has the same reading mentioned marginally.

अपरस्यां पश्चिमायां दिशि विस्तीर्णः, दीर्घा ये मयूखास्तैर्विषमो नतोन्नतः प्रभासंघातः। कालस्य मुहूर्तादिलक्षणस्य मुखेनाकृष्टस्य क्षिप्तस्य दिवसकर्षणमार्गो रजोनिर्भर इव दृश्यते। दीर्घेण मयूखेन विषमोऽतिशयितः प्रभासंघातः सरजोभिः शोणितै रेणुभिः सुनिर्भरः पूर्णः कालस्यास्तसमयस्य मुखे क्षिप्तस्य दिवसस्य कर्षणमार्ग इव दृश्यत इति **लोकनाथः** ॥१७॥

## उद्धोवअन्त[1]-बिम्बे वेएण महिं व दिणअरम्मि अइगए।
## उच्छलिआअव-अ[F61a]म्बा सञ्झा-राअ-मिहिआ णहम्मि णिहित्ता ॥१८॥

**[ऊर्ध्वावपतद्-बिम्बे वेगेन महीं इव दिनकरे अतिगते।**
**उच्छलितातप-ताम्रा सन्ध्या-राग-मेघिका नभसि निहिता ॥ ]**

ऊर्ध्वादवपतद्बिम्बे दिनकरे वेगेन महीमतिगत इव महीपतनान्मूलादुच्छलितेनाश्रयं त्यक्त्वोद्गतेनातपेन ताम्रा सन्ध्यारागमेघिका नभसि निहिता। मेघिका अल्पमेघः ॥१८॥

## अत्थ-सिहरम्मि दीसइ मेरु-अडुग्घुट्ठ-कणअ-कद्दम-अम्बो।
## वलमाण-तुरिअ-रवि-रह-[2]वलिउट्ठिअ-धअवड[3] व्व सञ्झा-राओ ॥१९॥

**[अस्त-शिखरे दृश्यते मेरु-तटोद्घृष्ट-कनक-कर्दम-ताम्रः।**
**वलमान-त्वरित-रवि-रथ-वलितोत्थित-ध्वज-पट इव सन्ध्या-रागः ॥]**

[F61a] अस्तशिखरे सन्ध्यारागो मेरुतटोद्घृष्टेन कनककर्दमेन ताम्रो वलमानस्य अवाङ्मुखलम्बमानस्य त्वरितस्य रविरथस्य वलितस्त्वरावशात् पार्श्वद्वयपरिणाहशून्यो ध्वजपट इवास्तशिखरे दृश्यते ॥१९॥

---

1 °त्त° B. 2 °पडिउ° GB. 3 °डो GB.

विअसइ धवलाअम्बं गअ-रुहिरालिद्ध-केसरि-[1]सट-च्छाअं ।
पवणन्दोलण-चडुलं सञ्झा-रज्जन्त-केसरं [2]कुमुद-वणं ॥२०॥

[विकसति धवलाताम्रं गज-रुधिरालीढ-केसरि-सटा-च्छायम् ।
पवनान्दोलन-चटुलं सन्ध्या-रज्यमान-केसरं कुमुद-वनम् ॥ ]

सन्ध्यारज्यमानकेसरत्वाद् धवलाताम्रं गजरुधिरालिप्तकेसरिसटाच्छायं पवनान्दोलनेन चटुलं कुमुदवनं विकसति ॥२०॥

होइ अ पाअड-दीहा दर-वोच्छिज्जन्त-विसम-सञ्झा-राआ ।
ओधूसरिअ-दस-दिसा अवद्ध-तिमिरा दिणावसाण-च्छाआ ॥२१॥

[भवति च प्रकट-दीर्घा दर-व्यवच्छिद्यमान-विषम-सन्ध्या-रागा ।
अवधूसरित-दश-दिक् अबद्ध-तिमिरा दिनावसान-च्छाया ॥ ]

भवति च प्रकटदीर्घा ईषद्व्यवच्छिद्यमानविषमसन्ध्यारागा, अवधूसरितदशदिग्, अबद्धतिमिरा दिनावसानच्छाया कान्तिरातपाभावो वा । भवति च प्रकटदीर्घा दिवसस्य निःशेषहतत्वात् प्रकटा या रात्रेर्दिवसाच्च पृथगुपलभ्यमानेत्यर्थः । दीर्घा असंकुचिता इति **लो** ( लोकनाथः ) । **श्रीनिवासस्तु** भवत्यत्र प्रकटदीर्घाऽप्रकटा यथातपे तथा सन्ध्याया-मनुपलभ्यमाना दूरप्रसारणा च दीर्घा दिनावसानच्छाया इत्याह ॥२१॥

सञ्झाअव-मुच्चन्तं जलिअ-पसम्मन्त[3]-हुअवह-ट्ठाण-णिहं ।
दूरत्थमिअ-दिणअरं जाअं सव्वत्थ[4] सरिस-रूवं[5] गअणं ॥२२॥

[सन्ध्यातप-मुच्यमानं ज्वलित-प्रशाम्यद्धुतवह-स्थान-निभम् ।
दूरास्तमित-दिनकरं जातं सर्वत्र सदृश-रूपं गगनम् ॥ ]

---

1 ०सड० GB. 2 कुमुअ० GB. 3 पद्द० Ms. 4 संवत्त० GB., so has Ms marginally 5 ०रूअं GB.

सन्ध्यातपेन मुच्यमानं दूरास्तमितदिनकरमतएव ज्वलितप्रशाम्यन् हुतवहो यत्र तादृशस्थाननिभं सर्वत्र गगनं सदृशरूपं जातं तन्निभं तद्वच्छ्यामलमिति **कुलनाथः।** 'सम्वत्त' इति पाठे सम्वर्तः प्रलयस्तत्सदृशरूपं जातमिति **श्रीनिवासः** ॥२२॥

**सञ्झा-राअ-त्थइआ दर-संरूढन्धआर-कअ-परभाआ।**
**दिअस-च्छवि-परिसेसे झिज्जन्ते णिव्वडन्ति[1] दीवुज्जोआ ॥२३॥**

**[सन्ध्या-राग-स्थगिताः दर-संरूढान्धकार-कृत-परभागाः।**
**दिवस-च्छवि-परिशेषे क्षीयमाणे निर्वलन्ति दीपोद्योताः ॥ ]**

पूर्वं सन्ध्यारागेणास्तमिता इदानीमीषत् संरूढेनान्धकारेण, दरेभ्यः कन्दरेभ्यो वा संरूढेन, कृतः परभागः शोभातिशयो येषां ते, दीपोद्योता 'निव्वडन्ति' पृथगुपलभ्यन्ते निष्पन्ना भवन्तीति वा दिवसच्छविशेषे क्षीयमाणे ॥२३॥

**विहडन्त-[2]पेम्म-णिअलं उहअ-अड[3]-ट्ठिअ-मिलन्त-दिट्ठि-रइ-सुहं।**
**अवसं चक्काअ-जुअं हुंकाराअत्त-जीविअं वोच्छिण्णं ॥२४॥**

**[विघटमान-प्रेम-निगडं उभय-तट-स्थित-मिलद्-दृष्टि-रति-सुखम्।**
**अवशं चक्रवाक-युगं हुंकारायत्त-जीवितं व्यवच्छिन्नम् ॥ ]**

विघटमानः स्वकार्याक्षमीभवन् प्रेमरूपो निगडो यस्य। दिवसे परस्परबन्धजनकतया प्रेम्णो यन्निगडत्वमासीद् इदानीं समयमहिम्ना तस्याकिञ्चित्करत्वं जातमित्यर्थः। प्रेमभावारब्धालिङ्गनादिव्यापार इति **कुलनाथः।** विशेषेण घटमानो राग एव निगडो यस्येति **श्रीनिवासः।** उभयतटस्थितमतोऽनासन्नत्वादन्धकारहतत्वाच्च मीलन्मन्दीभवद् दृष्टिजन्यं रतिसुखं यस्य ईदृशञ्चेति तत्तथा अन्धकारदूरीकृतपरस्परालोकनसुखमित्यर्थः। यद्वा, उभय-

---

1 ०लन्ति GB. 2 ०राअ० GB. 3 ०तड० Ms.

तटस्थिता सती मिलन्ती परस्पराधिष्ठित[1]तटादस्खलन्ती दृष्टिरेव रतिसुखं यस्य, तादृश्या दृष्टेरेव रतिसुखस्य लाभात्। अवशमात्मनोऽनधीनं दैवमात्राधीनमित्यर्थः। हूंकारायत्त-जीवितं परस्परहूंकारश्रवणादेव जीवनादु[2]ज्जीवितमित्यर्थः। चक्रवाक-युगलं विच्छिन्नं विच्छेदप्राप्तम्। अन्धकारस्यानतिप्रौढत्वान् मिलद् दृष्टिरतिसुखं यस्येति **कुलनाथः** ॥२४॥

[F61b] ताव अ तमाल-कसणो कञ्चण-कडअं व बहल-सञ्झा-राअं।
[3]पडिपेल्लिऊण व[4] तमो हिअ-कद्दम-सुर-गइन्द-णिहसो व्व ठिओ ॥२५॥

**[तावत् च तमाल-कृष्णः काञ्चन-कटकं इव बहल-सन्ध्या-रागम्।**
**प्रतिप्रेर्य एव तमः हृत-कर्दम-सुर-गजेन्द्र-निकषः इव स्थितम्॥ ]**

[F61b] यावदेव सन्ध्याकालोचिता निष्पत्तिः स्यात्तावच्च तमालकृष्णं तमः काञ्चन-कटकमिव बहलसन्ध्यारागं प्रतिप्रेर्यैव क्षिप्त्वैव, पक्षे गात्रघर्षणेन निपात्य, हृतो गात्रेण गृहीतः कर्दमो येन, एवंभूतस्य सुरगजस्य निकषः प्रतिकृतिरिव स्थितम्। निकषः कर्दमालेपनं गात्रघर्षणमिति **कुलनाथः**। गात्रनिघर्षस्थानमिति **श्रीनिवासः**। उपमोत्प्रेक्षा-सङ्करः ॥२५॥

आसण्णम्मि पविरलं बहलं थोअन्तरम्मि दूरम्मि घणं।
ओलुग्ग[5]-दिट्ठि-पसरं सव्वत्थ सम-ट्ठिअम्पि दीसइ तिमिरं ॥२६॥

**[आसन्ने प्रविरलं बहलं स्तोकान्तरे दूरे घनम्।**
**अवरुग्ण-दृष्टि-प्रसरं सर्वत्र सम-स्थितं अपि दृश्यते तिमिरम्॥ ]**

---

1 °तथाद° Ms. 2 °तज्जी° Ms. 3 परि° GB.
4 अ GB. 5 ओभग्ग° GB.

अवरुग्णदृष्टिप्रसरं सर्वत्र समतया स्थितमपि तिमिरासन्ने प्रविरलं तत्तद्धर्मवत्तया वस्तूनामुपलभ्यमानत्वात्। स्तोकान्तरे बहलमीषद्विरलं स्थाणुर्वा पुरुषो वेति सन्देहाधायकत्वात्। दूरे घनं वस्तुमात्राणामेव दृष्टेरविषयत्वात्तिमिरं दृश्यते ॥२६॥

घण-विडव-ट्ठिअ-तिमिरा तिमिरालिद्ध-मउलेन्त[1]-मुद्ध-किस-लआ।

किसलअ-णिसण्ण-कुसुमा कुसुमामोएण[2] णवर णज्जन्ति दुमा ॥२७॥

[घन-विटप-स्थित-तिमिराः तिमिरालीढ-मुकुलायमान-(मलिनायमान)-मुग्ध-किसलयाः।

**किसलय-निषन्न-कुसुमाः कुसुमामोदेन केवलं ज्ञायन्ते द्रुमाः ॥]**

कुसुमामोदेन केवलं ज्ञायन्ते द्रुमाश्चम्पकादयः। अन्धतमसैरपि आमोदस्यानुपहतत्वादिति भावः। विटपैः कुतो न ज्ञायन्त इत्याह घनं सद्विटपे स्थितं तिमिरं येषाम्, एवं किसलयैरपि न ज्ञायन्त इत्याह तिमिरैरालिह्यमानाः सन्तः मलिनास्तिमिरतुल्यरूपाश्च मुग्धाः किसलया येषाम्। कुसुमैः कुतो न ज्ञायन्त इत्याह किसलयेष्वर्थात्तमःकवलितेषु निषण्णानि कुसुमानि येषाम्। तिमिरेणालिद्धानि लिप्तानि मलिनायमानानि मुग्धकिसलयानि येषामिति **कुलनाथः** ॥२७॥

मेलविअ-सव्व-दिशं आसण्णम्मि वि पणट्ठ-णअणालोअं।

सूएअव्व-महिअलं जाअं सूर-[3]पडणाणुरूअं तिमिरं ॥२८॥

**[मेलित-सर्व-दिक् आसन्ने अपि प्रनष्ट-नयनालोकम्।**

**सूचयितव्य-महीतलं जातं सूर्य-पतनानुरूपं तिमिरम् ॥]**

---

1 ०मइलन्त० GB. 2 ०लोएण Ms. 3 ०वडणा० GB.

मिलिता अविभाव्यप्राच्याद्युपाधितयैकतां प्रापिताः सर्वा दिशो येन। आसन्नेऽपि प्रकर्षेण नष्टो नयनालोको यस्मात्। सूचयितव्यं पादार्पणमात्र[1]गन्तव्यं गतिस्खलनविभाव्यमाननतोन्नतं वा महीतलं यत्र, ईदृशं सूरस्य[2] आदित्यस्य पतनानुरूपं जातम्। सूर्यस्तावद्दिशां प्राच्यादिव्यवहारस्य बीजं, नयनालोकस्य विधायकः, पृथिव्यादिप्रकाशकोऽधुना तद्वैरिणा तिमिरेण तद्विपरीताचरणात्तत्पतनानुरूपं कृतमिति भावः। अथ च सूरस्य वीरपुरुषस्य रक्षितुः पतनेऽपि भग्नसैन्यस्य सर्वासु दिक्षु मिलनं, त्रासेन निकटस्थस्याप्यदर्शनं, गति-स्खलनेन पृथिव्या नतोन्नतविभावनञ्च भवतीति सूचितम् ॥२८॥

[3]ओक्खण्डेअव्व-दढो पसरइ [4]उक्खिप्पिअव्व-बहलुग्घाओ।
अवलम्बिअव्व-जोग्गो ससिणा भेत्तव्व-संघओ तम-णिवहो ॥२९॥

[अवखण्डयितव्य-दृढः प्रसरति उत्क्षेप्तव्य-बहलोद्घातः।
अवलम्बितव्य-योग्यः शशिना भेत्तव्य-संहतः तमो-निवहः ॥ ]

अवखण्डयितव्यं यत् काष्ठादि तद्वत् दृढः[5]। उत्खनितव्यं यत् [6]पृथिव्यादि तद्वद्बहल उद्घात उपक्रमो यस्य। उत्क्षेप्तव्य इव बहलोद्घातो यस्येति **कुलनाथः**। अवलम्बितमवलम्बनं तद्योग्यः। यद्वा, अवलम्बितव्यं यत् भित्त्यादि तद्वत् योग्यस्तत्कार्यनिर्वाहकः शशिना भेत्तव्यं भेदनार्हं संहतं मिलनं यस्य, ईदृशस्तमोनिवहः प्रसरति। यद्वा, शशिना यद्भेत्तव्यं तदर्थमिव संहतः पुञ्जीभूतः शशिभेदनभयादिव पुञ्जीभूत इत्यर्थः ॥२९॥

वहइ व महि-अल-भरिओ णोल्लेइ व [7]मग्गओ धरेइ व पुरओ।
पेल्लेइ व पास-गओ गरुआइ व [8]उअरि-संठिओ तम-णिवहो ॥३०॥

---

1 ०गव्यं Ms. 2 सु० Ms. 3 ओखण्डि० Ms; but the reading makes the metre defective. 4 उक्खम्भिअव्व० GB. 5 दृढं Ms. 6 तत् Ms. 7 पच्छओ GB. 8 ०उवरि० GB.

[वहति इव महीतल-भृतः नोदयति इव मार्गतः धारयति इव पुरतः।
प्रेरयति इव पार्श्व-गतः गुरुकायते इव उपरि-संस्थितः तमो-निवहः॥]

महीतले भृतः सन्नदीप्रवाहादिवद्वहतीव। जलौघस्तृणादिकमिव लोकं वहतीति **कुलनाथः**। मार्गतः पश्चात् प्रेरयतीव अर्थाल्लोकम्। पुरतो धावतीव। पार्श्वगतः प्रेरयतीव। उपरिस्थितो गुरुकायत इव तमोनिवहः। एतेन सर्वत एकान्धकारस्य नैविड्यमुक्तम् ॥३०॥

दीसइ अ तिमिर-मिलिओ कसण-शिला-भिण्ण-सलिल-सीभर-
धवलो।
थोउम्मिल्लन्त-दिसो उअअन्तरिअ-तणुओ ससि-अरुज्जोओ ॥३१॥

[दृश्यते च तिमिर-मिलितः कृष्ण-शिला-भिन्न-सलिल-शीकर-धवलः।
स्तोकोन्मीलद्दिक् उदयान्तरित-तनुकः शशि-करोद्योतः॥ ]

उदयान्तरितत्वात्तनुकोऽप्रौढः। अतएव स्तोकमुन्मीलन्त्यो दिशो यस्मात्। अप्रौढत्वादेव तिमिरैर्मिलितो नतु तन्नाशे शक्त इति भावः। तिमिरमिलितत्वादेव कृष्णशिलाभिन्नसलिलशीकरधवलः शशिकराणामुद्योतः प्रभा दृश्यते। अत्र तिमिरमिलित इत्यनेन यावद्विपक्षोन्मूलने न शक्तस्तावदनुप्रवेशेन स्थातव्यमिति नीतिः सूचिता। कृष्णशिलाभित्तिरिव तिमिरं जलकणनिकर इव चलन् शशिकरोद्घात इति **कुलनाथः** ॥३१॥

दीसइ जुअक्खअम्मि व महि-अल-पर-भाअ-स[F62a]सि-अरा
हअ-तिमिरा।
णिव्वडिअ-धूम-हुअवह-डज्झन्त-समुद्द-सण्णिहा पुव्व-दिसा ॥३२॥

[दृश्यते युग-क्षये इव महीतल-पर-भाग-शशि-कराहत-तिमिरा।
निर्वलित-धूम-हुतवह-दह्यमान-समुद्र-सन्निभा पूर्व-दिक्॥ ]

[F62a] महीतलस्य परस्मिन् भागे एकदेशे शशिकरेणाहतं तिमिरं यस्यां सा तथा पूर्वदिक्। युगक्षय इव निर्वलितो निर्वटितो वा पृथग्भूतो धूमनिवहो यस्मात् तादृशेन हुतवहेन दह्यमानो यः समुद्रस्तन्निभा दृश्यते। महीतलस्योपरिभागे शशिकराहततिमिरा-दर्शनात्। अन्यत्र तमसः सद्भाव एवेति धूमबाहुल्यं प्रतिपादितं, दह्यमानसमुद्रसन्निभा चेदतएव युगक्षय इवातो नैकतरवैयर्थ्यमिति **केचित्** ॥३२॥

**णवरि अ अच्छालोआ उअअ-गिरि-क्खलिअ-बहल-जोण्हा-णिवहा।**
**जाआ पणट्ठ-तिमिरा [1]मुद्ध-मिअङ्क-परिपण्डुरा[2] पुव्व-दिसा ॥३३॥**

**[अनन्तरं च अच्छालोका उदय-गिरि-स्खलित-बहल-ज्योत्स्ना-निवहा।**
**जाता प्रनष्ट-तिमिरा मुग्ध-मृगाङ्क-परिपाण्डुरा पूर्व-दिक् ॥ ]**

अनन्तरञ्च मुग्ध-मृगाङ्केण परिपाण्डुरा उदयगिरिस्खलितबहलज्योत्स्नानिवहा अतएव अच्छालोका अतः[3]प्रनष्टतिमिरा पूर्वदिग् जाता ॥३३॥

**णव-कमलोअर-अम्बं केसर-[4]सोमाल-सङ्गलन्त-मऊहं।**
**विरलेइ समासण्णं णीसेसेइ तिमिरं ण ता[5] ससि-बिम्बं ॥३४॥**

**[नव-कमलोदर-ताम्रं केसर-सुकुमार-संगलन्-मयूखम्।**
**विरलयति समासन्नं निःशेषयति तिमिरं न तावत् शशि-बिम्बम् ॥]**

समासन्नं तिमिरं शशिबिम्बं विरलयति न तावन्निःशेषयति सुकुमारमयूखत्वादिति भावः। कीदृशं शशि-बिम्बं नवकमलोदरवत्ताम्रं केसरवत् सुकुमाराः संगलन्तो मयूखा यस्य। मयूखानां केसरस्य साम्येन शोणतया चन्द्रस्य कमलाताम्रत्वं सूचितम् ॥३४॥

---

1 अद्ध० Ms, which has, however, मुद्ध marginally. 2 ०ला GB. 3 प्रणष्ट० Ms. 4 ०सोमार० G ; सउमार B. 5 आ Ms.

तो उअअ-सिहर-मिलिअ जाअं [1]उग्घुट्ट-तिमिर-धवल-च्छाअं।
इअ-हुत्त-ट्ठिअ-सुर-गअ-दन्त-च्छेअ-परिमण्डलं ससि-
बिम्बं ॥३५॥

[ततः उदय-शिखर-मिलितं जातं उद्घृष्ट-तिमिर-धवल-च्छायम्।
इतोऽभिमुख-स्थित-सुर-गज-दन्त-च्छेद-परिमण्डलं शशि-बिम्बम्॥

ततः शोणतया चन्द्रोदयानन्तरमुदयशिखरमिलितमुत्प्रोञ्छिततिमिरधवलच्छायमितोऽभिमुखस्थितस्य सुरगजस्य दन्तच्छेदवच्छिन्नदन्तवत् परिमण्डलं वर्तुलं जातम्। एतेन उदयपर्वतस्य सुरगजसाम्यं कथितम्। सुरश्चासौ गजश्चेति सुरगजो गणेश इति **श्रीनिवासः**। 'उग्घुट्ठ' इति पाठे उद्घृष्टतिमिर इत्यर्थः ॥३५॥

णवरि अ ससि-अर-णिसुढिअ-[2]विरलाइअ-तिमिर-कलुस-
तारा-णिअरं[3]।
जाअं बहु-कुसुमोत्थअ-सिला-अलाआर-सण्णिहं गअण-
अलं ॥३६॥

[अनन्तरं च शशि-कर-निपातित-विरलायित-तिमिर-कलुष-तारा-निकरम्।
जातं बहु-कुसुमावस्तृत-शिला-तलाकार-सन्निभं गगन-तलम्॥]

ईदृशचन्द्रोदयानन्तरं शशिकरैर्निपातितं 'णिसुढिअं' आक्रम्य नाशितमतो विपलायितं तिमिरं यस्मादिति **कुलनाथः**। यद्विपलायितवत्तिमिरं तेन कलुषो मन्दप्रभस्ताराप्रकरो यत्रेदृशं गगनतलम्। बहुभिः कुसुमैरवस्तृतं यच्छिलातलं तदाकारसन्निभं जातम्। अत्र चन्द्रोदयात् प्रागेव गगनस्य प्रचुरतारामयत्वाद्बहुकुसुमावस्तृतशिलातुल्यत्वं चन्द्रोदये तु ताराणां विरलत्वात् तादृशशिलासाम्यं न स्यादिति पूर्वं बहुकुसुमावस्तृतशिलासन्निभं गगनतलं चन्द्रोदये सति शशिकरनिपातितपलायमानतिमिरकलुषताराप्रकरं जातमित्यर्थमकृत्वा **केचित्** समादधिरे। आकारपदं त्वधिकमेव यथा स्फटिकाकृतिनिर्मल इत्यादौ ॥३६॥

---

1 उप्पुसिअ० GB. 2 ०विवला० GB. 3 ०णिवहं GB.

[1]मासल-च्चिक्खिल्ल-णिहं हत्थ-ग्गेज्झं व मउलिअ[2]-दिसा-चक्कं ।
खत्तूण[3] व तम-णिवहं चन्दुज्जोएण [4]खउरिअं व णह-अलं ॥३७॥

[मांसल-कर्दम-निभं हस्त-ग्राह्यं इव मुकुलित-दिक्-चक्रम् ।
खनित्वा इव तमो-निवहं चन्द्रोद्द्योतेन आविलीकृतं इव नभस्-तलम् ॥]

मुकुलितं संकुचितं दिक्चक्रं यस्माद्, अतिनिविडत्वान् मांसलकर्दमनिभं हस्तेन ग्राह्यं ग्रहणार्हं तमोनिवहं खनित्वा अवदार्य । चन्द्रोद्द्योतेन गगनतलं 'खउरिअ' आविलीकृतं मिश्रकलुषीकृतमिति **कुलनाथः** । 'आअड्ढिअ'मिति पाठे आकृष्टमिवेत्यर्थः । चिक्खिलः कर्दमे देशी ॥३७॥

दर-मिलिअ-चन्द-किरणा दर-धुव्वन्त-[5]क्खउरिआलोआ ।
दर-पाअड-तणु-विडवा दर-बद्ध-च्छा[F62b]हि-मण्डला होन्ति
दुमा ॥३८॥

[दर-मिलित-चन्द्र-किरणाः दर-धाव्यमान-तिमिर-कलुषालोकाः ।
दर-प्रकट-तनु-विटपाः दर-बद्ध-च्छाया-मण्डलाः भवन्ति द्रुमाः ॥]

ईषन्मिलिताश्चन्द्रकिरणा येषु, अतएव ईषद्धाव्यमानतिमिरत्वात् पाण्डुरालोकाः, 'खउरिआ' इति पाठे मिश्रकलुषालोका इत्यर्थः । ईषत्प्रकटतनुविटपा ईषद्बद्धच्छाया-मण्डला भवन्ति द्रुमाः । अत्र मण्डलपदेन यथा यथा चन्द्रोत्थानं तथा तथा छायानां ह्रस्वतया वर्तुलाकारत्वं सूच्यते ॥३८॥

---

1 This verse is numbered 43 in GB. GB reads मंसल-चिक्खिल्ल०
2 मइ० GB. 3 खन्तू० GB. 4 Ms marginally has the reading आअड्ढि० for this word. 5 परिपण्डुरालोआ B.

होइ णह-लङ्घण-सहं जाअ-त्थाम-[1]किरणुक्खआहअ-तिमिरं।
विअलिअ-मुद्ध-सहावं[2] धवलाअन्त-जरढं[3] णिसाअर-बिम्बं ॥३९॥

[भवति नभो-लङ्घन-सहं जात-स्थाम-किरणोत्खाताहत-तिमिरम्।
विगलित-मुग्ध-स्वभावं धवलायमान-जरठं निशाकर-बिम्बम्॥]

[F62b] विगलितमुग्धस्वभावं जरठायमानधवलं यथा यथा परिपाकशालि तथा तथा धवलमित्यर्थः। जातस्थामभिः किरणैराहतान्युत्खातानि तिमिरानि येन, एवंभूतं शशिबिम्बं नभोलङ्घनसहं भवति। निशाकरबिम्बं विगलितमुग्धस्वभावं नवनृपतिरिव नभसो मण्डलस्येव लंघने सहं समर्थं भवति। मुग्धपदैरर्थान्तरसंक्रमितवाक्यैश्चन्द्रस्य वीरपुरुषत्वं तिमिरस्य शत्रुत्वं नभसः प्रतिपक्षनगरीत्वं किरणानाञ्च सहायत्वं व्यज्यते, वीरपुरुषस्यापि मुग्धस्वभावापायाद् बलवत्सहायमहिम्ना विपक्षमुत्खाय तत्परलंघनक्षमता भवति। सोऽपि[4] जरठायमानः प्राप्तयौवनः सन् धवलो वृषभ इव बलीयान् भवति। महोक्षतां वत्सतरः स्पृशन्निवेति धवलशब्दस्य महोक्षतावाचित्वम् ॥३९॥

तह-परिसंठिअ-सेलं [5]विच्छिण्ण-दिसं [6]तहुज्जुअ-णइ-प्पवहं।
खत्तूण[7] व [8]उक्किण्णं ससिणा [9]तम-सञ्चअं पुणो वि महिअलं ॥४०॥

[तथा-परिसंस्थित-शैलं विच्छिन्न-दिक् तथर्जुक-नदी-प्रवाहम्।
खनित्वा इव उत्कीर्णं शशिना तमः-सञ्चयं पुनः अपि महीतलम्॥]

शशिना तमःसञ्चयं खनित्वेव। यथा पूर्वं तथा परिसंस्थिताः शैला यत्र। एवं तमोजनितसंकोचाभावाद् विस्तीर्णा इव दिशो यत्र। तथा ऋजवो नदीप्रवाहा यत्र।

---

1 ०किरणाहउक्खअ० GB. 2 ०अं GB. 3 जरठाअन्त-धवलं GB. 4 सेवि Ms. 5 वित्थि० GB., so has Ms also marginally. 6 Ms marginally corrects it as जहु०. 7 खन्तू० GB. 8 Ms तक्खित्तं. 9 मत० Ms, evidently a mistake.

'जह उज्जुअ' इति **पाठे** यथा ऋजवो नदीप्रवाहा यत्र इत्यर्थः। एवं **यथा स्यात्तथा** महीतलमुत्कीर्णं, यथा कर्दमादि खनित्वा तन्मग्नानि वस्तूनि पुनस्तथैव दृश्यन्ते तद्वदधुना-पीतिभावः। अन्यथदि महीतलमभविष्यत् तदा रीतिरप्यन्याभविष्यत् तस्मात्तदेव महीतलं तमसि प्रोतं पुनरुत्कीर्णमिति **केचित्** ॥४०॥

## बहले[1] वि [2]तिमिर-णिवहे विव्वाहेऊण[3] सच्चविअ-रूवाओ ।
## अणुबन्धन्ति ससि-अरा घेत्तुं ण चअन्ति पाअव-
## च्छाआओ ॥४१॥

**[बहलान् अपि तिमिर-निवहान् पृथक् कृत्वा सत्यापित-रूपाः ।**
**अनुबध्नन्ति शशि-कराः ग्रहीतुं न शक्नुवन्ति पादप-च्छायाः ॥]**

बहलानपि तिमिर-निवहान् पृथक् कृत्वा उदयमात्रादेव दूरं नीत्वा। बहलेपि तमो-निवहे इत्यानादरे सप्तमी बहलमपि तमोनिवहमनादृत्य ताम्राः पादपच्छायाः 'णिव्वाहेऊण' पृथक् कृत्वेतिति **कुलनाथः**। सत्यापितरूपाः प्रकटरूपतया ग्रहणयोग्या अपि पादपच्छाया अर्थात्तिमिरादप्ययवीयसीः शशिकरा ग्रहीतुमनुबध्नन्ति प्रयत्नमाहरन्ति, पूर्वं तिमिरमग्नाः पश्चाद्भिन्नाः कृत्वा एतास्ताः प्राप्ता इति सत्यापितं दृष्टं रूपं यासां ताः शशिकरास्तमो-निग्रहे नियुक्ता ग्रहीतुमनुबध्नन्ति न शक्नुवन्तीत्याह **कुलनाथः** ॥४१॥

## णवर करालेइ ससी मुह-परिहट्टण-समूससन्त-दल-उभं ।
## अवडिक्खिएक्कमेक्का[4] विसअं फालेन्ति महुअर च्चिअ
## कुमुअं[5] ॥४२॥

**[केवलं करालयति शशी मुख-परिघट्टन-समुच्छ्वसद्-दल-पुटम् ।**
**अप्रतीक्षितैकैके विशदं पाटयन्ति मधुकराः एव कुमुदम् ॥ ]**

---

1 ०लम्मि GB. 2 तम० Ms also has this reading marginally, but in that case it should have corrected बहले to बहलम्मि 3 ०ले० GB. 4 ०च्छि० GB. 5 कुसुमं Ms, but it marginally indicates only ०मु० for ०सु० without correcting ०मं० into ०अं० also.

मुखे यत् परिघर्षणं करैरामर्दनं तेन समुच्छ्सद्दल-पुटं यथा स्यात्तथा केवलं शशी कुमुदं करालयति मुखे सावकाशं करोति। अल्पनिर्गम-मार्ग-लाभेन हर्षादप्रतीक्षितै-कैके[1]मधुकरा एवार्थात् कुमुदगर्भगता विशदं[2] विस्पष्टं यथा स्यात्तथा पाटयन्ति विकाश-यन्ति। यद्वा, मुखेनार्थाद्बहिःस्थितानां मधुकराणां वक्त्रेण यत् परिघर्षणं तेन समुच्छ्-सद्दलपुटं यथा स्यादित्यर्थः। एक्कक्कमशब्दोऽन्योन्यार्थे देशी ॥४२॥

**पुसिओ णु णिरवसेसं समअं थोर-कर-पेल्लिओ णु विराओ।**
**ओत्थइओ णु समत्तो ससिणा पीओ णु णिद्दअं तम-णिवहो ॥४३॥**

**[प्रोञ्छितः नु निरवशेषं समं स्थूल-कर-प्रेरितः नु विलीनः।**
**अवस्तृतः नु समाप्तः शशिना पीतः नु निर्दयं तमो-निवहः ॥ ]**

शशिना तमोनिवहः समेकदैवंरूपेण समाप्तो विनाशं नीत इव। तदेव रूपमाह निरवशेषं प्रोञ्छितो नु, स्थूलैः करैः प्रेरितो विलीनो विक्लवं गतो नु, निर्दयं पीतो नु। यद्वा, समस्तोऽवस्थगितो नु। अथवा, सम्यगात्तो गृहीतः सममेकदा पूर्वोक्तदशां नु प्रापित इत्यर्थः। नु शब्द इवार्थ इति **श्रीनिवासः**। अत्र प्रोञ्छितत्वेन कज्जलादिधर्मः, विलीनत्वेन भीतत्वं, अवस्थगितत्वेनावरणापायात् पुनः प्रादुर्भावयोग्यत्वं, पीतत्वेन च सलिल-धर्मः समाधीयत इत्युत्प्रेक्षा ॥४३॥

**भिण्ण-तम-दुद्दिणाइं विडवन्तर-विरल-पडिअ-चन्द-कराइं।**
**धोअ[3]-सुहालोआइं पअलन्ति[4]व मुद्ध-पल्लवाइ[5] वणाइं ॥४४॥**

**[भिन्न-तमो-दुर्दिनानि विटपान्तर-विरल-पतित-चन्द्रकराणि।**
**धौत-सुखालोकानि प्रगलन्ति इव मुग्ध-पल्लवानि वनानि ॥ ]**

भिन्नं तम एव दुर्दिनं येषु, येभ्य इति **लोकः**, तानि। तथा दुर्दिने धौतानीव सुखालोकान्यर्थाद् दुर्दिनेन। विटपान्तर-विरल-पतित-चन्द्रकराणि दुर्दिनलाभादिव

1 ०का Ms. 2 विष० Ms. 3 धोअ० GB. but this reading the Ms has shown marginally. 4 GB पअडन्ति. 5 ०इं Ms.

मुग्धाः प्रत्यग्रस्निग्धाः पल्लवा येषां तानि। वनानि प्रगलन्तीव। विरलपतितचन्द्रकर-व्याजाद् दुर्दिनधौतानीव गलन्तीत्यर्थः। अन्यदपि दुर्दिनधौतं वनं सुखालोकं स्निग्धपल्लवं सद् गलति। थोअ-मुहालोआइं इति पाठः **श्रीनिवासमते**। चन्द्रस्य ऊर्ध्वोत्थितत्वाज् जालान्तरप्रविष्टमयूखा निर्गता इति **केचित्** ॥४४॥

परिमलि[F63a]अ-दुम-कुसुमा उअहुत्त-दिसा-गइन्द-मअ-णी-सन्दा।
णिव्विट्ठ-पङ्कअ-वणा ओवग्गन्ति कुमुओअराइ महुअरा ॥४५॥

**[परिमृदित-द्रुम-कुसुमाः उपभुक्त-दिग्गजेन्द्र-मद-निस्यन्दाः।**
**निर्विष्ट-पङ्कज-वनाः अवबल्गन्ति कुमुदोदराणि मधुकराः॥]**

[F63a] परिमृदितं द्रुमाणां शाखावतां। द्रमस्य पारिजातस्य वा पाठान्तरे। आतवं कुसुमं यैः। उपभुक्तदिग्गजेन्द्रमदनिस्यन्दाः। [1]निर्विष्टमुपभुक्तं पङ्कजवनं यैस्ते मधुकराः कुमुदोदराण्याक्रामन्ति कुमुदमधुनां नवनवतया ततोऽपि प्रीतिकारित्वादिति भावः। **केचित्** तु रावणाधिष्ठानात् षडेव ऋतव एवं दिग्गजाः सदाविकस्वराणि कमलानि तत्र सन्ति तदुपभोगात्तृप्ता अपि भ्रमरा रावणप्रीतये कुमुदं सेवन्त इति तस्य महिमातिशयः कथ्यत इत्यर्थः ॥४५॥

होइ णिराअवलम्बो[2] गवक्ख-वडिओ[3] दिसा-गअस्स व ससिणो।
कसण-मणि-कुट्टिम-अले गेण्हन्तो सर-जलं व कर-पब्भारो ॥४६॥

**[भवति निरायत-लम्बः गवाक्ष-पतितः दिग्गजस्य इव शशिनः।**
**कृष्ण-मणि-कुट्टिम-तले गृह्णन् सरोजलं इव कर-प्राग्भारः॥]**

---

1 Ms wrongly reads निर्वेष्ट०  2 णिराअअ० GB.  3 ०पडिओ GB; Ms has wrongly गवत्त०.

दिग्गजस्येव शशिनः कराणां रश्मीनां प्राग्भारोऽग्रदेशः शुण्डाग्रभागश्च। कृष्णमणिकुट्टिमतले गवाक्षपतितः सन् सरोजलं गृह्णन्निव निरायतः सन् प्रलम्बो लम्बमानो भवति। एतेन कृष्णमणिकुट्टिमप्रभायाः स्वच्छतया सरोजल-साम्यमुक्तम् ॥४६॥

दीसन्ति गअ-उल-णिहे ससि-धवल-मइन्द-विद्दुए तम-णिवहे।
भवण-च्छाहि-समूहा दीहा णीसरिअ-कद्दम-पअ-च्छाआ ॥४७॥

**[दृश्यन्ते गज-कुलनिभे शशि-धवल-मृगेन्द्र-विद्रुते तमो-निवहे।**
**भवन-च्छाया-समूहाः दीर्घाः निःसृत-कर्दम-पद-च्छायाः ॥]**

गजकुलनिभे तमोनिवहे। परनिपातान्मृगेन्द्रधवलेन शशिना विद्रुते सति। दीर्घा भवनच्छाया-समूहा निःसृतः कर्दमो येषु, एवं भूतानां पदानां पदचिह्नानामिव छाया शोभा येषामिदृशा दृश्यन्त। अत्र धर्मयोरेकतरनिर्देशेऽन्यसम्बित्साहचर्यादिति धवलत्व-साहचर्याचन्द्रस्य वशीकृतमृगत्वमप्यायातीति। **केचित्** धवलपदानर्थक्यभयेन 'जरढमइन्द' इति पठन्ति ॥४७॥

तंसुण्णमन्तबिम्बो जालन्तर-णिग्गओ सरन्त-मऊहो।
भिण्ण-विवरन्धआरो भग्ग-च्छाहि-पसरो व लग्गइ [1]चन्दो ॥४८॥

**[तिर्यगुन्नमद्-बिम्बो जालान्तर-निर्गतापसरन्-मयूखः।**
**भिन्न-विवरान्धकारः भग्न-च्छाया-प्रसरः इव लगति चन्द्रः ॥]**

तिर्यगुन्नमद्बिम्बः सन् चन्द्रो विलगति नभो मध्यमारोहति। तदारोहणादेव जालान्तराद्-गवाक्षान्निर्गताः सन्तोऽपसरन्तो मयूखा यस्य। चन्द्रस्य प्रादुर्भावात्तदवष्टम्भेन पूर्वं जालान्तरेण प्रविश्य विपक्षभूतं गृहमध्यान्धकारं मयूखा दूरीकृतवन्तः, इदानीं चन्द्रस्य दूरारोहणेनान्धकारतो लंघनभयादिव मयूखा अपसरन्तीत्युत्प्रेक्षा। भिन्न-विवरान्धकारः पूर्वमुदयशिखरारूढे च[2]शशिनि विवरे मयूखाप्रसरणादन्धकारस्तत्र लीन आसीद्, अधुना नभोमध्यमारूढे

1 विल० GB ; Com. also reads विलगति. 2 Ms has 'न' in place of 'च'.

तस्मिन् विवरेऽपि मयूखसञ्चरणात् स दूरीभूत इत्यर्थः। भग्नश्छायायाः प्रसरो दैर्घ्यं येन तादृशः, यथा यथा नभोमध्यमारोहति तथा तथा च्छायायाः खर्वीभावात् ॥४८॥

**विच्छड्डिअ-चुण्ण[1]णिहा आवीअंसुअ-विसेसिअच्छ[2]-च्छाआ ।**
**विअड-गवक्खोवइआ[3] दीवुज्जोअ-मिलिआ किलिम्मइ जोण्हा ॥४९॥**

**[विच्छर्दित-चूर्णनिभाः आपीतांशु विशेषिताच्छ-च्छाया ।**
**विकट-गवाक्षावपतिता दीपोद्योतमिलिता क्लाम्यति ज्योत्स्ना ॥]**

विकटेन विशालेन गवाक्षेणावपतिता ज्योत्स्ना। आपीतेनांशुनाऽर्थात् प्रदीपकिरणेनाविशेषिता सदृशिता अच्छा च्छाया यस्याः। **कुलनाथ श्रीनिवासौ** तु आपीतांशुकेन विशेषिता सदृशीकृता छाया यस्येति व्याचक्षाते। अतएव मन्दप्रभत्वाद् विच्छर्दितं त्यक्तं विकीर्णमिति यावदीदृशं यच्चूर्णं पटवासादि तन्निभा क्लाम्यति मन्दीभवति। पूर्वं चन्द्रस्य दर्शनात् प्रदीपप्रभाया न प्रादुर्भाव आसीद्, अधुना दूरारूढे तस्मिन् लब्धस्थाम्ना[4]दीपोद्योतेन गवाक्षवर्त्मना सुरङ्गेनेव गृहं प्रविष्टाया ज्योत्स्नाया लंघनमुचितमेवेति भावः। **कुलनाथस्तु** दुर्गवर्त्मावतरणश्रान्ता कोमलप्रकृतिर्युवतिरिव परपुरुषसंपर्केण क्लाम्यतीवेत्याह ॥४९॥

**परिणाम-दरुम्मिल्लं[5] ओवत्तेअव्व-बहल-जोण्हा-भरिअं ।**
**थोअ-थोअ[6]-मउ इअं[7] भर-वित्थारिअ-दलं व[8] वेवइ कुमु [F63b] अं ॥५०॥**

**[परिणाम-दरोन्मीलितं अपवर्तयितव्य-बहल-ज्योत्स्ना-भृतम् ।**
**स्तोक-स्तोक-मृदूकृतं भर-विस्तारित-दलं इव वेपते कुमुदम् ॥]**

---

1 ०चुरण० Ms. 2 ०विसेसिअब्भ० GB. 3 ०त्तोव० Ms.
4 ०स्थामा Ms, 5 The reading in the Ms looks live ०दरुम्भिरणं.
6 ०थोर Ms. 7 ०मउलिअ GB. 8 ०लम्ब Ms.

परिणामेन दिनान्तरविकरखरतया[1] गलितयौवनत्वेन ईषदुन्मीलितम्, अपवर्तयितव्यया न्युब्जीकरणायोग्यया बहलज्योत्स्नया भृतं, स्तोकस्तोकमृदूकृतं कर्कशत्वादिन्द्वादिकिरणेनापि नवकुमुदमिव न झटिति मृदूकृतमित्यर्थः। ईदृशं कुमुद' भरेणार्थात् कौमुदीनां विस्तारित-दलमिव वेपते चन्द्रिकाभरादिव कम्पत इति भावः। परिणामेन निष्पन्नया दरोन्मीलित मीषद्विकसितमिति **कुलनाथः** ॥५०॥

**पवणाअम्पिअ-सिहरा गओणिअत्तन्त-विडव-विहुअ-च्छाआ।**
**किरण-परिक्खिप्पन्ता[2] जोण्हा-वेअ-वडिआ[3] पवन्ति व**
**रुक्खा ॥५१॥**

**[पवनाकम्पित-शिखराः गतापनिवर्तमान-विटप-विधूत-च्छायाः।**
**किरण-परिक्षिप्यमाणाः ज्योत्स्ना-वेग-पतिताः प्लवन्ते इव वृक्षाः]**

[F63b] पवनाकम्पितशिखरत्वाद् गतागतं कुर्वाणा विटपा येषां गतापनिवृत्तविट-पतया विधुता छाया येषां, शशिकरैः परिक्षिप्यमाणा वेष्ट्यमाना वृक्षा ज्योत्स्नाया नद्या इव वेगपतिताः प्लवन्त इव। अन्योऽपि नद्यां प्लवमानः कम्पितशिराः करचरणादिचालनेन विधुतप्रतिबिम्बो दयालुभिर्वेष्ट्यमानो भवति। यद्वा, प्रतिपक्षभूतच्छायापरित्रायकत्वा-च्छशिकरैः परिक्षिप्यमाणाः कुलप्रासौ निराक्रियमाणा इत्यर्थः ॥५१॥

**घर-मणि-मऊह-भिण्णो सलिलाहअ-बहल-चन्दण-रस-च्छाओ।**
**उद्देसुल्लालिअ-तमो दीसइ विवर-विसमो व्व जोण्हा-णिवहो ॥५२॥**

**[गृह-मणि-मयूख-भिन्नः सलिलाहत-बहल-चन्दन-रस-च्छायः।**
**उद्देशोल्ललित-तमः दृश्यते विवर-विषमः इव ज्योत्स्ना-निवहः ॥]**

गृहमणीनां प्रदीपादीनां मयूखैरर्थाद् गवाक्षपथेन बहिर्निर्गतवरैर्भिन्नोऽन्तरान्तरा विच्छिन्नो ज्योत्स्नानिवह एवं दृश्यते। तदेवाह सलिलाहतस्य बहुलचन्दनरसस्येव छाया यस्य, तथा

---

1 ॰रविकख॰ Ms. 2 ससि-किरण-परिक्खित्ता GB. 3 ॰वलिआ Ms.

उद्देशेषु मणिस्थानेषु उज्ज्वलित इव उत्पाटित इव गृहस्थनीलमण्यादिरिति **कुलनाथः**। वस्तुतस्तु दीप एवार्थः, तथा च **हारावली** "दशेन्धनो गृहमणिः स्नेहाशः कज्जलध्वजः" ॥५२॥

**विअलिअ-णिअअ-च्छाअं जाअं जोण्हा-परिप्पवन्त-मिअङ्कं।**
**विच्छूढव्व[1]-मऊहं अविहाविअ[2]-सण्ह[3]-तारअं गअण-अलं ॥५३॥**

**[विगलित-निजक-च्छायं जातं ज्योत्स्ना-परिप्लवमान-मृगाङ्कम्।**
**विक्षेप्तव्य-मयूखं अविभावित-श्लक्ष्ण-तारकं गगन-तलम्॥ ]**

ज्योत्स्नया धवलितत्वाद् विगलिता निजका कृष्णा छाया यस्य, ज्योत्स्नायां सरितीव प्लवमानो मृगाङ्को यत्र, घनत्वाद् विक्षेपयोग्या मयूखा यत्र, अविभाविताः सूक्ष्मास्तारका यत्र तत्तथाभूतं गगनतलं जातं श्लक्ष्णतारकं वा। विशेषेण वोढको मयूखो यत्र इति **केचित्** ॥५३॥

**णिव्वडिअ-तुङ्ग-सिहरा धवला दीसन्ति दिट्ठ-महि-अल-बन्धा।**
**णह-मज्झ-ट्ठिअ-[4]ससि-अर-वोच्छिण्ण-च्छाहि-मण्डला धरणि-**
**हरा ॥५४॥**

**[निर्वलित-तुङ्ग-शिखराः धवलाः दृश्यन्ते दृष्ट-मही-तल-बन्धाः।**
**नभो-मध्य-स्थित-शशि-कर-व्यवच्छिन्न-च्छाया-मण्डलाः धरणीधराः॥]**

निर्वलितानि[5] पृथग्भूतानि पृथग्दृश्यमानानि तुङ्गानि शिखराणि येषां पूर्वमन्धकारपिहितानां तेषां ज्योत्स्नायां व्यक्तदर्शनत्वाद् धवला अपगतश्यामरूपा इत्यर्थः। दृष्टो महीतलबन्धो मूलभागो येषां, नभोमध्यस्थितस्य शशिनः करैर्व्यवच्छिन्ना खर्वीकृता अतएव मण्डलाकारा छाया येषां, व्यवच्छिन्नमपनीतं छायामण्डलं येषामिति **कुलनाथः** ॥५४॥

---

1 विच्छूढव्व° Ms. 2 °भावि° GB. 3 सण्ण° Ms.
4 °ससहर° GB 5 निर्वटि Ms.

विवरं ति[1] परिहरिज्जइ बहल-दुम-च्छाहि-मण्डलागअ-तिमिरं ।
ओच्छुन्दइ[2] वीसत्थं जोण्हा-णिवह-भरिअं थलं मिव[3] विवरं ॥५५॥

[विवरं इति परिह्रियते बहल-द्रुम-च्छाया-मण्डलागत-तिमिरम् ।
अवाक्रम्यते विस्रब्धं ज्योत्स्ना-निवह-भृतं स्थलं इव विवरम् ॥ ]

बहलद्रुमच्छायामण्डलागतं तिमिरं विवरमिति परिह्रियते द्रुमच्छायानां ज्योत्स्ना-सम्बलितत्वात् क्वापि तन्मध्यगतं तिमिरं विवरभ्रान्त्या त्यज्यत इत्यर्थः । ज्योत्स्नानिवहभृतं स्थलमिव विश्वस्तमवक्षोभ्यते स्थलभ्रान्त्या आक्रम्यत इत्यर्थः ॥५५॥

इअ वम्मह-जग्गाविअ-तीर-विसूरन्त-णिव्वडिअ[4]-चक्काए ।
जाअम्मि मउलिउप्पल-दु[F64a]क्ख-पहुप्पन्त-महुअरम्मि पओसे ॥५६॥
वम्मह-परव्वसाइं रामागमण-परिवड्ढिआवेआइं ।
अहिलंघेन्ति[5] मुअन्ति अ रइ-वावारं विलासिणी-हिअआइं ॥५७॥

[इति मन्मथ-जागरित-तीर-खिद्यमान-निर्वेलित-चक्रवाके ।
जाते मुकुलितोत्पल-दुःख-प्रभवन्-मधुकरे प्रदोषे ॥
मन्मथ-परवशानि रामागमन-परिवर्धितावेगानि ।
अभिकाङ्क्षन्ति मुञ्चन्ति च रति-व्यापारं विलासिनी-हृदयानि ॥]

इत्युक्तप्रकारेण मन्मथेन जागरितास्तीरयोः पृथग्भूताः सन्तः खिद्यमानाश्चक्रवाका यत्र, मुकुलितेषूत्पलेषु दुःखेन प्रभवन्तः सम्भ्रान्तो मधुकरा यत्र तस्मिन् प्रदोषे जाते । उत्पलपदं पद्ममात्रे प्रयुज्यत इति 'सविकचोत्पलचक्षुषमैक्षत' इति **माघश्लोके** शब्दविद्याविशारदेन

---

1 ०न्ति Ms. 2 ०ज्जइ Ms. Cf. Hem VIII. 4. 160 ( आक्रम्=छुन्द् ). 3 ०लम्मि० Ms. 4 ०णिव्वलि० GB. 5 ०लक्खन्ति GB ; cf. Hem VIII· 4. 192. ( अहिलङ्घ=काङ्क्ष ).

तट्टीकाकृता व्याख्यातम्। एतेन मधुकराणां संकटवासादपि यथा दुःखं, चक्रवाकादीनां पृथगवस्थानादपि तादृशमेव दुःखं जातमित्यर्थ इति प्रतिपादितम् ॥५६॥

विलासिनीनामर्थान्निशाचरीणां हृदयानि मन्मथपरवशानि चेदतो रतिव्यापारं 'अहिलंघेन्ति' काङ्क्षन्त्यभिनाटयन्ति गृह्णन्तीति **कुलनाथः**। कांक्षेराहाहिलंघेत्यादि **हेमचन्द्रः** (VIII. 4. 192)। रामागमनपरिवर्धितावेगानि चेदतस्तं मुञ्चन्ति च ॥५७॥

**लद्ध-गलन्तासाअं आवेअ-विहिण्ण[1]-वम्महूल्ललिअ-सुहं।**
**भिण्ण-[2]-घडिज्जन्त-रसं णावज्झइ दइअ-चुम्बणं जुअईणं[3] ५८॥**

[लब्ध-गलदास्वादं आवेग-विभिन्न-मन्मथोल्ललित-सुखम्।
भिन्न-घट्यमान-रसं न आबध्यते दयित-चुम्बनं युवतीनाम्॥]

कामवशाल्लब्धो भयवशाद्गलन्नास्वादोऽर्थाच्चुम्बनजनितो यत्र। आवेगेन विभिन्नमाक्रान्तं मन्मथेन चोल्ललितं व्यक्तीकृतं सुखं यत्र। यद्वा, आवेगेन विभिन्नेन मन्मथेनोल्ललितमस्थिरीकृतं सुखं यत्र। भिन्नोऽर्थादावेगेन दूरीकृतो यत्नाच्च घटमानो रसः शृङ्गारो यत्र। ईदृशं दयितचुम्बनं युवतीनां युवतीषु, सप्तम्यर्थे षष्ठी। न सम्यगाबध्यते हृदये न लगतीति **कुलनाथः** ॥५८॥

**वेवइ ससइ किलिम्मइ सअणे आमुअइ णीसहो अङ्गाइं।**
**ण विणज्जइ किं भीओ ओ मअण-परव्वसो विलासिणि-**
**सत्थो ॥५९॥**

[वेपते श्वसिति क्लाम्यति शयने आमुञ्चति निःसहः अङ्गानि।
न विज्ञायते किं भीतः उत मदन-परवशः विलासिनी-सार्थः॥]

वेपते श्वसिति क्लाम्यति शयने आमुञ्चति निःसहः सन्नङ्गानि। इत्थं भयमदनपरवशयोस्तुल्यावस्थत्वान्न विज्ञायते किं भीत उत मदनपरवशो विलासिनीसार्थः ॥५९॥

---

1 विभि० Ms. 2 छिण्ण० GB. 3 जुव० GB.

पिअअम-वच्छेसु वणे ओवइअ-दिसा-गइन्द-दन्तुल्लिहिए ।
वेवइ दट्ठूणचिरं सम्भारिअ[1]-समर-काअरो जुअइ-अणो[2] ॥६०॥

[प्रियतम-वक्षःसु व्रणान् अवपतित-दिग्-गजेन्द्र-दन्तोल्लिखितान् ।
वेपते दृष्ट्वा चिरं संस्मारित-समर-कातरः युवति-जनः ॥ ]

अवपतितस्य दिग्गजेन्द्रस्य दन्तैरुल्लिखितानुत्कीर्णान् व्रणान् प्रियतमवक्षःसु दृष्ट्वा संस्मारितेन समरेण कातरो युवतिजनो वेपते । इदानीमप्येतादृशः समरसंकटो भवतीति भीत इत्यर्थः । **कुलनाथस्तु** इदानीमपि व्रणा ईदृशा भविष्यन्तीति भीत इत्याह । सम्भाविते-नेति पाठे सम्भावितेनोत्प्रेक्षितेनेत्यर्थः ॥६०॥

सुरअ-सुहद्ध-मउलिअं भमर-दरक्कन्त-मालई-मउल-णिहं ।
साहइ समरुप्पेसं उप्पित्थुम्मिल्ल-तारअं णअण-जुअं ॥६१॥

[सुरत-सुखार्ध-मुकुलितं भ्रमर-दराक्रान्त-मालती-मुकुल-निभम् ।
शास्ति समरोत्पेषं उत्पित्सोन्मीलत्-तारकं नयन-युगम् ॥ ]

सुरतसुखेनार्धमुकुलितम्, ईषद्दृश्यमानतारकत्वाद् भ्रमरदराक्रान्तमालतीमुकुलनिभं भटानां तत्पत्नीनां वा नयनयुगं भयेनोद्विग्नोन्मीलिततारकं चेदतः समरोत्पेषं युद्धत्रासं कथयति । उत्पेषो हृदयपीडेति **केचित्** । समरोत्पेषं साधयति कथयति समरोत्पिष्टसुभटानामपीदृगेव नयनयुगं भवतीति शेषः ॥६१॥

अह ससि-जणिआमोए मअ-परिवड्ढिअ-पिआहिसारण-सोक्खे ।
[3]मअणुम्मूलिअ-माणे राअ-पराहीण-रइ-सुहम्मि पओसे ॥६२॥

---

1 Ms has this reading marginally, but its text reads सम्भावि० as in GB. 2 ०जणो GB. 3 अअणु० Ms.

वल[F64b]इ अदूमिअ-कुविओ अवसाइअ-हरिसिओ[1] अईइ
सरीरं।
ससइ [2]अउम्बिअ-सुहिओ मअ-पाअडिअ-हिअओ विलासिणि-
सत्थो ॥६३॥

[अथ शशि-जनितामोदे मद-परिवर्धित-प्रियाभिसारण-सौख्ये।
मदनोन्मूलित-माने राग-पराधीन-रति-सुखे प्रदोषे॥
वलते अदूनित-कुपितः अप्रसादित-हर्षितः आयाति शरीरम्।
श्वसिति अचुम्बित-सुखितः मद-प्रकटित-हृदयः विलासिनी-सार्थः॥]

इदानीं तस्मिन् मदनप्रसरभाजि प्रदोषे रामाशङ्काकृतमिश्ररसापगमात् प्रवृद्धमदनावस्थामाह। अथानन्तरं शशिना जनित आमोदो यत्र, मदेन परिवर्धितं प्रियाभिसारणसौख्यं यत्र, मदनेनोन्मूलितो मानो यत्र, रागपराधीनमन्योऽन्यानुरागायत्तं रतिसुखं यत्र तस्मिन् प्रदोषे विलासिनीसार्थो वलतीत्यादि वक्ष्यमाणस्कन्धकेन सम्बन्धः॥६२॥

[F64b] अदूनितोऽखेदितोऽपि कुपितः सन् वलते परांमुखीभवति, ततश्चाप्रसादितोऽपि हर्षितः सन् शरीरमुत्सङ्गमायाति मदनायासादकस्मात् कोपवैमुख्यमकस्माच्च प्रियतमोत्सङ्गं यातीत्यर्थः। अचुम्बितोऽपि सुखितः सन् श्वसिति सुखवशादिव श्वासं मुञ्चति। सर्वत्र मदप्रकटहृदयत्वमेव हेतुः। मदेन प्रकटितहृदयः प्रकाशिताशयो विलासिनीसार्थः। "सम्मोहानन्दसम्भेदो मदिरादिकृतो मदः" इति **कण्ठाभरणम्**॥६३॥

रोस-[3]पुसिआहराणं दइअ-बलामोडि[4]-चुम्बिअ[5]-परुण्णाणं।
णिव्वडिअ-मण्णु-गरुअं हरइ पराहुत्त-जम्पिअं जुअईणं॥६४॥

[रोष-प्रोञ्छिताधराणां दयित-बलात्कार-चुम्बित-प्ररुदितानाम्।
निर्वलित-मन्यु-गुरुकं हरति पराङ्मुख-जल्पितं युवतीनाम्॥]

---

1 °हिरिसिओ G. 2 अ चुम्बि° GB. 3 Ms has °प्फुसि° marginally 4 °लि° GB. 5 चुम्बण° GB.

रोषेण प्रोञ्छितोऽधरो नायकेन दत्तचुम्बनार्थमधरपदं याभिः। यद्वा, रोषेण प्रोञ्छितोऽर्थान्नायकचुम्बितो निजाधरो याभिः। पाठान्तरे रोषस्फुरिताधराभ्यामित्यर्थः। दयितस्य बलात्कारचुम्बितेन प्ररुदितानां युवतीनामर्थान्मानिनीनां 'णिव्वडिएण' पृथग्भूय प्रकाशमानेन मन्युनापराधकृतदुःखेन गुरुकं परांमुखजल्पितं हरति। मानिनीभिः पराङ्मुखीभूय भर्त्सनं यदुक्तं तदेव कान्तस्य मनो हरति किं पुनरालिङ्गनादिव्यापारः। हरति मनोहारि भवतीति **लोकनाथः**। बलात्कारे बलामोडिर्देशी ॥६४॥

**अहिसारणं ण गेण्हइ ण संठवेइ अलअं ण पुच्छइ दूइं ।**
**चन्दालोअ-पडिहओ वेवइ मूढ-हिअओ विलासिणि-सथो ॥६५॥**

**[अभिसारणं न गृह्णाति न संस्थापयति अलकं न पृच्छति दूतीम् ।**
**चन्द्रालोक-प्रतिहतः वेपते मूढ-हृदयः विलासिनी-सार्थः ॥]**

अन्धकारापगमाद् दूतीप्रेरणेनाप्यभिसारं न गृह्णातीति दूतीवचनावधीरणार्थं, न संस्थापयत्यलकं निष्फलबुद्धया न रचयति। यद्वा, पूर्ववद् दूतीविलोकनाय न यथास्थानं निवेशयतीत्यर्थ इति **केचित्**। कालातिक्रमदोषान्न पृच्छति दूतीं चन्द्रालोकेन प्रतिहतः किं कर्तव्यनिश्चयाभावान्मूढहृदयो विलासिनीसार्थोऽन्धकाराभिसारिकाजनः कामावेगाद्वेपते ॥६५॥

**[1]अवमण्णिअ-राम-कहं जहा-पुर-पअत्त[2]-जुअइ-जण-वावारं ।**
**सोहइ रअणिअराणं आसङ्घिअ-[3]दहमुहं पओसागमणं ॥६६॥**

**[अवमानित-राम-कथं यथा-पुरः-प्रवृत्त-युवती-जन-व्यापारम् ।**
**शोभते रजनिचराणां संभावित-दशमुखं प्रदोषागमनम् ॥ ]**

'आसंघिओ' आशाविषयीकृतो दशमुखो यत्र। आशंसित इति **केचित्** तत्तथा। अतोऽवमता[4] अवमानविषयीकृता रामकथा यत्र तत्कथावमाननादेव यथापुरःप्रवृत्तो युवती-

---

1 माणिअ० B. 2 ०पअट्ट० GB. 3 Cf. "संभावेरासङ्घ"० H.C VIII. 4. 35. 4 एवमता Ms.

जनस्य व्यापारो निशासमयोचितो यत्र । ईदृशं [1]प्रदोषागमनं रजनिचराणां शोभते प्रीतिमुत्पादयति रजनीचराणामित्युचितपदम् ॥६६॥

पिअ-पासाहि णिअत्तो समुहं अलिअं पिजं भणइ दुइ-अणो[2] ।
तं च्चिअ[3] कामिणि-सत्थो [4]दूम्मेन्तिं पि बहुसो णिअत्तेइ कहं ॥६७॥

[प्रिय-पार्श्वात् निवृत्तः संमुखं अलीकां अपि यां भणति दूती-जनः ।
तां एव कामिनी-सार्थः दुन्वतीं अपि बहुशः निवर्तयति कथाम् ॥]

प्रियपार्श्वान्निवृत्तो दूतीजनः सम्मुखमलीकामप्रियामपि यां भणति, तामेव कथां दुन्वतीमपि प्रतिपन्नप्रेमसूचनेन व्यथयन्तीमपि कामिनीसार्थो निवर्तयति पुनरप्युच्यतामित्यावर्तयति वल्लभनामसंकीर्तनादिति भावः । अतएव कामिनीसार्थ इति युक्तपदम् ॥६७॥

सअणेसु पणअ-कलहे समुह-णिसण्ण-पिअ-वेलविज्जन्तीहिं ।
परिअत्तिउं[5]ण चइअं णवरं णअणेसु विअलिअं बाह-जलं ॥६८॥

[शयनेषु प्रणय-कलहे संमुख-निषण्ण-प्रिय-व्यावर्त्यमानाभिः ।
परिवर्तितुं न शकितं केवलं नयनयोः विगलितं बाष्प-जलम् ॥]

शयनेषु प्रणयकलहे संमुखनिषण्णैः प्रियैर्व्याकुलीक्रियमाणाभिश्चुम्बननखाघातादिना खिद्यमानाभिरर्थान्मानिनीभिः परिवर्तितुं न शकितं संभोगप्रीत्यतिशयादिति भावः । यद्वा, यस्यामेव दिशि आभिमुख्यं गृह्यते तस्यामेव कान्तस्यापि सान्निध्यादिति भावः । केवलं नयनयोर्विगलितं बाष्पजलं बाष्पेणैव कोपः प्रकटित इति भावः । यथा **माघे** "रुदितंवदितमन्त्रं योषितां विग्रहेषु" । 'वेलविअ' व्याकुले खेदिते च देशी ॥६८॥

---

1 प्रदोष० Ms. 2 ०जणो GB. 3 च्चिअ Ms. 4 दूमेन्तिं पि GB ; दूम्मेअन्तिम्पि Ms. 5 परिव० GB.

अणुणअ-ख[F65a]ण-लद्ध-सुहे पुणो वि सम्भरिअ-मण्णु-दूमिअ-विहले ।
हिअए माणवईणं चिरेण पणअ-गरुओ पसम्मइ रोसो ॥६९॥

[अनुनय-क्षण-लब्ध-सुखे पुनः अपि संस्मृत-मन्यु-दूनित-विह्वले ।
हृदये मानवतीनां चिरेण प्रणय-गुरुकः प्रशाम्यति रोषः ॥ ]

[F65a] अनुनयेन क्षणं लब्धसुखे पुनरपि संस्मृतेन मन्युनाऽपराधेन दूनितविह्वले मानवतीनां हृदये रोषश्चिरेण प्रशाम्यति । चिरात् प्रशान्तौ हेतुमाह प्रणयेन प्रेम्णा गुरुकः प्राप्तप्रकर्षोऽतस्तत्कालमविनश्वर इति भावः ॥६९॥

अलअं [1]छिवइ विलक्खो पडिसारेइ वलअं जमेइ णिअत्थं[2] ।
मोहं आलवइ सहिं दइआलोअ-णडिओ विलासिणि-सत्थो ॥७०॥

[अलकं स्पृशति विलक्षः प्रतिसारयति वलयं यमयति निवसनम् ।
मोघं आलपति सखीं दयितालोक-नटितः विलासिनी-सार्थः ॥ ]

सांकेतिकं समयमतिक्रम्यागतस्य दयितस्यालोकेन दर्शनेन नटितस्त्यक्तप्रस्तुतव्यापार इत्यर्थः । नाटितः खेदित इति **केचित्** । अतएव समीहितकरणाद्विलक्षोऽलकं स्पृशति । प्रतिसारयति वलयं सुस्थितमपि चालयित्वा स्थानस्थं करोति दूरमुत्सारयतीति **केचित्** । यमितमपि निवसनं वस्त्रं 'जमेइ' संयमयति । मोघं निष्फलमालपति सखीं विलासिनीसार्थः । अत्रालकस्पर्शनादयो लज्जाख्यस्य व्यभिचारिभावस्यानुभावाः कान्तदर्शनेन जनितस्य निजोन्मादस्य [4]संधारणाय च सख्यालाप इति **केचित्** । 'णडिओ' व्याकुले देशी ॥७०॥

1 ०अञ्छि० Ms. 2 ०अं Ms. 3 ज० Ms.
4 सम्ब० Ms.

**अब्भुट्ठण-तुरिआणं सोहइ दइओवऊहण-विराआणं ।**
**असमत्त-मण्डणाणं तहेअ सअण-गमणं [1]विलासवईणं ॥७१॥**

**[अभ्युत्थान-त्वरितानां शोभते दयितोपगूहन-विरागाणाम् ।**
**असमाप्त-मण्डनानां तथा एव शयन-गमनं विलासवतीनाम् ॥ ]**

आगतस्य पत्युरभ्युत्थानत्वरितानां दयितोपगूहनेन स्त्यानघृतवत् 'विराआणं' विलीनानां द्रवतामापन्नानामिति **लोकनाथः**, विरागाणां विशिष्टरागाणामिति **श्रीनिवासः** । असमाप्त-मण्डनानां तथैव मण्डनं विनैव शयनगमनं शोभते प्रियसौभाग्यफलाय असमाप्तावपि प्रीति-हेतुत्वादिति भावः । विलासवतीनामिति नियोगे मतुप् इति **लोकनाथः** ॥७१॥

**अवसाइअ-दिण्ण-सुहो सहीहि थिर-दिट्ठि-णिहुअ-वारिअ-**
**विलिओ[2] ।**
**हित्थ-हिअओ मुणिज्जइ पिएहि अलिअ-कुपिओ विलासिणि-**
**सत्थो ॥७२॥**

**[अप्रसादित-दत्त-सुखः सखीभिः स्थिर-दृष्टि-निभृत-वारित-व्रीडितः ।**
**त्रस्त-हृदयः ज्ञायते प्रियैः अलीक-कुपितः विलासिनी-सार्थः ॥ ]**

अप्रसादितोऽपि दत्तसुखोऽप्रसादित एव इति **कुः** ( कुलनाथः ) । अप्रसादितैरप्य-ननुनीतैरपि दत्तं सुखं चुम्बनादिजनितं यस्मै[3] । सखीभिरर्थान्मानोपदेशिनीभिः स्थिरदृष्ट्या निभृतं प्रियतमस्यासमक्षं वारितः सन् व्रीडितस्तदुपदेशाकरणादिति भावः । सखीभर्त्सन-शङ्कया च व्याकुलहृदयो विलासिनीसार्थः प्रियैरलीककुपितो ज्ञायते । प्रसादमन्तरेणैव मानव्यपगमादिति भावः । सखीभिस्तर्जितत्वात् त्रस्तहृदय इति **कुः** ( कुलनाथः ) । प्रियेण ज्ञातः[5] सखीदर्शनाद्वेपमान[5] इति **केचित्** ॥७२॥

---

1 ०गअणं Ms. 2 ०विडिओ GB. 3 यैः Ms. 4 ज्ञात Ms. 5 नादेवमान० Ms.

सह-वड्ढिअं सहिं [1]मिव वट्टन्तिं[2]पिअअमाहिसारण-विग्घे ।
वारेइ चिरेण मओ लज्जं विच्छुहइ[3] वम्महो च्चिअ पढमं ॥७३॥

[सह-वर्धितां सखीं इव वर्तमानां प्रियतमाभिसारण-विघ्ने ।
वारयति चिरेण मदः लज्जां विक्षिपति मन्मथः एव प्रथमम् ॥ ]

सहवर्धितां प्रियतमाभिसारणविघ्ने वर्तमानां सखीमिव लज्जां मन्मथः प्रथमं विक्षिपत्य-स्थिरीकरोति, मदश्चिरेण वारयति सख्यपि सहवर्धिता प्रियतमाभिसारणविघ्ने वर्तमाना च स्यात् ॥७३॥

[4]सहअरि-हत्थाहि मुहं दर-रइअ-विसेसअं समक्खित्तूण[5] ।
जुअईहि वलिअ-विसमं अप्पा[F65b]हिज्जइ ससम्भमं दूइ-
अणो[6] ॥७४॥

[सहचरी-हस्तात् मुखं दर-रचित-विशेषकं समाक्षिप्य ।
युवतीभिः वलित-विषमं संदिश्यते ससंभ्रमं दूतीजनः ॥ ]

ईषद्रचितं विशेषकं तिलकादिकं यत्र तन्मुखं सहचर्या अर्थात् प्रसाधिकाया हस्तात् समाक्षिप्य युवतीभिर्वलितविषमं तिर्यग्वलितं यथा स्यात् तथा दूतीजनः ससम्भ्रमं सादरं वा सत्वरं वा 'अप्पाहिज्जइ' संदिश्यते अर्थात् प्रियतमं प्रति अवधीरणाशङ्कया । संपूर्वस्य दिशतेरप्पाहादेशः[7] ॥७४॥

---

1 °हिम्मिव Ms. 2 वड्ढन्तिं GB. 3 (Cf. H. C. VIII. 4. 144) विच्छुडइ Ms. For छुहइ मुञ्चति, Vide H. C. VIII. 4. 96). 4 This is the reading on the margin of our Text, which has the original reading सहि-अण° as in GB. 5 °क्खे° GB. 6 °जणो GB. 7 Cf. H. C. VIII. 4. 180 ('संदिशेरप्पाहः').

अण्णं सहि-अण-पुरओ अप्पाहेन्तो अ अण्णहा दूइ-अणं[1] ।
जम्पइ विमुक्क-धीरं अण्णं चिअ दइअ-दंसणे जुअइ-अणो[2] ॥७५॥

[अन्यत् सखी-जन-पुरतः संदिशन् च अन्यथा दूती-जनम् ।
जल्पति विमुक्त-धीरं अन्यत् एव दयित-दर्शने युवती-जनः ॥ ]

[F65b] अन्यदिति । किं तेन शठेनेत्यादि युवतीजनः सखीजनपुरतोऽन्यज्जल्पति अन्यदिति सगर्वमिति **केचित्** । विमुक्तधैर्यं यथा स्यात्तथा । दूतीजनञ्च सन्दिशन् चान्यथेति यथाशक्ति दयितमानयेति विमुक्तधैर्यं जल्पति । अन्यदेव दयितदर्शने सबहुमानमिति भावः, दूतीजनञ्च संदिशन्नन्यथा शक्तोऽप्यवश्यमेव कान्तः सन्निधापयितव्य इत्यादि जल्पति । दयितस्य दर्शनेऽन्यदेव आस्तां तावदयं तव हृदयशल्यः प्रेमालाप इत्यादि जल्पति इति **लोः** ( लोकनाथः ) । सखीजनपुरतोऽन्यत् तदसमक्षमन्यत् प्रियसमक्षमन्यच्च इति **वः**[3] । अन्यदिति सोपचारं मृदुतरं वा अनिर्वाच्यमेव वेति **केचित्** । एतत्तु प्रियपुरतो जल्पनान्वयि ॥७५॥

कह वि समुहाणिअङ्गे[4] कह कह वि वलन्त-चुम्बिओवत्त-मुहे ।
देइ खलन्तुल्लावे[5] णव-वहु-सत्थे विसूरिअ-रअं पिधिइं ॥७६॥

[कथं अपि संमुखानीताङ्गे कथं कथं अपि वलच्चुम्बितापवृत्त-मुखे ।
ददाति स्खलदुल्लापे नव-वधू-सार्थे खिन्न-रतं अपि धृतिम् ॥ ]

कथमपि संमुखानीतमङ्गं यस्य, पाठान्तरे तु संमुखानीताङ्के इत्यर्थः । कथं कथमपि वलच्चुम्बनाशङ्कया तिर्यग्भवत् ततश्च हठाच्चुम्बितं सदपवृत्तं लज्जयावनतं मुखं यस्य । साध्वसात् स्खलन्नसम्यङ्निष्पद्यमान आलापो यत्र ईदृशे नववधूसार्थे 'विसूरिअं' अभिलासापूरणात् खेदितरतमपि धृतिं प्रीतिं ददाति । 'वलन्त-चुम्बिओवत्तमुहे' इति संमुखीकृत्य

---

1 ०जणं GB. 2 जुअइ-सत्थो Ms, but it has marginally ०अणो ; GB have ०जुवइ-जणो. 3 It is difficult to say who are here mentioned by वः=युष्माकम्. 4 Ms has ०ङ्के (the reading of GB) marginally. 5 ०न्तू० Ms,

चुम्बिते पश्चादपवृत्तमुखे इति **केचित्**। वल्लभस्य प्रियासङ्गमस्य लाभात्, [1]प्रीतिलाभादिति भाव इति **केचित्**। यदुक्तम्—अभीष्टार्थस्य संप्राप्तौ स्पृहा समुन्नता धृतिरिति **लोकनाथः** ॥७६॥

## सीसइ[2] विमुक्क-माणो बहलुब्भिण्ण-पुलउग्गमेण पिआणं।
## [3]पुरओ-हुओ-णिसण्णो [4]एत्तोहुत्त-हिअओ विलासिणि-सत्थो ॥७७॥

**[शास्यते विमुक्त-मानः बहलोद्भिन्न-पुलकोद्गमेन प्रियाणाम्।
पुरतोऽभिमुख-निषण्णः इतोऽभिमुख-हृदयः विलासिनी-सार्थः ॥]**

कृत्रिमेन मानेन पुरतोऽभिमुखनिषण्णो दत्तपृष्ठ इत्यर्थः। ईदृशो विलासिनीसार्थो बहलोद्भिन्नपुलकोद्गमेन इतोऽभिमुखहृदयः स्वाम्यभिमुखमनाः 'सीसइ' प्रियेभ्यः कथ्यते पुलकोद्गमेन हृदयाभिमुख्यं मानश्च कृत्रिम इति भर्त्रा ज्ञायत इत्यर्थः ॥७७॥

## ण पिअइ दिण्णम्पि महुं[5] ण पणामेइ अहरं ण मोएइ बला।
## कह वि पडिवज्जइ रअं पढम-समागम-परव्वसो[6] जुअइ[7]-जणो ॥७८॥

**[न पिबति दत्तं अपि मधु न प्रणामयति अधरं न मोचयति बलात्।
कथं अपि प्रतिपद्यते रतं प्रथम-समागम-परवशः युवती-जनः ॥]**

प्रथमसमागमपरवशोऽस्वतन्त्रो युवतीजनः कथमपि रतं प्रतिपद्यते समापयति। तदेवाह—दत्तमपि मधु न पिबति, मुहमिति पाठे मुखमधरं न स्वयं पिबतीत्यर्थः। अधरं न प्रणयति न स्वयमुपनयति। नायकेन गृहीतश्च न बलान्मोचयति साध्वसहेतुत्वात् प्रथमसमागमस्येति भाव इति **कुलनाथः** ॥७८॥

---

1 प्रीतिलादि० Ms. 2 सा० GB. 3 प० Ms. 4 गओणिअन्त० GB. 5 Ms reads thus marginally, but has मुहं in the text as in GB. 6 ०परंमुहो G. ०परम्मुहो B. 7 जुव० GB.

अवलम्बिज्जउ धीरं ण हु[1] सो एहिइ अइग्गए[2] वि पओसे ।
इअ दूईहि[3]तुलिज्जइ पढमाणिअ-पिअअमो विलासिणि-
सत्थो ॥७९॥

[अवलम्ब्यतां धैर्यं न खलु स एष्यति अतिगते अपि प्रदोषे ।
इति दूतीभिः तुल्यते प्रथमानीत-प्रियतमः विलासिनी-सार्थः ॥ ]

अवलम्ब्यतां धैर्यं न खलु सोऽतिक्रान्तेऽपि प्रदोषे एष्यतीत्येवंरूपेण दूतीभिः प्रथमानीतः प्रियतमो यस्य स विलासिनीसार्थस्तुल्यते एवमुक्तः किं व्यवस्यतीति ज्ञातुमिष्यते ॥७९॥

देइ विलासवईणं सुहे अ दुक्खे अ पाअडिअ-सब्भावा ।
अणवेक्खिअ-लज्जाइं सहि व्व वीसत्थ-जम्पिआइ
पसण्णा ॥८०॥

[ददाति विलासवतीनां सुखे च दुःखे च प्रकटित-सद्भावा ।
अनपेक्षित-लज्जानि सखी इव विश्वस्त-जल्पितानि प्रसन्ना ॥]

सुखे च प्रकटितसद्भावा सुखानुकूलेत्यर्थः । दुःखे च प्रकटितसद्भावा दुःखापहन्त्रीत्यर्थः । प्रसन्ना मदिरा सखीव अनपेक्षिता अवधीरितालज्जा यत्र तानि विलासवतीनां विश्वस्त-जल्पितानि ददाति । "स्त्री परिस्रुत्, प्रसन्नेराकादम्बर्यः परिस्रुता" **इत्यमरः**[4] ॥८०॥

---

1 Ms has marginally हु ( the reading of C ), but has अ in the text ( as in GB. ). 2 इहु॰ GB. 3 दूइ॰ Ms. 4 Ms has quoted the lexicon wrongly thus:—"स्त्रीपरिश्रुत्, प्रसन्नेराकादम्बर्यः परिश्रुते"त्यमरः ।

चन्दुज्जोएण मओ मएण चन्दाअवो णु वड्ढिअ-पसरो ।
[1]दोहि वि तेहि णु[2] मअणो मअणेण णु दो वि ते णिआ अइ-भूमिं ॥८१॥

[चन्द्रोद्द्योतेन मदः मदेन चन्द्रातपः नु वर्धित-प्रसरः ।
द्वाभ्यां अपि ताभ्यां नु मदनः मदनेन नु द्वौ अपि तौ नीतौ अतिभूमिम् ॥]

[F66a] चन्द्रोद्द्योतेन वर्धितप्रसरो मदोऽतिभूमिं नीतः, मदेन चन्द्रातपः ; [3]नु शब्दो वितर्कार्थः । द्वाभ्यां मदचन्द्रातपाभ्यां नु मदनः । मदनेन द्वावपि तौ मदचन्द्रातपौ वर्धितप्रसरावतिभूमिं नीतौ । मदमदनचन्द्रातपानां युगपत्तुल्यवृद्धिदर्शनादयं वितर्कः । अतिभूमिं परमुत्कर्षम्[4] ॥८१॥

चन्दकरेहि[5] पओसे णिज्जइ मअणेण[6] महु-मएण अ समअं ।
दूरं दूरारूढो [7]पिएसु जुअईण बहु-रसो अनुराओ ॥८२॥

राअसिरि-पवरसेणस्स एत्थ रावणवहे महाकव्वम्मि ।
सपओसवण्णण-दसमो आसासओ परिसमत्तो ॥

[चन्द्रकरैः प्रदोषे नीयते मदनेन मधु-मदेन च समकम् ।
दूरं दूरारूढः प्रियेषु युवतीनां बहु-रसः अनुरागः ॥ ]

प्रदोषे चन्द्रकरैर्मदनेन मधुमदेन च समं स्वभावादेव दूरारूढो बहुरसोऽनुरागो दूरं नीयते प्राप्यते[8] ॥८२॥

[ राजश्रीप्रवरसेनस्य अत्र रावणवधे महाकाव्ये ।
सप्रदोषवर्णन-दशमः आश्वासकः परिसमाप्तः ॥ ]

---

1 Ms has दोहिम्पि तेति ( without णु, as in C ). 2 Ms has a superfluous नु after this नु. 3 ०ति Ms. 4 ०मुर्षं Ms. 5 ०अरेण GB. 6 मएण Ms. 7 GB have these two words in a reverse order and have जुव०. 8 No end of the Canto is indicated by any colophone in the com.

# एआरहओ आसासओ

इअ पडिसारिअ-चन्दे दूरुक्खण्णिअ-णिसा-पअत्त-विरामे ।
चित्तविअ-कामिणि-अणे जाम-च्छेअ-विसमे[1] गअम्मि पओसे ॥१॥

[इति प्रतिसारित-चन्द्रे दूरोत्खण्डित-निशा-प्रवृत्त-विरामे ।
चेतित-कामिनी-जने याम-च्छेद-विषमे गते प्रदोषे ॥ ]

युग्मकमिति पूर्वोक्तदूतीसंप्रेषणमधुपानादिप्रकारेण प्रतिसारितचन्द्रे दूरमुत्खण्डितायां निशायां प्रवृत्तविरामे, अथवा दूरोत्खण्डितया निशया लोकानामभीष्टानुत्थानं प्रति प्रयत्नस्य विरामः पर्यवसानं यत्र, चिन्तां गमितः[2] कामिनीजनः खण्डिताजनो यत्र, यामच्छेदोऽवधिर्यस्य स चासौ विषमश्चेति तथाभूते प्रदोषे गते राक्षसपतिना दीर्घं निश्वसितमिति योज्यं, दूरोत्खण्डितया निशया प्रवृत्तो विरामो यत्र, अर्थाज्जनानां यातायातविरामो रावणानुचराणां सेवाविरामो वा, अतएव इतरकथावार्ताविरहाच्चित्रवृत्तकामिनीजने इति **केचित्** । दूरोत्खण्डिताया यावच्छक्यं तावद् दूरं गत्वा निवृत्तो निशायाः प्रवृत्तो विरामश्चरमदशा यस्मात्, चित्तेन वृत्तः पुनःसम्भोगायाभिलषितः कामिनीजनो यत्र, ईदृशे प्रदोषे यामिनीयामस्य द्वितीयप्रहरस्य छेदेन खण्डनेन विषमं प्राप्तवैषम्यं यथा स्यात्तथा गते सतीति **लोकनाथः** । **श्रीनिवासस्तु** प्रसारितो दूरप्रकाशितश्चन्द्रो यत्र दूरोत्खण्डिता या निशा तस्यां प्रवृत्तः[3] प्रदत्तः[3] विरामो विशेषरमणं यत्र 'चित्तविअ' परितोषितः कामिनीजनो यत्रेत्याह ॥१॥

दीहं रक्खसवइणा चिन्ता-रेअविअ-धीर-दाविअ-हिअअं ।
दसहि वि मुहेहि समअं आलोइअ-सुण्ण-दस-दिसं[4] नीस-
सिअं ॥२॥

[दीर्घं राक्षस-पतिना चिन्ता-रेचित-धैर्य-दर्शित-हृदयम् ।
दशभिः अपि मुखैः समकं आलोकित-शून्य-दश-दिक्कं निःश्वसितम् ॥]

---

1 °र्ं GB. 2 Cf. चिन्तविअ of K. 3 °त्तं Ms.
4 °दिशं Ms.

सीतागतचिन्तया रेचितं त्याजितं धैर्यं यस्येदृशं दर्शितं निश्वासादिना प्रकटीकृतं हृदयं यत्रैवं यथा स्यात्तथा सीतालाभोपायादालोकितशून्यदशदिक् यथा स्यात्तथा दशभिर्मुखैः समं एकदा दीर्घं निश्वसितम् ॥२॥

चिन्तेइ ससइ जूरइ बाहुं परिमुसइ[1] धुणइ मुह-संघाअं।
हस[F66b]इ परिओस-सुण्णं सीआ-निप्पसर-वम्महो दहव-
अणो ॥३॥

**[चिन्तयति श्वसिति खिद्यते बाहुं परिमृशति धुनोति मुख-संघातम्।
हसति परितोष-शून्यं सीता-निष्प्रसर-मन्मथो दशवदनः॥ ]**

[F66b] कथं सीतामाकारयामीति चिन्तयति त्रैलोक्यश्रियापि लोभयितुं न शक्येति, निश्वसिति पत्युर्बहुमानमभिनन्दतीति 'जूरइ' कुप्यति क्रोधादेव बाहुं परामृशति स्पृशति धुनोति मुखसंघातं शिरांसि कम्पयतीत्यर्थः। परितोषशून्यं हसति सीतायां निष्प्रसरो निरवकाशो मन्मथो यस्य स तथाभूतो दशवदनः। **श्रीनिवासस्तु** सीतापायं चिन्तयति तदुपायस्यास्फुरणात् श्वसिति, कोऽयं रामो नाम यदुपष्टम्भेन सीता न वशमेतीति कुप्यति, धन्योऽयं बाहुर्येन बलादपि वक्षस्थलमारोपिता सीतेति सबहुमानं बाहुं परिमार्ष्टि, पिणाकिनि प्रीतेऽपि मनुष्यतिर्यग्भ्यः कथमभयं न प्रार्थितमिति स्मरणान्मुखसंघातं धुनोति, [2]बलादालिङ्गामीति वा निश्चित्य रम्भाशापस्मरणाद्वा मुखनिवहं धुनोति, वशीकृत-जगत्त्रयस्य ममाप्येतादृशी चिन्तेति परितोषशून्यं हसतीत्याह ॥३॥

पडिरुम्भन्तस्स वि से भग्ग-णिअत्त-परिसण्ठविअ-भिज्जन्ते।
विसमुद्धाइअ-कम्पे हिअए उल्ललइ अलहुअम्मि वि[3]धीरं ॥४॥

**[प्रतिरुन्धतः अपि अस्य भग्न-निवृत्त-परिसंस्थापित-भिद्यमाने।
विषमोद्धावित-कम्पे हृदये उल्ललति अलघुनि अपि धैर्यम्॥ ]**

---

1 ०पुसइ GB. 2 वदनादा० Ms. 3 Omitted in Ms.

प्रतिरुन्धतोऽपि दूरं गच्छतो धैर्यस्य प्रतिरोधं कुर्वतोऽपि तस्य रावणस्यालघुन्यपि हृदये धैर्यमुल्ललत्यवकाशं न लभते, अत्र हेतुमाह—कीदृशे उपायशून्यतया भग्ने रागोत्कर्षा(?)त् पुनर्निवृत्ते आलिङ्गनोद्यते, पुनश्च रम्भाशापादिस्मरणात् परिसंस्थापिते स्थिरीकृते चिन्तया पुनर्भिद्यमाने सीताविरहस्य दुःसहतया विषममत्यर्थमुद्धावितः कम्पो यत्र। **कुलनाथस्तु** 'से' तस्य रावणस्य प्रतिरुन्धानस्याप्यलघुकेऽपि हृदये धैर्यमुल्ललति, किंभूते भग्ने तत्प्रत्याशया पुनर्निवृत्ते ततश्च मनोरथैः परिसंस्थापिते विषमोद्ध(द्धू?)तकम्पे कामावेगादुद्धूतवेपथावित्यर्थ इत्याह ॥४॥

**तो से विसमुव्वत्तिअ-विरल-पसारिअ-करङ्गुलि-दर-त्थइअं।**
**खलिअं अंसम्मि मुहं [1]विअम्भिआआस-गलिअ-बाहुप्पीलं ॥५॥**

**[ततः अस्य विषमोद्वर्तित-विरल-प्रसारित-कराङ्गुली-दर-स्थगितम्।**
**स्खलितं अंसे मुखं विजृम्भितायास-गलित-वाष्पोत्पीडम् ॥ ]**

ततो धैर्यत्रासानन्तरं तस्य रावणस्य विषमं तिर्यगुद्वर्तिताभिरुत्तानिताभिः कराङ्गुली-भिरीषत्स्थगितं विरलप्रसारिताभिरिति **कुलनाथः**। विजृम्भितेन विध्वस्तेन[2] आयासेन गलितो दुर्बलतया स्पन्दशून्यो बाहूनामुत्पीडः समूहो यत्र, एवं यथा स्यादित्यर्थः। एवंभूतं मुखमंसे स्खलितमशक्तमिति **कुलनाथः**। अत्र चिन्ताविषादश्रमाणां व्यभिचारिभावानां प्रादुर्भावः कथित इति **लोः** ( लोकनाथः ) ॥५॥

**विसमुग्गाहिअ-महुरं दूमिअ-दन्त-व्वणाहर-परिक्कलिअं।**
**आअण्णेइ पिआणं वलन्त-हिअआवहीरिअं जअ-सद्दं ॥६॥**

**[विषमोद्ग्राहित-मधुरं दून-दन्त-व्रणाधर-परिस्खलितम्।**
**आकर्णयति प्रियाणां वलमान-हृदयावधीरितं जय-शब्दम् ॥ ]**

व्यथितदन्तव्रणेऽधरे परिस्खलितमतएव विषममुद्ग्राहितमुच्चारितञ्च मधुरञ्चेति तथा सीतां प्रति वलमानेन हृदयेनावधीरितं जयशब्दं विजयगीतिनिनादमाकर्णयति प्रियाणां

---

1 °विअम्भिआ° Ms. 2 विध्वस्तनेन Ms.

रावण इत्यर्थात्, परनिपाताद्दन्तव्रणादूनितेऽधरे परिस्खलितमोष्ठ्यवर्णोच्चारणासम्भवादिति भावः। अतएव विषममुद्गरीत[1]मुच्चारितमुच्चारितं सन्मधुरं वलता सीताभिमुखं गच्छता हृदयेनावधीरितं यथा स्यात्तथा प्रियाणां जयशब्दमाकर्णयति, एतेन विषयनिवृत्तिः सूचिता ॥६॥

**आमुअइ महइ सअणं मग्गइ रअणि-विरमं जुउच्छइ दिअसं।**
**णीइ णिअत्तेइ पुणो रइ-लम्भोवाअ-मग्गणाउर-हिअओ ॥७॥**

**[आमुञ्चति महतिशयनं मार्गति रजनी-विरामं जुगुप्सते दिवसम्।**
**निरैति निवर्तते पुनः रति-लम्भोपाय-मार्गणातुर-हृदयः ॥ ]**

उद्वेगाख्यपञ्चमकामावस्थया धृतेरलाभादामुञ्चति शयनं स्वप्नेऽपि सीतासमागमोऽस्त्विति महति अभिलषति रजनीदिवसयोरपि धृतेरलाभाद् मृगयते रजनीविरामं जुगुप्सते दिवसं बलादानयामि सीतामिति निर्याति रम्भाशापस्मरणान्निवर्तते। अधुना रतिलाभोपायमार्गणे आहितहृदयः: केचित्तु आङ्पूर्वमुञ्चते स्त्यागोऽर्थोऽपि, यथा "आमुक्तं गजपतिना सदानपङ्कं" इत्यादि। चन्द्रादीनामुद्दीपनविभावनात् तद्दर्शनेन खेदाद् विराममभिलषति रात्रौ, सीतां नाप्नोदिति दिवसं जुगुप्सत एवं प्राहुः ॥७॥

**[2]बहुमण्णइ वच्छ-अलं हीरन्तुव्वत्त-जणअ-तणआलिद्धं।**
**निन्दइ अ[3] वअण-णिवहं अप्पत्त-पिआ-मुहामअ-रसासाअं ॥८॥**

**[बहुमन्यते वक्षस्तलं ह्रियमाणोद्वृत्त-जनक-तनयालीढम्।**
**निन्दति च वदन-निवहं अप्राप्त-प्रिया-मुखामृत-रसास्वादम् ॥ ]**

बहुमन्यते वक्षस्तलं ह्रियमाणोद्वृत्तजनकतनयास्पृष्टं निन्दति च वदननिवहमप्राप्तप्रियामुखामृतरसास्वादं प्रिया सीता। एतेन संकल्पसंततिः कथिता ॥८॥

---

1 °मुद्गरितं Ms. 2 This verse is numbered 4 in GB, but CKS have it as the eighth. 3 Omitted in Ms.

पच्छाअन्तस्स वि से बहुसो हिअअ-ट्ठिओ पिआण वि पुरओ ।
समंअं मुह-णिवहम्मि [F67a] वि सीआमइओ पअट्टइ
समुल्लावो ॥९॥

[प्रच्छादयतः अपि अस्य बहुशः हृदय-स्थितः प्रियाणां अपि पुरतः ।
समकं मुख-निवहे अपि सीतामयः प्रवर्तते समुल्लापः ॥ ]

[F67a] प्रच्छादयतोऽपि तस्य रावणस्य प्रियाणामपि पुरतः समं मुखनिवहेऽपि हृदय-स्थितः सीतामयः समुल्लापो बहुशः प्रवर्तते । प्रच्छादयतः सीतानुरागं निगूहतोऽपि तस्येति **लोकनाथः** । यासामग्रेऽन्यानुरागप्रकाशनाद्भयं तासामपि पुरतो न केवलमेकस्मिन् मुखे मुखनिवहेऽपि । यद्वा, न केवलं हृदये मुखनिवहेऽपीति **केचित्** । 'सुखनिवहे' इति पाठे तस्य हृदये नानावनितादिसम्भोगजन्यसुखनिवहेऽपीति वा ॥६॥

तं पुलइअम्मि पेच्छइ उल्लावन्तो अ तीअ गेण्हइ गोत्तं ।
ठाइ अ तस्स समअणे अण्णम्मि वि चिन्तिअम्मि स च्चिअ
हिअए ॥१०॥

[तां प्रलोकिते प्रेक्षते उल्लपन् च तस्याः गृह्णाति गोत्रम् ।
तिष्ठति च तस्य समदने अन्यस्मिन् अपि चिन्तिते सा एव हृदये ॥ ]

प्रलोकिते विषयान्तरावलोकने तां सीतामेव प्रेक्षते । [1]अन्यामप्युल्लापयन् तस्या गोत्रं नाम गृह्णाति, अन्यस्मिन्नपि चिन्तिते तस्य समदने हृदये सैव तिष्ठति । एतेन तद्भावनातिशयः प्रकाशितः ॥१०॥

---

1 अन्यमपि Ms.

साहइ से संतावं वास-हरद्धन्त-विसम-पुञ्जिअ-कुसुमो ।
आअअ-णीसास-हओ किलन्त[1]-सग्गअरु[2]-पल्लवो उवआरो ॥११॥

[शास्ति अस्य संतापं वास-गृहार्धान्ते-विषम-पुञ्जित-कुसुमः ।
आयत-निःश्वास-हतः क्लान्त-स्वर्ग-तरु-पल्लवः उपचारः ॥ ]

शरीरस्य संतप्ततया क्लान्ताः स्वर्गतरोः पारिजातस्य पल्लवा यत्र, आयतेन दीर्घेण निश्वासेन हतो म्लानिं प्रापित एवं सदा पार्श्वपरिवृत्त्या निश्वासातिशयेन वा वासगृहार्धान्ते एकदेशे पुञ्जितानि कुसुमानि यस्य स उपचारः सन्तापशान्त्यैश्च रचिता पल्लवादिशय्या तस्य रावणस्य सन्तापं कथयति । एतेन निश्वासातिशयः सन्तापः कथितः ॥११॥

देह-परिणाह-विअडे वलइ भरोवत्त[3]-दलिअ-पासद्धन्ते ।
दूरोणमिअ-मज्झे विसमं भूमि-सअणे पहोलिर-हत्थो ॥१२॥

[देह-परिणाह-विकटे वलति भरापवृत्त-दलित-पार्श्वार्धान्ते ।
दूरावनामित-मध्ये विषमं भूमि-शयने प्रघूर्णनशील-हस्तः ॥ ]

देहस्य परिणाहेन पृथुतया विकटे विशाले रावणशरीरानुरूप इत्यर्थः । भरेणापवृत्तो नम्रभूतोऽतएव दलितो भिदां प्राप्तः पार्श्वैकदेशो यत्र । कुलनाथस्तु परनिपातादपवर्तभरेण दलितपार्श्वैकदेशे इत्याह । नितम्बस्य पृथुत्वात् पुनः पुनरुत्थानोपवेशनाद् वा दूरावनतमध्ये भूमिशयने देहानुरूपवेदिशयने प्रघूर्णनशीलहस्तो विषमं वलति । अपवर्तनादुभयकच्छ एव तिष्ठति, अतो मध्यभागः परिवर्तमनवाप्य तथैवोन्नत आस्ते नत्ववनत इत्याहुः ॥१२॥

दक्खिण्ण-मेत्त-दिण्णो जणअ-सुआ-हुओ[4]-हिअअ-जणिउक्कण्ठो[5] ।
उल्ललइ खण-विलक्खो णिअअन्तेउर-मुहेसु मुह-णिवहो ॥१३॥

[दाक्षिण्य-मात्र-दत्तः जनक-सुताभिमुख-हृदय-जनितोत्कण्ठः ।
उल्ललति क्षण-विलक्षः निजान्तःपुर-मुखेषु मुख-निवहः ॥ ]

---

1 किलिन्त० GB. 2 ०तरु० GB. 3 ०व्वत्त० GB.
4 ०हित्त० Ms. 5 ०दिरणुक्कण्ठो.

दाक्षिण्यमुपरोधः सर्वासु प्रियासु तुल्यानुरागो वा तन्मात्रेण वा दत्तोऽवलोकनाथ सम्मुखीकृतस्तस्य रावणस्य मुखनिवहो निजान्तःपुराणां मन्दोदरीप्रमुखानां मुखेषु उल्ललति स्थैर्यं न लभते, कुत इत्याह—जनकसुताभिमुखेन हृदयेन जनितोत्कण्ठोऽतएव क्षणविलक्षो घ्राणरसनात्वक्चक्षुःश्रोत्राणां विषयनिवृत्त्या विलक्षः शून्य एवाहितवैरस्य क्षणविलक्ष इति कुः ( कुलनाथः )। एतेनात्यन्तप्रेयसीषु वैमुख्येन सीतायामत्यन्तानुरागः कथितः ॥१३॥

**जा अण्णेण हसन्तो गमेइ उम्मच्छिअं[1] विलासिणि-सत्थं ।**
**ता दूसह-णीसासं[2] अण्णं से सोअ-दुम्मणं होइ मुहं ॥१४॥**

**[यावत् अन्येन हसन् गमयति उन्मात्सर्यं विलासिनी-सार्थम् ।**
**तावत् दुःसह-निःश्वासं अन्यत् अस्य शोक-दुर्मनस्कं भवति मुखम् ॥]**

यावदन्येन मुखेन 'उम्मच्छिअं' ईर्षोद्विग्नं विलासिनीसार्थं हसन् गमयत्यभिव्यथं करोति । यद्वा, सानुरागं पश्यत्यर्थाद्रावणः, तावदन्यत्तस्य मुखं दुःसहसन्तापं शोकेन दुर्मना उद्विग्नं भवति । यद्वा, हसन् यावदन्येन मुखेन विलासिनीसार्थं 'उन्मच्छिअं' क्रोधं गमयतीत्यर्थः । उन्मच्छिअ-शब्दः क्रोधे तज्जन्योद्विग्नतायामेव देशी, एतेन विरोधिव्यापाराशङ्कावपि तस्य हृदयस्य बलात्तन्मयत्वं सूचितम् ॥१४॥

**[3]णिउण-हसिआणुविद्धं सीआ-लम्भावहारण-विसंवाअं ।**
**सुणइ ण लक्खेइ फुडं अण्ण [ F 67b ]-विइण्ण-हिअओ**
**पिआण दहमुहो ॥१५॥**

**[निपुण-हसितानुविद्धं सीता-लम्भावधारण-विसंवादम् ।**
**शृणोति न लक्षयति स्फुटं अन्य-वितीर्ण-हृदयः प्रियाणां दशमुखः ॥]**

[F67b] निपुणेन हसितेनानुविद्धं प्रियाणां सीतालाभस्यावधारणे निश्चये विसंवादं—काचिद्वदति राज्यदानेनापि लोभयित्वानेन सीता लप्स्यते, काचिद्वदति अतीव साध्वी सा,

---

1 उम्मच्छरं GB. 2 ०संताव GB. Cf. KKS which have our reading. 3 ०णिहुअ Ms., marginally.

काचिदप्येव' न करिष्यत्येवंरूपं दशमुखं शृणोति स्फुटं न लक्ष्यति। हेतुमाह अन्यवितीर्णहृदयः सीतागतचित्त इत्यर्थः। 'णिहुअ-हसिआनुविद्ध' इति पाठे निभृतमित्यर्थः ॥१५॥

**ईसा-मच्छर-गरुए सहिक्खेव-परिवड्ढिओवालम्भे।**
**कह कह वि गमेइ खणं विलक्ख-हसिएहि कामिणि-समुल्लापे ॥१६॥**

**[ईर्ष्या-मत्सर-गुरुकान् साधिक्षेप-परिवर्धितोपालम्भान्।**
**कथं कथं अपि गमयति क्षणं विलक्ष-हसितैः कामिनी-समुल्लापान् ॥]**

ईर्ष्यया रावणं प्रति रोषेण मत्सरेण रावणसौभाग्यवतीयमिति। यद्वा, अन्यनायिकागुणद्वेषेण गुरुकान् साधिक्षेपं सवर्जनं परिवर्धित उपालम्भो येषु, ईदृशान् कामिनीसमुल्लापान् कथं कथमपि विलक्षहसितैर्गमयति क्षिपति, तत्रानवधानमिवाभिनयतीति वा। क्षणं गमयति प्रेरयतीति **कुलनाथः** ॥१६॥

**तस्स पडिरुद्ध[1]-सेसं वाहोत्थअ-कण्ठ-विसम-पअ-णिक्खेवं।**
**संकिज्जइ विमणाहिं ण णज्जइ पिआहि गोत्त-क्खलिअं ॥१७॥**

**[तस्य प्रतिरुद्ध-शेषं बाष्पावस्तृत-कण्ठ-विषम-पद-निक्षेपम्।**
**शङ्क्यते विमनोभिः न ज्ञायते प्रियाभिः गोत्र-स्खलितम् ॥]**

तस्य रावणस्य गोत्रस्खलनं नामविपर्यासो विमनोभिः प्रियाभिः शङ्क्यते स्फुटं न लक्ष्यते। कुत इत्याह प्रतिरुद्धं शेषं शेषाक्षरं यत्र, बाष्पावस्तृतकण्ठे विषमः स्फुटास्फुटः पदस्य वर्णस्य निक्षेपो विन्यासो यत्र ॥१७॥

**कह वि जवेइ[2] दहमुहो किन्ति अणालत्त[3]-मोह-दिण्णुल्लाव'[4]।**
**दइआहि गलिअ-बाहं रोस-णिरुत्तर-पलोइअं[5] अप्पाणं ॥१८॥**

**[कथं अपि यापयति दशमुखः किं इति अनालपित-मोघ-दत्तोल्लापम्।**
**दयिताभिः गलित-बाष्पं रोष-निरुत्तर-प्रलोकितं आत्मानम् ॥ ]**

---

1 ०बद्ध० Ms., with the reading ०रुद्धं marginally (Cf. ०बद्ध० CKS).
2 टवेइ GB. 3 ०लविअ० GB. 4 ०णालावं GB. 5 ०पुलो० GB.

अनालपिते अकृतप्रश्ने वस्तुनि किमिति दत्तो मोघोऽनर्थ उल्लापो येन, एवं भूतमात्मानं शून्यालापजनितयोन्मादशङ्कया प्रणयभङ्गाद्वा गलितबाष्पं यथा स्यात्, सीतां प्रति रोषेण च निरुत्तरं यथा स्यात्तथा दयिताभिः प्रलोकितं, दशमुखः कथमपि यापयति व्यवस्थापयति प्रकृतिं प्रापयतीति यावत्। सात्विकभावाद् गलितबाष्पमिति विशेषणं वा। भावनानीतसीतायामनालपितेनैवान्येनाभाषितेनैव दत्तं मोघं निरर्थकं किमित्युत्तरं येन इति **केचित्** ॥१८॥

**अणहिअओ वि पिआणं उम्मच्छ-पसारिअ-क्खविअ[1]-हुङ्कारं।**
**अभिणन्दइ दहवअणो समत्त-णिव्वेलिआहरोट्ठ-पुलइअं ॥१९॥**

**[अहृदयः अपि प्रियाणां उन्मत्सर-प्रसारित-क्षपित-हुङ्कारम्।**
**अभिनन्दति दशवदनः समस्त-निर्वेल्लिताधरोष्ठ-प्रलोकितम् ॥]**

'उन्मच्छेण' ईर्षोद्वेगेन प्रसारितो रावणशङ्कया[2] क्षपितः संहृतो हुङ्कारो यत्र, समस्त—'णिव्वेलिअ' समग्रदष्टोऽधरोष्ठ उत्तराधरो यत्र, तत्प्रियाणां प्रलोकितमहृदयोऽपि प्रियावलोकने हृदयशून्योऽपि दशवदनोऽभिनन्दति सौभाग्यातिशयाद्बहुमन्यत इत्यर्थः। अभिनन्दनाभिनयमस्य करोतीत्यर्थ इति वा। अन्यशब्द एव अभावे देशीति **कुलनाथः**, अन्यहृदय इति **श्रीनिवासः** ॥१९॥

**दुच्चिन्तिआवएसं[3] पिआहि उमच्छ-सम्भम-कआलोअं।**
**हसइ खणं अप्पाणं अणहिअअ-विसज्जिआसण-णिअत्तन्तं ॥२०॥**

**[दुश्चिन्तापदेशं प्रियाभिः उन्मत्सर-संभ्रम-कृतालोकम्।**
**हसति क्षणं आत्मानं अहृदय-विसर्जितासन-निवर्तमानम् ॥]**

अहृदयत्वेन हृदयशून्यतया विसर्जितं यदासनं तत्रैव निवर्तमानं निवृत्योपविशन्तमतो दुःखेन चिन्तितोऽपदेशः संवरणं यत्र ईदृशं, उन्मादकृतं किमप्यनिष्टं यत् तस्यापदेशो यथा स्यात्तथा प्रियाभिरुद्वेगसम्भ्रमाभ्यां कृतालोकं प्रयुक्तसंवरणवादमात्मानं हसति

---

1 ०ग्घविअ० GB. 2 ०शशङ्कया Ms. 3 ०पएसं GB.

असम्बद्धक्रियाया हासहेतुत्वादुपहसतीत्यर्थः। सीतालिङ्गनार्थमासनं त्यक्त्वा द्वित्राणि पदानि गत्वा पुनस्तत्रैवोपविशन्तमित्यर्थं इति **लोकनाथः**। दुश्चिन्तितोऽपदेशो व्याजो येन। उपदेशपाठे सीताप्राप्तिरूप उपदेश इति **केचित्** ॥२०॥

**तह अ[1] गओ अइभूमिं जह[F68a]ण[2] विणिज्जन्तणं पिआहि ण णाओ।**

**ण अ णाऊण ण हसिओ ण अ हसिऊण [3]अणुसोइउम्पि ण[4] तिण्णो ॥२१॥**

**[तथा च गतः अतिभूमिं यथा न विनिर्यन्त्रणं प्रियाभिः न ज्ञातः।**
**न च ज्ञात्वा न हसितः न च हसित्वा अनुशोचितुं अपि न तीर्णः ॥]**

तथा उक्तप्रकारेणातिभूमिं दुःसहकामावस्थां सीतानुरागौत्कट्यं वा गतोऽर्थाद्रावणः यथा निर्यन्त्रणमप्रतिबन्धं यथा स्यात्तथा प्रियाभिर्न न ज्ञातः, अपि तु ज्ञात एव। ज्ञात्वा वा न च न हसितः, अपि तु हसित एव। हसित्वा चानुशोचितुं पाठान्तरेऽनुकम्पितुं न न शक्तो, अपि तु पारित एव, सत्यामपीर्षायां कामावस्थादर्शनादिति भावः ॥२१॥

**चिन्तेउं अ[5] पउत्तो अवहोवास-पसरन्त-णीसास-हअं।**
**दोसु णिमेऊण समं एक्कं आसण्ण-मुह-कवोलेसु करं ॥२२॥**

**[चिन्तयितुं च प्रवृत्तः उभयपार्श्व-प्रसरन्-निःश्वास-हतम्।**
**द्वयोः नियोज्य समं एकं आसन्न-मुख-कपोलयोः करम् ॥ ]**

---

1 स GB. 2 Oue अ (=च) before it in Ms. 3 अणुअम्पि-उम्पि as original reading in Ms which, however, has given अणुसोइउं marginally. 4 अ after ण in original text in Ms, which has no अपि. 5 ०उअ Ms.

[ F68a ] उभयपार्श्वप्रसरन्निश्वासेनाहतमुपप्लुतं यथा स्यात्तथा, द्वयोरप्यासन्नमुख-कपोलयोः करमेमुभयपार्श्वयोः प्रसरद्भिर्निश्वासैर्हत इति कुः ( कुलनाथः )। समं युगपन् निवेश्य चिन्तयितु' प्रवृत्तः। मुखानामधः करनिवेशने भारासहिष्णुतया मुखकपोलयोर्मध्ये तन्निवेशनं, उभयपार्श्वेत्यस्य करविशेषणत्वेऽभवन्मतयोगः स्यात्, चिन्तायां मुखोपरि करनिवेशनं स्वभावः ॥२२॥

अङ्कागअ' सहिज्जइ पओस-रइ-विग्घ-सङ्किएण कइ-बलं ।
तं कस्स वि सोअत्थं वलइ अलद्ध-सुरअं मह च्चिअ हिअअं ॥२३॥

[अङ्कागतं सह्यते प्रदोष-रति-विघ्न-शङ्कितेन कपि-बलम् ।
तत् कस्य अपि शोकास्त' वलति अलब्ध-सुरतं मम एव हृदयम् ॥ ]

दिनान्ते सुवेले कृतावासत्वादङ्कागतं क्रोडप्रविष्टमिव कपिबलं शङ्कितप्रदोषरतिविघ्नेन सह्यते मयेत्यर्थात्। तन्ममैव हृदयं शोकास्त' संभोगाप्राप्तिशोके मग्नमलब्धसुरतं तत् कस्यापि वलति, न ज्ञायते किं शुभाय अशुभाय वा प्रवर्तत इत्यर्थ इति कुः (कुलनाथः)। **केचित्तु** न यावदुपेद्यते तत्तस्मादलब्धसुरतमप्राप्तसीतासम्भोगमतएव शोकेऽस्त' मग्न' ममैव नान्यस्य हृदयं कस्य कस्मैचित् कारणाय वलते, न जाने शुभाय अशुभाय वा एव' करोतीति भावः। अत्र यत्पदं तत्पदसमभिव्याहाराल्लभ्यते। यद्वा, पूर्वमलब्धसुरतं मम हृदय-मित्याहुः ॥२३॥

किं भुअ-विवर-पहोलिर-संखोह-प्फिडिअ-गहिअ-कड्ढिअ-
णिहुअं[1] ।
अत्थाक्कासण्ण-ठिअं णिप्फल-चडुल-मुहलं मलेइ कइ-बलं ॥२४॥

[किं भुज-विवर-प्रघूर्णशील-संक्षोभ-स्फेटित-गृहीत-कृष्ट-निभृतम् (निहतं वा)।
अकस्मादासन्न-स्थितं निष्फल-चटुल-मुखरं मृद्नामि कपि-बलम् ॥ ]

---

1 ०लहुकं marginal text in Ms.

अकस्मादासन्नस्थितं निष्फलं निरर्थकानुष्ठानं चटुलं कपिबलं भुजानां विवरे प्रघूर्णनशीलं संक्षोभेण सञ्चलनेन भ्रष्टं निरुद्धचेष्टत्वान् निभृतं निष्पन्नं सत् किं मृद्नामि चूर्णयामि। आदौ भुजविवरे प्रघूर्णनशीलं पश्चात् संक्षोभेण त्रस्तमनन्तरं पुनर्गृहीतमाकृष्टं सत् निष्पन्नं निःशेषेण धुतं वा। लहुअमिति पाठे लघुकम् ॥२४॥

**ओ ससि-कराहउम्मिल्ल-लोअणन्दोलमाण-वाह-तरङ्गं।**
**आसाएमि कअग्गह[1]-णिरुत्तरुत्ताणिआणणं जणअ-सुअं ॥२५॥**

**[उत शशि-कराहतोन्मीलित-लोचनान्दोलमान-बाष्प-तरङ्गाम्।**
**आस्वादयामि कचग्रह-निरुत्तरोत्तानिताननां जनक-सुताम् ॥]**

कचग्रहेणार्थान्मन्युकृतेन निरुत्तरं समुत्तानिताननं यस्यास्तथा शशिकरैराहतयोर्निरुद्ध-प्रसरयोर्मत्कृतकचग्रहणादुन्मीलितयोर्लोचनयोरान्दोलमाना बाष्पतरङ्गा यस्यास्तां जनकसुतां आस्वादयामि, तदालिङ्गनास्वादमनुभवामीत्यर्थः। अधरमस्याः पिबामीति **कुलनाथः**। अत्र कचग्रहेत्यादेः क्रियाविशेषणत्वमेव साधीयः ॥२५॥

**कह विरहे [2]पडिऊला होहिइ समुह-हिअआ पइम्मि उवगए।**
**णेच्छइ इअरा वि[ F 68b ]ससिं किं उण[3] दिट्ठम्मि दिणअरम्मि कमलिणी ॥२६॥**

**[कथं विरहे प्रतिकूला भविष्यति संमुख-हृदया पत्यौ उपगते।**
**न इच्छति इतरथा अपि शशिनं किं पुनः दृष्टे दिनकरे कमलिनी ॥]**

विरहेऽर्थात् पत्युरनासन्नतायां प्रतिकूलाऽनभिमुखी पत्यावुपगते समीपस्थिते कथं संमुखहृदया भविष्यति सर्वथैव न भविष्यतीत्यर्थः। एतदेव दर्शयति—इतरथा अदृष्टेऽपि सूर्ये कमलिनी शशिनं नेच्छति कि पुनर्दृष्टे दिनकरे, अचेतनापि कमलिनी एवं न करोति किं पुनः सचेतना सीतेति भावः। अत्र रावणेन स्वयमेव रामस्य सूर्यसाम्यमात्मनश्चन्द्र-साम्यमुक्त्वा रामान्निजपराभवो गूढमुट्टङ्कित इति **केचित्** ॥२६॥

1 कह० Ms. 2 ०हू-प्पडि० GB. 3 पुण Ms.

अब्भत्थणं ण गेण्हइ तीरइ तिहुअण-सिरीअ वि ण लोहेउं ।
ण गणेइ सरीर-भअं[1] कह मण्णे होज्ज जाणई साणुणआ ॥२७॥

[अभ्यर्थनां न गृह्णाति शक्यते त्रिभुवन-श्रिया अपि न लोभयितुम् ।
न गणयति शरीर-भयं कथं मन्ये भवेत् जानकी सानुनया ॥ ]

[F 68b] अभ्यर्थनां न गृह्णाति साम्नापि न वशीभवतीत्यर्थः । साम्ना वशतामनापन्नायां न दानेनापि वशीकर्तुं क्षमत इत्याह त्रिभुवनजयश्रियापि लोभयितुं न शक्यत । एवमुपायद्वयस्य वैयर्थ्ये दर्शितं भयं न गणयति शरीरभयमुपायत्रयेणापि वशीकर्तुं न शक्यत इति भावः । कथं केनोपायेन मन्येऽवधारयामि जानकी सानुनया भवेत् तस्मादुपजाप एवोपायः कर्तव्य इत्याह ॥२७॥

पइ-माहप्प-णिसण्णा [2]अवमण्णिअ-सेस-सप्पुरिस-सोडीरा ।
जइ णवरं[3] एज्ज[4] वसं[5] लुअ-राहव-सीस-दंसणे[6] जणक-
सुआ ॥२८॥

[पति-माहात्म्य-निषण्णा अवमानित-शेष-सत्पुरुष-शौटीर्या ।
यदि केवलं इयात् वशं लून-राघव-शीर्ष-दर्शने जनक-सुता ॥ ]

पत्युर्माहात्म्येऽसाधारणशौर्यादिगौरवे निषण्णा दत्तावलम्बा, अतएव अवमतमवमानना-विषयीकृतं शेषाणां पतिभिन्नानां सत्पुरुषाणां शौटीर्यं यया, सा जनकसुता लूनराघवशीर्ष-दर्शने यदि वशमियाद् यदिरवधारणे सम्भावनायां वा, नान्यथेति भावः । माहात्म्ये निषण्णा कृतविश्रामा [ अवमतं[7] ] सत्पुरुषाणां शौटीर्यमभिमानो यया कुः ( कुलनाथः ) ॥२८॥

---

1 ०वहं GB ( Cf. CKS which have the reading of Ms. i.e. ०भअं.
2 ०माणिअ० GB. 3 णवर GB. 4 होज्ज व GB. 5 वसा GB.
6 ०णा GB. 7 अवमतं Omitted in Ms.

अद्दिट्ठ-लज्जणिज्जो भग्ग-परित्ताण-विअलिआसाबन्धो ।
अवसो अबन्धु-लहुओ भएण [1]थिइ-भङ्ग-साहासं कुणइ
जणो ॥२९॥

[अदृष्ट-लज्जनीयः भग्न-परित्राण-विगलिताशा-बन्धः ।
अवशः अबन्धु-लघुकः भयेन स्थिति-भङ्ग-साहसं करोति जनः ॥ ]

अथोपपत्तिमाह । लज्जते यस्मादिति कृत्यल्युटोर्बहुलत्वादनीयः, अदृष्टो लज्जनीयो यस्य, लज्जते यस्मै स लज्जनीय इति वा, अदृष्टो लज्जनीयो लज्जाहेतुर्येन, तथा भग्नपरित्राणत्वाद्विगलितः शिथिलित आशाबन्धो मनोरथनिबन्धनं यस्य, अबन्धुतया लघुको बलहीनो जनोऽवशः पराधीनः सन् भयेन स्थितिभङ्गसाहसं करोति । अत्र जनशब्देन सर्वेषामेव रीतिरीदृशीति निरुपधिसहचारो दर्शितः ॥२६॥

णवरि अ णं खेआलस-[2]जम्भाअन्त-वलिउद्ध-मुह-संघाअं[3] ।
भुमआ-भङ्गाणत्तोः सभअं[4] पासेसु परिअणो अल्लीणो ॥३०॥

[अनन्तरं च एनं खेदालस-जृम्भायमाण-वलितोर्ध्व-मुख-संघातम् ।
भ्रू-भङ्गाज्ञप्तः सभयं पार्श्वयोः परिजनः आलीनः ॥ ]

एवं चिन्तानन्तरञ्च रणरणकमहिम्ना वीरपुरुषानुचितानुष्ठानचिन्तया वा यः खेदस्तेनालसो जृम्भमाणो वलितः परिजनावलोकनाय परिवृत्तो दण्डायमानतया स्थितानाञ्च तेषां दिदृक्षया ऊर्ध्वो मुखसंघातो यस्य, एनं रावणं भ्रूभङ्गाज्ञप्तः परिजनः सभयं पार्श्वयोरालीनः, खेदजृम्भितमुखतया वचनेनाज्ञापनासामर्थ्यं कथितम् ॥३०॥

---

1 ठिइ० GB, 2 ०जिम्भा० GB. 3 ०हाअं Ms. 4 सम० ( Cf. CKS which have the reading of Ms ).

तो एक्क-हिअअ-गुणिअं दसहि वि समअं मुहेहि अप्पाहेउं ।
ण पहुप्पइ दहवअणो चिर-कंखिअ-लम्भ-गब्भिणक्खर-
गरुअं ॥३१॥

[ततः एक-हृदय-गुणितं दशभिः अपि समकं मुखैः अध्यापयितुम् ।
न प्रभवति दशवदनः चिर-काङ्क्षित-लम्भ-गर्भिताक्षर-गुरुकम् ॥ ]

ततः परिजनोपसर्पणानन्तरमेकेन हृदयेन गुणितं पर्यालोचितमभ्यस्तं वा चिर-काङ्क्षितेन लाभेन छिन्नरामशिरोदर्शनात् सीतास्वीकाररूपेण गर्भितैरक्षरैर्गुरुकं सीतालाभो-पायप्राप्त्या हर्षबाष्पस्थगितत्वाद् दुःखोच्चार्यमित्यर्थः । 'अप्पाहिउ' सन्देष्टुं सममेकदा दशभिरपि मुखैर्दशवदनो न प्रभवति । **केचित्तु** हृदयेन गुणितावर्तितं चिरकाङ्क्षितस्य रामवधप्रदर्शनेन सीतायत्तीकरणस्य लाभेन गर्भितैरक्षरैर्हासगर्भत्वाद् गुरुकं दुःखोच्चार्यमिति **कुः** ( कुलनाथः ) ॥३१॥

अण्णेण[F69a]समारद्धं वअणं अण्णेण हरिस-गहिअ-प्फिडिअं ।
अण्णेण अद्ध-भणिअं मुखेण अण्णेण से कह वि णिम्मविअं ॥३२॥

[अन्येन समारब्धं वचनं अन्येन हर्ष-गृहीत-स्फेटितम् ।
अन्येन अर्ध-भणितं मुखेन अन्येन तस्य कथं अपि निर्मितं (निर्मापितं वा) ॥]

[F69a] तस्य रावणस्यान्येन मुखेन वचनं समारब्धं वक्तुमुपक्रान्तम्, अन्येन हर्षाद् गृहीतं त्वरया समुपात्तं सद्भ्रष्टं बाष्पावरुद्धकण्ठत्वादिति भावः । अन्येनार्धभणित-मन्येन मुखेन कथमपि बाष्पादिकं नियम्य निर्मितं निष्पादितमिति **कुलनाथ-श्रीनिवासौ** । निर्मापितं समापितमिति यावदिति **केचित्** ॥३२॥

तो उग्गाहिअ-सोअं तेन भणन्तेण मुह-पहोलिर-वाहं[1] ।
सन्ताविएक्क-हिअअं दस-कण्ठ-क्खलिअ[2]-पलहुअं णीससिअं ॥३३॥

---

1 ०धूमं GB. 2 ०श्रं Ms.

**[ततः उद्ग्राहित-शोकं तेन भणता मुख-प्रघूर्णनशील-बाष्पम् ।
सन्तापितैक-हृदयं दश-कण्ठ-स्खलित-प्रलघुकं निश्वसितम् ॥ ]**

ततः सन्देशकथनान्तरं रामशिरोदर्शनेन वीरजनानुशीलितपथपरित्यागादुद्ग्राहितः प्रकाशितः शोको यत्र, शोकादेव च मुखप्रघूर्णनशीलो बाष्पो यत्र, एवं भणता तेन दशमुखेन सन्तापितैकहृदयं दशकण्ठस्खलितत्वात् प्रलघुकं यथा स्यात्तथा निश्वसितम्, एकस्य गुरुतरस्यापि निश्वासस्य दशभिः कण्ठैः स्खलितत्वात् प्रलघुत्वम्। अत्र भणतेति वर्तमाननिर्देशेन भणितेरुपक्रम एव निश्वसितमिति लभ्यते सर्वं निश्वसितिक्रियाविशेषणम् ॥३३॥

आहासइ अ णिसिअरे आणा-सम-आल[1]-दिण्ण-पडिसंलावे ।
महि-णिमिओहअ-कर-अल-तंस-ट्ठिअ-तिअ-भरुण्णमिअ-
देहद्धे ॥३४॥

**[आभाषते च निशिचरान् आज्ञा-सम-काल-दत्त-प्रतिसंलापान् ।
मही-निहितोभय-कर-तल-तिर्यक्-स्थित-त्रिक-भरोन्नमित-देहार्धान् ॥ ]**

आभाषते निशिचरान् कीदृशान्—आज्ञासमकालदत्तप्रतिसंलापान् "संलापो भाषणं मिथः"। महीनिहितोभयकरतला अतएव तिर्यक्स्थितत्रिकभरेण नमितो देहार्धो येषां तिर्यक्स्थितत्रिक-भराश्च ते उन्नमितदेहार्धाश्चेति तान् इति **लोः** ( लोकनाथः )। श्रवणादरात् तिर्यक्स्थित-त्रिकभरा इति **कुः** ( कुलनाथः ) ॥३४॥

तं माआ[2]-णिम्मविअं रिउ-दंशण-वलिअ-विसम[3]-णिच्चल-
णअणं ।
दावेह कण्ठ-रहिअं सीआइ विओअ-पण्डुरं राम-सिरम् ॥३५॥

**[तत् माया-निर्मितं (निर्मापितं वा) रिपु-दर्शन-वलित-विषम-निश्चल-नयनम् ।
दर्शयत कण्ठ-रहितं सीतायै वियोग-पाण्डुरं राम-शिरः ॥ ]**

---

1 ०काल० GB. 2 तम्माआ० Ms. 3 ०विसस-वलिअ० GB.

तदिति यथादृष्टं मायानिर्मितमिति **लो**ः ( लोकनाथः )। तमिति प्रस्तुतकथोपक्रमे इति **के** ( केचित् )। रिपुदर्शनाय विषमं तिर्यग्वलिते निश्चले लोचने यत्र व्यापारिते इति **कु**ः ( कुलनाथः )। तत्तथा वियोगपाण्डुरं कण्ठरहितं रामशिरः सीतायै दर्शय[त*] ॥३५॥

**तो अमरिस-मेलाविअ-भुमउग्गाहिअ-तरङ्गिअ-णडाल[1]-अडं ।**
**छिण्णाणिअं व तच्चिअ ताहे च्चिअ तेहि णिम्मिअं राम-सिरं ॥३६॥**

**[ततः अमर्ष-मेलित-भ्रूद्ग्राहित-तरङ्गित-ललाट-तटम् ।**
**छिन्नानीतं इव तत् एव तदा एव तैः निर्मितं राम-शिरः ॥ ]**

ततस्तद्वचनानन्तरममर्षमेलितयोः भ्रुवोरुद्ग्राहितेनोत्क्षेपेण भ्रुकुटिरचनयेत्यर्थः, तरङ्गितं ललाटतटं यत्र तत्तथा तदेव छिन्नानीतमिव तदैव तैर्निर्मितं रामशिर इति **कु**ः ( कुलनाथः )। केचित्तु, एतत् पद्यं परपद्यं व्याख्याय व्याख्यान्ति। ततः प्रस्थानानन्तरं तदेव छिन्नानीतमिव तै राक्षसैस्तदैव प्रस्थानान्तरमेवामर्षेण मिलितयोरेकतां गतयोर्भ्रुवोरित्यर्थः ॥३६॥

**सम्पत्थिआ अ सम्भम-चलणोवडण[2]-विसमोट्ठिआ पमअ-वणं ।**
**कह वि समत्तप्पाहिअ-दहवअणाणत्ति-[F69b]वावडा रअणि-**
**अरा ॥३७॥**

**[संप्रस्थिताः च संभ्रम-चरणावपतन-विषमोत्थिताः प्रमद-वनम् ।**
**कथं अपि समाप्तसंदिष्टापित-दशवदनाज्ञप्ति-व्यापृताः रजनीचराः ॥ ]**

परनिपाताच्चरणावपतनतः संभ्रमेण त्वरया विषमं क्रमशून्यमुत्थिताः, गलपाशादिना यथा सीतात्मानं न व्यापादयेदित्यादि सन्देशस्य बहुप्रकारात् कथमपि समाप्तसंदिष्टायां कथमपि समाप्तः सन्देशो यस्यामिति दशवदनाज्ञप्तौ व्यापृता रजनोचराः प्रमदवनं संप्रस्थिताश्च रामशिरोनिर्माणायेति **लोकनाथः**। कथमपि समाप्तं 'अप्पाहिअं' सन्देशो येन हर्षजाड्याद्

---

1 °णिडाल° GB. 2 °णोणमिअ° Ms.

एवंभूतस्य दशवदनस्याज्ञप्तिव्यापृताः कथमपि चलिता इति श्रीः (श्रीनिवासः) सीतादुःखाज्जातकारुण्या इति भावः ॥३७॥

**पत्ता अ फलिअ[1]-मणि-अड-विवर-ट्ठिअ-सलिल-बद्ध-पङ्कअ-मउलं ।**
**पवण-सुअ-भग्ग-पाअव-भङ्गुग्गअ-बाल-किसलअं पमअ-वणं ॥३८॥**

**[प्राप्ताः च स्फटिक-मणि-तट-विवर-स्थित-सलिल-बद्ध-पङ्कज-मुकुलम् ।**
**पवन-सुत-भग्न-पादप-भङ्गोद्गत-बाल-किसलयं प्रमद-वनम् ॥ ]**

[F69b] प्रमदवनमन्तःपुरोचितं वनं प्राप्ताश्च अर्थाद्राक्षसाः । स्फटिकमणितटानां विवरेषु स्थितानि यानि सलिलानि तेषु बद्धानि धृतानि पङ्कजैर्मुकुलानि यत्र, पवनसुतभग्नानां पादपानां भङ्गेषु भङ्गस्थानेषूद्गतानि बालकिसलयानि यत्र । अनेन श्लोकेनाद्यविशेषणेन जलमात्र एव कमलप्रादुर्भावाद्रावणस्य द्वितीयविशेषणेन च रामस्य महत्त्वं ख्याप्यते ॥३८॥

**पेच्छन्ति अ सइ-सण्ठिअ-वअण-विसंवइअ-थण-णिसण्ण-कर-अलं ।**
**दहवअणागम-सङ्किअ-पद-सद्दुप्फित्थ[2]-लोअणं जणक-सुअं ॥३९॥**

**[प्रेक्षन्ते च सदा-संस्थित-वदन-विसंवादित-स्तन-निषण्ण-कर-तलाम् ।**
**दशवदनागम-शङ्कित-पद-शब्दोद्विग्न-लोचनां जनक-सुताम् ॥ ]**

द्वादशभिः कुलकं, जनकसुताश्च प्रेक्षन्ते कीदृशीं सदासंस्थितादर्थात् करतलनिलीना-द्वदनाद्विसंवादितमाकृष्टं सद् आवरणार्थं स्तनयोर्निषण्णं करतलं यस्याः, एतच्चावरणं दशवदनागमशङ्कया, एवं परनिपाताच्छङ्कितो दशवदनागमो यस्मादेवंभूतेन पदशब्देनोद्विग्न लोचनाम् । 'हित्थं[3] व्याकुलभीतयोरिति' ॥३९॥

---

1 फुडिअ० GB. 2 ०द्दुप्पित्थ० GB. 3 Cf. Hemacandra "त्रस्तस्य हित्थ-तट्ठौ" 2.136

पिअअम-स-हत्थ-पेसिअ-मणि-वर[1]-सुण्णइअ-सिढिल-वेणी-
बन्धं।
धोअ-कलधोअ-पण्डर[2]-पडन्त-वाह-पहउण्णअ-त्थण-अलसं ॥४०॥

[प्रियतम-स्व-हस्त-प्रेषित-मणि-वर-शून्यीकृत-शिथिल-वेणी-बन्धाम्।
धौत-कलधौत-पाण्डर-पतद्-बाष्प-प्रहतोन्नत-स्तन-कलशाम्॥]

प्रियतमाय स्वहस्तेन प्रेषितो यो मणिवरस्तेन शून्यीकृतः शिथिलो वेणीबन्धो यस्याः, धौतं यत् कलधौतं रजतं तद्वत्पाण्डरैः पतद्भिरश्रुभिः प्रहतावुन्नतौ स्तनकलशौ यस्याः। कलधौतं रूपहेम्नोरिति **कोषः**। पाण्डरेति बाष्पविशेषणमिति **लोकनाथः**। निरञ्जनत्वाद्रजतसाम्यं बाष्पपयस इति **केचित्**। बाष्पाणां पयोधराहतिकारित्वे स्थूलत्वं कर्कशत्वञ्च सूचितमिति **के** ( केचित् ) ॥४०॥

अजमिअ-पम्हल-वेणिं बाह-जलोमइलिआ[3]लओत्थइअ-मुहिं।
रसणासुण्ण-णिअम्बं विच्छड्डिअ-मण्डणग्घविअ[4]-लावण्णं ॥४१॥

[अयमित-पक्ष्मल-वेणीं बाष्प-जलावमलिनितालकावस्थगित-मुखीम्।
रसना-शून्य-नितम्बां विच्छर्दित-मण्डनार्घित-लावण्याम्॥]

अयमिता असंस्कृता अबद्धा वा पक्ष्मला वेणी यस्याः, बाष्पजलावमलिनितेन कलुषेणालकेनावस्थगितं मुखं यस्याः, बाष्पजलावमलिनितम्, अलकेनावस्थगितमिति **लो** ( लोकनाथः)। रसना काञ्ची तया शून्यो नितम्बो यस्यास्तामतस्त्यक्तेनापि मण्डनेन महार्घितं लावण्यं यस्याः, त्यक्तमण्डनाया अप्यर्घितं बहुमतं लावण्यं यस्या इति **केचित्** ॥४१॥

---

1 ०मणि-सुण्णइअसिढिलद्ध० GB. 2 ०पाण्डु० GB. 3 ०जलापहाविआ० GB. 4 ०णग्ग० Ms.

थोओ-मउलाअअ[1]-ट्ठिअ-पिअअम-गअ-हिअअ-सुण्ण-णिच्चल-
णअणं ।
कइ-बल-सद्दाअण्णण-बाह-तरङ्ग-परिघोलमाण-पहरिसं ॥४२॥

[स्तोक-मुकुलायत-स्थित-प्रियतम-गत-हृदय-शून्य-निश्चल-नयनाम् ।
कपि-बल-शब्दाकर्णन-बाष्प-तरङ्ग-परिघूर्णमान-प्रहर्षाम् ॥]

स्तोकमुकुलत्वादायतस्थिते प्रियतमगतहृदयत्वात् शून्ये निश्चले नयने[2] यस्याः, कपिबल-शब्दाकर्णनेन प्रमोदबाष्पतरङ्गेषु परिघूर्णमानो गतागतं कुर्वन् निमज्जनोन्मज्जनं कुर्वन्निति **लोकनाथः**। प्रहर्षो यस्याः प्रहर्षोन्मज्जनं कपिबलशब्दश्रवणेन निमज्जनश्च रावणस्य दुरभिभवत्वसंभावनायेति भावः ॥४२॥

ईसि-रअ-भि[F70a]ण्ण-पाडल[3]-वसुआअ-प्फरुस-बाह-बिन्दु-
ट्ठाणं ।
विच्छड्डिअ-परिधूसर-णिअअ-सहाव-परिसण्ठिआहर-राअं ॥४३॥

[ईषद्-रजोभिन्न-पाटल-शुष्क-परुष-बाष्प-बिन्दु-स्थानाम् ।
विच्छर्दित-परिधूसर-निजक-स्वभाव-परिसंस्थिताधर-रागाम् ॥ ]

[F70a] ईषद्रजोभिन्नत्वात् पाटलं शुष्कं परुषञ्च बाष्पबिन्दूनां स्थानं यस्याः, ईषद्रजोभिन्नत्वात् प्रकटं शुष्कत्वात् परुषमस्निग्धं बाष्पबिन्दूनां स्थानं यस्या इति **लोकनाथः**। तन्मते 'ईसि-रअ-भिन्न-पाअड' इति पाठः। विरहपाण्डरत्वाद्बाष्पाघातेन शोणत्वाच्च पाटलमिति **केचित्**। विच्छर्दितः पूर्वं ताम्बूलरागादिना पुञ्जीभूतः, अधुना विरहमालिन्येन परिधूसर[4] इति **लोः** (लोकनाथः)। त्यक्तत्वात् परिधूसरो निजकस्वभावेन

1 ०मउआ० GB. 2 In place of नयने Ms has हृदये which is evidently a mistake. 3 Ms has the reading ०पाअड० marginally.
4 ०षरः Ms

परिसंस्थितोऽधररागो यस्या इति **कुः** (कुलनाथः)। विच्छर्दितैस्त्यक्तैस्ताम्बूलालक्तकादिभिः परिधूसर इति **श्रीनिवासः**। **केचित्तु**, परनिपातात् परिधूसरश्चेदतस्त्यक्तनिजकस्वभावतया परिसंस्थितोऽधररागो यस्याः, यद्वा, परिधूसर इति गुणप्रधानो निर्देशस्तेन बाष्पनिपातेन परित्यक्तधूसरगुणतया निजकस्वभावपरिसंस्थापितोऽधररागो यस्या इत्यर्थः। 'विच्छड्डिअ'-शब्दः पुञ्जिते त्यक्ते च देशी ॥४७॥

**वअणं समुव्वहन्ति[1] ओलुग्ग-कवोल[2]-णिव्वडन्ता[3]आमं ।**
**असमत्त-कला-दीहं कइ-दिअसासण्ण[4]-पूरिअव्वं व ससिं ॥४४॥**

**[वदनं समुद्वहन्तीं अवरुग्ण-कपोल-निर्वलदायामम् ।**
**असमाप्त-कला-दीर्घं कति-दिवसासन्न-पूरयितव्यं इव शशिनम् ॥]**

अवरुग्णौ विरहेण क्षामौ कपोलौ यस्या एवंभूतत्वेन निष्पद्यमान आयामो दैर्घ्यं यस्य, अवरुग्णकपोलत्वेन स्पष्टीभवद्दैर्घ्यमिति **केचित्**। असमाप्ताभिरसंपूर्णाभिः कलाभिर्दीर्घं कतिभिर्दिवसैरासन्नं पूरयितव्यं पूरणं यस्य, एवंभूतं शशिनमिव समुद्वहन्तीं, प्रकृते च रामविरहस्याचिरादेव विनश्वरत्वाद्विरहदौर्बल्यनाशे सीताकपोलयोः पूर्णतया मुखस्य तथात्वं भविष्यतीति भावः ॥४४॥

**देह-च्छवि-णिव्वडिए[5] [6]दिण्ण-दरुव्वत्त-रोअणा-सच्छाए ।**
**भूसण-बन्धण-मग्गे लक्खिज्जन्त-तलिण-ट्ठिए[7] वहमाणं ॥४५॥**

**[देह-च्छवि-निर्वलितान् दत्त-दरोद्वृत्त-रोचना-सच्छायान् ।**
**भूषण-बन्धन-मार्गान् लक्ष्यमाण-तलिन-स्थितान् वहमानाम् ॥ ]**

पूर्वं दत्ता विन्यस्ता पश्चाद्दरमीषदुद्वृत्ता दूरीकृता या रोचना तया सच्छायान् समानकान्तीनतएव विरहपाण्डरस्य देहस्य च्छवितः पृथगुपलभ्यमानान् लक्ष्यमाणं

---

1 °न्तं Ms 2 °कओल° GB. 3 °लन्ता° GB 4 °दि-अहा° GB. 5 °लिए° GB. 6 भिण्ण° GB. 7 °णत्थो GB.

तलिनं तनुकं स्थितं स्थानं येषां, भूषणनिष्पीडनात् कृशत्वं तत्र। भूषणबन्धनमार्गान् वहमानाम् ॥४५॥

दट्ठव्व-चडुल-णअणं [1]ओऊहण-लालस-प्फुरिअ-बाहु-लअं।
आसण्ण-ट्ठिअ-दइअं रसेण एक्क-सअणम्मि व विसूरन्तिं ॥४६॥

[द्रष्टव्य-चटुल-नयनां अवगूहन-लालस-स्फुरित-बाहु-लताम्।
आसन्न-स्थित-दयितां रसेन एक-शयने इव खिद्यमानाम्॥]

आसन्नस्थितो दयितो यस्याः। अतएव द्रष्टव्याय प्रियतमदर्शनाय चटुले[2] सतृष्णे नयने यस्याः, यद्वा, द्रष्टव्ये दर्शनार्हे प्रिये चटुलनयनां द्रष्टव्ये दर्शनेऽर्थाद्दयितस्य चञ्चलनयनामिति **कुलनाथः**। सुन्दरनयनामिति **श्रीनिवासः**। अवगूहनाय लालसे स्फुरिते बाहुलते यस्या न पुनः प्राप्तप्रियालिङ्गनामिति भावः। अतएवासन्नस्थितेऽपि दयिते दर्शनचुम्बनयोरसंपत्त्या रसेनानुरागेण एकस्मिन् शयने इव खिद्यमानाम्। आसङ्गस्थितदयितादिति **केचित्** ॥४६॥

दूसह-मिअङ्क-दंसण-[3]विउणअरुक्कण्ठ-णीसह-णिसण्णाङ्गिं।
गअ-जीविअ-परिसङ्किअ-णिसिअरि-हत्थ-परिमट्ठ-णिच्चल-
हिअअं ॥४७॥

[दुःसह-मृगाङ्क-दर्शन-द्विगुणतरोत्कण्ठा-निःसह-निषण्णाङ्गीम्।
गत-जीवित-परिशङ्कित निशिचरी-हस्त-परिमृष्ट-निश्चल-हृदयाम्॥]

दुःसहेन मृगाङ्कदर्शनेन द्विगुणतरयोत्कण्ठया निःसहनिषण्णान्यङ्गानि यस्यास्तामतएव गतजीविततत्वेन[4] परिशङ्कितानां निशिचरीणां गतजीवितेन मरणाकारेण परि-

1 उवऊ० GB. 2 चटुलालसे Ms. 3 दुउण० GB
4 ०जीवित्वे० Ms

शङ्कितानामिति **कुलनाथः**। हस्तैः परिमृष्टं निश्चलं मृगाङ्कदर्शनव्यामोहेन निष्पन्दं हृदयं यस्याः, गतजीवितेयमिति परिशङ्किताभिर्निशिचरीभि र्हस्तेन मृष्टं निश्चलं हृदयं यस्या इति **केचित्** ॥४७॥

हत्थेण बाह-गरुइअ-दूर-पलम्बालओत्थएण वहन्तिं।
पिअ-पेसिअङ्गुलीअअ-मणि-प्पहा-पाअडेक्क-[1]पासं व मुहं ॥४८॥

**[हस्तेन वाष्प-गुरूकृत-दूर-प्रलम्बालकावस्तृतेन वहन्तीम्।**
**प्रिय-प्रेषिताङ्गुलीयक-मणि-प्रभा-प्रकटैक-पार्श्वं इव मुखम् ॥ ]**

बाष्पेन गुरुकायितत्वाद् दूरप्रलम्बैः, गुरुत्वात् पतनमित्यर्थः। अलकैरवस्तृतेनाच्छादितेन वदनं वहन्तीं, मुखं कीदृशमभिज्ञानार्थं प्रियप्रेषितस्याङ्गुरीयकस्य मणेर्नीलवर्णस्येत्यर्थात् प्रभया प्रावृतैकपार्श्वमिव एकपार्श्वे प्रकटमाच्छादितैकपार्श्वमलकानां नीलमणिप्रभात्वेनोत्प्रेक्षेति **केचित्** ॥४८॥

आ[F70b]सण्ण-जुज्झ-विमणं राम-भुआसङ्घ-णिव्वविअ[2]-
सन्तावं।
हिअआवडिअ[3]-दहमुहं कह[4] मण्णे होहिइ त्ति विमुहिज्जन्तिं ॥४९॥

**[आसन्न-युद्ध-विमनसं राम-भुजाशाबन्ध(०भुजाध्यवसाय०)-निर्वापित-**
**सन्तापाम्।**
**हृदयापतितदशमुखां कथं मन्ये भविष्यति इति विमुह्यन्तीम् ॥ ]**

आसन्नेन युद्धेन विमनसं रामभुजाशाबन्धेन निर्वापितसन्तापां, युद्धे किं भविष्यतीति विमनायमानां पश्चाद्रामभुजापेक्षया निर्वापितसन्तापामिति **केचित्**। हृदयापतितदशमुखां दशमुखस्मरणात् कथं मन्ये भविष्यतीति किं रामो जेष्यति रावणो वेति विमुह्यमानां, किं जाने इति लोकोक्तिरियम् ॥४९॥

---

1 ०वा० Ms 2 ०णिहविअ० GB. 3 ०आवलिअ० GB.
4 किं GB.

समुहालोअण-विलिअं[1] विलिअ-णिमिल्लि-पिअ-दंसणूसुअ-
हिअअं ।
ऊसुअ-हिअउम्मिल्लं उम्मिल्लोसरिअ-पइ-मुह-किलिम्मन्तिं ॥५०॥

*[ कु(लकम्) ]

[सम्मुखालोकन-व्रीडितां व्रीडित-निमीलित-प्रिय-दर्शनोत्सुक-हृदयाम् ।
उत्सुक-हृदयोन्मीलितां उन्मीलितापसृत-पति-मुख-क्लाम्यन्तीम् ॥ ]

संकल्पानीतस्य रामस्य सम्मुखालोकनेन व्रीडितां रामस्य विरहेऽप्पीयच्चिरं जीवामीति संमुखालोकने व्रीडितामिति **कुः** (कुलनाथः) । मद्विरहेऽप्येषा जीवतीति रामस्य प्रतीति-शङ्कयेति **केचित्** । व्रीडितनिमीलितश्च लज्जासंकुचितश्च प्रियदर्शनोत्सुकश्च हृदयं यस्या-स्तामुत्सुकेन हृदयेनोन्मीलितां विकसितामित्यर्थः, रामरावणयो वीर्यपर्यालोचनेनोन्मीलि-तश्चापसृतश्च पतिमुखं यस्याः सा चासौ क्लाम्यन्ती चेति तथा तां, भावनावशेनोन्मीलितं प्रकटीभूतं पश्चाद्रावणत्रासाद्भावनापायेना[2]पसृतमदृश्यमानं यत् पतिमुखं तेन क्लाम्यन्ती-मिति प्राह ॥५०॥

दट्ठूण अ णं दूमिअ-हिअअ-पहोलन्त-संभरिअ-काअव्वा ।
अल्लीणा माआमअ-राम-[3]सिरुल्लअण-काअरा रअणिअरा ॥५१॥

[दृष्ट्वा च एनां दून-हृदय-प्रघूर्णमान-संस्मृत-कर्तव्याः ।
आलीनाः मायामय-राम-शिर उल्लयन-कातरा रजनीचराः ॥ ]

दृष्ट्वा चैनामेवंविधां सीतां व्यथिते हृदये प्रघूर्णमानं स्थैर्यमलभमानंवा अनवतिष्ठमानं वा संस्मृतं कर्तव्यं यैस्ते, मायामयस्य रामशिरसोऽर्पणे[4] कातरा व्यथितहृदया रजनीचरा आलीनाः समीपं गता इति **कुः** (कुलनाथः) । एवंभूते हृदये क्षणात् प्रस्मर्यमाणं

---

1 ०विडि० GB. 2 ०भावेना० Ms 3 ०सिरल्लि० Ms.
4 ०शिरोर्प० Ms.

क्षणाद्विस्मर्यमाणं कर्तव्यं येषामित्यर्थः। यद्वा, ईदृशे हृदये भ्रमत् सम्भृतस्य निष्पादितस्य, अर्थान्मायानिर्मितरामशिरसः कर्तव्यं सीतायै दर्शनरूपं येषां ते इति **लोकनाथः** ॥५१॥

अह तेहि तीअ पुरओ छेअ-समुव्वत्त-मास-दिण्णावेढं।
ठविअं राहव-वअणं लुअ-मज्झालग्ग[1]-वाम-हत्थं च धणुं॥५२॥

[अथ तैः तस्याः पुरतः छेद-समुद्वृत्त-मांस-दत्तावेष्टम्।
स्थापितं राघव-वदनं लून-मध्यालग्न-वाम-हस्तं च धनुः॥]

अथोपसर्पणान्तरं तैं क्रव्यादैस्तस्याः पुरतश्छेदस्थाने समुद्वृत्तेन परिवृत्तनिपतितेन मांसेन दत्तमावेष्टं[2] यत्र तद्राघववदनं, लूनमध्यः सन्नालग्नो वामहस्तो यत्रेदृशश्च धनुः स्थापितं, धनुर्व्यापारशालिनो रामस्य शिरश्छेदं कदाचिज्जानकी प्रतीयादिति छिन्नहस्तसहितं धनुर्दर्शितम् ॥५२॥

आलोइए विसण्णा [3]उअणिज्जन्तेम्मि वेविउं आढत्ता।
सीआ रअणिअरेहिं राम-सिर त्ति भणिए गअ च्चिअ मोहं॥५३॥

[आलोकिते विषण्णा उपनीयमाने वेपितुं आरब्धा।
सीता रजनीचरैः राम-शिरः इति भणिते गता एव मोहम्॥]

आलोकिते दूराद्दृष्टे विषण्णा किमेतैरानीयत इति संभ्रान्तचेतना, उपनीयमाने समीपमानीयमाने वेपितुमारब्धा किमेतैर्मनुष्यशिरो मत्समीपमानीयते तत् कस्यै-तद्भविष्यतीति त्रासोत्कम्पा जाता, रामशिर इति रजनीचरैर्भणिते च सीता मोहमेव गता, न पुनश्छिन्नस्य रामशिरसोऽलीकत्वाद्देवस्य मरणप्रातिकूल्येन समीहितकरणं प्राप्तैवेति भावः ॥५३॥

---

1 ०ज्झ-विल० GB. 2 दत्तावेष्टो Ms. 3 उव० GB

पडिआ अ हत्थ-सिढिलिअ-णिरोह-पण्डर[1]-समूससन्त-कवोला ।
[F71a]वाम-पओहर-पेल्लिअ[2]-विसमुण्णअ-डाहिण[3]-त्थणी जणअ-
सुआ ॥५४॥

[पतिता च हस्त-शिथिलित-निरोध-पाण्डर-समुच्छ्वसत्-कपोला ।
वाम-पयोधर-प्रेरित-विषमोन्नत-दक्षिण-स्तनी जनक-सुता ॥ ]

जनकसुता पतिता च न केवलं मोहितेति भावः । कीदृशी, पतनकाले निरोधत्वादतः पाण्डरः समुच्छ्वसन् यन्त्रणापायादुच्छूनतां गच्छन् कपोलो यस्याः, पाण्डरत्वञ्च करतल-निष्पीडनेन शोणितस्य दूरमुत्थानाद् वामेन पयोधरेणार्थाद्भूमिनिपतितेन प्रेरिता धृता च सा विषमोन्नतदक्षिणस्तनी चेति तथाभूता जनकसुता पतिता च ॥५४॥

[4]ण कओ बाह-विमोक्खो[5] णिव्वण्णेउम्पि ण चइअं राम-सिरं ।
णवर पडिवण्ण-मोहा गअ-जीविअ-णीसहा महीअ[6]णिषण्णा ॥५५॥

[न कृतः बाष्प-विमोक्षः निर्वर्णयितुं अपि न शक्तं राम-शिरः ।
केवलं प्रतिपन्न-मोहा गत-जीवित-निःसहा मह्यां निषण्णा ॥ ]

न कृतो बाष्पविमोक्षो निर्वर्णयितुञ्च न शक्तमर्थाद्रामशिरः, केवलं प्रतिपन्नमोहा गतजीवितनिःसहा मह्यां निषण्णा निपतिता । गतजीवितवन्निःसहा चेष्टाशून्येति लोकनाथः ॥५५॥

---

1 ०पण्डु० Ms. 2 पेल्लिअ० is placed before वाम० in GB. 3 ०दाहि० GB. 4 This verse is placed as verse 56 in GB, the 55th one in GB (i.e. "मरणम्मि बन्धवाणं जणस्स किं होइ बन्धवो विअ सरणं । तह गुरु-सोअ-कवलिआ धरम्मि पडिआ विमुच्छिआ धरणि-सुआ" ), being not found in Ms. 5 ०विमु० GB. 6 महिम्मि GB.

खण-णिच्चल-णीसासं जाअं [1]सोअन्धआर-साम-च्छायं ।
विरल-मिलिअच्छि-वत्तं मुच्छा-हीरन्त-तारअं तीअ मुखं ॥५६॥

[क्षण-निश्चल-निश्वासं जातं शोकान्धकार-श्याम-च्छायम् ।
विरल-मिलिताक्षि-पत्रं मूर्च्छा-ह्रियमाण-तारकं तस्याः मुखम् ॥ ]

क्षणान्निश्चलो गतागतक्रियाशून्यो निश्वासो यत्र । शोकान्धकारेण श्यामा मलिना छाया शोभा यस्य, विरलमिलितानि स्तोकसंलग्नान्यक्षिपत्राणि यत्र, मूर्छया ह्रियमाणाक्षिकनीनिका यत्रेदृशं तस्या मुखं जातम् । एतेन मूर्छामरणयोस्तुल्याकारदर्शनात् मूर्छायाः प्रबलत्वं कथितम् ॥५६॥

[2]विअलिअ-विओअ-विअणं[3]तक्खण-पब्भट्ठ[4]-राम-मरणाआसं ।
जणअ-तणआइ णवरं लद्धं मुच्छा-णिमीलिअच्छीअ सुखं ॥५७॥

[विगलित-वियोग-वेदनं तत्क्षण-प्रभ्रष्ट-राम-मरणायासम् ।
जनक-तनयया केवलं लब्धं मूर्छा-निमीलिताक्ष्या सुखम् ॥ ]

मूर्छानिमीलिताक्ष्या जनकतनयया विगलितवियोगवेदनं तत्क्षणप्रभ्रष्टराममरणायासं यथा स्यादेवं केवलं सुखं लब्धमर्थात् सम्भोगजन्यं सुखं लब्धं, सम्भोगसुखेनापि वियोगदुःखादीनामपायो मूर्च्छानिमीलिताक्षत्वञ्च स्यादिति दुःखाभावे सुखत्वाभिमानादेवं-विधोक्तिरिति **श्रीनिवासः** ॥५७॥

थण-परिणाह[5]-त्थइए तीए[6] हिअअम्मि पअणुअम्पि ण दिट्ठं[7] ।
दोहम्पि समूससिअं सूइज्जइ णवर वेविरे अहरोट्ठे ॥५८॥

[स्तन-परिणाह-स्थगिते तस्याः हृदये प्रतनुकं अपि न दृष्टम् ।
दीर्घं समुच्छ्वसितं सूच्यते केवलं वेपनशीले अधरोष्ठे ॥ ]

---

1 मोहन्ध० GB. 2 विसरिअ० GB. 3 ०दुक्खं GB. 4 ०पम्हट्ठ० Ms. 5 ०णाहो० GB. 6 तीअ Ms. 7 दट्ठं Ms.

शनैः शनैर्मोहावसानमाह । स्तनयोः परिणाहेन विशालतया स्थगिते हृदये प्रतनुकमपि न दृष्टं तस्या दीर्घमपि निश्वसितं केवलं वेपनशीलेऽधरोष्ठे सूच्यते । अधरकम्पादेवानुमीयत इत्यर्थः । पूर्वं निश्वासस्यानुमीयमानत्वमुक्तमधुना तस्याल्पपरिस्फुटत्वं शनैः शनैरुपरोधश्चाह ॥५८॥

[1]अपरिप्फुड-णीसासा तो सा मोह-विरमे वि णीसह-पडिआ ।
बज्झन्त[2]-बाह-गरुइअ-दुक्ख-समुव्वूढ-तारअं उम्मिल्ला ॥५९॥

[अपरिष्फुट-निश्वासा ततः सा मोह-विरमे अपि निःसह-पतिता ।
बध्यमान-बाष्प-गुरूकृत-दुःख-समुद्व्यूढ-तारकं उन्मीलिता ॥ ]

ततो मोहापगमादनन्तरमपरिष्फुटनिश्वासा मोहस्य विरामेऽपि निःसहपतिता सीता बध्यमानबाष्पगुरूकृतत्वाद् दुःखेन समुद्व्यूढा तारका यत्र, ईदृशं यथा स्यात्तथा उन्मीलिता प्रबुद्धा ॥५६॥

पेच्छइ अ सरहसोहरिअ-मण्डलग्गाहि [F71b]घाअ-विसम-च्छिण्णं ।
दूर-धणु-सन्धिअड्ढिअ[3]-सर-पुंखालिड्ढ-सामलइआवङ्गं ॥६०॥

[प्रेक्षते च सरभसावहृत-मण्डलाग्राभिघात-विषम-च्छिन्नम् ।
दूर-धनुः-सन्धिताकृष्ट-शर-पुङ्खालीढ-श्यामलितापाङ्गम् ॥ ]

चतुर्भिः कुलकं, प्रेक्षते च रामशिर इति शेषस्कन्धकेनान्वयः । अत्र चकारेण प्रबोधालोकनयोः समानकालीनत्वं दर्शितं, कीदृशं सरभसं सवेगमवहृतस्य व्यापारितस्य मण्डलाग्रस्याभिघातेन विषमं तिर्यक् छिन्नम् । धनुःसंहितस्य दूरमाकृष्टस्य शरस्य पुंखेन सदा संघर्षाच्छ्यामलीकृतापाङ्गम् ॥६०॥

---

1 अव० Ms. 2 अणुबज्झ-बा० GB. 3 ०अड्ढिअ० GB. ; अटठिअ० Ms.

णिव्वूढ[1]-रुहिर-पण्डुर-मउलन्त-च्छेअ-मास-पेल्लिअ-विवरं ।
भज्जन्त-पडिअ-पहरण-कण्ठ-च्छेअ-तड[2]-लग्ग-धारा-चुण्णं ॥६१॥

[निर्व्यूढ-रुधिर-पाण्डुर-मुकुलायमान-च्छेद-मांस-प्रेरित-विवरम् ।
भज्यमान-पतित-प्रहरण-कण्ठ-च्छेद-तट-लग्न-धारा-चूर्णम् ॥ ]

निर्व्यूढे[3]न विगलितेन रुधिरेण पाण्डरं रुधिरापायाद्धवलायमानं सङ्कोचं गच्छद् यच्छेद-मांसं तेन प्रेरितं दूरीकृतं विवरं यस्य, परनिपातात् पतितस्य प्रहरणस्य भज्यमानं सत् कण्ठ-च्छेदतटलग्नं धाराचूर्णं यस्य, अत्र रुधिरप्रवाहेण धाराचूर्णस्य सर्वलोपच्चरणे कण्ठदेशे तद्विद्यते ॥६१॥

णिद्दअ-सन्दट्ठाहर-मूलुक्खित्त-दर-दिट्ठ-दारा-हीरं ।
संखाअ-[4]सोणिअ-प्पङ्क-पडल-पूरेन्त-कसण-कण्ठ-च्छेअं ॥६२॥

[निर्दय-संदष्टाधर-मूलोत्क्षिप्त-दर-दृष्टदंष्ट्रा-हीरम् ।
संस्त्यान-शोणितोत्पीड-बहल-पूर्यमाण-कृष्ण-कण्ठ-च्छेदम् । ]

निर्दयसंदष्टस्याधरस्य मूलोत्क्षिप्तं न्यस्तं दरम् ईषद् दृष्टं, यद्वा दरेण भयेन दृष्टिगोचरी-कृतं सभयविलोकितं दंष्ट्राग्रं यत्र, संस्त्यानेन शोणितपङ्कपटलेन पूर्यमाणतया कृष्णः कण्ठ-च्छेदो यत्र, 'स्त्याने संखअ-संखाआ' ॥६२॥

णिसिअर-कअ[5]-ग्गहाणिअ-णडाल[6]-अड-णट्ठ-भिउडि-भुमआ-
भङ्गं ।
गलिअ-रुहिरद्ध-लहुअं अणहिअउम्मिल्ल-तारअं राम-
सिरं ॥६३॥

1 विव्वूढ॰ marginally. 2 ॰दव॰ GB. 3 विघूढेण Ms.
4 ॰सोणिउप्पील-बहल॰ Ms. 5 ॰कर॰ Ms, but it has ॰कअ॰ marginally 6 ॰णिलाड॰ GB.

[निशिचर-कच-ग्रहानीत-ललाट-तट-नष्ट-भ्रुकुटि-भ्रू-भङ्गम् ।
गलित-रुधिरार्ध-लघुकं अहृदयोन्मीलित-तारकं राम-शिरः ॥ ]

निशिचरैः कचग्रहेणानीतत्वाल्ललाटतटे नष्टो भ्रुकुटीभ्रूभङ्गो यत्र, कचग्रहे ललाट-चर्मणो दूरप्रसरणाद्, गलितरुधिरत्वादर्धलघुकमहृदयं हृदयशून्यमप्युन्मीलिततारकम् । अन्यत्र चैतन्यवत एव विस्मयादितारकोन्मीलनम् । अहृदयं निरभिप्रायमुन्मीलिततारकमिति श्रीनिवासः ॥६३॥

तह णिमिअ च्चिअ दिट्ठी मुक्क-कवोल-विहुरो [1]उर च्चिअ हत्थो।
गअ-जीविअ-णिच्चेट्ठा णवरि[2]अ सा महि-अलं थण-हरेण[3]
गआ ॥६४॥

[तथा मिलिता (नियोजिता) एव दृष्टिः मुक्त-कपोल-विधुरः उरसि एव हस्तः ।
गतजीवित-निश्चेष्टा अनन्तरं च सा मही-तलं स्तन-भरेण गता ॥ ]

यथा पूर्वं तथा रामशिरसि दृष्टिर्मिलितैव, एवम्मुक्तकपोलविधुर उरस्येव हस्तः, गत-जीवितनिश्चेष्टा अनन्तरं केवलं वा सा महीतलं स्तनभरेण गता, तथा च निश्चेष्टतया स्वकर्तृकपतनाभावेऽपि स्तनभरेणैव पतितेति भावः ॥६४॥

तो मुच्छिउट्ठिआए किं एअन्ति गअणे दिसासु अ समअं ।
सुण्ण-परिघोलिरच्छं जाअं मूढ-परिदेविअं तीअ मुहं ॥६५॥

[ततः मूर्छितोत्थितायाः किं पतत् इति गगने दिक्षु च समकम् ।
शून्य-परिघूर्णनशीलाक्षं जातं मूढ-परिदेवितं तस्याः मुखम् ॥ ]

ततः पतनानन्तरं मूर्छितोत्थितायास्तस्या मुखं मूढपरिदेवितमस्फुटविलापं जातं, कीदृशम् । किमेतदिति सममेकदा गगने दिक्षु च शून्यमगृहीतविषयं सत् परिघूर्णन-

---

1 तह च्चेअ करो Ms. 2 णवरं सा GB. 3 ०भरेण GB.

शीलमच्र्चि यत्र तत्तथा। **श्रीनिवासस्तु** रामस्य विपत्तौ कथं न धूमकेतूल्कापातादय इति कृत्वा गगने दिग्दाहादिकञ्च कथं न स्यादिति दिक्षु च प्रेरणमित्याह। अस्फुटपरिदेवितं परिदेवितमूढं वेति **केचित्** ॥६५॥

णिव्वण्णेऊण अ णं तत्तोहुत्त-ट्ठिओसिअन्त-णिसण्णो।
कंखन्तीअ ण पत्तो वअणं मरणं व[1] से कह वि अप्पाणो ॥६६॥

[निर्वर्ण्य च एतत् ततोऽभिमुख-स्थितावसीदन्-निःसंज्ञः[2]।
काङ्क्षन्त्याः न प्राप्तः वचनं मरणं इव तस्याः कथं अपि आत्मा ॥]

निर्वर्ण्य च तद्रामशिरः कांक्षन्त्यास्तस्या आत्मा शरीरं कर्तृ वचनं न प्राप्तं मरणमिव यथाभिलषितं मरणमपि न[3] लभ्यते तथा च वचनमपि न प्राप्तं वक्तुं न शक्तमित्यर्थः प्रकृतोपमेयम्। यद्वा, वचनं मरणं वा द्वयमपि न प्राप्तमित्यर्थः। आत्मा कीदृश स्ततोऽभिमुखस्थितः सन्नवसीदन्निःसहः स्पन्दशून्यः। आत्मा शरीरं मनो वा इति **श्रीः** (श्रीनिवासः) ॥६६॥

णवरि अ पसारिअङ्गी रअ-भरिउप्पह-पइण्ण-वेणी-बन्धा।
पडिआ उर-सन्दाणिअ-महि-अल-चक्कलइअ-त्थणी जनक-
सुआ ॥६७॥

[अनन्तरं च प्रसारिताङ्गी रजो-भृतोत्पथ-प्रकीर्ण-वेणी-बन्धा।
पतिता उरः-सन्दानित-मही-तल-चक्रीकृत-स्तनी जनक-सुता ॥]

उत्थानानन्तरञ्च प्रसारिताङ्गी रजोभृत उत्पथप्रकीर्णो वेणीबन्धो यस्याः, उरसा सन्दानितेन निरुद्धेन महीतलेन चक्रीकृतौ स्तनौ यस्या ईदृशीभूय जनकसुता पतिता ॥६७॥

---

1 Omitted in Ms. 2 'निःसंज्ञ' इति पाठे भूते 'संज्ञाशून्य' इत्यर्थः।

सव्वङ्ग-णिसण्णाइ[1] वि णीसेस-क्खविअ-वलि-विहङ्ग[2]-णिराओ ।
तीए मज्झ-पएसो थण[3]-जहण-करालिओ ण पावइ वसुहं ॥६८॥

[सर्वाङ्ग-निषण्णायाः अपि निःशेष-क्षपित-वली-विभङ्ग-निरायतः ।
तस्याः मध्य-प्रदेशः स्तन-जघन-करालितः न प्राप्नोति वसुधाम् ॥ ]

सर्वाङ्गनिषण्णाया अपि तस्याः निःशेषस्खलितवलीविभङ्गः सन्निरायतो दीर्घीभूतः स्तनजघनाभ्यां करालितः स्तनजघनयोर्महत्वादात्मनश्च[4] कृशत्वादिति भावः । अतो मध्यदेशो वसुधां भूमिं न प्राप्तः । पाठान्तरे वसुधां न प्राप्नोति स्तनाभ्यां जघनेन च करालितो मध्ये सावकाशीकृतो मध्यप्रदेश इति कुः (कुलनाथः) ॥६८॥

सहसालोअ-विराअं दइअ-मुहे तम्मि साणुणअ[5]-दट्ठव्वे ।
मोहं गन्तूण चिरं समअं बाहेण आगअं से हिअअं ॥६९॥

[सहसालोक-विलीनं दयित-मुखे तस्मिन् सानुनय-द्रष्टव्ये ।
मोहं गत्वा चिरं समकं बाष्पेण आगतं तस्याः हृदयम् ॥ ]

रावणवधानन्तरं सानुनयं साभ्यर्थनं द्रष्टव्ये तस्मिन् दयितमुखे सहसालोकेनातर्कितदर्शनेन 'विराअं' विलीनं, सानुनयं साभ्यर्थनं द्रष्टव्ये दयितमुखे तस्मिन् सति तद्रूपतां प्राप्ते सति सहसा तत्क्षणमेवालोकेन विलीनं तस्या हृदयं मोहं गत्वा बाष्पेण सममागतं, यदैव चेतना प्राप्ता तदैव बाष्पो विगलित इत्यर्थः । सानुशयेति **श्रीनिवास**सम्मते पाठान्तरे अनुशयो रावणं प्रति क्रोधः पश्चात्तापो वेति तेनैव व्याख्यातम् ॥६९॥

तो कह वि लद्ध-सण्णा बाहोवग्गिअ-कवोल-अल-संदट्ठं ।
मग्गइ संगोवेउं अलअं तीअ विहलो ण पावइ हत्थो ॥७०॥

---

1 ०अ० GB. 2 ०भङ्ग० GB. 3 त्थण० Ms. 4 ०त्वाद्रदास्म० Ms. 5 ०सअ० GB. Ms has also this reading marginally.

[ततः कथं अपि लब्ध-संज्ञा बाष्पाक्रान्त-कपोल-तल-संदष्टम् ।
मार्गति संगोपयितुं अलकं तस्याः विह्वलः न प्राप्नोति हस्तः ॥ ]

ततः प्रसारिताङ्गतया पतनानन्तरं कथमपि लब्धसंज्ञा सीता बाष्पाक्रान्ते कपोलतले सन्दष्टमलकमर्थाल्लोचनमावृत्य स्थितं संगोपयितुं रामावलोकनाय उत्सारयितुं मृगयते अभिलषति, विह्वलो व्याकुलस्तस्या हस्तो न प्राप्नोति दुर्बलतया तावद् दूरं नोत्तिष्ठतीत्यर्थः। लब्धसंज्ञ इति पाठे हस्तविशेषणं तदा मृगयति अन्विष्यतीत्यर्थः। संगोपयितुं यथास्थानं नेतुमित्यर्थ इति **केचित्**। विह्वलो व्याकुलो हस्तो न प्राप्नोत्यन्यत्रैव भ्रमतीति भाव इति **लो** (लोकनाथः) ॥७०॥

आवेअ-समुक्खित्तं तो से खेआगमोसिअन्तोवत्तं ।
पडिअं णिअउच्छङ्गे[1] [F72b] अप्पत्तं च्चिअ[2] पओहरे कर-
जुअलं ॥७१॥

[आवेग-समुक्षिप्तं ततः तस्याः खेदागमावसीददपवृत्तम् ।
पतितं निजोत्सङ्गे अप्राप्तं एव पयोधरौ कर-युगलम् ॥

ततोऽलकसंगोपनानन्तरमावेगेन हृदयताडनोद्वेगेन समुत्क्षिप्तं खेदस्यागमादवसीदद-पवृत्तं स्खलितं तस्याः करयुगलं पयोधरावप्राप्तमेव निजोत्सङ्गे पतितम्। पयोधरे प्राप्तमिति **श्रीः** (श्रीनिवासः)। पयोधरे पतितमिति **कुलनाथः** ॥७१॥

मूढ-हिअआइ दट्ठुं अचअन्तीअ समुहं कह वि राम-सिरं ।
तंसोणमन्त-णीसह-वअण-च्छन्द[3]-वलिआलआइ[4] पुलइअं ॥७२॥

[मूढ-हृदयया द्रष्टुं अशक्नुवत्या सम्मुखं कथं अपि राम-शिरः ।
तिर्यगवनमन्-निःसह-वदन-च्छन्द-वलितालकया प्रलोकितम् ॥ ]

---

1 ०उत्सङ्गे Ms. 2 च्चिअ GB. 3 ०च्छन्दं Ms. 4 आएनाइ B.

[F72b] कथमपि कृच्छ्रादपि संमुखं यथा स्यात्तथा रामशिरो द्रष्टुमशक्तवत्या अतएव मुग्धं हृदयं यस्यास्तया सीतया तिर्यगवनमन्निःसहस्य निष्प्रभतया तिर्यगवनमतो वदनस्य च्छन्देनाभिप्रायेण वलितालका यस्या एवंभूतया प्रलोकितम्। एवंभूतस्य वदनस्य छद्मना व्याजेन वलितालकयेति **कुलनाथः**। अयमर्थः। वदनस्य निःसहतया रामशिरोऽवलोकनाय उन्नमनं न जातमेव चक्षुषोरलकावृतत्वाच्च तथाविधयापि तया द्रष्टुं न शक्तम्, अतो वदनस्य वलितत्वेनालकस्यापि वलनादालोकितमित्यर्थः, तथाविधमपि द्रष्टुं साभिलाषत्वान् मूढं हृदयं यस्या इति **कुलनाथः** ॥७२॥

**परिदेविउं पअत्ता[1] तो[2] णिअअ-सरीर-मुक्क-राहव-दुक्खं।**
**कर-मग्गुट्ठिअ-सोणिअ-विवण्ण-उण्णअ-पओहरा जणक-सुआ ॥७३॥**

**[परिदेवितुं प्रवृत्ता ततः निजक-शरीर-मुक्त-राघव-दुःखम्।**
**कर-मार्गोत्थित-शोणित-विवर्णोन्नत-पयोधरा जनक-सुता ॥]**

ततः क्रमेण मूर्च्छानाशानन्तरं करमार्गे कराहतिस्थाने उत्थितेन शोणितेन विवर्णावुन्नतौ च पयोधरौ यस्याः सा जनकसुता। करप्रहारादिना निजशरीरे मुक्तं राघवदुःखं यत्र, एवं यथा स्यात्तथा परिदेवितुं प्रवृत्ता। निजकशरीरे स्तनघातादिना स्थापितं राघवदुःखं यत्रेति **केचित्** ॥७३॥

**आवाअ-[3]भअअरच्चिअ ण होइ दुक्खस्स दारुणं णिव्वहणं।**
**जं महिला-वीहच्छं[4] दिट्ठं सहिअव्व तुह मए अवसाणं ॥७४॥**

**[आपात-भयङ्करं एव न भवति दुःखस्य दारुणं निर्वहणम्।**
**यत् महिला-बीभत्सं दृष्टं सहितं (सोढं वा) च तव मया अवसानम् ॥]**

---

1 पउत्ता GB. 2 तो omitted in GB which read ०पडिमुक्क०
3 ०ङ्कर० Ms. 4 ०त्थं GB.

दुःखस्य निर्वहणं भोगेन पर्यन्तगमनमापातभयकरमेव। एवंविधस्य दुःखस्य कथं पारं गन्तव्यमित्यापतितमेवं भयं स्यादित्यर्थः। निर्वहणं दारुणं न भवति, आपाततो यथा भयं तथा परिणामे न भवतीत्यर्थः। यद्यस्मान्महिलानां स्त्रीमात्राणां बीभत्सं जुगुप्सितं यथा स्यान्मया तवावसानं दृष्टं सोढञ्च। समापनं न दारुणं भवति प्राणान्तं न करोतीत्यर्थः ॥७४॥

**बाहुण्हं तुज्झ उरे जं मोच्छिहिमि त्ति संठिअं मह हिअए।**
**घर-णिग्गमण-पअत्तं तं[4] साहसु कम्मि णिव्वविज्जउ[5] दुक्खं ॥७५॥**

**[बाष्पोष्णं तव उरसि यत् मोक्ष्यामि इति संस्थितं मम हृदये।**
**गृह-निर्गमन-प्रवृत्तं तत् शाधि कस्मिन् निर्वाप्यतां दुःखम् ॥ ]**

गृहनिर्गमनात् प्रभृति प्रकर्षेण वृत्तमुत्तरोत्तरवृद्धिगतं यत् दुःखम्। बाष्पोष्णं यथा स्यात्तथा। तव उरसि मोक्ष्यामीति मम हृदये सम्यक् स्थितमवधारितम्। तद् दुःखं कस्मिन्निर्वाप्यतां शान्तिं नीयतामिति कथम्। पाठान्तरे निर्वर्ण्यतां प्रकाश्यताम्। उत्-कण्ठावशादेव छिन्नेऽपि रामशिरसि च(?) त्वमित्यादिसम्बोधनोक्तिः सङ्गच्छते ॥७५॥

**विरहम्मि तुज्झ धरिअं दच्छामि तुमं त्ति जीविअं कह वि मए।**
**तं एअसि[6]मे दिट्ठो फलिआ वि मणोरहा ण पूरेन्ति महं ॥७६॥**

**[विरहे तव धृतं द्रक्ष्यामि त्वां इति जीवितं कथं अपि मया।**
**तत् एवं असि मे दृष्टः फलिताः अपि मनोरथाः न पूर्यन्ते मम ॥ ]**

त्वां द्रक्ष्यामीति हेतोस्तव विरहे कथमपि जीवितं मया धृतं स्थिरीकृतं तत् तत एवंरूपश्छिन्नरूपो मया दृष्टोऽसि। यद्वा, तदेव तच्चिन्तानुरूपं मया दृष्टोऽसि। यथा फलिता अपि मम मनोरथा न पूर्यन्त एवंरूपदर्शनानुरूपं मनोरथपूरणं मरणमेव, तच्चेन्न सम्पद्यत इति भावः। यद्वा, मनोरथस्य फलं दर्शनं वृत्तमेव मृतावस्थो दृष्टोऽसीति न तस्य पूर्तिरिति भावः ॥७६॥

---

3 ०हिइ Ms. 4 तं after साहसु in GB. 5 Another reading णिव्वरिणज्झउ marginally noted in Ms, 6 एस मए GB.

पुहईअ[1] होहिइ पई बहु-पुरिस[2]-विसेस-चञ्चला राअ-सिरी ।
कह आ[3] महं च्चिअ[4] इमं णीसामण्णं उवत्थिअं[5] वेहव्वं ॥७७॥

**[पृथिव्याः भविष्यति पतिः बहु-पुरुष-विशेष-चञ्चला राज-श्रीः ।
कथं आः मम एव इदं निःसामान्यं उपस्थितं वैधव्यम् ॥ ]**

[F 73a] पृथिवी राजश्रीः सीता चेति "आसते पत्नयः"[6] । तत्र पृथिव्या भविष्यति पतिः पतिशून्यायाः पृथिव्याः सर्वथा अनवस्थानात् । एवं राजश्रीर्बहुषु पुरुषविशेषेषु प्रधानपुरुषेषु चञ्चला राजश्रीः 'आः खेदे' कथं ममैवेदं निःसामान्यमसाधारणमुपस्थितं वैधव्यं(म्) । कथंशब्दो विस्मये । स चैकपत्नीनां तिसृणां मध्ये पतिमरणे द्वयोरवैधव्यादिति भावः । 'कह आ' कथं तावदिति **श्रीनिवासः** ॥७७॥

किं एअन्ति[7] पलत्तं विसउम्मेल्लेहि लोअणेहि अ दिट्ठं ।
विअलिअ-लज्जाइ मए होइ फुडं णाह तुह मुहं[8] त्ति
परुण्णं ॥७८॥

**[किं एतत् इति प्रलपितं विशदोन्मीलिताभ्यां लोचनाभ्यां च दृष्टम् ।
विगलित-लज्जया मया भवति स्फुटं नाथ तव मुखं इति प्ररुदितम् ॥ ]**

किमेतदिति प्रलपितं, दशमुखस्य पराभवे चिन्त्यमाने किमिदं विपरीतं जातमिति प्रलापः कृत इत्यर्थः । विशदं विस्पष्टमुन्मीलिताभ्यां सविस्मयाभ्यामित्यर्थः । लोचनाभ्याञ्च दृष्टं विस्मयस्य च व्यभिचारि भावस्योन्मीलितत्वानुभावमुखेन कथनमेवोचितं स चाकस्मादेवंरूपदर्शनादिति भावः । **श्रीनिवासस्तु** दूरादानीयमाने शिरसि किमेतदिति प्रलपितं शिर इति ज्ञात्वा विषादोन्मीलिताभ्यां लोचनाभ्यां दृष्टमित्याह । हे नाथ, तव

---

1 पुहवी० GB. 2 ०पुरुष० (Sanskrit form) in MS. 3 ता GB. 4 चिअ GB. 5 उअ० GB. 6 'अस्ते पत्यु' MS. 7 ०त्ति B 8 मुह MS.

मुखं भवतीति विगलितलज्जया मया स्फुटं प्ररुदितं लोचनवारि त्यक्तं, विगलितलज्जत्वादेव मया प्रलापनिरोक्षणरोदनानि कृतानि न पुनश्छिन्नशिरोदर्शनमात्राज्जीवितं त्यक्तमिति भावः ॥७८॥

सहिओ तुज्झ विओओ रअणिअरीहि समअं सहीहि व वुत्थं।
दट्ठुं तुमन्ति होन्तं[1] जइ एत्ताहे वि जीविअं विअलन्तं ॥७९॥

[सोढः तव वियोगः रजनीचरीभिः समकं सखीभिः इव व्युषितम्।
द्रष्टुं त्वां इति अभविष्यत् यदि इदानीं अपि जीवितं व्यगलिष्यत् ॥]

सोढस्तव वियोगस्तव वियोगेऽपि प्राणा न त्यक्ता इति भावः। रजनीचरीभिः समं सखीभिरिवोषितं प्राणप्रमाथिनीभिरपि ताभिः सख्येनेव कालो गमित इत्यर्थः। एतत् सर्वं त्वां द्रष्टुमित्यभविष्यद् यदीदानीमपि छिन्नशिरोदर्शनेऽपि जीवितं व्यगलिष्यत्। एवं दृष्ट्वापि चेज्जीवितं न गलितमतः सर्वमेतन्मिथ्यैवेति भावः। प्राकृते क्रियातिपत्तेः लृङ्वत् प्रयोगः ॥७६॥

जाए पर-लोअ-गए तुमम्मि ववसाअ-मेत्त-सुह-दट्ठव्वे।
हरिस-ट्ठाणे वि महं डज्झइ अदिट्ट-दहमुह-वहं हिअअं ॥८०॥

[जाते पर-लोक-गते त्वयि व्यवसाय-मात्र-सुख-द्रष्टव्ये।
हर्ष-स्थाने अपि मम दह्यते अदृष्ट-दशमुख-वधं हृदयम् ॥]

परलोकगते त्वयि व्यवसायमात्रेणानुमरणरूपेण सुखद्रष्टव्ये जाते सति हर्षस्थानेऽप्यदृष्टदशमुखवधं मम हृदयं दह्यते। हर्षश्च आधत्तेनानुमरणव्यवसायेन दर्शनस्यावश्यकत्वात् तथा च दशमुखवधं दृष्ट्वा यन्न मृतास्मि तदेव दुःखं तन्मरणादप्यतिरिच्यत इति भावः ॥८०॥

---

1 ०त्तं B.

बाहं ण धरेइ मुहं आसा-बन्धो[1] वि मेण रुम्भइ हिअअं ।
[2]णवरञ्चिन्तिज्जन्ते ण विणज्जइ केण जीविअं संरुद्धं ॥८१॥

[बाष्पं न धारयति मुखं आशा-बन्धः अपि न रुणद्धि हृदयम् ।
केवलं चिन्त्यमाने न विज्ञायते केन जीवितं संरुद्धम् ॥ ]

मुखं कर्तृ बाष्पं न धारयति, सदा बाष्पो वहत्येवेत्यर्थः । आशाबन्धोऽपि मे हृदयं न रुणद्धि आशाबन्धं परित्यज्य हृदयं मरणमेव धावतीत्यर्थः । केवलं चिन्त्यमाने विचार्य न ज्ञायते केन मे जीवितं संरुद्धं, बाष्पस्य हृदयस्य च निर्गमे प्रतिबन्धकसत्त्वेऽपि तयोर्निगमो वृत्त एव । जीवनिर्गमे तु, किमपि प्रतिबन्धकं न दृश्यते तथापि स कथं न स्यादित्यर्थः । 'आसाबन्धं वि' इति पाठे हृदयं कर्तृ । आशाबन्धं न रुणद्धि हृदयादाशाबन्धो द्रवं गत एवेत्यर्थः । तथा च बाष्पस्याशाबन्धस्य च जीवनचिह्नस्याभावात् कथं जीवितं तिष्ठतीति भावः ॥८१॥

वोलीणो महर-हरो मज्झ कएण मरणम्पि दे पडिवण्णं ।
णिव्वूढं णाह तुमे अज्ज वि धरइ[3] [4]अकअण्णुअं मह[4]
हिअअम् ॥८२॥

[व्यतिक्रान्तः मकर-गृहः मम कृतेन मरणं अपि ते प्रतिपन्नम् ।
निर्व्यूढं नाथ त्वया अद्य अपि ध्रियते अकृतज्ञकं हृदयम् ॥ ]

हे नाथ, मम कृते मकरगृहः समुद्रो व्यतिक्रान्तः । न केवलं समुद्रलंघनं मरणमपि ते प्रतिपन्नं निष्पन्नं ते त्वया स्वीकृतमिति वा । अतस्त्वया निर्व्यूढं प्रेमोचितमनुष्ठितं मम हृदयमकृतज्ञमुपकारानभिज्ञं चेदतोऽद्यापि ध्रियतेऽवतिष्ठते । मद् ऋते प्राप्तमरणस्य तव ईदृशावस्थादर्शनादविलम्बितं मरणमेवोचितमिति भावः । मकरगृहेत्युचितपदम् ॥८२॥

---

1 'असाबन्धं वि"—reading marginally noted. 2 णवरि अ चि० GB. 3 धरे० MS. 4 कअमरहअं मम Ms.

उग्गाहिइ रा[F73b]म तुमं गुणे गणेऊण पुरिस-मइओ त्ति जनो।
गलिअ-महिला-सहावं सम्भरिऊण अ ममं[1] णिअत्तिहिइ
कहं ।८३॥

[उद्गास्यति राम त्वां गुणान् गणयित्वा पुरुष-मतिकः इति जनः ।
गलित-महिला-स्वभावां संस्मृत्य मां निवर्तयिष्यति कथाम् ॥ ]

गुणान् धैर्यशौर्यादीन् गणयित्वा पुरुषमतिकः पुरुषाभिमानवानिति जनस्त्वामुद्गास्यति सर्वकालमेव निगीतेन स्तोष्यतीत्यर्थः । पुरुषमयः पुरुषप्रकृतिक इति **श्रीनिवासः**। गलितमहिलास्वभावां पतिमरणेऽप्यमुक्तजीवितया लंघितस्त्रीस्वभावां मां संस्मृत्य कथां निवर्तयिष्यन्ति मम कथां पुनः स्मरणमात्रादेव निवर्तयिष्यतीत्यर्थः । पतिमरणेऽप्यमरणाद् गलितस्त्रीभावां मम कथां स्मृत्वा पुनर्निवर्तिष्यते अर्थाज्जन इति **कुलनाथः**। गलितमहिलास्वभावां मां स्मृत्वा पुनः कथा एव निवर्तिष्यत इति **श्रीनिवासः** ॥८३॥

तुह बाणुक्खअ-पडिअं[2] दच्छिमि दह[3]कण्ठ-मुह-णिहाअन्ति
कआ ।
मह भाअधेअ-वलिआ[4] विवराहुत्ता मणोरहा पल्हत्था[5] ॥८४॥

[तव बाणोत्खात-पतितं द्रक्ष्यामि दशकण्ठ-मुख-निघातं इति कृताः ।
मम भागधेय-वलिताः विपराङ्मुखाः मनोरथाः पर्यस्ताः ॥ ]

तव बाणोत्खातपतितं दशकण्ठमुखनिघातं द्रक्ष्यामीति कृता मनोरथा मम भागधेयेऽदृष्टे पतिताः पाठान्तरे वलिताः सन्तो विपरांमुखा पर्यस्ताः प्रतिहताः । मम मनोरथा भागधेयेन दैवेन वलिताः प्रेरिताः सन्तो विपराङ्मुखाः पर्यस्ता विपर्यासं गता इत्यर्थ इति **कुलनाथ-श्रीनिवासौ** ॥८४॥

---

1 महं Ms. 2 °णिहअं GB. 3 दस° Ms. 4 °वडिआ
5 पल्लत्था Ms.

जं तणुअम्मि वि विरहे पेम्माबन्धेण संकइ जणस्स जणो ।
तं जाअं णवर इमं [1]पच्चक्खं तस्स तारिसं मज्झ फलं ॥८५॥

[यत् तनुके अपि विरहे प्रेमाबन्धेन शङ्कते जनस्य जनः ।
तत् जातं केवलं इदं प्रत्यक्षं तस्य तादृशं मम फलम् ॥ ]

यत्तनुकेऽपि विरहे प्रेमाबन्धेन जनस्य जन आशङ्कतेऽनिष्टं विकल्पयति । तस्य विकल्पस्य तस्यानिष्टाशङ्कितस्येति कुः (कुलनाथः) । तादृशं यथाशङ्कितं तत् फलं मम केवलं प्रत्यक्षं जातम् । अन्येषान्तु पुण्यात्मनां शङ्कामात्रं न कदापि प्रत्यक्षगोचरमिति भावः । सुहृज्जनः सुहृदो विच्छेदेऽनिष्टमेव शङ्कत इति जातिः ॥८५॥

तो विलविअ-णित्थामं[2] गलन्त-हिअअ-परिसुण्ण-लोअण-जु-
अलम् ।
महुरं आसासन्ती[3] हत्थुण्णामिअ-मुही भणइ णं तिअडा ॥८६॥

[ततः विलपित-निस्थामानं गलद्धृदय-परिशून्य-लोचन-युगलाम् ।
मधुरं आश्वासयन्ती हस्तोन्नामित-मुखी भणति एनां त्रिजटा ॥ ]

ततः परिदेवनानन्तरं विलपितैर्निस्थामानम्[4] । निःस्थामानं निःसहामिति कुः (कुलनाथः) । निःसहाङ्गीं गलता हृदयेन परिशून्यं सर्वतो विषयान्निवृत्तं लोचनयुगलं यस्याः, एनां सीतां मधुरमाश्वासयन्ती हस्तोन्नामितचिवुकं गृहीत्वा उत्थापितं सम्मुखमर्थात् सीताया यया सा त्रिजटा भणति । हत्थुण्णामिअमुहीमिति[5] पाठे सीताविशेषणं, मुहमिति पाठात् क्रियाविशेषणम् । अत्र शून्यलोचनायां सीतायां सुपरिचयात् स्नेहभारवशाद्वा हस्तेन मुखोन्नामनमिति केचित् ॥८६॥

---

1 पेच्छन्तीए अ GB  2 ०णिप्फन्दं GB.  3 ०सेन्ती Ms.
4 ०निस्थाम्नीं Ms.  5 ०मुहीति Ms.

अवरिगलिओ विसाओ अखण्डिआ मुद्धआ ण पेच्छइ पेम्मं ।
मूढो जुअइ-सहावो[1] तिमिराहि वि दिणअरस्स चिन्तेइ
भअं ॥८७॥

[अपरिगलितः विषादः अखण्डिता मुग्धता न प्रेक्षते प्रेम ।
मूढः युवति-स्वभावः तिमिरात् अपि दिनकरस्य चिन्तयति भयम् ॥]

अपरिगलितो विचारशून्यो विषादः । परिगणना[2] विचार इति यावत् । विषादे विचारो न स्यादित्यर्थः । विविच्य स्थिरीकरणसमर्था बुद्धिः पण्डा[3] तच्छून्या मुग्धता मोहाक्रान्तश्चित्तवृत्तिविशेष इति यावत् । प्रेम कर्तृ न प्रेक्षते न प्रकृष्टमीक्षतेऽनिष्टमेव पश्यतीत्यर्थः । मूढो बहुशो दृष्टस्वभावेऽपि वस्तुनि विपरीतदर्शी युवतिस्वभावः । तिमिरादपि सूर्यपराभवं चिन्तयति । तथा च तवैव विषादोऽस्तीति न विचारः । विषादादि त्रयमपि युवतिस्वभावः स च मूढो विवेचनाक्षमः ॥८७॥

तिहुअण-मूलाहारं [4]विहुर-महिन्द-[5]पडिमुक्क-णिव्वूढ-धुरं[6] ।
जाणन्ती कीस तुमं तुलेसि सेस-पुरिसा[F74a]णुमाणेण पइं ॥८८॥

[त्रिभुवन-मूलाधारं विधुर-महेन्द्र-प्रतिमुक्त-निर्व्यूढ-धुरम् ।
जानती कस्मात् त्वं तुलयसि शेष-पुरुषानुमानेन पतिम् ॥ ]

त्रिभुवनस्य मूलाधारमाधाश्रयं यद्वा, त्रिभुवनस्य मूलस्य ब्रह्मण आधारमाश्रयं तस्य तन्नाभिपद्मालयत्वाद्, विधुरेण दैत्यजन्यपराभवविफलेन महेन्द्रेण प्रतिमुक्ता पश्चान्निर्व्यूढा दैत्यान्निर्जित्य धृता धूः स्वाराज्यभारो येन ईदृशं नारायणं पतिं जानत्यपि किं शेषपुरुषानुमानेन तुलयसि, इतरपुरुषमिव शत्रुच्छिन्नशिरसं संभावयसीति भावः । अत्र आद्य-

1 जुवइ-सआओ GB. 2 This word suggests a different reading 'अवरिगणिओ' 3 This word again suggests a different reading 'अपरिडआ' 4 विसढ० GB 5 ०परि० Ms. 6 वढ-रण-धुरं GB.

विशेषणेनाश्रयभूतस्यापाये सति त्रिभुवनस्यापायोऽवश्यमेव भविष्यति, द्वितीयेन पृथिवीभारभूतानां रावणादीनां निग्रहार्थमेव तस्य प्रादुर्भाव इति सूचितं, तथा चानावध्यादिकमिव छिन्नशिरसं पतिं संभावयितुं नार्हसीति भावः ॥८८॥

**अमिलिअ-साअर-सलिला अणह-ट्ठिअ-महिहरा अणुव्वत्त-अला।**
**रामस्स छिण्ण-पडिअं कह पत्तिअसि धरणी धरेइ त्ति सिरं ॥८९॥**

**[अमिलित-सागर-सलिला अनघ-स्थित-महीधरा अनुद्वृत्त-तला।**
**रामस्य छिन्न-पतितं कथं प्रत्येषि धरणी धारयति इति शिरः॥ ]**

[F74a] अमिलितानि सागरसलिलानि यस्यां, अनघा अपरिनष्टाः स्थिता महीधरा यत्र, अनुद्वृत्तमविपर्यस्तं तलं यस्या एवंभूता धरणी रामस्य छिन्नपतितं शिरो धारयतीति कथं प्रत्येषि, एवञ्च यदि सत्यमेव रामस्य शिरोऽभविष्यत् तदा समसागराणामप्येकत्वं, पर्वतानां निपातः, पृथिव्या वैपरीत्यमभविष्यदित्यर्थः ॥८९॥

**मारुअ-मोडिअ-विडवं मिअङ्क-किरण-पडिमास[1]-मउलिअ-**
**कमलं।**
**कह होइ राम-मरणे[2] इअ[3] णिच्छाअं दसाणण-घरुज्जाणं ॥९०॥**

**[मारुत-मोटित-विटपं मृगाङ्क-किरण-प्रतिमर्ष-मुकुलित-कमलम्।**
**कथं भवति राम-मरणे इति निच्छायं दशानन-गृहोद्यानम्॥ ]**

मारुतमोटितविटपं मृगाङ्ककिरणस्पर्शमुकुलितकमलमित्येवं भ्रष्टशोभं दशाननगृहोद्यानं राममरणे कथं भवति। मारुतमृगाङ्काभ्यामकृतपूर्वस्य रावणविरुद्धस्याऽधुना रामोपस्तम्भेन क्रियमाणत्वात्, तस्माद्राममरणं मिथ्यैवेति भावः ॥९०॥

---

1 परि० marginally noted in Ms. 2 ०वडणे० GB. 3 इह Ms.

मा रुअसु पुससु बाहं अवऊहेऊण[1] अंस-परिअत्त-मुहं ।
सम्भरिअ विरह-दुक्खं रोत्तव्वन्ते[2] पुणो पइस्स वि अङ्के ॥९१॥

[मा रोदीः प्रोञ्छ वाष्पं अवगृह्य अंस-परिवृत्त-मुखम् ।
संस्मृत्य विरह-दुःखं रोदितव्यं ते पुनः पत्युः अपि अङ्के ॥ ]

मा रोदीः प्रोञ्छ बाष्पं रामवधस्यालीकत्वादिति भावः । अंसे अर्थात् पत्युः स्कन्धे परिवृत्तं मुखं यत्र एवं यथा स्यात्तथा, अवगूह्यालिङ्गय विरहदुःखं संस्मृत्य स्मृतविरहदुःखं यथा स्यादेवं वा, पत्युरप्यङ्के पुनस्त्वया रोदितव्यमतः पुनरप्यचिरादेव रोदितव्येऽधुना मा रोदीरित्यर्थः ॥९१॥

अइरा [3]दच्छिहिसि तुमं तुह विरहोलुग्ग-पण्डर[4]-मुह-च्छाअं ।
गअ-रोस-सुहालोअं ओआरिअ-चाव-णिव्वुअं[5] दासरहिं ॥९२॥

[अचिरात् द्रक्ष्यसि त्वं तव विरहावरुग्ण-पाण्डर-मुख-च्छायम् ।
गत-रोष-सुखालोकं अवतारित-चाप-निर्वृतं दाशरथिम् ॥ ]

विरहेणावरुग्णा चामा पाण्डरा मुखच्छाया यस्य तं, रावणनाशाद्गतेन रोषेण सुखालोकमपसारितचापश्चासौ निर्वृतश्चेति तं दाशरथिमचिराद् द्रक्ष्यसि ॥९२॥

पत्तिअ[6] अमरिस-भरिअं हरेण वि अपत्थणिज्ज-कण्ठ-च्छेअं ।
फुट्टन्तं जइ होन्तं [7]छिण्णम्पि कअ-ग्गहोधूअं[8] राम-सिरं ॥९३॥

[प्रतीहि अमर्ष-भरितं हरेण अपि अप्रार्थनीय-कण्ठ-च्छेदम् ।
अस्फुटिष्यत् यदि अभविष्यत् छिन्नं अपि कच-ग्रहावधूतं राम-शिरः ॥

---

1 उग्रऊ० GB. 2 ०व्वं दे GB. 3 दच्छिहि GB; also preceded by अ in GB. 4 ०पण्डु० GB. 5 ०दं Ms. 6 ०हि GB. 7 चिण्ण० Ms. 8 ०ग्गहुग्गअं GB.

अस्तु तावद्रावणेन कण्ठच्छेदं हरेणापि रावणवरप्रदेनापि, अप्रार्थनीयोऽसंभावनीयः कण्ठच्छेदो यस्य तद्रामशिरो यद्यभविष्यत् तदामर्षेण वह्निनेव पुटपाकवत् पूरितमध्यं कचग्रहावधूतं सत् तदा रजनीचरैः कचग्रहावधूतं सत् स्फुटितमभविष्यदिति प्रतीहि, रजनिचरैः कचग्रहेऽपि न स्फुटितश्चेदतो न भवत्येव रामशिर इति भावः ॥६३॥

**किन्ति समाससिअव्वे मुज्झसि [1]दहवअण-दप्प-भङ्गुप्फालं ।**
**पेच्छन्ती [F74b] पमअ-वणं रामाणत्तिअर-पवअ-पव्विद्ध[2]-**
**दुमं ॥९४॥**

**[किं इति समाश्वसितव्ये मुह्यसि दशवदन-दर्प-भङ्गोत्फालम् ।**
**प्रेक्षमाणा प्रमद-वनं रामाज्ञप्तिकर-प्लवग-प्रविद्ध-द्रुमम् ॥ ]**

इति राममायाशिरोदर्शने दशवदनस्य समाश्वसितव्ये रावणस्य वीरोचितचेष्टान्यथाभावदर्शनात् समाश्वासस्थाने रामाज्ञप्तिकरेण प्लवगेन हनूमता प्रविद्धा भग्नाः पर्यासिता द्रुमा यत्र तत् प्रमदवनं दशवदनस्य दर्पभङ्गोत्फालं भज्यमानेन दर्पेण कृतमङ्गविक्षेपमिव पश्यन्ती किं मुह्यसि, यस्यैकस्य किंकरस्य एवंविधो विक्रमस्तस्य सुग्रीवविभीषणादिपुरःसरस्य कथं मोहादेवंविधं मरणं प्रत्येषीति भावः, दर्पभङ्गोत्फालं कण्टकमिति **श्रीः** (श्रीनिवासः) ॥६४॥

**णिहउक्खअ-सुर-लोअं दरिअ-णिसाअर-णिहाअ-पल्हत्थन्तं ।**
**कह तेण खणम्पि[3] विणा धरेइ जस्स भुअणं [4]भुआवट्ठम्भं ॥९५॥**

**[निहतोत्खात-सुर-लोकं दृप्त-निशाचर-निघात-पर्यस्यमानम् ।**
**कथं तेन क्षणं अपि विना ध्रियते यस्य भुवनं भुजावष्टम्भम् ॥ ]**

निहता व्यापादिता उन्मूलिताश्च अर्थाद्रावणेन सुरलोका यत्र तत्तथा, एवं दृप्तेन निशाचराणां निघातेन समूहेन पर्यस्यमानं सत् भुवनं यस्य भुजव्यवष्टम्भं यद्भुजावलम्बनं भुज एव अवष्टम्भः आश्रयो यस्य इति **कुः** (कुलनाथः) तथाभूतं, तेन नारायणावतारेण

---

1 दस० Ms. 2 ०आविद्ध० GB. 3 ०णं मि G, ०णं वि B.
4 भुअअ-वव० Ms.

विना कथं ध्रियते अवतिष्ठते चेदतो मृषैव राममरणमिति भावः। रावणाक्रमणपर्यस्तं भुवनं यद्भुजमवलम्ब्य स्थैर्यं लभते तेन विना तत् कथमवतिष्ठतामिति भाव इति **लोः** (लोकनाथः) ॥६५॥

**तह तं सि गआ मोहं मुच्छागम[1]-पडिअ-णीसह-णिसण्णङ्गी[2] ।**
**रक्कस-माअ[3]त्ति फुडं जाणन्ती जह इमं अहम्पि विसण्णा ॥९६॥**

**[तथा त्वं असि गता मोहं मूर्च्छागम-पतित-निःसह-निषण्णाङ्गी ।**
**राक्षस-माया इति स्फुटं जानती यथा इदं अहं अपि विषण्णा ॥ ]**

मूर्छागमेन पतितानि निःसहनिषण्णान्यङ्गानि यस्याः सा त्वं तथा मोहं गतासि यथा राक्षसमायेति स्फुटमिदं जानती अहमपि विषण्णा। अतः सहसा त्वय्याश्वासं न कृतवतीति भावः। निःसहानि करणव्यापारशून्यान्यङ्गानि यस्या इति **लोः** (लोकनाथः)। शतशोऽवधृतायां राक्षसमायायां ममैव व्यामोह इति भावः ॥९६॥

**मिलिअ-णिसाअर-पुरओ सुवेल-मलअन्तराल-णिम्मविअ-पहे ।**
**पेल्लिअ-तिऊड-सिहरे अज्ज वि किं तुज्झ राहवे अग्गहणं ॥९७॥**

**[मिलित-निशाचर-पुरतः सुवेल-मलयान्तराल-निर्मापित-पथे ।**
**प्रेरित-त्रिकूट-शिखरे अद्य अपि किं तव राघवे अग्रहणम् ॥ ]**

मिलितानां निवारणार्थं पुञ्जीभूतानां निशाचराणां पुरतः सुवेलमलयान्तराले मध्ये निर्मितपथे भ्रूभङ्गमात्रेण सेवकद्वारा समापितः पन्था येन, तथा प्रेरितमाक्रान्तं क्षोभितं तथा त्रिकूटस्य गिरेः शिखरं येन तादृशे राघवे किं तवाद्याप्यग्रहणमनादरो येनेदं सत्यमेव मन्यस इति भावः। अग्रहणमनादरोऽसंप्रतीतिर्वा इति **लोः** (लोकनाथः) ॥९७॥

---

1 ०गम० GB. 2 विस० GB. 3 माए GB.

[1]तो अगहिओवएसा गओणिअत्तन्त-जीविअ-मुहिज्जन्ती ।
तिअडाए[2] जणअ-सुआ[3] सहि-सब्भाव-सरिसं[4]उरम्मि णि-
सण्णा ॥९८॥

[ततः अगृहीतोपदेशा गतापनिवर्तमान-जीवित-मुह्यन्ती ।
त्रिजटायाः जनक-सुता सखी-सद्भाव-सदृशं उरसि निषण्णा ॥ ]

तदनन्तरमगृहीतोपदेशा गतापनिवर्तमानेन जीवितेन विमुह्यन्ती हृतचैतन्या जनकसुता त्रिजटाया उरसि सखीसद्भावरसिकं सखीविश्वासानुरागविस्रब्धं निषण्णा, 'सरिस'मिति पाठे सद्भावसदृशं निषण्णा, अत्र जीवनस्य गमनमनिष्टबुद्ध्या तस्य पुनरागमनं त्रिजटाश्वासादिति भावः ॥९८॥

लोअण-वइअर-लग्गं तंस-णिसण्णाइ[5] तीअ तिअडा-वच्छे ।
गलिअं [6]कवोल-पेल्लण-[7]पीलिज्जन्तालउग्गअं[8] बाह-जलं ॥९९॥

[लोचन-व्यतिकर-लग्नं तिर्यङ्-निषण्णायाः तस्याः त्रिजटा-वक्षसि ।
गलितं कपोल-प्रेरण-पीड्यमानालकोद्गतं बाष्प-जलम् ॥ ]

लोचनव्यतिकरेण लग्नं व्यतिकरेण दुःखातिशयेन लोचनयोर्लग्नमित्यर्थः, लोचनयोर्व्यतिकरेण संपर्केण लग्नमिति **कुलनाथः**। व्यतिकरेण पुञ्जीभावेन लोचनयोर्लग्नमिति **केचित्**। एवंरूपं तिर्यङ्निषण्णाया अस्या बाष्पजलं त्रिजटावक्षसि गलितं, कीदृशं कपोलपीड्यमानालकोद्गतं कपोलपीड्यमानोऽलको यस्य, एवंभूत उद्गमो यस्य तत्तथा, 'उग्गअं' इति पाठे कपोलप्रेरणेनपीड्यमानादलकादुद्गतमित्यर्थः ॥९९॥

---

1 Before this verse (98) Ms has omitted another verse (viz., "मलिआ मलअ-णिअम्बा थले व्व चङ्कमिअं महोअहि-सलिले। वुत्थं सुवेल-सिहरे अज्ज वि किं तुज्झ राहवे अग्गहणं" ॥ ) included in GB Text. 2 ०डाअ GB. 3 ०तणआ GB. 4 ०रसिअं reading marginally noted in Ms. 5 ०ण्णाअ GB. 6 कओल० G ; कपोल० B. 7 पीडि० GB. 8 ०ग्गमं noted marginally in Ms.

तो विलविउं[1]पअत्ता[2][F75a]पुणो वि [3]अत्थक्कि उट्ठिअ-समूस-
सिआ ।
उर-घोलिर-वेणी-मुह-थण-लग्गुग्घुट्ट-महि-रआ जणअ-
सुआ ॥१००॥

[ततः विलपितुं प्रवृत्ता पुनः अपि अकस्माद्-उत्थित-समुच्छ्वसिता ।
उरो-घूर्णनशील-वेणी-मुख-स्तन-लग्नोत्घृष्ट-महीरजाः जनक-सुता ॥]

[F75a] ततस्त्रिजटावक्षसि निषदनानन्तरं विलपितुं प्रवृत्ता । पुनरप्यतर्कितोत्थित-समुच्छ्वसिता उरसि घूर्णनशीलेन वेणीमुखेन स्तनलग्नमुद्घृष्टमुत्प्रोञ्छितं महीरजो यस्याः सा जनकसुता । 'अत्थक्कि'-शब्दोऽकस्मादर्थे देशी ॥१००॥

साहसु ज च्चिअ पढमं[4] दट्ठूण अहं इमं महीअ [5]णिसण्णा ।
स च्चिअ मोहुम्मिल्ला पेच्छामि अ णं पुणो धरेमि अ जीअं॥१०१॥

[शाधि या एव प्रथमं दृष्ट्वा अहं इदं मह्यां निषण्णा ।
सा एव मोहोन्मीलिता प्रेक्षे च एतत् पुनः धारयामि जीवम् ॥ ]

कथय हे राम, यैव हि एतत्तव शिरो दृष्ट्वा मह्यां निषण्णा मोहात् पतिता, सैवाहं मोहात् उन्मीलिता प्रबुद्धा सती एतत्तव शिरः पश्यामि । पुनर्धारयामि च जीवं, अद्यापि कथं मे मरणं न स्यादिति भावः । अत्र कथयेत्यस्य सम्बोध्या त्रिजटैवेति **श्रीनिवासः**, तन्न, उत्तरश्लोकेषु रामस्यैव सम्बोध्यत्वे नोक्ततयाऽत्रापि तत्सम्बोधनस्यैव चारुत्वात् ॥१०१॥

---

1 जम्पिउं GB. 2 पउ॰ GB. 3 अत्थेक्क॰ GB ; अतक्कि॰ Ms. marginally. 4 पढ॰ GB. 5 महिम्मि GB.

सहिआ रक्खस-वसई[1] दिट्ठं तुह णाह एरिसं अवसाणं ।
अज्ज वि[2] वअणिज्ज-हअं धूमाइ च्चिअ ण पज्जलइ मे हि-
अअं ॥१०२॥

[सोढा राक्षस-वसतिः दृष्टं तव नाथ ईदृशं अवसानम् ।
अद्य अपि वचनीय-हतं धूमायते एव न प्रज्वलति मे हृदयम् ॥ ]

हे नाथ। सोढा राक्षसवसतिस्त्वां हृदयामीति मनोरथेनेति भावः। अधुना तु दृष्टं तवेदृशं विपक्षकृतमवसानं, तथा च वचनीयेनाद्यापि, वचनीयेन गर्हावादेनेति पाठान्तरे, हतं धूमायते एव मम हृदयं न प्रज्वलति। एतादृशेनापि वचनीयेन कथं न भस्मसाद्भवतीति भावः ॥१०२॥

पुरिस-सरिसं तुह इमं रक्खस-सरिसं कअं णिसाअर-वइणा ।
कह आ[3]चिन्तिअ-सुलहं महिला-सरिसं ण संपडइ मे
मरणं ॥१०३॥

[पुरुष-सदृशं तव इदं राक्षस-सदृशं कृतं निशाचर-पतिना ।
कथं आः चिन्तित-सुलभं महिला-सदृशं न संपद्यते मे मरणम् ॥ ]

पुरुषसदृशं तव एतद्युद्धमरणमित्यर्थः, युद्धे वीरपुरुषोचितजयमरणयोरन्यतरस्य त्वया निर्वाहितत्वात्। एवं निशाचरपतिना च राक्षससदृशं कृतं तेषां क्रूरकर्मैकस्वभावत्वात्। आः खेदे। हृदयस्फुटनहेतुना चिन्तितेनैव सुलभं महिलासदृशं स्त्रीसमुचितं न सम्पद्यते मम मरणम् ॥१०३॥

---

1 °ही GB ; Ms also noting °ही marginally. 2 तह अ Ms marginally. 3 ता GB.

पवण-सुअ-सिट्ठ-तुरिअं इह[1]एन्तस्स अवलम्बिउं मह जीवं।
विरह-लहुअम्पि राहव मए जीअन्तीअ जीविअं तुज्झ
हिअं ॥१०४॥

[पवन-सुत-शिष्ट-त्वरितं इह आगच्छतः अवलम्बितुं मम जीवम्।
विरह-लघुकं अपि राघव मया जीवन्त्या जीवितं तव हृतम्॥]

हे राघव, पवनसुतस्य कथितत्वात् कथनात् त्वरितं यथा स्यात्तथा, इह मम जीवितमवलम्बितुं रक्षितुमागच्छतस्तव विरहलघुकमपि तव जीवितं जीवन्त्या मया हृतम्। अयमाशयः, मदीयजीवनवार्त्ता चेत् पवनसुतात् त्वया श्रुता, अतएव तद्रक्षार्थमागतस्य तवेदृशमनिष्टं फलितं तथा च मज्जीवनमेव त्वन्मरणहेतुरिति भावः ॥१०४॥

अलअन्धआरिअ-मुही समुहागअ-कण्ठ-भमिर[2]-वेणी-बन्धा।
मोह-पडिवण्ण-हिअआ दर-जम्पिअ-णीसहा[3]पुणो वि[4]
णिसण्णा ॥१०५॥

[अलकान्धकारित-मुखी सम्मुखागत-कण्ठ-भ्रमणशील-वेणी-बन्धा।
मोह-प्रतिपन्न-हृदया दर-जल्पित-निःसहा पुनः अपि निःसंज्ञा॥]

अलकैरन्धकारितमाच्छादितं मुखं यस्याः। संमुखागतः कण्ठे भ्रमणशीलो वेणीबन्धो यस्याः, मोहेन प्रतिपन्नं गृहीतं हृदयं यस्याः। दरमीषज्जल्पितेन निःसहा सामर्थ्यशून्या मनागपि वक्तुमक्षमा। पुनरपि निःसंज्ञा अचेतना जातेत्यर्थः। 'महीअ णिषण्णा' इति पाठे मह्यां निषण्णेत्यर्थः। उत्तरश्लोके महीतलोत्सङ्गे पतितेत्यनेनामेदश्चिन्त्यः ॥१०५॥

1 तुह Ms. 2 ०भमिअ० GB. 3 ०सहं GB. 4 महीअ Ms. marginally.

तो फुडिअ-वेणी-बन्धण [F75b]-भङ्गुग्गअ-विसम-केस-[1]पच्च-
त्थरणे ।
पडिआ रामोर-त्थल-सअण-णिरास-हिअआ महि-अलु-
च्छङ्गे[2] ॥१०६॥

[ततः स्फुटित-वेणी-बन्धन-भङ्गोद्गत-विषम-केश-प्रत्यास्तरणे ।
पतिता रामोरः-स्थल-शयन-निराश-हृदया महीतलोत्सङ्गे ॥ ]

[F 75b] ततोऽचेतनत्वानन्तरं स्फुटितात् शोकजन्यमस्तकास्फालनेन शिथिलीभूताद्वेणीबन्धनाद् भङ्गेन कौटिल्येनोद्गता, अतएव विषमा इतस्ततो विक्षिप्ता ये केशास्त एव प्रत्यास्तरणं यत्र तस्मिन्महीतलोत्सङ्गे रामोरःस्थलशयननिराशहृदया पतिता। ततः स्फुटितं विश्लिष्टं यद्वेणीबन्धनमिति **कुलनाथः** ॥१०३॥

तीअ णव-पल्लवेण व पहराअम्ब-विहलेण-हत्थेण मुहं ।
परिमज्जिउं ण चइअं एक्क-कवोल-मिलिआलअं कह वि
कअं ॥१०७॥

[तया नव-पल्लवेन इव प्रहाराताम्र-विह्वलेन हस्तेन मुखम् ।
परिमार्ष्टुं न शकितं एक-कपोल-मिलितालकं कथं अपि कृतम् ॥]

प्रहारैरुरस्ताडनादिभिराताम्रेण विकलेन च अतएव नवपल्लवेनेव हस्तेन मुखं तया परिमार्ष्टुं मुखाद्वाष्पप्रोञ्छनं कर्तुं न शकितम्, एकस्मिन् कपोले मिलितोऽलकोऽर्थाल्लोचनाच्छादको यत्र एवंरूपं कथमपि कृतं रामशिरोदर्शनाशयेति भावः। क्वचित् णवरपदस्थाने 'कह वि' पाठः ॥१०७॥

---

1 ०पल्हत्थरणे GB.  2 ०लुत्सङ्गे Ms.

समुह-मिलिअम्पि जाहे रूअं बाहु-विअला[1] ण गेण्हइ दिट्ठी ।
ताहे कह कह[2] वि कअं उहअ-करुप्पुसिअ-लोअणं तीअ
मुहं ॥१०८॥

[सम्मुख-मिलितं अपि यदा रूपं बाष्प-विकला न गृह्णाति दृष्टिः ।
तदा कथं कथं अपि कृतं उभय-करोत्प्रोञ्छित-लोचनं तस्याः मुखम् ॥]

बाष्पविकला दृष्टिः संमुखमपि रूपं यदा अलकोत्सारणादपि न गृह्णाति तदा भयान्मुखमुभयकरोत्प्रोञ्छिते लोचने यत्रेदृशं कथं कथमपि कृतं करयोः प्रहारविह्वलत्वाद् बाष्पस्यानवरतनिपातात् कृच्छ्रेण प्रोञ्छनमित्याशयः ॥१०८॥

तो सा भमन्त-मारुअ-विसम-[3]पइण्णालउप्पुसिअ-बाह-जला ।
पेच्छइ राहव-वअणं [4]रअणिअर-च्छिण्ण[5]-महि-अल-पहो-
लन्तं ॥१०९॥

[ततः सा भ्रमद्-मारुत-विषम-प्रकीर्णालकोत्प्रोञ्छित-बाष्प-जला ।
प्रेक्षते राघव-वदनं रजनीचर-च्छिन्न-मही-तल-प्रघूर्णमाणम् ॥

ततो नयनप्रोञ्छनानन्तरमितस्ततः सञ्चरता मारुतेन विषमं व्यस्तं प्रकीर्णैरलकैरुत्प्रोञ्छितं बाष्पजलं यस्याः सा तथा, परनिपाताद् विषमप्रकीर्णत्वाद् भ्रमद्भिरलकैरुत्प्रोञ्छितं बाष्पजलं यस्याः सा सीता, निशाचरच्छिन्नं सत् महीतले प्रघूर्णमानं तत्कालच्छिन्नमिव विचेष्टमानं राघववदनं प्रेक्षते ॥१०९॥

1 ०विहला GB. 2 One कह is omitted in MS. 3 ०पविद्धा० Ms. which has also noted reading ०पइण्णा० marginally. 4 णिसाअरो० GB. 5 ०च्छुण्ण० GB. ; Ms. also noting ०रोच्छुण्ण० marginally.

लक्खिज्जन्त-विसाआ [1]अब्भहिउम्मिल्ल-णिच्चल-णअणा ।
राम-सिर-बद्ध-लक्खा धुव्वइ बाहेण से रुम्भइ दिट्ठी ॥११०॥

[लक्ष्यमाण-विषादा अभ्यधिकोन्मीलित-निश्चल-स्थित-नयना ।
राम-शिरो-बद्ध-लक्ष्या धाव्यते बाष्पेण तस्याः रुध्यते दृष्टिः ॥ ]

लक्ष्यमाणो विषादो यस्याम्, अभ्यधिकोन्मीलिते निश्चलस्थिते नयने यस्यां सा रामशिरसि बद्धलक्ष्या तस्या दृष्टिरवलोकनं बाष्पेण धाव्यते विषयग्रहणे विशुद्धा क्रियते, न रुध्यते, अनवरतनिपातादिति भावः । अत्र नयनं तारका, दृष्टिर्नेत्रमिति **श्रीनिवासः** ॥११०॥

तो तं दट्ठूण पुणो मरणेक्क-रसाइ बाह-णीसारच्छं ।
[2]आउच्छामि त्ति कअं तिअडा-गअ-लोअणाइ दीण-विह-
सिअं ॥१११॥

[ततः तत् दृष्ट्वा पुनः मरणैक-रसया बाष्प-निःसाराक्षम् ।
आपृच्छे इति कृतं त्रिजटा-गत-लोचनया दीन-विहसितम् ॥ ]

ततो दृष्टिवैशद्यानन्तरं तद्रामशिरः पुनरनेकधा दृष्ट्वा मरणैकरसया त्रिजटागतलोचनया सीतया आपृच्छे मरणोद्यमेऽनुज्ञां गृह्णामीति कृत्वा बाष्पनिःसाराक्षं दीनं सकरुणं शोच्यं वा विहसितं कृतम् । अयमर्थः । रामशिरोदर्शनेनापि प्रयत्नशून्यं सुखमरणं मम न वृत्तमेवमधुना त्वं चेदनुजानीषे तदात्मानं प्रयत्नेनापि व्यापाद्य लोकापवादलज्जां क्षालयामीति त्रिजटाभिमुखीकरणाय सकरुणं हसितम् ॥१११॥

सहिअम्मि राम-विरहे दारुण[F76a]-हिअअ-प्पडिच्छिए वेहव्वे ।
सहसु [3]गअ-णेह-लहुअं मह [4]णिल्लज्ज-मरणं इमन्ति
परुण्णा ॥११२॥

---

1 अब्भउम्मि॰ Ms. 2 आउच्छसु मं ति GB. 3 ॰गगह॰ Ms, which has the reading विअलिअ-सिणेह-लहुअं noted marginally for the whole of the third foot. 4 वअणिज्ज॰ Ms. marginally.

[सोढे राम-विरहे दारुण-हृदय-प्रतीष्टे वैधव्ये ।
सहस्व गत-स्नेह-लघुकं मम निर्लज्ज-मरणं इदं इति प्ररुदिता ॥ ]

[F 76a] हे दारुण हृदय ! रामविरहे सोढे, वैधव्ये प्रतीष्टे गतस्नेहतया लघुकं गर्हितं मम निर्लज्जमरणं सहस्व अनुभव इति प्ररुदिता । 'वअणिज्ज'मिति पाठे वचनीयं गर्हितं तं विना एतावत्कालं जीवामीति कृत्वा इत्यर्थः । 'विअलिअ-सिणेह-लहुअ'मिति पाठे विगलितस्नेहतया स्नेहशून्यतया लघुकम् । **केचित्तु** अत्रापि त्रिजटैव सम्बोध्या ; तथा च हे त्रिजटे रामस्य विरहे सोढे दारुणेन एवं दर्शनादप्यस्फुटनात् कर्कशेन हृदयेन प्रतीष्टे वैधव्ये मम गतस्नेहलघुकं निर्लज्जमरणमिदं मरणरूपोऽपराधः क्षन्तव्य इति प्ररुदिता इत्याहुः ॥११२॥

सव्वस्स वि[1] एस गई [2]माणुण्णअ णाह तुह इमं अवसाणं ।
[3]अणसरिसन्ति भणन्ती आहन्तूण पडिआ थिरं थण-
जुअलं[4] ॥११३॥

[सर्वस्य अपि एषा गतिः मानोन्नत नाथ तव इदं अवसानम् ।
असदृशं इति भणन्ती आहत्य पतिता स्थिरं स्तन-युगलम् ॥ ]

सर्वस्यापि एषा गतिरुत्पत्तिमतो भावस्यावश्यकविनाशरूपा परिणतिरित्यर्थः । हे मानोन्नत नाथ, तवेदृशं सकचग्रहवीभत्समवसानमसदृशमिति भणन्ती स्तनयुगलमाहत्य स्थिरं निश्चलं निपतिता । एषा गतिरिति स्त्रियामप्येवरूपं भवतीति प्राकृतसञ्जीवन्यामिति **केचित्** । ण उण माणुण्णआणमिति पाठे सर्वस्य एषा गति र्न पुनर्मानोन्नतानाम् अद अवसानम् अनुरूपम् ॥११३॥

1 अ GB. 2 ण उणो माणुण्णआण इममवसाणं GB ; Ms also noting this reading marginally. 3 अणु० GB, 4 ०अलसं GB.

तह [1]जीअ-लज्जिआए विलवन्तीअ[2]वि विसाअ-णीसह-मउअं ।
दाअरहि त्ति पलत्तं पिअ[3]त्ति सीआइ ण चइअं वाह-
रिउं[4] ॥११४॥

[तथा जीव-लज्जितया विलपन्त्या अपि विषाद-निःसह-मृदुकम् ।
दाशरथे इति प्रलपितं प्रिय इति सीतया न शकितं व्याहर्तुम् ॥ ]

तथा छिन्नरामशिरोदर्शनेनापि जीवामीति वर्तमानजीवाल्लज्जितया विषादनिःसहमृदुकं विलपन्त्या सीतया, हे दाशरथे इति प्रलपितं, हे प्रिय इति व्याहर्तुं न शक्तं, छिन्नशिरोदर्शनादप्यमरणाल्लज्जया प्रियेत्यल्पाक्षरस्यापि सम्बोधनस्यानिर्गमादिति भावः ॥११४॥

अणुसोइउं ण इच्छइ ण देइ अङ्गम्मि सा परम्मि व पहरं ।
बाहं मुअइ ण रुम्भइ मरिअव्वे लद्ध-पच्चअं से हिअअं ॥११५॥

[अनुशोचितुं न इच्छति न ददाति अङ्गे सा परस्मिन् इव प्रहारम् ।
बाष्पं मुञ्चति न रुणद्धि मर्तव्ये लब्ध-प्रत्ययं तस्याः हृदयम् ॥ ]

सा सीता अनुशोचितुं नेच्छति । अङ्गे स्वकीये परस्मिन्निव प्रहारं न ददाति । बाष्पं मुञ्चति न रुणद्धि । यद्वा, बाष्पं न मुञ्चति, किन्तु रुणद्धि । कुत इत्याह यतस्तस्या हृदयं मर्तव्ये मरणे लब्धप्रत्ययं कृतनिश्चयम् । गरीयो मरणमेव निश्चितं तस्याः, कथं लघीयसि अनुशोचनादावुपेक्षा न स्यादिति भावः । स्त्रीणामनुमुमूर्षूणामाशयोऽपि तथा ॥११५॥

तो तं मरण-णिमित्ते अणिअत्तन्त-हिअअं पअत्ता [5]वोत्तुं ।
तिअडा धुअग्ग-कर-अल-दर-पडिअ-पडिच्छि अङ्ग-विसमो-
अल्लं[6] ॥११६॥

---

1 जीव॰ GB. 2 ॰न्तीए Ms. 3 पिओ GB. 4 वाहत्तुं GB. 5 वत्तुं B (also C). 6 ॰रणं GB (C has ॰ल्लं).

[ततः तां मरण-निमित्ते अनिवर्तमान-हृदयां प्रवृत्ता वक्तुम्।
त्रिजटा धुताग्र-कर-तल-दर-पतित-प्रतीष्टाङ्ग-विषमोत्कम्पाम् ॥ ]

ततो मरणानुज्ञादीनहसितानन्तरं तां मरणनिमित्ते मरणार्थेऽनुवर्तमानहृदयां त्रिजटा वक्तुं प्रवृत्ता। धुताभ्यां जरया कम्पिताभ्यां करतलाभ्यमीषत् प्रतीष्टेन पतितेनाङ्गेन विषमोऽतिशयित उत्कम्पो यस्याः सा। अथवा, धुताग्रकरतला चासौ दरपतितप्रतीष्टेषु अङ्गेषु विषमावगला दारुणकम्पा चेति ताम्। अथवा, धुताभ्यां करतलाभ्यां दरपतितं प्रतीष्टं यदङ्कं तेन तल वा विषमो 'अल्लः' कम्पो यस्या स्तां, अल्लः कम्पे देशी। पतितवस्तूत्तोलने कराग्रधूननं जातिरिति केचित् ॥११६॥

किं व जीअन्तीअ तए[1] सहि अलिअं जइ[2] ण होज्ज राहव-
मरणं।
अणहे उण रहुणाहे तुह मे मरण-विहुरं [F76b] किलिम्मइ
हिअअं ॥११७॥

[किं वा जीवन्त्या त्वया सखि अलीकं यदि न भवेत् राघव-मरणम्।
अनघे पुनः रघुनाथे तव मे मरण-विधुरं क्लाम्यति हृदयम् ॥ ]

हे सखि किं वा जीवन्त्या त्वया त्वज्जीवने किमपि फलं नास्तीत्यर्थः। अलीकं यदि न भवेद्राघवमरणम्। अनघेऽक्षते पुना रघुनाथे तव मरणे विधुरमाकुलं क्लाम्यति मे हृदयम्। अक्षतशरीरे रघुनाथे पुनरिति लोः (लोकनाथः)। अतः किमिति वृथा खिद्यस इत्यर्थः ॥११७॥

चिन्तेउम्पि ण तीरइ[3] जह सम्भावेसि तह इमं जइ होन्तं।
तो दाणि किं जणम्मि व तुमम्मि संभावणा[4] महं अणु-
रूआ[5] ॥११८॥

---

1 तुमे GB. 2 सहि and जइ change places in GB. 3 लम्भइ GB (CKS have तीरइ). 4 संठा॰ GB, Ms noting this reading marginally. 5 ॰वा GB (C having ॰आ).

**[चिन्तयितुं अपि न शक्यते यथा सम्भावयसि तथा इदं यदि अभविष्यत्।
तत् इदानीं किं जने इव त्वयि सम्भावना मम अनुरूपा ॥ ]**

चिन्तयितुमपि न शक्यते किं पुनरवधारयितुमिति भावः। यथा संभावयसि तथेदं यद्यभविष्यत् ततस्तदा इदानीमेवंविधे काले। जने इव सामान्यलोक इव त्वयि मम संस्थापना आश्वासनम्, संभावनेति पाठे सम्यग्भावना ममानुरूपा। मृतपतिकायास्तवानुमरणं किं वारयामीति भावः। अपि तु स्निग्धायां त्वयि उदासीन इव मिथ्याश्वासनमनुचितमेव इत्यर्थ इति **लो**ः (लोकनाथः) ॥११८॥

[1]जाणइ सणेह[2]-भणिअं मा रअणि अरित्ति मह[3] जुउच्छसु
वअणं।
उज्जाणम्मि वणम्मि अ जां सुरहिं तं लआण घेप्पइ[4]
कुसुमं ॥११९॥

**[जानकि स्नेह-भणितं मा रजनीचरी इति मम जुगुप्सस्व वचनम्।
उद्याने वने च यत् सुरभि तत् लतानां गृह्यते कुसुमम् ॥ ]**

जानकि रजनीचरीति कृत्वा मम स्नेहभणितं वचनं मा जुगुप्सस्व अवधीरय अवमन्यस्व। यत उद्याने वने च यत् सुरभि तल्लतानां कुसुमं गृह्यते। सणेहअलिअमिति पाठे स्नेहेन अलीकमित्यर्थः, अहेतुवन्निवर्त्य च स्नेहश्चित्तार्द्रता मत इति **कण्ठाभरणे** उत्तोलितमेतत्। मा-शब्दस्य काकाक्षिन्यायेन जानाति जुगुप्सस्व इत्यत्रोभयत्र सम्बन्धः। जानातीत्यत्र पठितालङ्कारेण वा जानातीत्यर्थः ॥११९॥

---

1 This verse occurs in GB as 119 and is plaeed after verse beginning with the words तो तं etc. i.e. verse 116 of our Ms text.
2 सिणेह० GB ; Ms has ०अलिअं for भणिअं marginally. 3 मे GB.
4 गेह्णइ GB.

सअला णिसाअर-उरी[1]घर-परिवाडि-सम-णीहरिअ-रुण्ण-रवा ।
एक्केण कआ कइणा कह होहिइ अणह-रक्खसं राम-वहं[2] ॥१२०॥

[सकला निशाचर-पुरी गृह-परिपाटि-सम-निर्ह्रादित-रुदित-रवा ।
एकेन कृता कपिना कथं भविष्यति अनघ-राक्षसः राम-वधः ॥ ]

सकला निशाचरपुरी लङ्का गृहपरिपाटिषु गृहपंक्तौ सममेकदा निर्ह्रादितो वर्धितो रोदनरवो यस्याम्, एकेनाद्वितीयेन कपिना मारुतिना कृता अनघा व्यसनशून्या राक्षसा यत्र ईदृशः कथं रामवधो भविष्यति। ईदृशं रामवधमिति वा प्राकृते वधशब्दस्य नपुंसकलिङ्गमपि दृश्यते। तादृशर्क्षयूथसहाये तस्मिन्निह राक्षसा अवश्यं हताः स्युरित्यर्थः। तथा च साक्षात्कृतहनूमच्चरिता कथमिदं प्रत्येषीति भावः ॥१२०॥

णत्थि[3]ण हम्मइ रामो अइरा होहिइ अरक्खसं तेल्लोक्कं ।
दिट्ठन्ति भणामि फुडं पत्तिअ कस्स व[4] पिओ कुलस्स
विणासो ॥१२१॥

[नास्ति न हन्यते रामः अचिरात् भविष्यति अराक्षसं त्रैलोक्यम् ।
दृष्टं इति भणामि स्फुटं प्रतीहि कस्य वा प्रियः कुलस्य विनाशः ।]

नास्तीति निषेधावधारणे न भवत्येवैतदित्यर्थः। तदेव द्रढयति—न हन्यते राम इति **कुलनाथः**। नास्ति यन्न हन्ति रामोऽवश्यमेव रामो रावणं हनिष्यतीत्यर्थ इति **श्रीनिवासः**। नास्त्येतदलीकमेतदित्यर्थः। रामो न हन्यते यतः। णिहम्मइ इति टीकाद्वयम्। तदा रामो निहन्यत इति नास्तीति **कश्चित्**। अचिराद्भविष्यत्यराक्षसं त्रैलोक्यं वक्ष्यमाणस्वप्रदर्शने दृष्टमिति स्फुटं भणामीति **कुलनाथः**। प्रतीहि दृढप्रत्ययं कुरु, कस्य वा प्रियः कुलस्य विनाशः। मिथ्या कुलक्षयमभिधाय न कोऽपि परं प्रबोधयतीति प्रतीयतामित्यर्थः ॥१२१॥

---

1 C also reads ०उरी ; ०पुरी GB. 2 रहु-वडणं GB ; स रघुवधः KS. 3 णिहम्मइ GB ; णिहणइ C ; ण ह० KS, 4 वि GB ; C also has व.

उट्ठेसु[1] मुहसु[2] सोअं पुस एअं बाह-मइलिअं थण-अलसं[3] ।
सुणसु सउणे[4] ण वट्टइ समराहिमुहे पइम्मि अंसु-णिवाओ॥१२२॥

[उत्तिष्ठ मुञ्च शोकं प्रोञ्छ एतत् बाष्प-मलिनितं स्तन-कलशम् ।
शृणु शकुने न वर्तते समराभिमुखे पत्यौ अश्रु-निपातः ॥ ]

उत्तिष्ठ मुञ्च शोकं प्रोञ्छ एतद्बाष्पमलिनितं स्तनयुगलम् । शृणु शकुने[5] मङ्गले न वर्तते समराभिमुखे पत्यावश्रुनिपातः । लोकनाथस्तु शृणु शकुने मङ्गलशालिनि समराभिमुखे पत्यावश्रुनिपातो न वर्ततेऽनुचित[मिद-]मित्यर्थः । सगुणे इति सीतासम्बोधनमिति केचित् ॥१२२॥

मोत्तूण अ रहुणा[F77a]हं लज्जागम[6]-सेअ-बिन्दु-इज्जन्त-मुहो ।
केण व अण्णेण कओ पाआरान्तरिअ-णिप्पहो दहवअणो ॥१२३॥

[मुक्त्वा च रघुनाथं लज्जागम-स्वेद-बिन्दु-कीर्यमाण-मुखः ।
केन वा अन्येन कृतः प्राकारान्तरित-निष्प्रभः दशवदनः ॥

[F77a] लज्जागमेन स्वेदबिन्दुकीर्यमाणानि मुखानि यस्य । तथा प्राकारान्तरिते देशे निष्प्रभः प्राकाराद् बहिः प्रतापशून्य इत्यर्थः । यद्वा, परनिपातान् निष्प्रभत्वात् प्रतापशून्यतया कान्तिरहितत्वात् प्राकारान्तरितो लज्जया प्राकारबहिर्भूत इत्यर्थः । ईदृशो दशवदनो रघुनाथं मुक्त्वा केन वा अन्येन कृतः । वाशब्दः संभावनायाम् ॥१२३॥

अइरा अ दे रहुवई[7] तण्णाअन्तग्ग-हत्थ-मउइअ-पम्हं ।
मोच्छिहि वेवन्तङ्गुलि-गुप्पन्तु[8] क्खित्त-विसम-भाअं वेणिं ॥१२४॥

---

1 उट्ठ० B. 2 मुञ० G, मुए० B. (So also C). 3 ०वट्टं GB ( युगलं K, युग्मं S ). 4 सञणे C. 5 After this word occurs a 'ग' which appears redundant. 6 ०गअ० GB. 7 ०सुओ GB. 8 प्पन्त० Ms.

[अचिरात् च ते रघुपतिः आर्द्रीयमाणाग्र-हस्त-मृदूक्रियमाण-पक्ष्म ।
मोक्ष्यति वेपमानाङ्गुलि-गुप्यमानोत्क्षिप्त-विषम-भागं वेणीम् ॥]

सात्त्विकभावादार्द्रीक्रियमाणेन हस्तेन मृदूक्रियमाणानि मसृणीक्रियमाणानि लोमानि यत्र, एवं वेपमानैरङ्गुलिभिर्गुप्यमानो व्याकुलीक्रियमाणः कङ्कतिकयेव विवलीक्रियमाणोऽतएवोत्क्षिप्तो विषमः सङ्कुचितो भागो यत्र, एवं यथा स्यात्तथा । रघुपतिरचिराच्च वेणीं मोक्ष्यति । पक्ष्मपदं लक्षणया लोममात्रे, यथा निसर्ग-चित्रोद्भासूक्ष्मपक्ष्मणा इत्यादि । विशेषणद्वयं वेण्या इति **श्रीनिवास-कुलनाथौ** ॥१२४॥

विअलिअ-लज्जा-लहुअं एअ करन्तस्स रहुवइम्मि धरन्ते ।
ण वि[1] तह दुक्खामि तुमे जह परिअत्तम्मि [2]दहमुहस्स सहावे ॥१२५॥

[विगलित-लज्जा-लघुकं एवं (एतद् वा) कुर्वतः रघुपतौ ध्रियमाणे ।
न अपि तथा दुःखामि त्वयि यथा परिवर्तमाने दशमुखस्य स्वभावे ॥]

रघुपतौ ध्रियमाणे जीवति सति । विगलितया लज्जया लघुकं लाघवास्पदमेवं मायाशिरोदर्शनरूपं कुर्वतो दशमुखस्य स्वभावे परिवर्तमाने यथा दुःखामि तथा न त्वयि दुःखमनुभवामि । ण-वि शब्दो व्यतिरेके । तस्य स्वभावपरिवृत्तिश्च कदाप्यदृष्टचरस्य मायाशिरोदर्शनस्याशङ्कया क्रियमाणत्वात्, तथा च मरणचिह्नेन स्वभावपरिवृत्त्या तं प्रत्यनुशोचनमुचितमेवेति भावः ॥१२५॥

वालि-वह-दिट्ठ-सारं बाण-गलत्थिअ-समुद्द-दिण्ण-थल-वहं ।
रोहिअ-लङ्का-वलअं[3] मा लहुअं पेच्छ राहवस्स भुअ-बलं ॥१२६॥

[वालि-वध-दृष्ट-सारं बाण-गलहस्तित-समुद्र-दत्त-स्थल-पथम् ।
रोधित-लङ्का-वलयं मा लघुकं प्रेक्षस्व राघवस्य भुज-बलम् ।

1 अ GB. 2 ॰परिव॰ GB ( C has परिअत्ते दहवअणस्स ).
3 मलअं maginally noted in Ms. (Cf. also KS).

निर्जितरावणस्यापि वालिनो वधे दृष्टः सारो बलमुत्कर्षो वा यस्य। शिष्ट इति पाठे कथितः सार इत्यर्थः। बाणेन गलहस्तितेन दूरं नीतेन समुद्रेण दत्तः स्थलरूपः पन्था यस्मै यस्मादिति वा। रोधितौ रुद्धौ वा गतागतैराक्रमितौ वा व्याप्तौ वा लङ्कामलयौ येन लङ्कावलयमिति पाठे तथैवार्थः। तद्राघवस्य भुजबलं मा लघुकं प्रेक्षस्व जानीहि ॥१२६॥

दिट्ठासि मए सिविणे ससि-सूरालिहण-सोहिउम्मुह-पडिमा।
खन्धट्ठिअ[1]-सुर-गअ-कण्णताल[2]-विहुअ-[3]-धवलंसुअ-
दसद्धन्ता ॥१२७॥

[दृष्टा असि मया स्वप्ने शशि-सूर्यालेहन-शोभितोन्मुख-प्रतिमा।
स्कन्धास्थित-सुर-गज-कर्णताल-विधुत-धवलांशुक-दशार्धान्ता ॥]

शशिसूर्ययोराधारभूतयोरालेहनेन संपर्केण शोभितोन्मुखी हर्षादुन्नतमुखी प्रतिमा प्रतिकृतिर्यस्याः सा तथा चन्द्रसूर्यप्रतिविम्बितेत्यर्थः। यद्वा, शशिसूर्याभ्यामालभनेन स्पर्शेन शोभितोन्मुखो प्रतिकृतिः प्रतिमा शरीरं यस्याः। स्कन्धास्थितस्य आरूढस्कन्धस्य सुरगजस्य कर्णतालैर्विधुतो धवलांशुकदशार्धान्तो यस्याः। दशैकदेशो यस्या इति कुः (कुलनाथः)। एवंभूता त्वं स्वप्ने दृष्टासि। या त्वं सुरगजारूढा तत्कर्णतालैः कम्पितवसना पार्श्वद्वयस्थिताभ्यां चन्द्रसूर्यसदृशाभ्यां दशरथसुताभ्यां युक्ता स्वप्ने दृष्टा तस्यास्तव वैधव्यं नभःप्रसूनमिवासम्भाव्यमिति भावः ॥१२७॥

दिट्ठो अ मे दहमुहो दह-मुह-परिवाडि-विअड-कड्ढण-मग्गो।
काल-दढ-पास-कड्ढिअ-दर-घडिउक्खुडिअ[4]-[F77b]-पडिअ[5]-
मुह-संघाओ ॥१२८॥

[दृष्टः च मया दशमुखः दश-मुख-परिपाटि-विकट-कर्षण-मार्गः।
काल-दृढ-पाश-कृष्ट-दर-घटितोत्खण्डित-पतित-मुख-संघातः ॥]

1 ॰न्धुट्ठिअ॰ GB. 2 ॰आल॰ GB. 3 ॰बिहुर॰ Ms (॰विधुननशील॰ in Sanskrit, or ? विधुर). 4 ॰उग्घटिअ॰ GB ; ॰उप्फुडिअ॰ reading noted marginally in MS. 5 ॰खलिअ॰ GB.

दशानां मुखानां परिपाट्या विकटो विस्तीर्णो बहुग्रीवत्वाद्विशाल इति कुः (कुलनाथः)। कर्षणमार्गः[1] पाशार्पणपथो यस्मिन् स तथा। एवं कालेन यमेन दृढं यथा स्यात्तथा पाशेनाकृष्टो ग्रीवाणां बहुत्वात् पाशेन परिमाणाप्राप्त्या दरघटित ईषद्बद्धोऽतएव स्फुटितोऽतएव उत्पतितो भूमौ निपतितः सन् स्फुटितो मुखसंघातो यस्य। खुडिअ इति पाठे खण्डितोत्पतित इत्यर्थः। एवंभूतो दशमुखो मया दृष्टोऽर्थात् स्वप्ने। अनेन तस्य मरणं सूचितम्। तृतीयार्थे मे इति ॥१२८॥

तं अवलम्बसु धीरं णासउ सम्पइ अमङ्गलं जाव इमं।
मुणिअ[2]-परमत्थ-लहुइ अवधीरिअ[3]-णिप्फला णिअत्तउ
माआ ॥१२९॥

[तत् अवलम्बस्व धैर्यं नश्यतु सम्प्रति अमङ्गलं यावत् इदम्।
ज्ञात-परमार्थ-लघ्वी अवधीरित-निष्फला निवर्ततां माया ॥]

तस्मादवलम्बस्व धैर्यम्। नश्यतु सम्प्रत्यमङ्गलं यावदिदम्। सर्वमेतदमङ्गलं नश्यतु इति कुः (कुलनाथः)। ज्ञातपरमार्थतया लघ्वी अवधीरिता सती निष्फला निवर्ततां माया। यावच्छब्दः परिच्छेदे ॥१२९॥

जइ होन्तं राम-सिरं एआवत्थम्पि तो समूससमाणं।
अमअम्मिव णाअ-रसं आसाएऊण दे[4] कर[5]-प्फरिस-सुहं ॥१३०॥

[यदि अभविष्यत् राम-शिरः एतदवस्थं अपि तत् समुदश्वसिष्यत्।
अमृतं इव ज्ञात-रसं आस्वाद्य तव कर-स्पर्श-सुखम् ॥]

यद्यभविष्यद्रामशिरस्तदेतदवस्थमपि गतजीवितमपि तव करस्पर्शसुखमनुभूतपूर्वत्वाज् ज्ञातरसममृतमिवास्वाद्य समुच्छ्वसितमभविष्यत्। नैवम्वेन्न भवति रामशिरः ॥१३०॥

---

1 कर्कश॰ Ms. 2 अणिअ MS.; it has noted marginally reading मुणिअ॰ 3 ॰होरिअ॰ GB. 4 तुह GB. 5 MS. has करअल॰, but this reading mars the metre.

इअ राम-पेम्म-कित्तण-दूसह-वज्जाहिघाअ-दूमिअ-हिअआ ।
सम्भरिअ मुक्क-कण्ठं अण्णमअं[1] मरण-णिच्चआ वि परुण्णा ॥१३१॥

[इति राम-प्रेम-कीर्तन-दुःसह-वज्राभिघात-दुर्मनायमान-हृदया ।
संस्मृत्य मुक्त-कण्ठं अन्यमयं मरण-निश्चया अपि प्ररुदिता ॥ ]

इति पूर्वोक्तप्रकारेण रामप्रेमकीर्तनरूपेण दुःसहवज्राभिघातेन व्यथितहृदया सा मरणनिश्चयापि निश्चितमरणापि संस्मृत्यान्यमयं रामसम्भोगस्मरणेन पूर्वोक्तरोदनादन्यप्रकारं मुक्तकण्ठमुच्चैःस्वरं यथा स्यात्तथा प्ररुदिता रोदितुमारब्धा। आदिकर्मणि क्तः। मण्णुमअ इति पाठे मन्युमयं सम्भोगस्मरणाच्छोकमयमित्यर्थः ॥१३१॥

ता[2] तिअडा-वअणेहि ण सण्ठिआ जाव तीअ पवअ-कलअलो ।
रण-सण्णाह-गहीरो[3] ण सुओ राहव-पहाअ-मङ्गल-
वडहो[4] ॥१३२॥

[तावत् त्रिजटा-वचनैः न संस्थिता यावत् तया प्लवग-कलकलः ।
रण-सन्नाह-गभीरः न श्रुतः राघव-प्रभात-मङ्गल-पटहः ॥ ]

तावत् त्रिजटावचनैरपि न संस्थिता नाश्वासिता यावत्तया राघवप्रभातमङ्गलपटहो रणसन्नाहध्वनिना गभीरः प्लवगकलकलो न श्रुतः ॥१३२॥

तो आसासिअ-सुहिए तिस्सा[5] पुणरुत्त-सच्चविअ-वीसथे ।
विअलिअ[6]-वेहव्व-भए पुणो वि सङ्गलइ[7] विरह-दुक्खं हि-
अए ॥१३३॥

---

1 अण्णमअं Ms, which has noted the reading मण्णुमयं(अं) marginally.
2 तो Ms; but it has ता noted marginally. 3 ०गभीरो GB.
4 ०पडहो GB. 5 तीए GB. 6 विहडिअ० GB. 7 संघडइ GB; but K also has संगलइ which is eqivalent to संघडइ according to Hemachandra (cf, "समो गलः" VIII. 4. 113.)

[ततः आश्वासित-सुखिते तस्याः पुनरुक्त-सत्यापित-विश्वस्ते ।
विगलित-वैधव्य-भये पुनः अपि संघटते विरह-दुःखं हृदये ॥]

ततः प्लवगकलकलश्रवणानन्तरमाश्वासितत्वात् सुखिते । पुनरुक्तमतिशयितं दृष्ट-विश्रम्भे निश्चितविश्वस्त इति **केचित्** । गलितवैधव्यभये तस्या हृदये पुनरपि संमिलति विरहदुःखम् । तस्याः सीतायाः पुनरपि प्राप्तपत्युर्जीवितत्वाद् दृष्टश्च विश्वस्तं निर्वृतश्चेति तथा तस्मिन्निति **कुः** ( कुलनाथः )। तस्या हृदये पुनरपि विरहदुःखं संक्रामतीति **केचित्**। यद्विरहदुःखं विगलितमासीदिदानीं जिजीविषया पुनरपि तत् प्रादुर्भूतमित्यर्थः । समो मिलेर्गलतीति प्राकृतसूत्रान्मिलतीत्यर्थः ॥१३३॥

[1]अह बहुविह-सण्ठावण-पच्चाणिज्जन्त-जीविआसा-बन्धं ।
तीअ गअ-सोअ-विसअं दूरुण्णामिअ-पओहरं णीससिअं ॥१३४॥

[अथ बहुविध-संस्थापन-प्रत्यानीयमान-जीविताशा-बन्धम् ।
तस्याः गत-शोक-विषदं दूरोन्नामित-पयोधरं निश्वसितम् ॥ ]

अथ मायानिश्चयानन्तरं बहुविधाभिः संस्थापनाभिरनेकप्रकाराभिराश्वासनाभिः[2] प्रत्यानीयमानजीविताशाबन्धं यथा स्यात्तथा । गतशोकत्वाद् गतमोहत्वाद्वा विषदं स्पष्टं दूरोत्थितपयोधरश्च यथा स्यात्तथा । तया निःश्वसितम् । एतादृशादपि व्यसनादुत्तीर्णा इति समुच्छ्वसितमिति भावः ॥१३४॥

माआ-मोहम्मि गए सुए अ पवआण समर-सण्णाह-रवे ।
जणअ-तणआइ दिट्ठं तिअडा-णेहाणुराअ-भणिअस्स
फलं ॥१३५॥

---

1 This verse precedes the last one in GB. 2 °राश्वासनैः Ms.

**[माया-मोहे गते श्रुते च प्लवगानां समर-सन्नाह-रवे ।**
**जनक-तनयया दृष्टं त्रिजटा-स्नेहानुराग-भणितस्य फलम् ॥ ]**

मायाजन्ये मोहे गते । श्रुते च प्लवगानां समरसन्नाहरवे । त्रिजटायाः स्नेहेन सखीप्रीत्या, अनुरागेण वात्सल्येन भणितस्य फलं तात्पर्यं जनकतनयया दृष्टम् । एकादश आश्वासः ॥३५॥

राअ-सिरि-पवरसेणस्स एत्थ रावणवहे महाकव्वम्मि ।
सीआ-विलवणमेआरहो आसासओ परिसमत्तो ॥

[ राजश्रीप्रवरसेनस्य अत्र रावणवधे महाकाव्ये ।
सीता-विलपनं एकादशः आश्वासकः परिसमाप्तः ॥ ]

---

# बारहो आसासओ

ताव अ दर-दलिउप्पल-पलोट्ट-धूलि-मइलेन्त[1]-कलहंस-उलो ।
जाओ दर-सम्मिल्लिअ[2]-हरिआअन्त-[3]कुमुआअरो पच्चूसो ॥१॥

[तावत् च दर-दलितोत्पल-प्रलुठद्-धूलि-मलिनायमान-कलहंस-कुलः ।
जातः दर-संमीलित-हरितायमान-कुमुदाकरः प्रत्यूषः ॥ ]

तावच्च दरविकसितेभ्य उत्पलेभ्यः प्रलुठन्त्या गलन्त्या धूल्या रजसा मलिनीक्रियमाणकलहंसकुलः । ईषत्सम्मीलितो हरितायमानः कुमुदाकरो यत्र तथाभूतः प्रत्यूषो जातः । उत्पलं पद्मं नीलोत्पलमिति **श्रीनिवासः** । प्रत्यूषस्य समदर्शित्वं सूचितमिति **लोः** (लोकनाथः) ॥१॥

अरुणाअम्ब-च्छाओ णव-सलिलाकलुस-चन्दिमाहअ-मूलो ।
धाउ-कलङ्क-क्खउरो ओसरइ तडो व्व रअणि-पच्छिम-
भाओ ॥२॥

[अरुणाताम्र-च्छायः नव सलिलाकलुष-चन्द्रिकाहत-मूलः ।
धातु-कलङ्क-कलुषः अपसरति तटः इव रजनी-पश्चिम-भागः ॥ ]

अरुणेन रविसारथिना आताम्रच्छायः । नवसलिलवदाकलुषाभिश्चन्द्रिकाभिराहतमाक्रान्तं मूलमूपान्तो यस्य । यद्वा नवसलिलवदाकलुषा चन्द्रिका यत्र तादृशतया आहतमूलः क्षयितपूर्वभागः । रजन्याः सरित इव पश्चिमभागः । धातुकलङ्ककलुषस्तट इव अपसरति दूरं गच्छति । नद्यास्तटमपि नवसलिलैराहतमूलं सत् पतति । "अरुणो रक्तरागे स्यात् सन्ध्यारागेऽर्कसारथा"विति **विश्वः** । **केचित्तु** अरुणः सन्ध्यारागस्तेना-

1 मइल॰ GB. 2 संमीलि॰ GB. 3 कुमुदा॰ Ms.

ताम्रच्छायः । अरुणस्यैव संपर्कान्नवसलिलवदाकलुषचन्द्रिकयाहतमूलः क्षयितपूर्वभागः पतिताधोभागश्च रजनीपश्चिमयामो गैरिककलङ्केन मिश्रकलुषस्तट इव अपसरति, पक्षे पतित इत्याहुः ॥२॥

**णिव्वण्णिज्जइ रूवं[1] अरुण-[2]पहोलुग्ग-चन्दिअम्मि महि-अले ।**
**उव्वत्त[3]-धूसराणं णवरि[4] चलन्तीण[5] पाअव-च्छाआणं ॥३॥**

**[निर्वर्ण्यते रूपं अरुण-प्रभावरुग्ण-चन्द्रिके महीतले ।**
**उद्वृत्त-धूसराणां केवलं चलन्तीनां पादप-च्छायानाम् ॥ ]**

अरुणाया प्रभया । पाटान्तरे अरुणस्य शिखयाऽवरुग्णचन्द्रिके महीतले । दिगन्तरगमनाप्रतिनिवर्तमानानामतएवोद्वृत्तत्वात् परिवृत्तपार्श्वत्वाद् इव धूसराणां महीरजोभिरीषत्पाण्डूनां पादपच्छायानां रूपमाकारः केवलं निर्वर्ण्यते अरुणकिरणप्रसरणादस्थिरीक्रियते, न तु रात्रौ यथोपलभ्यते तथा स्फुटमुपलभ्यत इत्यर्थः । उद्वृत्तधूसराणामुत्पृष्ठीकृतकदल्यादिदलवदीषत् पाण्डूनामिति **केचित्** । रूपं निर्वर्ण्यते चक्षुर्ग्राह्यो गुणः परं प्रतायते नत्वशेषविशेषावगमो भवतीति भावः ॥३॥

**सम्मिल्लइ[6] कुमुअ-वणं अद्धत्थमिअ-गलिअ-प्पहं स[F78b]सि-बिम्बं ।**
**विअलइ[7] रअणि-च्छाआ अरुणाहअ-मन्द[8]-तारआ पुव्व-दिसा ॥४॥**

**[संमीलति कुमुद-वनं अर्धास्तमित-गलित-प्रभं शशि-बिम्बम् ।**
**विगलति रजनी-च्छाया अरुणाहत-मन्द-तारका पूर्व-दिक् ॥ ]**

---

1 ०अं GB. 2 ०सिहो० GB ; but Ms has ०पहो० marginally. 3 ओव्वत्त० GB. 4 णवर GB. 5 वलन्ती० Ms, but चलन्तीणं with one mātrā in excess, noted marginally. 6 संमीलइ GB. 7 विअलिअ० Ms ; but it has marginally noticed विअलइ. 8 ०मुद्ध० GB.

सम्मीलति कुमुदवनमर्धास्तमितश्च तत् गलितप्रभश्चेति तथाभूतं शशिबिम्बं शशिनोऽर्धास्तमितत्वात् कुमुदवनं संकुचति न तु सम्यक् संकोचं प्राप्तमिति वर्तमानकालविभक्तिव्यङ्ग्योऽयमर्थः। एवं रजनीच्छाया विगलति न तु निःशेषं गलिता। अतएवारुणाहताः सूक्ष्मास्तारका यत्र एवंभूता पूर्वदिक्, रात्रेरसत्त्वात् प्रौढास्तारकाः पुनः सन्त्येवेति भावः। **कुलनाथस्तु** विगलिता रजनीच्छाया यत्र इत्याह ॥४॥

**दीसइ अ तिमिर-रेइअ-पल्लव-अम्ब-तरुणारुणाहअ-मिहिअं।**
**विसम-विहिण्ण[1]-मणोसिल[2]-चुण्ण[3]-प्फरुस-मणि-पव्वअद्धं व णहं ॥५॥**

**[दृश्यते च तिमिर-रेचित-पल्लव-ताम्र-तरुणारुणाहत-मेघिकम्।**
**विषम-विभिन्न-मनःशिल-चूर्ण-परुष-मणि-पर्वतार्धं इव नभः॥]**

तिमिरेण रेचितं त्यक्तं तथा पल्लवताम्रेण तरुणेनारुणेन सन्ध्यारागेणाहता मेघिका यत्र तादृशं। नभः विषमविभिन्नैरसमप्रदलितैर्मनःशिलाचूर्णैः खण्डैः परुषं रूक्षं यन्मणिपर्वतार्धं तदिव दृश्यते। पूर्वदिगवच्छेदेनाताम्रत्वाद् ईदृशपर्वतार्धमिव दृश्यत इत्यर्थः। **कुलनाथस्तु** तिमिरेण त्यक्तं पल्लवताम्रेण तरुणारुणेन बालार्केणाहतमहिकमुत्सारितनिशातुषारं नभो विषमविभिन्नैः सम्यग्गलितैर्मनःशिलाचूर्णैः परुषं रूक्षं मणिपर्वतस्य स्फटिकाचलस्यार्धं तद्वदिव दृश्यते, एकत्र तुषाराक्रान्तत्वादपरत्रारुणाहतत्वाद् ईदृशस्फटिकाचलसाम्यमित्यर्थः। महिका मिहिकेति च द्विरूपकत्वात्, मिहिकाशब्दस्तुषारवाचीत्याह ॥५॥

**ताव अ अत्थ-णिअम्ब णव-सलिलाउण्ण-गअ-पअ-च्छवि-खउरो[4]।**
**पत्तो अरुणुण्णामिअ-पासल्लन्त-गअणोसरन्तो व्व ससी ॥६॥**

**[तावत् च अस्त-नितम्बं नव सलिलापूर्ण-गज-पद-च्छवि-कर्बुरः।**
**प्राप्तः अरुणोन्नामित-पार्श्वायमान-गगनापसरन् इव शशी॥]**

---

1 विभि० Ms. 2 ०मणसिला० GB. 3 ०भङ्ग० GB; this reading being marginally noticed in Ms. 4 ०कलुसो GB.

यावदेवं प्रभातोचितं क्रमादुपचीयते तावदेवारुणेन सन्ध्यारागेणोन्नमितत्वादेव पार्श्वीय-मानाद् गगनात्तिरश्चीनादपसरन्निव शशी अस्तनितम्बं प्राप्तः। कीदृशः प्रभातशून्यत्वान्नव-सलिलापूर्णं यद्गजस्य पदं पदचिह्नं तद्वत् कलुषच्छविः प्राकृतत्वात् परनिपातानियमात्। पूर्वदिगवच्छेदे प्रकाशमयत्वादुन्नमदिव पश्चिमदिगवच्छेदे चाल्पतिमिरसत्त्वान्नमदिव गगनं दृश्यते। अतोऽभिलक्ष्यमाणे चन्द्रमसि उत्प्रेक्षेयम् ॥६॥

**होन्ति पवणाहआइं सुइ[1]-महुर-विहङ्ग-णीहरन्त-रुआइं।**
**कूजन्त[2]-महुअराइं धुअ-सिण्हा[3]-लहुअ-किसलआइ वणाइं ॥७॥**

**[भवन्ति पवनाहतानि श्रुति-मधुर-विहङ्ग-निर्ह्रदद्-रुतानि।**
**कूजन्-मधुकराणि धुत-शिशिर-लघुक-किसलयानि वनानि ॥ ]**

प्रभातविसृमरेण पवनेनाहतानि आन्दोलितशाखानि। प्रभातपवनचालनाज्जागरूकाणां विहङ्गानामत्युद्भटतया श्रुतिमधुरं यथा स्यात्तथा निर्गच्छन्ति रुतानि येषु। पवनचालनादेव कूजन्तो मधुकरा यत्र। धुता शिशिरत्वाल्लघुकानि किसलयानि येष्विदृशानि वनानि। सिण्हाशब्दः शिशिरे देशी ॥७॥

**अरुणक्कन्त-विअलिअं णिअ-[4]अङ्काणुगअ-बहल-जोण्हा-गरुअं[5]।**
**अत्थ-सिहराहि पडिअं उक्खुडिअ[6]-करावलम्बणं ससि-बिम्बं ॥८॥**

**[अरुणाक्रान्त-विगलितं निजाङ्कानुगत-बहल-ज्योत्स्ना-गुरुकम्।**
**अस्त-शिखरात् पतितं उत्खण्डित-करावलम्बनं शशि-बिम्बम् ॥ ]**

अरुणेनाक्रान्तत्वादुत्सार्यमाणत्वाद् गलितं भ्रष्टं गलितशोभमिति **कुलनाथः**। अरुणत्रासादिव निजे अङ्केऽनुगताभिर्बहलज्योत्स्नाभिर्गुरुकम्। एतेन ज्योत्स्नायामपत्यधर्मः समाहितः। उत्खण्डितं करावलम्बनं यस्य, ईदृशं शशिबिम्बमस्तशिखरात् पतितम्।

---

1 फुड० GB. 2 गुञ्जन्त० GB. 3 ०सिल्हा० GB. 4 ०अङ्का० Ms. 5 ०भरिअं GB. 6 उक्खडिअ० GB.

गुरुत्वाद्धस्तावलम्बनाभावश्च पतने हेतुः। करा मयूखास्तेषामालोको ज्योत्स्ना इति भेदः। अतएव चन्द्रकराणामालोके "चन्द्रिका कौमुदी ज्योत्स्ने"ति, सूर्यकरालोके च "प्रकाशो द्योत आतपः" इति पृथगुक्त्वा सूर्यचन्द्रसाधारण्ये भानुः कर इत्यादि **अमरेण** लिखितमतएव 'भग्गपिअसङ्गम' इति **सप्तशती**पद्येऽपि साधुता ॥८॥

[1]जाअं समल्लिअन्ते अब्भहिओसहि-सिहा-करालिअ-पासं[2]।
अत्थ-सिहरं मिअङ्के अण्णमअ-पअत्त[3]-चन्द[4]-मणि-णीस
[F79a]न्दं ॥९॥

[जातं समालीयमाने अभ्यधिकौषधि-शिखा-करालित-पार्श्वम्।
अस्त-शिखरं मृगाङ्के अन्यमय-प्रवृत्त-चन्द्र-मणि-निस्यन्दम्॥]

मृगाङ्के समालीयमाने सति सान्निध्यादभ्यधिकाभिरोषधिशिखाभिः करालितस्तुङ्गतां नीतो विस्तारित इति यावद्, ईदृशः पार्श्वो यस्य। अन्यमयश्चन्द्रसान्निध्यात् पूर्वावस्थातो भिन्नप्रकारश्चन्द्रमणिनिस्यन्दो यत्र, ईदृशमस्तशिखरं जातम्। "करालो दन्तुरे तुङ्गे" इत्यमरः। करालितं विच्छुरितमिति **कुलनाथः** ॥९॥

[5]पिअ-विप्पओअ-दुक्खं कह वि गमेऊण जामिणीअ पहाए[6]।
अणुधाइ[7] पडिरुवन्ती[8] अब्भुट्ठाउं व सहअरी चक्काअं[9] ॥१०॥

[प्रिय-विप्रयोग-दुःखं कथं अपि गमयित्वा यामिन्याः प्रभाते।
अनुधावति प्रतिरुवन्ती अभ्युत्थातुं इव सहचरी चक्रवाकम्॥]

---

1 This verse is numbered as V. 10 in GB wherein the latter is numbered us V. 9. 2 ०वासं Ms. 3 ०पअट्ट० GB. 4 ०चन्दण-मणि० Ms (evidently a mistake). 5 पिअअम-विओअ० GB. 6 पहावे Ms. 7 अणुजाइ Ms. marginally. 8 ०रुअन्ती GB. 9 ०णं read marginally for०अं

[F79a] प्रियविप्रयोगदुःखं कथमपि गमयित्वा यामिन्याः प्रभाते प्रतिरुवती सहचरी चक्रवाकी चक्रवाकमभ्युत्थातुमिवानुधावति। चक्राणमिति पाठे चक्राणां सहचरीत्यर्थः। असन्निहितस्यापि चक्रवाकस्य भावनावशान्निजसविधे आगमनमुत्प्रेक्षमाणा चक्रवाकी तस्याभ्युत्थानमिव कर्तुमनुधावति ॥१०॥

**दूरोणअ-णक्खत्तं अरुण-सिहाहअ-गलत्थिओणअ-जोण्हं।**
**अत्थाइ[1] व ससि-सहिअं उद्धाइ[2] व उअअ-पव्वआहि णह-**
**अलं ॥११॥**

**[दूरावनत-नक्षत्रं अरुण-शिखाहत-गलहस्तितावनत-ज्योत्स्नम्।**
**अस्तायते इव शशि-सहितं उद्धावति इव उदय-पर्वतात् नभस्तलम् ॥]**

दूरावनतनक्षत्रं दूरेऽरुणशिखाया दूरेऽवनतानि नक्षत्राणि यत्र। अरुणशिखाया आहतेन आहननेन गलहस्तिताः प्रेरिताः सत्योऽवनता ज्योत्स्ना यत्र तन्नभस्तलं शशिसहितमस्तायत इव अस्तमेतीव। नश्यतीवेति कुः(कुलनाथः)। उदयपर्वतादूर्ध्वं धावतीव। अत्र पश्चिमायां दिशि आकाशं शशिना अस्तमेतीव, पूर्वस्यां दिशि रविणा सहोत्तिष्ठतीव इत्यर्थे वक्तव्ये रविणा सहेति पदं न दत्तं तेनास्तां रवेः प्रादुर्भावस्तदीय-शिखामात्रोत्थानादेव प्रतिपक्षभूतं नक्षत्रादिकं निराकृतमिति ध्वनितमतएवात्र न्यूनपदं न दोषायेति **केचित्** ॥११॥

**पिअ[3]-लम्भेण पओसो जाओ दिण्ण-फलो रइ-सुहेण णिसा।**
**आणिअ-विरहुक्कण्ठो गलइ अणिव्विण्ण[4]-वम्महो पच्चूसो ॥१२॥**

**[प्रिय-लम्भेन प्रदोषः यातः दत्त-फलः रति-सुखेन निशा।**
**आनीत-विरहोत्कण्ठः गलति अनिर्विण्ण-मन्मथः प्रत्यूषः ॥]**

---

1 अत्थमइ GB. 2 उट्ठेइ GB. 3 पइ० GB. 4 ०ब्भिरण्ण० Ms. marginally.

प्रदोषो रजनीप्रारम्भः। प्रियस्य लाभेन प्राप्त्या। दत्तफलः सन् यातोऽतीतः। एवं निशापि रतिसुखेन दत्तफला अतीता। आनीता विरहोत्कण्ठा येन तथा, अनिर्भिन्नो दूरं गतो, अणिव्विण्ण इति पाठे अनिर्विण्णोऽक्लान्त इत्यर्थः, [ मन्मथो यत्र* ] तादृशः प्रत्यूषो गलति। एतेन प्रत्यूषस्य खलप्रकृतित्वं सूचितम् ॥१२॥

वीसम्भ-वड्ढिअ-रसं [1]रइ-राउक्खुडिअ-सेस-सण्ठिअ-रसणं।
विअलिअ-मअ-प्पतुट्टं[2] पच्चूस-रअं पओस-दूरब्भहिअं ॥१३॥

[विश्रम्भ-वर्धित-रसं रति-रागोत्खण्डित-शेष-संस्थित-रसनम्।
विगलित-मद-प्रवीणं प्रत्यूष-रतं प्रदोष-दूराभ्यधिकम् ॥ ]

विगलितेन समाप्तिं गतेन मदेन मत्ततया 'पतुट्टं' प्रवीणं विगलितमदत्वेन धैर्यापगमात् 'पतुट्टं' निर्व्याजमालिङ्गनादिप्रवीणमिति **कुलनाथः**। मदजन्यमोहशून्यतया बहुविधालिङ्गन-चुम्बनादिविकारयुक्तमित्यर्थः। ईदृशं प्रत्यूषरतं प्रदोषरतादपि दूराभ्यधिकमुत्कृष्टं कुत इत्याह मदापायाद्विश्रम्भवर्धितो रसोऽनुरागो यत्र, रात्रौ मदसत्त्वादनुरागस्य तादृशत्वादिति भावः। मदापायादेव रतिरागेण निधुवनौत्कण्ठ्येन स्खलिता[3] त्रुटिता शेषभागेन संस्थिता स्तोकावशिष्टेति यावदेवंरूपा रसना यत्र, रात्रौ सहतया निधुवनस्याल्पतया रसनायास्त-थैवावस्थानात्। 'पतुट्ट' प्रवीणे देशी ॥१३॥

संकन्ताहर-राअं थोअ-सुरा-सण्ठिउप्पलद्ध-त्थइअं।
चसअं कामिणि-मुक्कं किलन्त[4]-बउल-तणुओ ण मुञ्चइ
गन्धो ॥१४॥

[संक्रान्ताधर-रागं स्तोक-सुरा-संस्थितोत्पलार्ध-स्थगितम्।
चषकं कामिनी-मुक्तं क्लाम्यद्-बकुल-तनुकः न मुञ्चति गन्धः ॥]

---

1 अइराअ-क्कलिअं GB. 2 मएण णिउणं GB. 3 स्खलिताशेष Ms. the word 'शेष' being superfluous here. 4 किलिन्त० GB.

पानदशायामधरासंगस्य नैविड्यात् संक्रान्तोऽधररागोऽलक्तताम्बूलादिरसो यत्र। पानेन स्तोकायां सुरायां संस्थितेनोत्पलेनार्धस्थगितं कामिनीमुक्तं चषकं सुरापानपात्रम्। क्लान्तस्य बकुलकुसुमस्येव तनुकः सुरागन्धो न मुञ्चतीत्यर्थः। अल्पपानक्लान्तस्येब तनुकः स्वभावो यस्येति **श्रीनिवासः** ॥१४॥

**पसिढिल-केस-कलावो[1] उव्वत्तिअ-मेहलावरुद्ध-णिअम्बो।**
**छाआ-लग्ग-परिमलो पिअअम-मुक्क-तणुओ विलासि[F79b]णि-सत्थो ॥१५॥**

**[प्रशिथिल-केश-कलापः उद्वर्तित-मेखलावरुद्ध-नितम्बः।**
**छाया-लग्न-परिमलः प्रियतम-मुक्त-तनुकः विलासिनी-सार्थः ॥ ]**

सुरतामर्दात् प्रशिथिलः केशकलापो यस्य। उद्वर्तितया परिवृत्तिं गतया मेखलया अवरुद्धो नितम्बो यस्य। मेखलापरिवृत्तिश्च संभ्रमादित्यर्थः। छायालग्नपरिमलः स्वेद-जलप्रोञ्छितत्वादाभासमात्रस्थितानुलेपन इति **कुलनाथ-श्रीनिवासौ**। सुरतविमर्देषु दूरीभूतेष्वपि भूषणादिषु छायात्वेन शोभात्वेन लग्नः परिमलः सुरतविमर्दो यस्येति **केचित्**। छा[य*]या कान्तिमात्रेण लग्नोऽविभाव्यमानः परिमलो यस्य। [ [2]प्रियतममुक्ततनुकः विलासिनीसार्थः* ] ॥१५॥

**दुण्णिमिअ-वाम-चरणं [3]वलन्त-पीणोरु-विसम-पाउद्धारं।**
**दुक्खेण[4]सण्ठविज्जइ पिअ-हुत्त-णिअत्त-पत्थिअं [5]जुअइहिं ॥१६॥**

**[दुर्निमित-वाम-चरणं वलत्-पीनोरु-विषम-पादोद्धारम्।**
**दुःखेन संस्थाप्यते प्रियाभिमुख-निवृत्त-प्रस्थितं युवतीभिः ॥ ]**

1 ०कलाओ० GB. 2 These words are neither mentioned nor explained in the commentary. 3 ०चलणं GB. 4 दुःक्खेण Ms. 5 जुव० GB.

स्त्रीणां वामाङ्ग एव नखक्षतादिकं विहितमिति । अतो दुर्निमित ऊरुसन्धिगतनखक्षत-पीडया दुःखेन निहितो वामचरणो यत्र । आलिङ्गने पुरुषदक्षिणपाणिना वामाङ्ग एव नखक्षतादिकं स्वाभाविकमिति **लोकनाथ-श्रीनिवासौ** । वलद्भ्यां सुरतायासात् परस्पर-संश्लेषेण तिर्यग्भूय चलद्भ्यां पीनाभ्यामूरुभ्यां विषमः स्खलद्रूपः पादोद्धारो यत्र । विषमः त्र्यश्रः पादोद्धार उत्क्षेपो यत्र । इत्थं प्रियाभिमुखान्निवृत्तप्रस्थितं युवतीभिर्दुःखेन संस्थाप्यते अभ्यस्यते स्थिरीक्रियते वा । प्रगुणीक्रियते साध्यत इति **कुलनाथः** ॥१६॥

**संखोहिअ-कमल-सरो सज्झाअव-अम्ब-धाउ-कद्दमिअ-मुहो ।**
**ठाण-प्फिडिओ व्व गओ रत्तिं भमिऊण पडिणिअत्तो दि-**
**असो ॥१७॥**

**[संक्षोभित-कमल-सराः सन्ध्यातपाताम्र-धातु-कर्दमित-मुखः ।**
**स्थान-स्फिटितः इव गजः रात्रिं भ्रमित्वा प्रतिनिवृत्तः दिवसः ॥ ]**

दिवसपक्षे निमीलनेन, गजपक्षे आन्दोलनेन संक्षोभितं कमलसरो येन । सन्धयातपेन सन्धयारागेण कर्दमितं कलुषितं मुखं पूर्वभागो यस्य, पक्षे सन्धयातपप्रायेणाताम्रधातुना कर्दमितं मुखं यस्य । सन्धयातप एव ताम्रो धातुर्गैरिकं तेन कर्दमितं मुखं यस्य स तथा इति **कुलः** (कुलनाथः) । स रात्रिं भ्रमित्वा स्थानान्निवासभूमेर्भ्रष्टो वनगज इव दिवसः प्रतिनिवृत्तः, रात्रिमित्यत्यन्तसंयोगे द्वितीया ॥१७॥

**अरुण-पडिबोहिआए अब्भुट्ठन्तीअ[1] आअअं व दिणअरं ।**
**साहेन्ति विहडिआइं णिमिअं कमलाइ[2] दिअस-लच्छीअ**
**पअं ॥१८॥**

**[अरुण-प्रतिबोधितया अभ्युतिष्ठन्त्या आगतं इव दिनकरम् ।**
**शासति विघटितानि नियोजितं कमलानि दिवस-लक्ष्मया पदम् ॥ ]**

---

1 अब्भुत्थ० GB. 2 कमलाइं Ms.

अरुणेन सूर्यसारथिना सन्ध्यारागेण वा प्रतिबोधितया जागरितया आगतं दिनकर-मभ्युत्तिष्ठन्त्येव दिवसलक्ष्म्या विक्षिप्तं पदं विघटितानि विश्लेषं गच्छन्ति कमलानि कथयन्ति। दिवसकरमभ्युत्तिष्ठन्त्या लक्ष्मयाश्चरणादिव कमलानि विघटितानीत्यर्थः ॥१८॥

[1]होइ कमलाअराणं समूससन्ताण चिर-णिरोहेक्कमुहो।
सञ्चालिअ-महु-महुरो मारुअ-भिण्णो वि मासलो[2] च्चिअ गन्धो ॥१९॥

**[भवति कमलाकराणां समुच्छ्वसतां चिर-निरोधैक-मुखः।**
**सञ्चालित-मधु-मधुरः मारुत-भिन्नः अपि मांसलः एव गन्धः॥ ]**

समुच्छ्वसतां कमलाकराणां सञ्चालितेन पवनोत्क्षिप्तेन मधुना मधुरः प्रीतिकारी गन्धो मारुतेन भिन्नो दिक्षु विकीर्णोऽपि 'मासल' एव मांसलः सान्द्र एव भवति। मारुतभिन्न-स्यापि सान्द्रत्वे हेतुमाह चिरकालनिरोधादेकमुखः पिण्डीभूय निर्गच्छन्। "मुखं निःसरणे वक्त्रे प्रारम्भोपाययोर"पीति **विश्वः** ॥१९॥

जं च्चिअ कामिणि-सत्थं आउच्छन्ताण मुक्क-बाह-त्थवअं[3]।
रक्खस-भडाण तं च्चिअ जाअं [4]णिप्पच्छिमोवऊहण-सोक्खं ॥२०

**[यत् एव कामिनी-सार्थं आपृच्छमानानां मुक्त-बाष्प-स्तवकम्।**
**राक्षस-भटानां तत् एव जातं निष्पश्चिमोपगूहन-सौख्यम्॥ ]**

भाविविरहत्रासात् त्यक्तबाष्पस्तवकं प्राविर्भूतलोचनजलं कामिनीसार्थमापृच्छतां गमनानुज्ञां याचमानानां राक्षसभटानां यदेव उपगूहनसौख्यं जातं, तदेव निष्पश्चिमं चरमशून्यं जातं, भाविमरणत्वादिति भावः। यद्वा, मुक्तबाष्पमित्यवगूहविशेषणममङ्गलत्वाच्चरम-

1 This verse is numbered 20 in GB, which contain an additional verse numbered 19 which, however, is wanting in our Ms and which runs as follows:—"एक्केक्कम-वोच्छिण्णं पओस-वीसत्थ-विहडिअं उअहि-जले। जणिणं व चन्द-पडिमं अल्लिअइ विहुअ-काअरं सङ्ख-उल" ॥ 2 मंसलो GB, 3 ०त्थेवं Ms. 4 णिपच्चिमो० Ms.

शून्यत्वे हेतुः। अथवा, कामिनीसार्थमापृच्छतां राक्षसानां मुक्तबाष्पस्तवकं शोकाभावाद्बाष्पशून्यमवगूहनसौख्यं यदेव निष्पश्चिमं जातं तदेवालिङ्गनं बाष्पशून्यं जातमित्यर्थः। मृते भर्त्तरि यदालिङ्गनं तच्छोकार्थमहितमेव भविष्यतीति भावः ॥२०॥

**अह समरन्तरिअ-सुहो दहमुह-वेर-पडिमुञ्चणा-गअ[1]-हिअओ।**
**ल[F80a]द्धामरिसावसरो अलद्ध-णिद्दो वि राहवो[2] पडिउद्धो॥२१॥**

**[अथ समरान्तरित-सुखः दशमुख-वैर-प्रतिमोचना-गत-हृदयः।**
**लब्धामर्षावसरः अलब्ध-निद्रः अपि राघवः प्रतिबुद्धः ॥]**

अथानन्तरं समरेणान्तरितं सीतासम्भोगरूपं सुखं यस्य। दशमुखवैरस्य प्रतिमोचनायां गतहृदयश्च। समुद्रबन्धनेन लङ्काप्राप्तया एव लब्धोऽमर्षस्यावसरो येन। स राघवः[3] समरचिन्तयालब्धनिद्रोऽपि विबुद्धयते, अक्षिसंकोचादिकं निद्राभिनयं त्यक्तवानित्यर्थः। विबुद्धः शयनादुत्थित इति **कुलनाथः**। युद्धत्वरया विकलचित्तोऽभूदिति **श्रीनिवासः** ॥२१॥

**सीआ-विओअ-दुक्खं विसहन्तस्स चउ-जाम-मेत्तन्तरिअं।**
**दीहो अ गओ कालो ण समा एक्का णिसा[4] अ सा रहुवइणो॥२२॥**

**[सीता-वियोग-दुःखं विषहमाणस्य चतुर्याम-मात्रान्तरितम्।**
**दीर्घः च गतः कालः न समा एका निशा च सा रघुपतेः ॥]**

तस्मिन्नेव रजन्याः प्रहारचतुष्टये गते सीतालाभस्यावश्यकत्वाच्चतुर्भिर्यामैः प्रहरैरेवान्तरितं सीतावियोगदुःखं विषहमाणस्य रघुपतेः पूर्वं दीर्घश्च कालो गतः। तेन कालेन एका च निशा न समा। कथमियं रात्रिः प्रभातु रावणं हत्वा सीतामाश्वासयामीति चिन्तयतः सा रात्रिरक्षयेव भूता इति भावः। कीदृशी समा दीर्घकालैस्तुल्येति **केचित्**। समा रात्र्यन्तरेण तुल्याप्यक्षया जातेति **केचित्** ॥२२॥

---

1 ०णाअअ-दिअहो GB. 2 राहओ GB. 3 लाघवव: Ms, evidently a mistake. 4 This word णिसा is placed in GB after the words अ and सा.

उम्मिलन्ति[1] च्चिअ से णिद्दा-सेसोणअच्छि-वत्त-क्खलिआ ।
गरुओलइअ-रण-भरे दिट्ठी [2]दिट्ठ-समरे धणुम्मि णिसण्णा ॥२३॥

[उन्मीलन्ती एव तस्य निद्रा-शेषावनताक्षि-पत्र-स्खलिता ।
गुरुकावलगित-रण-भरे दृष्टिः दृष्ट-समरे धनुषि निषण्णा ॥ ]

तस्य रामस्य दृष्टिरुन्मीलन्त्येव । निद्राशेषेणावनतेभ्य ईषन्मुकुलितेभ्योऽक्षिपत्रेभ्यः स्खलिता अल्पनिर्गता सती । रावणजेतुरपि वालिनो वधे दृष्टसमरे, अतएव गुरुकावलगितरणभरे धनुषि निषण्णा । प्रबुद्धमात्रेणैव रामेण वैरिवधाव्यभिचारि साधनं धनुरवलोकितमित्यर्थः । अन्यत्रापि विधिनिरोधादुन्मीलन्ती स्खलिता सती दण्डादिकमवलम्ब्य इत्युचितमेवात्र निद्रापदेन वैमनस्यान् मीलितनयनत्वमुच्यत इति पूर्वोक्तेनालब्धनिद्रेत्यनेन न विरोधः ॥२३॥

मुअइ अ किलन्त[3]-कुसुमं अवहोवास-मलिओवहाणद्धन्तं ।
सइ-परिअत्तण-विसमं हिअआवेअ-पिसुणं सिला-सअणिज्जं[4] ॥२४॥

[मुञ्चति च क्लान्त-कुसुमं उभय-पार्श्व-मर्दितोपधानार्धान्तम् ।
सदा-परिवर्तन-विषमं हृदयावेग-पिशुनं शिला-शयनीयम् ॥ ]

विरहसन्तापेन क्लान्तकुसुममुभयपार्श्वयोर्दलितोपधानार्धान्तं दलितोपधानैकदेशमिति कुः ( कुलनाथः ) । सदापरिवर्तनेन विषमं नतोन्नतम् । हृदयावेगस्य पिशुनं प्रकाशकं शिलाशयनीयं शिलायां[5] निर्मितां शय्यां शिलारूपां शय्यां वा मुञ्चत्यर्थाद्रामः ॥२४॥

तो सेल-सार-गरुअं अइरा-होन्त-दइआ-समागम-पिसुणं ।
अहिणन्दिऊण सुइरं फुरमाणब्भहिअ-पीवरं णिअअ[6]-भुअं ॥२५॥

---

1 ०लन्ती B. 2 दिट्ठं Ms. 3 किलिन्त० GB. 4 ०णीयं GB 5 लिशायां Ms, evidently a mistake. 6 वाम-भुअं GB.

खण-संमाणिअ-णिअमो[1] धणु-कड्ढण-मग्ग-मोइअ-परिट्ठविअं ।
बन्धइ मलिअ-विसज्जिअ-तमाल-सअण-सुरहिं जटा-
पब्भारं ॥२६॥

[ततः शैल-सार-गुरुकं अचिराद्-भविष्यद्-दयिता-समागम-पिशुनम् ।
अभिनन्द्य सुचिरं स्फुरदभ्यधिक-पीवरं निजक-भुजम् ॥
क्षण-सम्मानित-नियमः धनुः-कर्षण-मार्ग-मोचित-परिष्ठापितम् ।
बध्नाति मृदित-विसृष्ट-तमाल-शयन-सुरभिं जटा-प्राग्भारम् ॥]

युग्मकम् । ततः शय्यापरित्यागानन्तरं रामो जटाप्राग्भारं बध्नातीति वक्ष्यमाण-स्कन्धकेनान्वयः । किं कृत्वा शैलवत् सारेण स्थाम्ना गुरुकं स्फुरद्रूपत्वादधिकपीवरमत-एवाचिराद्भविष्यतो दयितसमागमस्य पिशुनं ज्ञापकं सूचकमिति **केचित्**, "पिशुनौ खल-सूचकौ" **इत्यमरः** । निजभुजमर्थाद्दक्षिणं सुचिरमभिनन्द्य दयितासमागमसूचकत्वं शैलसारतया प्रतिपक्षनिराकरणक्षमत्वमभिनन्दनायां हेतुः । शैलादपि सारेण सामर्थ्येन गुरुकमिति **कुः** ( कुलनाथः ) ॥२५॥

रामः कीदृशः, क्षणं सम्मानितनियमः कृतसन्ध्यावन्दनादिनित्यक्रियः । जटाप्राग्भारं कीदृशं, धनुःकर्षणमार्गान्मोचितमपसारितं सत् परिष्ठापितं कर्णान्ताकर्षणेन करसंघट्टभिया तन्मार्गपरित्यागेन बद्धमित्यर्थः । **केचित्तु**, धनुराकर्षणमार्गमोचितपरिष्ठापितमेतेन रामस्य कौशिकाघातप्रियत्वं सूचितं तस्यातिप्रशस्तत्वात्, यदाह **कोदण्डकल्पतरौ** "कर्ण-पश्चात् कौशिकः स्यात् तदूर्ध्वे चार्धकौशिकः । कर्णान्ते शाश्वतः[2] प्रोक्तो भवतो हनुदेशतः ॥" छन्दः स्याद् गलदेशे च आशुयोगादमी मताः । सर्वेषामपि मध्ये तु प्रशस्तं कौशिकं विदुः" ॥ इत्याहुः । मृदितविसृष्टेन तमालशयनेन सुरभिं जटानामबद्धत्वे तमालसौरभस्य चिरचारुतया तद्वेगहेतुता स्यादिति सौरभसंकोचाय जटाबन्ध इति चरमं जटाविशेषणं बन्धहेतुतया सार्थकमिति **हर्षपालः** ॥२६॥

दाऊण गलिअ-बाहं चिर-धरिआऊरमाण-रोसा[F80b]अम्बं ।
दिट्ठिं लङ्काहिमुहिं[3] समत्थ[4]-णिव्वडिअ-तारआ-दुप्पेच्छं ॥२७॥

---

1 ०धम्मो GB. 2 साखतः Ms. 3 ०हीं Ms. 4 समत्त Ms.

गेण्हइ गहिअ-त्थामं सीआ-सुण्णइअ-सअण-मग्ग-ट्ठविअं ।
बहुसो विरहुकण्ठिअ-णिमिअ-मुहोरुण्ण-मलिण[1]-कोडिआवं ॥२८॥

[दत्त्वा गलित-बाष्पां चिर-धृतापूर्यमाण-रोषाताम्राम् ।
दृष्टिं लङ्काभिमुखीं समस्त-निर्वलित-तारका-दुष्प्रेक्षाम् ॥
गृह्णाति गृहीत-स्थामानं सीता-शून्यीकृत-शयन-मार्ग-स्थापितम् ।
बहुशः विरहोत्कण्ठित-नियोजित-मुखावरुदित-मलिन-कोटिं चापम् ॥]

[F80b] युग्मकम् । गलितबाष्पां चिरधृततया आपूर्यमाणेन रोषेणाताम्रां समस्तं पृथग्भूतया तारकया दुष्प्रेक्षां [दृष्टिं] लङ्काभिमुखीं दत्त्वा चापं गृह्णातीति वक्ष्यमाणेनान्वयः ॥२७॥

चापं कीदृशं बहुशो गृहीतं प्रत्यक्षीकृतं स्थाम बलं यस्य, तत्र एवादरात् । अतएवादरादिति वा सीताशून्यीकृते शयनमार्गे परिस्थापितं बहुशो विरहोत्कण्ठतया निक्षिप्तं यन्मुखं तस्यावरुदितेनास्रजलेन मलिनकोटिं, गृहीतस्थाम युद्धेषु ज्ञातसामर्थ्यम् ॥२८॥

तो [2]महिअलद्ध-मिलिअं[2] वाम-करावेढ-णिट्ठुर-परिग्गहिअं ।
डाहिण-हत्थेण कअं वलन्त-देह-भर-णामिअं सज्जीअं ॥२९॥

[ततः महीतलार्ध-मिलितं वाम-करावेष्ट-निष्ठुर-परिगृहीतम् ।
दक्षिण-हस्तेन कृतं वलमान-देह-भर-नामितं सजीवम् ॥ ]

ततश्चापग्रहणानन्तरं महीतलेऽर्धमिलितमारोपितैकदेशं, वामकरावेष्टनेन निष्ठुरपरिगृहीतं वलमानस्य देहस्योपरिनिषण्णस्य भारेणावनामितं सज्यमारोपितमौर्वीकं कृतम् । 'तो तं महिअल-निमिअ' इति पाठे महीतलनिहितमर्थः ॥२९॥

---

1 ०मइअ० GB. 2 तं महि-अल-णिविअ' GB. ०णिमअ' (for णिविअं) in the Text of Ms which has ०मिलिअ' and also तो तं महिअ० noticed marginally.

काऊण ससिअ-मन्थर-गरुअ-सिरुक्कम्प[1]-तज्जिअं पडिवक्खं।
चलिओ चलन्त-पव्वअ-विलइअ[2]-धणु-मेत्त-साहणो रहु-
णाहो ॥३०॥

[कृत्वा श्वसित-मन्थर-गुरुक-शिर-उत्कम्प-तर्जितं प्रतिपक्षम्।
चलितः चलत्-पर्वत-विलगित-धनुर्मात्र-साधनो रघुनाथः ॥ ]

प्रतिपक्षं रावणं रोषावेशात् श्वसितमन्थरेण गुरुणा शिरःकम्पेन तर्जितं कृत्वा चलत्-पर्वतं यथा स्यात्तथा विलगितं भूमेरुद्धृतं यद्धनुस्तन्मात्रं साधनं [यस्य]। यद्वा, चलन्तः पर्वता विलगितं[3] धनुर्मात्रं साधनं यस्य स रघुनाथश्चलितः। चलत्पर्वतश्चासौ विलगितं धनुर्मात्रं येन स चासाविति **कुलनाथः** ॥३०॥

चलिअञ्च तुलिअ-पव्वअ-मिलन्त[4]-सिहर-णह-णिम्मिएक्क-
महिअरं।
अणुरूव-भुअ-परिट्ठिअ-विडप-मणिज्जन्त-पाअवं कइ-सेण्णं ॥३१॥

[चलितं च तुलित-पर्वत-मिलच्छिखर-नभो-निर्मितैक-महीधरम्।
अनुरूप-भुज-परिस्थित-विटप-ज्ञायमान-पादपं कपि-सैन्यम् ॥ ]

तुलितानां पर्वतानां मिलद्भिः शिखरैर्नभसि निर्मितैकमहीधरं शिखराणां निविडतया मिलनेनैकमात्रपर्वतयुक्तमिव गगनं कुर्वाणमित्यर्थः। अनुरूपेषु भुजेषु स्थापितैर्विटपैर्ज्ञाय-मानाः पादपा यस्य तत् कपिसैन्यश्चलितं च। तुलितानामुद्गृहीतानां पर्वतानां 'चलन्त'मिति पाठे चलद्भिः शिखरैः साटोपपदभरेण नभोनिर्मितैकमहीधरम्, अनुरूपेषु समालोकेषु भुजेषु इति **कुः** (कुलनाथः) ॥३१॥

---

1 ०सिरोअम्प० GB. 2 ०वलइअ० Ms. 3 विगलितं Ms.
4 ०चलन्त० Ms marginally.

सण्णज्झन्ति कुउरिसा[1] सण्णाह-भरेण किं करेन्ति समत्था।
णिअअ-बलच्चिअ कवअं कईण अप्पडिहआ भुआ अ पह-
रणं ॥३२॥

[संनह्यन्ति कु-पुरुषाः सन्नाह-भरेण किं कुर्वन्ति समर्थाः।
निजक-वलं एव कवचं कपीनां अप्रतिहताः भुजाः च प्रहरणम् ॥ ]

कुपुरुषाः सन्नह्यन्ति, समर्थाः सन्नाहभरेण भारभूतेन सन्नाहेन किं कुर्वन्ति, अपि तु न किमपि। तथा च कपीनां सामर्थ्येनैव सन्नाहकार्यकराणां तदुपादानं भारवहमित्यर्थः। तदेवाह—निजवलमेव कवचमप्रतिहता भुजाश्च प्रहरणम् ॥३२॥

णाअ-णिसाअर-सारं[F81a]माआ-णिक्कलुस-जुज्झ-गइ-पतुट्ठं[2]।
अग्ग-क्खन्धम्मि कअं लङ्का-मग्ग-णिउणं विहीसण-सेण्णं ॥३३॥

[ज्ञात-निशाचर-सारं माया-निष्कलुष-युद्ध-गति-प्रतुष्टम्।
अग्र-स्कन्धे कृतं लङ्का-मार्ग-निपुणं विभीषण-सैन्यम् ॥ ]

ज्ञातनिशाचरसारं मायासु निष्कलुषा अनाविला संमोहरहिता इति यावद्, ईदृशी या युद्धगतिस्तत्र प्रवीणं। अथवा, मायया निःशेषेण कलुषं। यद्वा, कालुस्यमज्ञानं निष्कलुषं पण्डितमिति **केचित्**। लङ्कामार्गनिपुणं परिचित-लङ्कापथं विभीषणसैन्यमग्रस्कन्धे कृतम् ॥३३॥

समर-तुरिअस्स [3]कह से पडिमोत्तव्वन्ति[4] दूमिओ सुग्गीवो।
गहिआउहम्मि रामे सोअइ अ विहीसणो णिसाअर-वंसं ॥३४॥

1 कुवु॰ Ms. originally and कुपु॰ marginally. 2 ॰पव्वुद्धं G, ॰प्पवुद्धं B; पअट्टं Ms. marginally. 3 सुकअं GB.; this reading occurring in Ms. originally, but having 'कह से', noticed marginally.
4 कह मोत्तव्वं ति GB.

[समर-त्वरितस्य कथं तस्य प्रतिमोक्तव्यं इति दुर्मनायमानः सुग्रीवः।
गृहीतायुधे रामे शोचति च विभीषणः निशाचर-वंशम् ॥ ]

रामे गृहीतायुधे सति समरत्वरितस्य तस्य रामस्य कथं मया प्रतिमोक्तव्यं प्रत्युपकर्त्तव्यमिति सुग्रीवो व्यथितः कुः (कुलनाथः)। 'दूमिओ' उपतप्त इति लोकनाथः। विभीषणश्च निशाचरवंशं शोचति बीजार्थं वार्ताकुशलाय राक्षसकुले एकस्यापि स्थितिर्न भविष्यतीत्याशयः। 'कह से' इति पाठे कथं तस्य रामस्येत्यर्थः ॥३४॥

अप्फालिए धणुम्मि अ खोहिअ-गिरि-विहुअ-साअरे रहुवइणा।
कम्पिअ-घर-पाआरा अङ्ग-क्खिवण-विसमं व वेवइ[1] लङ्का ॥३५॥

[आस्फालिते धनुषि च क्षोभित-गिरि-विधूत-सागरे रघुपतिना।
कम्पित-गृह-प्राकारा अङ्ग-क्षेपण-विषमं इव वेपते लङ्का ॥ ]

क्षोभितो गिरिः सुवेलो विधूतश्च सागरो येन तस्मिन् धनुषि रघुपतिना आस्फालिते सति, सुवेलसमुद्रक्षोभादेव कम्पितगृहप्राकारा लङ्का, अवयवानां क्षेपणेन चालनेन विषमं सातिशयं यथा स्यात्तथा वेपते इव। अत्र कम्पितगृहप्राकारा लङ्का वेपते इत्यनेनैव चरितार्थत्वादङ्गाक्षेपणेनेति विशेषणं निष्प्रयोजनकं स्यात्, अतोऽङ्गाक्षेपणाय त्रासात् सुसंगोपनार्थमङ्गाकर्षणायैव विषममनारतं वेपते। अयमर्थः—धनुरास्फालनेन निशाचरपुरी तथा कम्पते स्म यथा भयादिवान्यत्र गन्तुमङ्गाकर्षणं करोतीति लोकैः प्रतीयतामिति केचित् समादधुः ॥३५॥

झीण-पुलआइअङ्गी अउव्व-हरिस-मिलिआणणा जणअ-सुआ।
सोऊण-समासत्था पढमुल्लावं व राहवस्स धणु-रवं ॥३६॥

[क्षीण-पुलकाचिताङ्गी अपूर्व-हर्ष-मिलितानना जनक-सुता।
श्रुत्वा समाश्वस्ता प्रथमोल्लापं इव राघवस्य धनू-रवम् ]

---

1 पवेवइ Ms.

रामस्य प्रथमोल्लापमिव धनुषो रवं श्रुत्वा क्षीणपुलकाचिताङ्गी, अपूर्वेण हर्षेण गण्डस्फूरणादिना आनन्दानुभवेन मिलितमाननं यस्याः, एवंरूपा सती जनकसुता समाश्वस्ता सम्यगाश्वासितवती । अपूर्वहर्षमिलितानना जनकसुतेति **कुलनाथः** ॥३६॥

**मुच्छाविअ-जुअइ-अणो[1] रक्खस-वइ-हिअअ-महिअरासणि-घाओ ।**
**वामोहेइ पुरि-अणं सीआ-कण्ण-सुहओ पवङ्ग-कलअलो ॥३७॥**

**[मूर्च्छित-युवती-जनः राक्षस-पति-हृदय-महीधराशनि-घातः ।**
**व्यामोहयति पुरी-जनं सीता-कर्ण-सुखदः प्लवङ्ग-कलकलः ॥ ]**

मूर्च्छितो मूर्च्छां प्रापितो युवतीजनो यस्मात्, राक्षसपतेर्हृदयमेव स्थिरतया महीधरस्तस्याशनिघातः, सीताकर्णयोः सुखदः प्लवङ्गकलकलः पुरीजनं व्यामोहयति कवलीकरोति किंकर्तव्यतामूढं करोतीति **कुलनाथः** । मूर्च्छा च भीरुतया विरहेण वेति **केचित्** ॥३७॥

**कइ-बल[2]-रहसुद्धाइअ-धुअ-समअ-पहाविओअहि-समक्कान्तो ।**
**सलिल-भरन्त[3]-दरि-मुहो रसइ पसम्मन्त-पडिरवं धरणि-हरो ॥३८॥**

**[कपि-बल-रभसोद्धावित-धूत-समय-प्रधावितोदधि-समाक्रान्तः ।**
**सलिल-भ्रियमाण-दरी-मुखः रसति प्रशाम्यत्-प्रतिरवं धरणीधरः ]**

कपिबलस्य रभसोद्धावितेन सवेगप्रसरणेन धूतसमयं निरस्तमर्यादं यथा स्यात्तथा प्रधावितेनोदधिना सम्यगाक्रान्तः, सलिलभ्रियमाणदरीमुखो दरीणां प्रशाम्यत्प्रतिरवं यथा स्यात्तथा धरणीधरः सुवेलो रसति शब्दायते आर्तनादं करोतीत्यर्थः ॥३८॥

1 ०जुवइ-जणो GB. 2 ०वर० GB. 3 ०भरेन्त० GB.

णिज्जि[F8 1b]अ-सेस-कलअलो पढमप्फालिअ-रसन्त-धणु-
णिग्घोसो ।
सामरिस-[1]विम्हिआणण-दसवअणाअण्णिओ चिरेण पसन्तो ॥३९॥

[निर्जित-शेष-कलकलः प्रथमास्फालित-रसद्-धनुर्निर्घोषः ।
सामर्ष-विस्मितानन-दशवदनाकर्णितः चिरेणप्रशान्तः ॥ ]

[F 18b] निर्जितः शेषकलकलो येन, प्रथमास्फालितरसद्धनुर्निर्घोषः सामर्षविस्मिताननेन दशवदनेनाकर्णितश्चिरेण प्रशान्तः। अतिहन्यमानकांस्यध्वनिरिव चिरेण प्रशान्त इति **लोकनाथः**। अमर्षविजृम्भितानन इति **केचित्** ॥३९॥

ताव अ रक्खस-णाहो पाआरन्तरिअ-कडइअं कइ-सेण्णं ।
रण-महिअं अगणेन्तो णिअए णिद्दा-परिक्खअम्मि विउद्धो ॥४०॥

[तावत् च राक्षस-नाथः प्राकारान्तरित-कटकितं कपि-सैन्यम् ।
रण-महितं अगणयन् नियते निद्रा-परिक्षये विबुद्धः ॥ ]

तावच्च राक्षसनाथो रावणः प्राकारान्तरितकटकितं वलयाकारेण बहिः कृतप्राकारवेष्टनं रणे महितं पूजितं कपिसैन्यमगणयन्नवजानन् नियते निद्रापरिक्षये नियतनिद्राभङ्गकाले विबुद्धः, न तु संभ्रमादकालेऽपि निद्रां मुक्तवानिति भावः। अतएव निजके इति **कुलनाथः** ॥४०॥

वहइ विवलाअ-णिद्दं विइओवास-[2]परिवत्तणाबद्ध-सुहं ।
विसम-सुअ-मङ्गल-रवं ओहीरन्त[3]-पअलाइअं दसवअणो ॥४१॥

[वहति विपलायित-निद्रं द्वितीयावकाश-परिवर्तनाबद्ध-सुखम् ।
विषम-श्रुत-मङ्गल-रवं अवह्रियमाण-प्रचलायितं दशवदनः ॥ ]

1 ०विअम्भिआ० B ; ०विम्भआ० G. 2 ०परिअत्त० GB. 3 अहीयन्त० GB.

विपलायिता निद्रा यत्र, निद्रां सुप्तदशा यत्रेति **केचित्**। द्वितीयावकाशपरिवर्तनेन आबद्धं सुखं यत्र, विषममसम्यक् श्रुतो मङ्गलरवो यत्र, प्रभाततूर्यादिध्वनिर्यत्र इति **कुः** ( कुलनाथः ), तत्तथाभूतं, अवधीरयद्विषयान्तरावज्ञां विदधत् प्रचलायितं निद्राशेष-घूर्णितं दशवदनो वहति। 'विसम-सुअ-मङ्गल' इति विषममस्फुटमिति **श्रीनिवासः**। क्षणं श्रुतं क्षणमश्रुतमिति **केचित्**। 'ओहीरन्तं' कपिकलकलैः शनैः शनैराकृष्यमाण-मिति **केचित्**। अवहीयमाण इति **श्रीनिवासः**, तन्मते ओहीजन्तेति पाठः। "घूर्णितः प्रचलायित" **इत्यमरः** ॥४१॥

## तो महु-मअ-मुच्चन्तं[1] मसिणोहीरन्त-लोहिअच्छि-णिहाअं।
## धणु-सद्दामरिस-हअं णिद्दा-सेसं दसाणणस्स विअलिअं ॥४२॥

**[ततः मधु-मद-मुच्यमानं मसृणावह्रियमाण-लोहिताक्षि-निघातम्।**
**धनुः-शब्दामर्ष-हतं निद्रा-शेषं दशाननस्य विगलितम् ॥ ]**

ततः प्रचलायितानन्तरं मधुमदेन मुच्यमानं मसृणो मन्दः, अतएवावधीरयन् स्वव्यापारालस्यं दधत्, मन्दं यथा स्यात्तथावह्रियमाणो विषयेष्वाकृष्यमाणो वा लोहितो निद्राच्छेदकषायितोऽक्षिसमूहो यत्र, धनुःशब्दामर्षहतं न तु मशकानामिव कपीनां कोलाहलेनेति भावः। दशाननस्य निद्राशेषं विगलितं तादृशनिद्राभङ्गो जात इत्यर्थः! **कुलनाथस्तु** ततः प्रदोषपीतस्य मधुनो मदेन मुच्यमानं निद्रागौरवान्मसृणो मन्दः स्वव्यापार-मवधीरयंश्च निद्राच्छेदाल्लोहितोऽक्षिसमूहो यत्र इत्याह। मसृणमपह्रियमाणोऽवहीयमानो वेति **श्रीः** ( श्रीनिवासः ) ॥४२॥

## तुङ्ग-मणि-तोरणाइ[2]व एक्केक्कम[3]-लङ्घिअङ्गुलि-करालाइं।
## उद्धं भुअ-जुअलाइं मुअइ वलेऊण णिअअ-सअणुच्छङ्गे ॥४३॥

**[तुङ्ग-मणि-तोरणानि इव एकैकक्रम-लङ्घिताङ्गुलि-करालानि।**
**ऊर्ध्वं भुज-युगलानि मुञ्चति वलयित्वा निजक-शयनोत्सङ्गे ॥ ]**

---

1 °मुच्चन्ताम° GB. 2 °इं Ms. 3 एक्कक्क° GB.

एकस्य कराङ्गुलिसन्धिष्वपरस्य कराङ्गुलिन्यासेनान्योन्यलंघिताङ्गुलिभिः करालानि दन्तुराणि, भुजानामर्थाद्विंशतेर्युगलान्यर्थाद्दशानां मणिधारणात् तुङ्गमणितोरणानीव श्यामत्वान्नीलमणितोरणानीव ऊर्ध्वं वलयित्वा उत्क्षिप्य शयनोत्सङ्गे मुञ्चति निक्षिपति दशानन इति प्रस्तावात्। **कुलनाथस्तु,** अङ्गुलीनां सन्धिष्वङ्गुलीनां न्यासेन प्रत्येकलंघिताङ्गुलीनि च तानि करालानि चेति तथाभूतानि भुजयुगलानि कृष्णदेह [ त्वात् ] तुङ्गेन्द्रनीलमणितोरणानीव इत्याह ॥४३॥

## अह भअ-चलिएरावण-भज्जन्त-क्खम्भ-दिण्ण-सुर-संखोहं ।
## आहम्मिउं पअत्तं रण-सण्णाह-पिसुणं दसाणण-तूरं ॥४४॥

**[अथ भय-चलितैरावण-भज्यमान-स्तम्भ-दत्त-सुर-संक्षोभम्।**
**आहन्तुं प्रवृत्तं रण-सन्नाह-पिशुनं दशानन-तूर्यम्॥ ]**

अथ दशाननस्य निद्राभङ्गानन्तरं तूर्यरवश्रवणभयाच्चलितेन ऐरावणेन भज्यमानेन स्तम्भेन दत्तः सुरेभ्यः संक्षोभो यत्र तत्, रणसन्नाहपिशुनं समरोद्यमसूचकं दशाननतूर्यमाहन्तुं प्रवृत्तम् ॥४४॥

## रण-सण्णा-पडिउद्धा गहिअ-जहासण्ण-[F82a]पहारणा रअणिअरा ।
## वेवन्त[1]-कण्ठलग्गं थोवं[2] घेत्तूणणिग्गआ [3]जुअइ-अणं ॥४५॥

**[रण-संज्ञा-प्रतिबुद्धाः गृहीत-यथासन्न-प्रहरणाः रजनिचराः।**
**वेपमान-कण्ठ-लग्नं स्तोकं गृहीत्वा निर्गताः युवति-जनम्॥ ]**

रणसंज्ञाप्रतिबुद्धा गृहीतयथासन्नप्रहरणा रजनिचरा वेपमानं सन्तं कण्ठे लग्नं युवतिजनं गृहीत्वा स्तोकं निर्गताः ॥४५॥

1 मोलन्त॰ GB. 2 थोअं GB. 3 जुवइ-जणं GB

आउच्छमाण-गहिआ सुअम्मि अत्थेक्क-समर-सण्णा-पडहे[1] ।
जुअइ-मुहाहि पिआणं णिन्ति[2] अमुक्क-सिढिल-ट्ठिआ अह-
रोट्ठा ॥४६॥

[आपृच्छमान-गृहीताः श्रुते आकस्मिक-समर-संज्ञा-पटहे ।
युवति-मुखात् प्रियाणां निर्यान्ति अमुक्त-शिथिल-स्थिताः अधरौष्ठाः ॥]

युद्धगमनाय पृच्छन्त एव गृहीता अर्थाद् युवतीभिः प्रियाणामधरोष्ठा आकस्मिकसमर-संज्ञापटहे श्रुते सति युवतीमुखात् त्रासेनामुक्ता अपि शिथिलस्थिता निर्गच्छन्ति । प्रभाते स्वगृहगमनपृच्छ्यमानाः सन्तो गृहीता युवतिभिः प्रियाणामधरोष्ठा अचिन्तिताहते समर-संज्ञापटहे श्रुते सति त्रासावेगादमुक्ता अपि शिथिलाः सन्तो युवतिमुखान्निर्गच्छन्ति ॥४६॥

पिअअम-कण्ठोलइअं जुअईण सुअम्मि समर-सण्णाह-रवे ।
ईसि-णअं[3] णवर कअं[4] सुरअ-क्खेएणगलइ बाहा-
जुअलं ॥४७॥

[प्रियतम-कण्ठावलगितं युवतीनां श्रुते समर-सन्नाह-रवे ।
ईषन्-नतं केवलं कृतं सुरत-क्षेपेण गलति बाहा-युगलम् ।]

कृतपरिरम्भेऽपि प्रियतमकण्ठेऽवलगितं, निवृत्ते सुरते तत्खेदेन ईषन्नतमल्पस्खलितं कृतं परिरम्भानुरागस्य सत्त्वात् सुरतखेदादपि न कण्ठाद्भ्रष्टमित्यर्थः । ईदृशं युवतीनां बाहु-युगलं श्रुते समरसन्नाहरवे केवलं गलति भयादिति भावः । **कुलनाथस्तु** प्रियतमकण्ठे अवलगितमासक्तं बाहुयुगलं सुरतसुखेनेषन्नतं केवलं कृतं श्रुते समरसन्नाहरवे गलति भया-द्भ्रश्यतीत्यर्थः ॥४७॥

---

1 ०वडहे GB. 2 णेन्ति GB. 3 ईसि-णिहं GB. 'इ' looks like 'ड' in Ms. 4 भअं GB.

सुअ-सण्णा-रव-तुरिआ पडिवण्णाउह-विहत्थ-गहिअ[1]-कर-
अला ।
उव्वेल्लन्ति णिसिअरा वच्छ-वलन्त-त्थणं पिआवेढ-सुहं ॥४८॥

[श्रुत-संज्ञा-रव-त्वरिताः प्रतिपन्नायुध-विहस्त-गृहीत-कर-तलाः ।
उद्वेल्लयन्ति निशिचराः वक्षो-वलत्-स्तनं प्रियावेष्ट-सुखम् ॥ ]

श्रुतेन संज्ञारवेण त्वरिताः, प्रतिपन्नायुधेन प्रतिपन्नं गृहीतमिति **कुलः** (कुलनाथः), विहस्तानि व्याकुलानि करतलानि येषां ते निशिचराः, भटानां युद्धगमनाय परित्यक्तसुखत्वात् तद्वक्षसि वलन्तौ तिर्यग्भवन्तौ स्तनौ यत्र, ईदृशं प्रियाया आवेष्टमालिङ्गनमेव सुखहेतुत्वात् सुखमुद्वेल्लयन्ति । यद्वा, परित्यज्य गमनेन शिथिलयन्ति । **केचित्तु** प्रतिपन्नेनायुधेन विहस्ता व्याकुलाश्च ते उन्मोचनाय गृहीतप्रियाकरतलाश्चेति ते तथा, एवं वक्षसि वलन्तौ लुठन्तौ स्तनौ यत्र तत्तथा इत्याहुः । प्रतिपन्नेनायुधेन विहस्ता अन्याग्रहस्ताश्च गृहीतप्रिया-करतलाश्चेति **श्रीनिवासः** ॥४८॥

रुम्भन्तीण पिअअमे अक्कअ-उव्वे वि[2] पणअ-भङ्गम्मि कए ।
जुअईण चिर-परूढो भअ-हित्थम्मि-हिअए ण लग्गइ
माणो ॥४९॥

[रुन्धतीनां प्रियतमान् अकृत-पूर्वे अपि प्रणय-भङ्गे कृते ।
युवतीनां चिर-प्ररूढः भय-त्रस्ते हृदये न लगति मानः ॥ ]

प्रियतमान् रुन्धतीनां युवतीनां निरोधादपि युद्धगमनादकृतपूर्वेऽपि प्रणयभङ्गे कृते सति अर्थात् प्रियैश्चिरात् प्ररूढो मानो हृदये न लगति, हृदये कीदृशे भयत्रस्ते व्याकुले वा । "हित्थं व्याकुलभीतयोः" ॥४९॥

---

1 ०वलिअ० GB. 2 'वि' omitted in Ms.

जह जह पिआइ रुम्भइ[1] सम्भाविअ-सामिआवमाणब्भहिअं।
तह तह भडस्स वड्ढइ सम्मणिअ-मच्छरेण समरुच्छाहो ॥५०॥

[ यथा यथा प्रियया रुध्यते सम्भावित-स्वामिकापमानाभ्यधिकम्।
तथा तथा भटस्य वर्धते सम्मानित-मत्सरेण समरोत्साहः ॥ ]

त्वय्यपि महावीरे स्थिते युद्धभारं दत्त्वा अमुकः स्वामिना सम्मानितः, तत् सर्वथापमानकर्तुः स्वामिनो निमित्तं समरसंकटे न गन्तव्यमेवेति, यथा यथा संस्मारित[2]-स्वामिकापमानाभ्यधिकं यथा स्यादेवं प्रियाभी रुध्यते, तथा तथा संमानितं पुरस्कृतं प्रतिमत्सरेण द्वेषेण भटस्य समरोत्साहो वर्धते। **कुलनाथस्तु** यथा यथा प्रियाभिः संभावितेन स्वामिकापमानेनाभ्यधिकं यथा स्यात्तथा रुध्यते वार्यते तथा तथा भटस्य सम्मानितेन मत्सरेणामर्षेण समरोत्साहो वर्धत इत्याह। सम्भावितस्वामिकापमानाभ्यधिकं यथा स्यात्। अन्येन योधेन बहुधनं लभ्यते न त्वया इत्युक्त्वा यथा रुणद्धि **इत्यन्ये** ॥५०॥

दइआ-करेहि ध[F82b]रिआ खलिआ पणएण पेम्म-राएण हिआ।
माणेण ववट्ठविआ[3] रण-परिओसेण णिग्गआ रअणिअरा ॥५१॥

[ दयिता-करैः धृताः स्खलिताः प्रणयेन प्रेम-रागेण हृताः।
मानेन व्यवस्थापिताः रण-परितोषेण निर्गताः रजनिचराः ॥ ]

[ F82b ] दयिताकरैर्धृताः प्रणयेन स्खलिताः कृतव्याघाताः प्रियाणां प्रेम्णा यो रागस्तेन हृता आकृष्टाः, मानेन कुलाद्यहङ्कारेण व्यवस्थापिताः स्थिरीकृतयुद्धनिश्चया रणपरितोषेण निर्गता रजनिचराः। प्रेम्णा, अर्थाद्रावणस्य, स्खलिताः प्रेमरागेण स्नेहातिशयेन, अर्थात् प्रियया, हृता वैमुख्यं नीता मानेन अर्थात् स्वामिकृतेन व्यवस्थापिता युद्धेष्वभिमुखीकृताः, एवंरूपेण दोलायमाना रजनिचरा रणपरितोषेण निर्गताः ॥५१॥

---

1 रुब्भइ GB. 2 In this case the reading may be सम्भारिअ°.
3 वट्ठविआ Ms, one व being omitted evidently.

सुर-समरुच्च-च्छन्दा कइ-समसीस-लहुआइअम्मि रण-भरे।
लज्जन्ति अ संणहिउं ण अ विसहन्ति पसरं परस्स णिसि-
अरा ॥५२॥

[ सुर-समरोच्च-च्छन्दा कपि-समशीर्ष-लघुकायिते रण-भरे।
लज्जन्ते च सन्नद्धुं न च विषहन्ते प्रसरं परस्य निशिचराः ॥ ]

सुरसमरे उच्चच्छन्दा महाभिलाषिणः समर्था महत्तराभिलाषा इति कुः ( कुलनाथः ), कपिसमानस्पर्धया लघुके आगते रणभरे लज्जन्ते च सन्नाहं कर्तुं, न च विषहन्ते प्रसरं परस्य निशाचराः, परावकाशनिरासार्थं सन्नह्यन्ते न तु शत्रुगौरवादिति भावः। सादृश्ये 'समसीस'-शब्दो देशीयः। "छन्दः पद्येऽभिलाषे च" इत्यमरः। लोकनाथस्तु न च परस्य प्रसरं पराभवं विषहन्ते, तथा च लज्जातोऽपि विपक्षपराभवशङ्काया बलीयस्त्वात् सन्नाहमेव धृतवन्त इति भाव इत्याह। अन्ये तु देवेन सह समरे उच्चाभिलाषत्वात् कपिभिः समरे समशीर्षेण तुल्यतया लघुनि आगते लघूकृते वा इति वदन्ति ॥५२॥

वण-विवरेसु करालं वण-वेढेसु [1]मुहल-क्खलन्तद्धन्तं।
होइ उर-त्थल-विसमं पुट्ठि-णिराअ-ट्ठिअं महोअर-कवअं ॥५३॥

[व्रण-विवरेषु करालं व्रण-वेष्टेषु मुखर-स्खलदर्धान्तम्।
भवति उरः-स्थल-विषमं पृष्ठ-निरायत-स्थितं महोदर-कवचम् ॥ ]

महोदरस्य कवचमीदृशं भवति, व्रणविवरेषु करालं दन्तुरं तुङ्गं वा, परितः शरीरसम्पर्कलाभेनाप्रसरणात् संकुचितमित्यर्थः। करालं भीषणं वा। व्रणानां वेष्टेषु व्रणग्रन्थिमण्डलेषु संघट्टनात् मुखरस्खलदर्धान्तं मुखरस्खलदेकदेशमिति कुलनाथः। अतएव संमुखप्रहारयोगादुरःस्थले विषममीषन्नतोन्नतमिति लोकनाथः। पृष्ठे प्रहाराभावान्निरायतस्थितम् ॥५३॥

---

1 मुहलं ख० GB.

सुर-समर-दिट्ठ-सारो रक्खस-णाहस्स जङ्गमो पाआरो ।
सर-मोक्खेसु सुहत्थो[1]सण्णज्झइ हरिसिओ कमेण पहत्थो ॥५४॥

[सुर-समर-दृष्ट-सारः राक्षस-नाथस्य जङ्गमः प्राकारः ।
शर-मोक्षेषु-सुहस्तः सन्नह्यति हर्षितः क्रमेण प्रहस्तः ॥ ]

सुराणां समरे दृष्टः सारो बलं यस्य, राक्षसनाथस्य जङ्गमः प्राकारः परितो रक्षाहेतुत्वात् प्राकारत्वेन साम्यं, शरमोक्षेषु सुहस्तः । 'पहत्थ' इति पाठे तु शरमोक्षेषु प्रहृष्टो हस्तो यस्य इत्यर्थः । समरोत्साहेन हर्षितः प्रहस्तनामा राक्षसः क्रमेण कपिभिः सह युद्धेऽपि यत् कवचधारणं तदनुचितमिति चिरं विलम्बय इत्यर्थः सन्नह्यति ॥५४॥

तिसिरस्स समुक्खित्तो[2] बहु-कण्ठन्तर-करालिओ सण्णाहो ।
सिढिलच्चिअ ओसरिओ एक्कमुहुक्खित्त-हत्थ-तणुअम्मि उरे ॥५५॥

[त्रिशिरसः समुत्क्षिप्तः बहु-कण्ठान्तर-करालितः सन्नाहः ।
शिथिलं एव अपसृतः एक-मुखोत्क्षिप्त-हस्त-तनुके उरसि ॥ ]

त्रिशिरसो रावणपुत्रस्य समुत्क्षिप्तः करयोरुत्क्षेपणादूर्ध्वीकृतः, बहूनां कण्ठानामन्तरेषु करालितः कण्ठानुरूपनिर्माणेन दन्तुरित इत्यर्थः । बहूनां कण्ठानामन्तरालेषु करालितो विरलासक्त इति **कुलनाथः** । एकमुखमेकदा उत्क्षिप्ताभ्यां हस्ताभ्यां तनुके उरसि शिथिलमेव सन्नाहोऽपसृतोऽधोऽवलम्बितः करोत्क्षेपणादुरसस्तनुत्वं साहजिकमेव । एकमुखोत्क्षिप्तैर्हस्तैस्तनुके उरसि शिथिलमेवापसृतोऽवतीर्ण इति **केचित्** ॥५५॥

दिण्ण-महि-अम्प-गरुअं सञ्चालेन्ते[3] महोअरे[4] अप्पाणं ।
वच्छ-त्थल-पुञ्जइओ ओसरइ भरेण अप्पणो[5] [F83a]सण्णाहो ॥५६॥

[दत्त-मही-कम्प-गुरुकं सञ्चालयति महोदरे आत्मानम् ।
वक्षः-स्थल-पुञ्जितः अपसरति भरेण आत्मनः सन्नाहः ॥]

1 पहत्थो noticed marginally in Ms. 2 सम० Ms. 3 ०लन्ते Ms.
4 The old commentator reads अकम्पने seemingly as a proper name for a Rākṣasa, for महोदरे (Vide G p. 103 note 57a). 5 ०णा Ms.

महोदरे विपुलोदरे राक्षसे, उपरि कवचं निधाय दत्तेन महीकम्पेन गुरुकं यथा स्यात्तथा, यद्वा, परनिपाताद् दत्तगुरुमहीकम्पमात्मानं शरीरं सञ्चालयति सति धुन्वति सति, वक्षःस्थले पुञ्जितः सन्नाहो भरेणापसरति। महोदरे बृहत्कुक्षावात्मनो भरेणापसरत्यवतरतीत्यर्थ इति **कुः** (कुलनाथः) ॥५६॥

**णीसरिएरावण-दन्त-मुसल-दीसन्त-मसिण-णिहस-च्छाअं ।**
**कवअं मज्झ-करालं उत्तम्भिज्जइ[1] उर-त्थले इन्दइणो ॥५७॥**

**[निःसृतैरावण-दन्त-मुसल-दृश्यमान-मसृण-निकष-च्छायम् ।**
**कवचं मध्य-करालं उत्तभ्यते उरः-स्थले इन्द्रजितः ॥ ]**

[F 83a] निःसृतस्य सुखप्रवेशाप्राप्तया स्खलितस्य ऐरावतदन्तमुसलस्य, अर्थादिन्द्रजिद्वक्षसि निहितस्य दृश्यमानस्य मसृणस्य, अतएव निकषस्येव छाया यस्य तत्तथा मध्यकरालमुदरस्य कृशत्वान्मध्यावच्छेदे संकुचितं, मध्ये करालं सावकाशमिति **कुः** (कुलनाथः)। दन्ताघातात् संकुचितमिति **श्रीनिवासः**। ईदृशं कवचमिन्द्रजित उरःस्थल उत्तभ्यते प्रसार्यत उरःस्थलस्य विशालत्वात् कवचस्य ऐरावतदन्ताघातसंकुचितत्वादुल्लासः, इत्यर्थः ॥५७॥

**अइकाअस्स वि कवअं[2] चिरेण उर-सण्ठिअं[3] पलम्बोसारं[4] ।**
**देह-प्पहाणुविद्धं[5] जाअं वोच्छिण्ण-कसण-मिहिअं व णहं ॥५८॥**

**[अतिकायस्य अपि कवचं चिरेण उरः-संस्थितं प्रलम्बापसारम् ।**
**देह-प्रभानुविद्धं जातं व्यवच्छिन्न-कृष्ण-मेघिकं इव नभः ॥ ]**

उरसोऽभ्युन्नतत्वात् परिधानसमये तत्र संस्थितं चिरेण प्रलम्बापसारं चिरेण सम्मितमित्यर्थः। ईदृशमतिकायस्यापि कवचं देहप्रभानुविद्धं चेदतो व्यवच्छिन्ना प्रसरणशीला कृष्णमेघिका यत्रेदृशं नभ इव जातं, देहप्रभायाः श्यामत्वान्नीलमेघेन च महत्वान्नभसा सहोपमा। **केचित्तु**, अतिकायस्यापि कवचं प्रलम्बापसरं बृहत्परिणाहमपि बहुभिः कालैः

---

1 उरथ० Ms. 2 ०ए GB. 3 ऊरूसु ठिअ० GB.
4 ०रे GB. 5 ०विमुक्कं GB.

समरस्य प्रत्यासन्नत्वाच्चिरेणोरसि संस्थितं परिहितमित्यर्थः, देहप्रभानुविद्धत्वाद् व्यवच्छिन्न-कृष्णमेघिकं नभ इव जातं, देहप्रभेव श्यामत्वात् कृष्णकुहेलिकेव तद्व्यवधायकं च कवचं श्यामत्वान्महत्त्वाच्च नभ इवेत्याहुः। महिका मिहिकापि चेति द्विरूपकम् ॥५८॥

समर-तुरिओ विसूरइ उर-त्थलुव्वत्त-दाविअंसोवासं।
आबन्धिऊण[1] कवअं वज्ज-मुह-च्छिण्ण-बन्धणं धुम्मक्खो ॥५९॥

[समर-त्वरितः खिद्यते उरः-स्थलोद्वृत्त-दर्शितांसावकाशम्।
आबद्ध्य कवचं वज्र-मुख-च्छिन्न-बन्धनं धूम्राक्षः ॥]

पुरा इन्द्रेण सह युद्धे वज्रमुखेन छिन्नबन्धनमतएव उरःस्थले उद्वृत्तत्वाद्दर्शितोऽंस-पर्यन्तमवकाशो येन तत् कवचं, समरत्वरितः सन्नाबध्य निवेश्य धम्राक्षः खिद्यते बन्धशून्यस्य कवचस्याकिञ्चित्करत्वात् पुनर्बन्धसज्जीकरणे च विलम्बादिति भावः। **कुलनाथस्तु** प्रहाराय बाहूत्क्षेपसौकर्यार्थमुरःस्थलपर्यन्तमुद्वृत्तमुत्क्षिप्तमञ्चलद्वयेण धारणात्, अतएव दर्शितांसावकाशात् अनावृतांसमित्याह। ([2]अत्र इन्द्रप्रेरितेण वज्रेण कवचस्य राक्षसस्य चिरप्ररूढे व्रणसंघाते[2]) ॥५९॥

रोसेण चिर-परूढे फुडिए[3] असणिप्पहस्स वण-संहाए[4]।
कवअ-विवरेहि गलिअं सुइरं उप्पाअ-जलहरस्स व रुहिरं ॥६०॥

[रोषेण चिर-प्ररूढे स्फुटिते अशनिप्रभस्य व्रण-संघाते।
कवच-विवरैः गलितं सुचिरं उत्पात-जलधरस्य इव रुधिरम् ॥]

अशनिप्रभनाम्नो राक्षसस्य चिरप्ररूढे व्रणसंघाते रोषेण स्फुटिते सति, कवचविवरैः सुचिरं रुधिरं गलितम्, उत्पातजलधरस्येव रुधिरक्षरणात् कृष्णदेहत्वाच्चोत्पातमेघस्य साम्यं, उत्पात-जलधरत्वेनोपादानादमङ्गलं सूचितमिति **श्रीनिवासः** ॥६०॥

---

1 अवलम्बिऊण Ms. 2 Ms. has this portion within brackets, but this ought to go with the commentary on the next verse (v. 60). 3 फुरिए Ms. 4 ०घा० GB.

**उक्खिपन्त-णिराआ अमरिस-वेअ-वलिए णिउम्भस्स उरे ।**
**फुड-दाविअ-सीमन्ता विहडिअ[1]-लोह-वलआ विसट्टइ**
**माढी ॥६१॥**

**[उत्क्षिप्यमाण-निरायता अमर्ष-वेग-वलिते निकुम्भस्य उरसि ।**
**स्फुट-दर्शित-सीमन्ता विघटित-लौह-वलया विशीर्यते माढी (माढिः) ॥ ]**

अमर्षस्य वेगेन धारावाहिकतया वलिते पुष्टिं गते निकुम्भस्य उरसि, आक्षिप्यमाण-निरायता उरसः पुष्ट्या यथा यथा आकृष्यमाणा तथा तथा निरायता इत्यर्थः । माढी कवचबन्धनखिल्लिका । माढी सन्नहिका इति **देशीसारः** । सन्नहिका अल्पसन्नाह इति **केचित्** । विघटितलौहवलया चेदतः स्फुटदर्शितसीमन्ता सती विशीर्यते । "माढी कवचखिल्लिका" इति सुरङ्गासूचिमाढय इत्यत्र लिङ्गादिसंग्रहे **अमरटीका**कृता व्याख्यातम् । **कुलनाथस्तु** यत्र निविडस्यूते कवचाञ्चलपर्यन्ते सन्धिबन्धदार्ढ्यार्थं लोहादिघटितकटिका आबध्यते सा माढी, निकुम्भनाम्नो राक्षसस्यामर्षवेगेण वलिते तिर्यगाक्षिप्ते सत्युरसि आक्षिप्यमाणत्वान्निरायता प्रवितता विघटिता लौहवलया यत्र छेदाद्विशिष्टकटिका 'विसट्टइ' विकसत्युल्लसति विकासादेव स्फुटदर्शितसीमन्ता व्यक्तीकृतसीमान्ताकारपार्श्वसन्धिरित्यर्थ इत्याह ॥६१॥

**सुर-पहरण-घाअ-सहं सुओ वि सुपरिच्छअं णिबन्धइ कवअं ।**
**समुपट्ठिअं[2] ण[F83b]आणइ पुरओ दुव्वार-राम-सर-**
**दुज्जाअं[3] ॥६२॥**

**[सुर-प्रहरण-घात-सहं शुकः अपि सुपरिच्छदं निबध्नाति कवचम् ।**
**समुपस्थितं न जानाति पुरतः दुर्वार-राम-शर-दुर्जातम् ॥ ]**

सुरप्रहरणघातसहं सुपरिच्छदं रत्नादिविचित्रं वा कवचं शुकनामापि रावणमन्त्री निबध्नाति । सुराणामपि प्रहारे परित्राणक्षममिदानीं नरवानराणां युद्धे सुतरामेवास्मात्

---

1 विअलिअ॰ GB. 2 समुह॰ GB. 3 सम्पाअं Ms, which has, however, noticed marginally the reading ॰दुज्जाअं.

परित्राणं भविष्यतीति परिहितवानित्यर्थः। पुरतः समुपस्थितं दुर्वाराणां रामशराणां सम्यग्घातं न जानाति। **कुलनाथस्तु** पुरतः समुपस्थितं दुर्वारैरामशरैर्दुर्जोतमनर्थोपनिपातं न जानातीत्याह। 'सम्पाअ'मिति पाठे सम्पातमर्थः ॥६२॥

**तुरिआउच्छिअ-कामिणि-वलन्त-[1]गाढोवगूहणाहिण्णाणं।**
**थण-परिमलं दअन्तो णीइ च्चिअ सारणो ण बन्धइ कवअं॥६३॥**

**[त्वरितापृच्छमान-कामिनी-वलद्-गाढोपगूहनाभिज्ञानम्।**
**स्तन-परिमलं दयमानः निरैति एव सारणः न बध्नाति कवचम्॥]**

परनिपाताद् युद्धगमनायापृष्टायास्त्वरितं वलन्त्या अभिमुखीभवन्त्या कामिन्या 'धणिअस्स' गाढस्यावगूहनस्याभिज्ञानं स्तनपरिमलं स्तनसम्पर्कलग्नमङ्गरागं दयमानो रक्षन् सारणो रावणमन्त्री निर्यात्येव कवचं न बध्नाति, स्तनाङ्गरागस्य प्रोञ्छनशङ्कयेति भावः ॥६३॥

**जुत्ता कुम्भस्स रहे माआ-बद्ध-मुहलन्धआर-धअ-वडे।**
**सुर-रुहिर-दट्ठ-केसर-गुप्पन्त-भुअङ्ग-पग्गहा केसरिणो॥६४॥**

**[युक्ताः कुम्भस्य रथे माया-बद्ध-मुखरान्धकार-ध्वज-पटे।**
**सुर-रुधिर-दष्ट-केसर-गुप्यमान-भुजङ्ग-प्रग्रहाः केसरिणः॥]**

मायाबद्धो मुखरः सशब्दोऽन्धकार एव ध्वजपटो यत्र तस्मिन् कुम्भस्य रथे सुराणां रुधिरेण दष्टैर्लिप्तसंसक्तैः केसरैर्गुप्यमाना भुजङ्गा एव प्रग्रहा येषां ते केसरिणो धुर्वहाः कृताः। मायाप्रभावादेवान्धकारस्य मुखरत्वं पटत्वञ्चेति **केचित्** ॥६४॥

**णिम्माएइ[2] अमरिसं पडिहत्थेइ गरुअम्पि सामिअ-सुकअं।**
**विहुणइ पराहिमाणं णिमिओ मुट्ठिम्मि मण्डलग्गस्स करो॥६५॥**

**[निर्मापयति अमर्षं प्रतिहस्तयति गुरुकं अपि स्वामिक-सुकृतम्।**
**विधुनोति पराभिमानं निहितः मुष्टौ मण्डलाग्रस्य करः॥]**

---

1 ०धणिओवगूह० GB; this reading being noticed marginally in Ms. 2 ०जणो GB.

मण्डलाग्रस्य खड्गस्य मुष्टौ 'णिमिओ' निहितः करोऽमर्षं क्रोधं निर्मापयत्युत्पादयति, गुरुकमपि स्वामिनः सुकृतिमुपकारं प्रतिहस्तयति स्वामिहस्तं गमयति, गुरुकमपि दुःसाधमपि स्वामिनः सुकृतं कार्यं स्वामिहस्तं प्रापयति, पराभिमानं परेषां शत्रूणामभिमानं धुनोति निरस्यति। प्रतिहस्तयत्यवलम्बनं ददातीति **केचित्** ॥६५॥

**सण्णज्झन्ति समत्था ण सहिज्जइ कलअलो[1] विसूरइ हिअअं।**
**विरएइ सुर-बहु-अणो[1] विमाण-तोरण-गआगओ णेवच्छं ॥६६॥**

**[सन्नह्यन्ति समर्थाः न सह्यते कलकलः खिद्यते हृदयम्।**
**विरचयति सुर-वधू-जनः विमान-तोरण-गतागतः नेपथ्यम्॥]**

समर्थाः सन्नाहवहनक्षमाः सन्नह्यन्ति। न सह्यते कलकलः शत्रूणामित्यर्थात्। खिद्यते हृदयं प्रतिपक्षसिंहनादश्रवणेनापि कालक्षेपादिति भावः। विमानस्य तोरणे बहिर्द्वारे गतागतः सुरवधूजनो नेपथ्यं विरचयति युद्धनिपतितभटवरणाय विमानद्वारमागत्य पुनर्नेपथ्याय तन्मध्यं प्रविशतीत्यर्थः। औत्सुक्यादसमाप्तनेपथ्यो विमानद्वारं गच्छति पुनर्नेपथ्यविधानायागच्छतीति भाव इति **कुलनाथः** ॥६६॥

**इअ जा समर-सअह्णो सण्णज्झइ[2] हरिसिओ णिसाअर-लोओ।**
**ता रहुवइ-दीसन्तं अल्लीणं च्चिअ समन्तओ कइ-सेण्णं ॥६७॥**

**[इति यावत् समर-सतृष्णः सन्नह्यति हर्षितः निशाचर-लोकः।**
**तावत् रघुपति-दृश्यमानं आलीनं एव समन्ततः कपि-सैन्यम्॥]**

इत्यनेन प्रकारेण समरसतृष्णः सन्नह्यति हृष्टो यावन्निशाचरलोकस्तावद्रघुपतिना दृश्यमानं कपिसैन्यं समन्तत एवालीनं युद्धार्थं रामेण दृक्संज्ञा कृतेति प्रतीत्य तन्निकटे समुपागतमित्यर्थः। रघुपतिना दृश्यमानं रघुपतेरग्रत इति **कुलनाथः** ॥६७॥

---

1 कर० Ms. 2 सण्ह० Ms.

[F84a]भग्गाराम-विओलं दलिउज्जाण-भवणोवणिग्गम[1]-लहुअं[2]।
ओवग्गन्ति पवङ्गा सोहा-विणिअंसणं णिसाअर-णअरिं ॥६८॥

[भग्नाराम-विलोलां दलितोद्यान-भवनोपनिर्गम-लघुकाम्।
आक्रमन्ति प्लवङ्गाः शोभा-विनिदर्शनं निशाचर-नगरीम्॥]

[F84a] भग्नेनारामेण विहारार्थं कृत्रिमवनेन विकलां भग्नेनारामेण विलोलामङ्गवस्त्र-शून्यामिति **श्रीनिवासः**। दलितैरुद्यानैराक्रीडवनैर्भवनैर्गृहैरुपनिर्गमैः पक्षद्वारैर्लघ्वीं, उपपादपलाघवां प्रधानमार्गैर्लघुकमिति **कुः** (कुलनाथः), परिकलितसारां वा, ईदृशीं निशाचरनगरीं शोभाविनिवसनं वसनभूतया शोभया परित्यक्तं यथा स्यात्तथा प्लवङ्गमा आक्रामन्ति शोभया विनिवसनमिति धनेन निर्धनमितिवदुपपद्यते। यद्वा, परनिपाताद् विगलितनिःशेषदर्शना शोभा यत्र, एवं यथा स्यादित्यर्थः। उद्यानारामयोर्भेदोऽ**मरकोषे** "पुमानाक्रीड उद्यानं राज्ञः साधारणं वनम्", "आरामः स्यादुपवनं कृत्रिमं वनमेव यत्"। शोभैव विशिष्टं निवसनं यस्याः सहजशोभैव स्थितेति भावः। शोभया विशेषतो निदर्शनं दृष्टान्तमिति **केचित्** ॥६८॥

अङ्कागअ[3]-रअणिअरं धीराअन्त-पवआहिव-धरिज्जन्तं।
रसइ विसमागअ-पअं रोसुद्धाइअ[4]-परिट्ठिअं[5] पअव-
बलं ॥६९॥

[अङ्कागत-रजनीचरं धीरायमाण-प्लवगाधिप-धार्यमाणम्।
रसति विषमागत-पदं रोषोद्धावित-परिस्थितं प्लवग-बलम्॥]

अङ्कागतं मध्यप्रविष्टं रजनीचरबलं यस्य, एवं धीरायमाणेन धैर्यं कारयता प्लवगाधिपेन धार्यमाणमतएव रोषेणोद्धावितं सत् परिस्थितं रोषेण सुग्रीवनिराकरणेन च विषमागत-पदं प्लवगबलं रसति रोषाद्गर्जति। अतिसन्निहितत्वादङ्कगता रजनिचरा यस्य, तद्दर्शनाद्

1 ०निग्गअ० Ms. 2 लहुइं GB. 3 ०अअ० GB.
4 रोसो० Ms. 5 ०पट्ठाविअं Ms.

उद्धारितेन उद्भ्रमेन प्रधावितं परस्परोल्लङ्घनरभसाद् विषमागतपदं विषमपादसञ्चारमिति कुः (कुलनाथः) ॥६६॥

रहसल्लिअन्त-गव्विअ-कइ-सेण्ण-च्छण्ण[1]-णहअलल्लीण-सुरं।
वन्दित्तण-दट्ठव्वं पेच्छइ सुर-वहु-जणो णिसाअर-णअरिं॥७०॥

[रभसालीयमान-गर्वित-कपिसैन्य-च्छन्न-नभस्तलालीन-सुराम्।
वन्दीत्व-द्रष्टव्यां प्रेक्षते सुर-वधू-जनः निशाचर-नगरीम्॥]

रभसेन समरोत्साहेनालीयमानैर्गर्वितैः कपिसैन्यैश्छन्ने नभस्तले आलीनाः समरदर्शन-कौतुकादागता रावणत्रासेन कपिसैन्येनान्तर्हिताः सुरा यस्याम्। वन्दीत्वेन वन्दीभावेन द्रष्टव्यां दर्शनार्थं निशाचरनगरीं सुरवधूजनः प्रेक्षते, वन्दीभूत एव यामपश्यं तामिदानीं स्वामिसहितः पश्यामीत्यर्थः, अतएव प्रकृष्टमीक्षते स्वच्छन्दं पश्यतीति प्रशब्द-द्योतितार्थः ॥७०॥

रण-रहस-[2]पत्थिआण अ उरु-वेअ-विसट्ट-सेल-सिहरुक्खु-
डिआ[3]।
पवआण पढम-भग्गा पडन्ति समइच्छिआण मग्गेसु[4] दुमा ॥७१॥

[रण-रभस-प्रस्थितानां च उरु-वेग-विशीर्ण-शैलशिखरोत्खण्डिताः।
प्लवगानां प्रथम-भग्नाः पतन्ति समतिक्रान्तानां मार्गेषु द्रुमाः॥]

रणरभसप्रस्थितानाञ्च प्लवगानामुरुणा वेगेन विशीर्णाच्छैलशिखरादुत्खण्डिता द्रुमा प्रथमभग्नास्तेष्वतिक्रान्तेषु पतन्तीति कपीनां वेगातिशयो दर्शितः। प्रथमं पर्वतोत्पाट-नावसरे भग्ना इदानीं उरुणा वेगेन विशीर्णाच्छैलशिखरात् स्खलिता द्रुमा रणरभस-

---

1 Ms has ०न्द० before ०ण्ण०, probably a correction from ०न्द० to ०ण्ण०; ०न्द० GB. 2 ०णं (without अ following it) GB. 3 ०सिहरक्खलिआ GB. 4 मग्गेण GB; मग्गे अ Ms.

प्रस्थितानां प्लवगानां समतिक्रान्तानां मार्गेषु पतन्ति। वेगवशादतिक्रान्तेषु कपिषूपपतन्तीत्यर्थः। यद्वा, प्रथमभग्नाः प्रतिपक्षाक्रमणात् पूर्वं भग्नाः, तदाक्रमणस्य पश्चात् पतिता इत्यर्थ इति **लो** (लोकनाथः) ॥७१॥

**णह-अल-समुससिएहिं[1] पाआरन्तरिअ-धअ-वडेहि पवङ्गा।**
**सूअन्ति[2]गुडिअ-वारण-रइअ-घडा-वन्ध-संट्ठिए रअणिअरे॥७२॥**

**[नभस्तल-समुच्छ्रितैः प्राकारान्तरित-ध्वज-पटैः प्लवङ्गाः।**
**सूचयन्ति गुटित-वारण-रचित-घटा-बन्ध-संस्थितान् रजनीचरान्॥]**

गुटितैर्धृतसन्नाहैर्वारणैः रचितघटाबन्धे संस्थितान् रजनीचरान्। नभस्तलसमुच्छ्रितैः प्राकारान्तरितानां ध्वजानां केतुदण्डानां पटैः प्लवङ्गा अर्थात् प्राकारबहिःस्थिता अपि सूचयन्त्यनुमिन्वन्ति, योद्धुमिच्छन्तीति **कुलनाथः**। अत्र 'पाआरन्तरिए' इति पाठं कृत्वा रजनीचराणां विशेषणत्वेनोपपद्यते। इहिआरा बिन्दुजुआ णिबन्धमिलिआ वि लहू इति **पिङ्गल**भाषया इकार-हिकारयोर्बिन्दुयुक्तयोरिव एकारस्योकारस्य च शुद्धयोर्वर्णमिति लघुत्वाच्छन्दोभङ्ग इति **साहसाङ्को** व्याचष्टे। संपूर्वनहधातोर्गुडादेशात सिद्धिः ॥७२॥

**भमइ [3]पवणाणुसारी पवअ-बलस्स ख[F84b]लिउट्ठिअ-पउच्छिलिओ।**
**दुम-भङ्ग-सद्द-विसमो असणि-ग्घोस-गरुओ[4] समल्लिअण[5]-रवो॥७३॥**

**[भ्रमति पवनानुसारी प्लवग-बलस्य स्खलितोत्थित-पदोच्छलितः।**
**द्रुम-भङ्ग-शब्द-विषमः अशनि-घोष-गुरुकः समालयन-रवः॥]**

---

1 °समुट्ठिएहिं GB. 2 सूए° GB. 3 पवआणु° Ms (evidently a mistake). 4 महि-णीहरिअ-गरुओ GB. 5 समुल्लवणरओ GB.

[ F84b ] दर्पबलेन मट्मटितिशब्दायमानास्थितया स्खलितोत्थितेभ्यः पदेभ्य उच्छलितः। अतएव द्रुमभङ्गजन्यशब्दवत् कलुषः दुःसहः। विश्वबधिरीकरणादशनिघोषवद्गुरुकः प्लवगबलस्य समालयनरवः समालयनस्य सम्यगर्पणस्य रवो निर्घोष इति **कुलनाथः**। प्रतिपक्षोपसर्पणाय सिंहनादः पवनानुसारी भ्रमति विश्वमाक्रामति। उत्कालोत्पन्नतया भ्रमणपथादपरिचयात्तत्परिचायकस्येव पवनस्य पन्थानमनुसृत्य रवो भ्रमतीति पवनानुसारीति पदव्यङ्गम् ॥७३॥

णिद्दलिअ-मणि-अडाणं देन्ति जहा-लद्ध[1]-विवर-पल्हत्थाणं[2]।
विहडिअ-सुवेल[3]-लम्बिअ-दिसा-[4]वहन्तोज्झरत्तणं फलि-
हाणं[5] ॥७४॥

[निर्दलित-मणि-तटानां ददति यथा-लब्ध-विवर-पर्यस्तानाम्।
विघटित-सुवेल-लम्बित-दिग्-वहन्-निर्झरत्वं परिखानाम्॥ ]

निर्दलितं मणितटं यासामर्थात् कपिभिः। तटभङ्गादेव यथालब्धैर्विवरैर्भग्नतटवर्त्मभिः पर्यस्तानां निर्गतानां परिखानां बहिःखातसलिलानां पूर्वं प्लवगाक्रमणेन विघटितात् सुवेलात् लम्बिताः सन्तो दिक्षु पतन्तो ये निर्झरास्तद्वत् सादृश्यं ददति, अर्थात् कपयः ॥७४॥

जे चिर-आल-परूढा समरोअत्तिअ[6]-महिन्द-पअ-णिक्खेवा।
ते णवरि[7] गोउरन्तर-विहडण-चडुलेहि वाणरेहि विह-
डिआ ॥७५॥

[ये चिर-काल-प्ररूढाः समरापवर्तित-महेन्द्र-पद-निक्षेपाः।
ते केवलं गोपुरान्तर-विघटन-चटुलैः वानरैः विघटिताः॥ ]

---

1 जहासरण० GB. 2 पल्ल० Ms. 3 ०सुवे-लम्बिअ० ( i.e. without a ल after सुवे ) Ms. 4 ०वलन्तो० GB. 5 फडि० GB. 6 ०समराइञ्छिअ० GB. 7 णवर GB.

ये चिरकालप्ररूढाः प्रख्याताः समरादपवृत्तस्य गृहीतानीतस्यापवर्तितस्येति **केचित्**। महेन्द्रस्य पदनिक्षेपाः पादन्यासचिह्नानि ते केवलं गोपुरान्तरविघटनचटुलैर्वानरैर्विघटिता महेन्द्रपदनिक्षेपा विलुप्ता इति **केचित्**। द्वारलिखिताः पराजितशत्रुव्यवसाया इति **केचित्**। णवरि अनन्तरमिति **कुलनाथः** ॥७५[1]॥

**जाआ णिसाअर-उरी[2] पाआरब्भन्तरावसेस-धअ-वडा।**
**खण-वाणर-संवेल्लिअ-फलिहा-विज्झविअ-रक्खसिन्द[3]-**
**पआवा ॥७६॥**

**[जाता निशाचर-पुरी प्राकाराभ्यन्तरावशेष-ध्वज-पटा।**
**क्षण-वानर-संवेल्लित-परिखा-विध्मापित-राक्षसेन्द्र-प्रतापा ॥ ]**

गोपुरादिध्वजपटध्वंसात् प्राकाराभ्यन्तरावशेषा ध्वजपटा यत्र सा। निशाचरपुरी लङ्का। क्षणेन वानरैः संवेल्लितया विधुतया परिखया निर्वापितराक्षसेन्द्रप्रतापा जाता ॥७६॥

**विअड-गिरि-ऊड-सण्णिह-णिरन्तर-[4]णिसण्ण-वाणर-परि-**
**क्खित्ता।**
**दीसइ[5] पाआरोहअ-मज्झ-व्वूढ-फलिह[6] व्व रक्खस-णअरी ॥७७॥**

**[विकट-गिरि-कूट-सन्निभ-निरन्तर-निषण्ण-वानर-परिक्षिप्ता।**
**दृश्यते प्राकारोभय-मध्य-व्यूढ-परिखा इव राक्षस-नगरी ॥ ]**

विकटगिरिकूटसन्निभैर्निरन्तरनिषण्णैर्निविष्टैर्वानरैः परिक्षिप्ता वेष्टिता। उभयप्राकारमध्यक्षिप्त[7]परिखेव राक्षसनगरी दृश्यते। परिखातटस्थितस्य कपिसैन्यस्यापि प्राकार-

---

1 Ms puts the number erroneously as 74, and it continues to commit the mistake in numbering the following verses. 2 ०पुरी GB. 3 ०सेन्द० GB. 4 ०रासरण० GB. 5 जाआ (for दीसइ) GB. 6 ०फडि० GB, 7 For ०व्वूढ० C reads ०क्खित्त०

सदृशत्वात् प्राकारोभयस्य उभयप्राकारस्य मध्ये व्यूढा परिखा यस्या एवंभूता दृश्यत इति **लोकनाथः** ॥७७॥

## तो तं वलन्त-विअडं वाणर-सेण्णं [1]विविक्क-दाढाभोगं ।
## [F85a] जाअं णिवह-णिरन्तर-लङ्का-पाआर-घडिअ-मण्डलि-बन्धं ॥७८॥

**[ततः तत् वलद्-विकटं वानर-सैन्यं विविक्त-दंष्ट्राभोगम् ।**
**जातं निवह-निरन्तर-लङ्का-प्राकार-घटित-मण्डली-बन्धम् ॥ ]**

तत एवंरूपसन्निवेशानन्तरं तद् वानरसैन्यं विकटतया वलद्वेष्टनं कुर्वद् विभक्तोऽङ्गदादिभिर्विभज्य गृहीतो द्वाराणामाभोगः परिसरो येन । एवं निवहेन समूहेन निरन्तरं निरवकाशं[2] मण्डलीबन्धं जातम् । **कुलनाथस्तु** ततस्तद्वलद्विकटं वेष्टमानोच्छ्रितं वानरसैन्यं विविक्तदंष्ट्राभोगं प्रकटिताशेषदंष्ट्रं, निवहै[:*] समूहैर्निरन्तरं लङ्काप्राकारघटितमण्डलीबन्धं जातम् । ममेदं द्वारं तवेदमिति कृत्वा विभक्तद्वाराभोगमिति **श्रीनिवासः** ॥७८॥

## बिइओअहि-गम्भीरे फलिहा-बन्धम्मि[3] बिइअ-घडिअ[4]-गिरि-वहा ।
## आढत्ता लंघेउं बिइअ-सुवेलं व वाणरा पाआरं ॥७९॥

**[द्वितीयोदधि-गम्भीरे परिखा-बन्धे द्वितीय-घटित-गिरि-पथाः ।**
**आरब्धाः लङ्घयितुं द्वितीय-सुवेलं इव वानराः प्राकारम् ॥ ]**

[F85a] द्वितीयोदधिगम्भीरे परिखाबन्धे बन्धनस्थाने द्वितीयबद्धगिरिपथा विरचितापरसेतुबन्धा द्वितीयसुवेलमिव प्राकारं लंघयितुमारब्धाः प्रवृत्ता वानराः । घडिअ-गिरिवहा इति पाठे द्वितीयघटिता गिरिपथा इत्यर्थः ॥७९॥

---

1 विहत्त-दराहोअं GB; for 'ढा' Ms has 'रा' marginally.
2 Some words seem to have been omitted here. 3 ०वत्तम्मि GB.
4 ०बद्ध० GB; ०वह० for ०घ० marginally noted in Ms.

णवरि अ मुक्क-कलअलं वाणर-तुलिअम्मि दहमुहाहिट्ठाणे ।
चलिअं रअणिअर-बलं खअग्गि-विहुए[1] व्व महि-अले उअहि-
जलं ॥८०॥

[अनन्तरं च मुक्त-कलकलं वानर-तुलिते दशमुखाधिष्ठाने ।
चलितं रजनीचर-बलं क्षयाग्नि-विधुते इव मही-तले उदधि-जलम् ॥]

प्राकारलङ्घनान्तरञ्च दशमुखस्याधिष्ठाने नगरे वानरैस्तुलिते परिकलिते सति । मुक्तकलकलं रजनीचरबलं चलितं क्षयाग्निविधुते प्रलयानलव्याप्ते महीतल उदधिजलमिव । वानरस्य क्षयाग्नितुल्यता[याः*] राक्षसानाञ्च सागरजलतुल्यता[याः*] निरूपणाद् वानरनाश्यत्वं राक्षसानामुपमालङ्कारेण व्यज्यते । "अधिष्ठानं पुरे चक्रे प्रभावेऽध्यासनेऽपि चे"ति **विश्वः** । **कुलनाथस्तु**—अनन्तरञ्च वानरैस्तुलिते आक्रान्तत्वात् परिकलिते दशमुखस्याधिष्ठाने पुरे कृतकलकलं रजनीचरबलं चलितं प्रसृतं क्षयाग्निविधुते प्रलयाग्निव्याप्ते महीतल इवोदधिजलम् ॥८०॥

आरूढो णीइ रहं आसण्ण-गइन्द-लङ्घण-वलन्तेहिं ।
सरहेहि[2] समर-तुरिओ[3] जुत्तं जुअ-भग्ग-केसरेहि
णिउम्भो ॥८१॥

[आरूढः निरेति रथं आसन्न-गजेन्द्र-लङ्घन-वलद्भिः ।
शरभैः समर-त्वरितः युक्तं युग-भग्न-केसरैः निकुम्भः ॥]

समरत्वरितो निकुम्भनामा राक्षसः शरभैर्युक्तं रथमारूढो निर्गच्छति । कीदृशैरासन्नवर्तिनां गजेन्द्राणां लंघनाय वलद्भिः परिवृत्तग्रीवैर्युगभग्नकेसरैः ॥८१॥

1 ०हुरे Ms. 2 सरएहि Ms. 3 ०तुलि० GB.

कह वि पडिबद्ध-कवओ समरासंहिअ[1]-समत्थ-[2]-वाणर-
लोओ ।
णीइ धणु-कोडि-ताडण-तूरविअ-तुरङ्गमो रहेण पअङ्घो ॥८२॥

[कथं अपि प्रतिबद्ध=कवचः समरासंघित-समस्त-वानर-लोकः ।
निरैति धनुष्कोटि-ताडन-त्वरायित-तुरङ्गमः रथेन प्रजङ्घः ॥ ]

कथमपि परिजनप्रार्थनया प्रतिबद्धकवचः समरे आसङ्घितः शक्यो जेतुमित्यवधारितः समस्तो वानरलोको येन स प्रजङ्घो धनुष्कोटिताडनेन त्वरिततुरङ्गमो रथेन निर्याति । त्वरायिततुरङ्गम इति **केचित्** ॥८२॥

चडुल-पडाआ[3]-णिवहो कञ्चण-घर[4]-भित्ति-विअड-कूवर-बन्धो ।
इन्दइणो वि पसरिओ एक्कुद्देसो[F85b]व्व रक्खस-उरीअ
रहो ॥८३॥

[चटुल-पताका-निवहः काञ्चन-गृह-भित्ति-विकट-कूवर-बन्धः ।
इन्द्रजितः अपि प्रसृतः एकोद्देशः इव राक्षस-पुर्याः रथः ॥ ]

चटुलः पताकानिवहो यत्र । काञ्चनगृहभित्तिवद् विकटो विशालः कूवरस्य ईषादण्डस्य बन्धो वेदिभूमिर्यत्र एवंरूप इन्द्रजितो रथः, पताकानां बहुलत्वात् कूवरबन्धस्य च महत्त्वाद राक्षसपुर्या एकोद्देश इव प्रसृतः प्रस्थितः ॥८३॥

खण-परिअत्त-मइन्दा खण-लक्खिअ-कुञ्जरा खणन्तर-महिसा ।
तस्स[5] खण-मेत्त-मेहा रहं वहन्ति खण-पव्वआ अ तुरङ्गा ॥८४॥

[क्षण-परिवर्त-मृगेन्द्राः क्षण-लक्षित-कुञ्जराः क्षणान्तर-महिषाः ।
तस्य क्षण-मात्र-मेघाः रथं वहन्ति क्षण-पर्वताः च तुरङ्गाः ॥ ]

---

1 ०सङ्घि० GB. 2 ०त्त० marginally noted in Ms.
3 ०वडाआ० GB. 4 ०मअ० Ms. 5 जस्स Ms.

[F85b] तस्येन्द्रजित ईदृशास्तुरङ्गा रथं वहति। कीदृशाः, क्षणस्य परिवर्तेन परावृत्त्या मृगेन्द्रा मृगेन्द्रतां प्राप्ताः। यद्वा, क्षणं मृगेन्द्रतया परिवृत्ता इत्यर्थः। क्षणाल् लक्षिताः सन्त एव कुञ्जराः कुञ्जरत्वं प्राप्ताः। क्षणान्तरे महिषाः क्षणमात्रान्मेघाः क्षणात् पर्वताश्च, तस्य मायाप्रभावादित्यर्थः ॥८४॥

अविसज्जिअ-णिक्कन्ते अत्थाण-क्खोह-हलहलुट्ठिअ-मुहले।
[1]दहवअणस्स सुहाअइ[2] आणा-भङ्गो वि तक्खणं णिअअ-
बले ॥८५॥

[अविसर्जित-निष्क्रान्ते अस्थान-क्षोभ-हलहलोत्थित-मुखरे।
दशवदनस्य सुखायते आज्ञा-भङ्गः अपि तत्-क्षणं निजक-बले॥

अविसर्जितेऽपि अनाज्ञप्तेऽपि निष्क्रान्तेऽस्थानेऽयोग्ये क्षोभस्य रोषस्य यो हलहलो युद्धौत्सुक्यतरलत्वं तस्य यदुत्थितमुत्थानं तेन मुखरे। निजकबले दशवदनस्याज्ञाया नरवानराणामपि युद्धे कथमियतारम्भेणौत्सुक्येन च गम्यत इत्येवंरूपाया भङ्गोऽपि तत्क्षणं सुखयति प्रीतिमुत्पादयति। युद्धलालसानां वीराणामुल्लङ्घनत्वस्यैव स्वामिभक्तिसूचकत्वादिति भावः। अविसर्जितनिष्क्रान्ते अतएवाज्ञाभङ्ग इति **केचित्**। अस्थानक्षोभेण अस्थानाश्रितानां क्षोभाद्वेगेन हलहलं रणौत्सुक्यतरलत्वं तेनाश्रिते मुखरे कृतकोलाहले आदेशं विना निर्गत इति **के** ( केचित् ) ॥८५॥

गुडिअ-गुडिज्जन्त-भडं सोहइ रण-तुरिअ-जुत्त-जुज्जन्त-रहं।
घडिअ-घडन्त[3]-गअ-घडं चलिअ-चलन्त-तुरअं णिसाअर-
सेण्णं ॥८६॥

[गुटित-गुट्यमान-भटं शोभते रण-त्वरित-युक्त-युज्यमान-रथम्।
घटित-घट्यमान-गज-घटं चलित-चलत्-तुरगं निशाचर-सैन्यम्॥]

---

1 दस० Ms. 2 सुहावइ GB. 3 घडे० GB.

केचित् गुटिताः कृतसन्नाहाः। केचित् गुड्यमानाः सन्नह्यमाना भटा यत्र। संपूर्व-नह्धातोर्गुडादेशः। रणत्वरितैर्युक्ताः केचिद् युज्यमानाश्च रथा यत्र। काश्चिद् घटिता श्रेणीकृता काश्चिद् घट्यमाना गजानां घटा समूहो यत्र। केचिच्चलिताः केचिच्चलन्तस्तुरगा यत्र तन्निशाचरसैन्यं शोभते ॥८६॥

हत्थि-गअ-वरिअ-रामं रह-गअ-सच्चविअ-पवअ-वइ-सोमेत्तिं[1] ।
आस-गअ-वरिअ-हणूमं भूमी[2]-गअ-वरिअ-वाणरं[3] णीइ
बलं ॥८७॥

[हस्ति-गत-वृत-रामं रथ-गत-सत्यापित-प्लवग-पति-सौमित्रि ।
अश्व-गत-वृत-हनूमत् भूमि-गत-वृत-वानरं निरैति बलम् ॥ ]

हस्तिगतैर्वृतो युद्धेऽभिलषितो रामो यत्र। रथगतैः सत्यापितौ स्वीकृतौ प्लवगपतिसौमित्री यत्र। अश्वगतैस्तुलितः परिकलितो हनूमान् यत्र। भूमिगतैः पदातिकैर्विविक्ताः पृथक्-कृता एकैकशो वृता वानरा यत्र तद् बलं निर्याति। अत आदश्च इत्यनेन अश्वशब्दे पूर्वाचो वृद्धिः ॥८७॥

[रथ-संघट्ट-क्खलिअं गोउर-मुह-पुञ्जइज्जमाण-गअ-घडं ।
भवणन्तर-गुप्पन्तं अ [F86a]घडन्ते[4]क्क-मुह-णिग्गमं[5] भमइ[6]
बलं ॥८८॥

[रथ-संघट्ट-स्खलितं गोपुर-मुख-पुञ्जमान-गज-घटम् ।
भवनान्तर-व्याकुलायमानं अघटमानैक-मुख-निर्गमं भ्रमति बलम् ॥ ]

रथानां संघट्टेन संमर्देन स्खलितं प्रतिहतम्। गोपुरस्य पुरद्वारस्य मुखे पुञ्ज्यमाना गजघटा यत्र गोपुरस्य स्तोकत्वान्निर्गन्तुमप्रसरदिति **केचित्**। अतएव अघटमानैकमुखनिर्गमं बलं भवनानां प्रासादानामन्तरे व्याकुलायमानं सद् भ्रमति इतस्ततो याति द्वारभवनान्तरे पाटशाला इति ख्याते व्याकुलमिति **केचित्** ॥८८॥

---

1 °सोमत्तिं° Ms. 2 °भूमि° Ms. 3 °कइबलं° GB.
4 °घडेन्त° GB. 5 °ग्गअं GB. 6 वलइ GB.

दुक्खेण गोउराइं वलन्त[1]-जुअ-कोडि-विलिहिअ[2]-कवाडाइं ।
बोलेन्ति[3] रक्कस-रहा तंसोणामिअ-धआहओवरि-तलिमा[4] ॥८९॥

[दुःखेन गोपुराणि वलद्-युग-कोटि-विलिखित-कवाटानि ।
व्यतिक्रामन्ति राक्षस-रथाः तिर्यगवनामित-ध्वजाहतोपरि-तलिमाः ॥]

[F86a] निर्गमावकाशलाभाय वलन्त्या तिर्यग्भवन्त्या युगकोट्या विलिखितान्यङ्कितानि कवाटानि येषां तानि गोपुराणि द्वारमात्राणि वा। तुङ्गतयोपरिसंघट्टभयेन तिर्यगवनामितैर्ध्वजैराहतमुपरितलिमं यैस्ते राक्षसरथा दुःखेन व्यतिक्रामन्ति। तलिमं कवाटोपरिकाष्ठविशेष इति **केचित्**। द्वारकूटपटलभागो यैरिति **कुलनाथः**। उपरिवितानमिति **केचित्** साधु प्राहुः, तथा च **विश्वः** "तलिमं कुट्टिमे तल्पे चन्द्रहासे वितानके" ॥८९॥

णिसुढिअ-दिसागइन्दं भग्ग-भुअङ्ग-[5]प्फणोसारिअ-पाआलं ।
गरुअम्पि रक्खसाणं अइरा-होन्त-लहुअं भरं सहइ मही ॥९०॥

[निपातित-दिशा-गजेन्द्रं भग्न-भुजङ्ग-फणापसृत-पातालम् ।
गुरुकं अपि राक्षसानां अचिराद्-भविष्यल्लघुकं भरं सहते मही ॥]

'णिसुढिआ' आक्रान्ताः पृथिवीं धारयन्तो दिग्गजा येन। भग्नाभिर्भुजङ्गस्य शेषस्य फणाभिरपसृतं संकुचितं पातालं यत्र तं गुरुकमपि राक्षसानां भरमचिराद्भवल्लघुकं मही सहते। अचिराद्भविष्यल्लघुकं शीघ्रं पतिष्यद्भारं सहत्येव ॥९०॥

अग्ग-क्खन्दावडिअं मज्झे दार-मुह-रुद्ध-पुञ्जिअ-पिहुलं ।
[6]ऊसासिअ-साहि-मुहं कूलाभरिअ-भवणङ्गणं णीइ बलं ॥९१॥

[अग्र-स्कन्धापतितं मध्ये द्वार-मुख-रुद्ध-पुञ्जित-पृथुलम् ।
उच्छ्वासित-रथ्या-मुखं कूलाभृत-भवनाङ्गणं निरैति बलम् ॥ ]

---

1 खलन्त० Ms. 2 ०विहडिअ० GB. 3 बोल० GB.
4 ०तडिमा GB. 5 ०प्फणं दलिअ० GB. 6 उसा० Ms.

अग्रस्कन्धेन पुरोगतेन सैन्येनापतितं प्लवगबलेनापतितमिति कुः ( कुलनाथः )। शत्रु-सैन्ये लग्नम्। मध्ये द्वारमुखरुद्धत्वात् पुञ्जितपृथुलम्। उच्छ्वासितरथ्यामुखम्। साही रथ्यायां देशी। कूले पश्चाद्भागेनाभृतान्यापूरितानि भवनाङ्गणानि येन तद् बलं निर्याति ॥६१॥

इअ दार-[1]कउत्थम्भं[2] णीइ विहिण्ण[3]-विअडं णिसाअर-सेण्णं[4]।
एक्क-मुह-दरि-विणिग्गअ-सम-त्थलुत्ताण-पत्थिअ-णइ-
च्छाअं ॥९२॥

[इति द्वार-कृतोत्तम्भं निरैति विभिन्न-विकटं निशाचर-सैन्यम्।
एक-मुख-दरि-विनिर्गत-सम-स्थलोत्तान-प्रस्थित-नदी-च्छायम् ॥ ]

इत्युक्तप्रकारेण द्वारे कृतान्योन्यघर्षं निर्याति विभिन्नं पृथग्भूतं विकटं विततं निशाचर-सैन्यम्। एकदरिविनिर्गतायाः समस्थले उत्तानमगम्भीरं प्रस्थिताया विगतजलाया नद्या इव च्छाया यस्य तत्तथा। द्वारेण कृत उत्तम्भो रोधो यस्येति **केचित्** ॥६२॥

जाआइ तं मुहुत्तं पुण्ण-ज्झीण-सरिआ-पुलिण-सोहाइं।
रक्खस-घरङ्गणाइं गअ-समराहिमुह-[F86b]-जोह-पइ-
रिक्काइं ॥९३॥

[जातानि तत् मुहूर्तं पूर्ण-क्षीण-सरित्-पुलिन-शोभानि।
राक्षस-गृहाङ्गणानि गत-समराभिमुख-योध-प्रतिरिक्तानि ॥]

गतैः समराभिमुखैर्योधैः शून्यीभूतानि राक्षसगृहाङ्गणानि तस्मिन् क्षणे पूर्णक्षीणसरित्-पुलिनशोभानि जातानि। प्रतिरिक्तानि शून्यानीति **लोकनाथः** ॥६३॥

---

1 कअ० GB. 2 ०त्थघं Ms. 3 विभि० Ms. 4 सेणं GB.

लङ्का-वेढण-तुरिओ आलोइअ-दार-णिन्त-रक्खस-लोओ ।
रसिऊण पवअ-णिवहो खर-[1]वाआइद्ध-वण-दवो विअ
चलिओ ॥९४॥

[लङ्का-वेष्टन-त्वरितः आलोकित-द्वार-निर्यद्-राक्षस-लोकः ।
रसित्वा प्लवग-निवहः खर-वाताविद्ध-वन-दवः इव चलितः ॥ ]

[F86b] लङ्कावेष्टने त्वरितः प्लवगनिवह आलोकितद्वारनिर्यद्राक्षसलोको रसित्वा किलकिलशब्दं कृत्वा । खरवातप्रेरितवनदव इव चलितस्तदभिमुखं प्रस्थितः । लङ्कावेष्टनार्थं त्वरितः कृतोद्यम इति **लोः** ( लोकनाथः ) । रसित्वा सिंहनादं कृत्वा । वनदव इव चलितः पवनयोगाद्वनदवोऽपि शब्दायत इति **केचित्** ॥९४॥

पहरुज्जअ-पाइक्कं परिवड्ढइ पक्ख-पसरिआसारोहम् ।
मुक्कङ्कुस-माअङ्गं सिढिलिअ-रह-पग्गहं णिसाअर-सेण्णं ॥९५॥

[प्रहारोद्यत-पदातिकं परिवर्धते पक्ष-प्रसृताश्वारोहम् ।
मुक्ताङ्कुश-मातङ्गं शिथिलित-रथ-प्रग्रहं निशाचर-सैन्यम् ॥ ]

प्रहारोद्यताः पदातिका यत्र । पार्श्वयोः प्रसृता अश्वारोहा यत्र । त्वरार्थं मुक्ता अङ्कुशा यत्र, एवंभूता मातङ्गा यत्र । अश्ववेगाय शिथिलिता रथप्रग्रहा येन तन्निशाचरसैन्यं परिवर्तते[2] वानराभिमुखीभूय धावति । 'परिवड्ढइ' इति पाठे वानराभिमुखं गच्छतीत्यर्थः । पूर्वं त्वरया एकत्रैव निर्गता इदानीं यथास्थानस्थितत्वाद्वर्धत इति **केचित्** ॥९५॥

तो एक्काग‌अ[3]-वेअं [4]एक्केक्कम-दिण्ण-णसहिअब्भहिअ-पअं ।
ठाइ अणोहीण[5]-भरं[6] तह परिमण्डल-पहाविअं कपि-
सेण्णं ॥९६॥

---

1 पवणाइद्ध-वण-दओ व्व पचलिओ GB. 2 In this meaning the reading should have been परिवट्टइ. 3 ०अअ० GB. 4 एक्कक्कम-दिण्ण-महिअलब्भहिअ GB. 5 ०लीण० Ms. 6 ०भरं GB.

[ततः एकागत-वेगं एकैक-क्रम-दत्त-नसोढाभ्यधिक-पदम् ।
तिष्ठति अनवहीन-भरं तथा परिमण्डल-प्रधावितं कपि-सैन्यम् ॥]

ततो युद्धे योधाभिमुखधावनान्तरमेकरूपतया आगतो वेगो यस्य समकृतवेगमिति **कुलनाथः**। एकैकेन [क्रमेण*] दत्तं नसोढमभ्यधिकं पदं येन, एकस्य चरणन्यासाधिक्य-दर्शनादपरस्यापि तदधिकपदन्यासो जात इत्यर्थः। अनवहीनभरमपरित्यक्तरणभारमपरि-स्खलितरणभारं वा। यथापूर्वं तथा परिमण्डलाकारतया प्रधावितं कपिसैन्यं तिष्ठति। अभिमुखं धावतः साटोपानपि राक्षसान् दृष्ट्वाऽपरित्यक्ताटोपमित्यर्थः। तथा परिमण्डलप्रधावितं, परिमण्डलं रणगतिविशेषः ॥९६॥

पत्थन्ति जाअ-रोसा पत्थिज्जन्ति अ महग्घ-रण-सोडीरा ।
[1]णिहणन्ति णिहण्णन्ति अ अणुराएण णवरं ण भज्जन्ति भडा ॥९७॥

[प्रार्थयन्ते जात-रोषाः प्रार्थ्यन्ते च महार्घ-रण-शौटीर्याः ।
निघ्नन्ति निहन्यन्ते च अनुरागेण केवलं न भज्यन्ते भटाः ॥

राअ-सिरि-पवरसेणस्स एत्थ रावणवहे महाकव्वम्मि ।
सेणा-सण्णहणो बारहो आसासओ परिसमत्तो ॥
[ राज-श्रीप्रवरसेनस्य अत्र रावणवधे महाकाव्ये ।
सेना-सन्नहनं द्वादशकः आश्वासकः परिसमाप्तः ॥ ]

जातरोषा भटाः प्रार्थयन्ते अभियुञ्जन्ति वरयन्तीति **कुलनाथः**, परानित्यर्थात्। प्रार्थ्यन्ते च अभियुज्यन्ते च महार्घरणशौटीर्याः सचमत्काररणगर्वाः। निघ्नन्ति, अर्थाच्छत्रून्, निहन्यन्ते च अर्थाच्छत्रुभिः। एवंरूपेऽपि संकटे अनुरागेण युद्धे प्रभौ वा प्रीत्यतिशयेन। केवलं न भज्यन्ते नापसरन्ति भटाः। उभयसैन्यसाधारणमिदमिति ॥ द्वादश आश्वासः ॥ ९७॥

---

1 णिहन्ति णिहम्मन्ति Ms.

# तेरहो आसासओ

अह णिग्गअ [F87a]-मिलिएहिं अल्लीण-समागएहि अ विमुक्क-रवं ।
रअणिअर-वाणरेहिं दिण्णं सहिअञ्च गरुअ-रण-पत्थाणं ॥१॥

[अथ निर्गत-मिलितैः आलीन-समागतैः च विमुक्त-रवम् ।
रजनीचर-वानरैः दत्तं सहितं च गुरुक-रण-प्रस्थानम् ॥ ]

[F87a] अथ पूर्वोक्तप्रकारेण कपिराक्षसयोः सञ्जीभवनानन्तरं रजनीचरवानरैर्दत्तमर्थात् प्रतिपक्षेभ्यः, सोढमर्थात् प्रतिपक्षाणां, कीदृशैर्यथाक्रमं लङ्कायाः स्वशिविराच्च निर्गतमिलितै राक्षसैः [वानरैश्च*] आलीनसमागतैर्विमुक्तो रवः सिंहनादो यत्र, एवं यथा स्यात् । अविमुक्तरवमित्येके । कुलनाथस्तु अथानन्तरं निर्गतमिलितैर्निष्क्रम्य लग्नं रजनीचरैरालीनसमागतैश्च ढौकितत्वान्मीश्रीभूतैश्च वानरैर्दत्तं सोढञ्च विमुक्तरवं गुरुक-रणप्रस्थानं महासमराघटनमित्याह ॥१॥

तह अ पुरिल्ल-णिवाइअ-देहोवरि-णिमिअ-चलण-पत्थिअ[1]-तुरिआ ।
एक्केक्कमं[2] अइगआ[3] थोअं जह पहर-लालसा ओसरिआ ॥२॥

[तथा च पुरःस्थित-निपातित-देहोपरि-निहित-चरण-प्रस्थित-त्वरिताः ।
एकैकं अतिगताः स्तोकं यथा प्रहार-लालसाः अपसृताः ॥ ]

पुरःस्थिते निपतितस्य देहोपरि निहितचरणाः प्रस्थिताश्च त्वरिताश्चेति तथा, एक्कक्कमं तथा अतिगता एकैकं प्रत्येकमिति वा यथा प्रहारलालसाः[4] प्रहरणोत्सुकाः स्तोकमपसृताः,

---

1 °पत्थण° GB. 2 एक्क° GB. 3 अहि° GB. 4 °लासलाः Ms.

पुरिल्लशब्दः पुरःस्थिते देशी । **लोकनाथस्तु** तथा च पुरःस्थितस्य निपातितस्य, पुरःस्थितेन निपातितेन वा । पुरःस्थितेन निपातितस्य वा देहस्योपरि निहितचरणं यथा स्यात् तथा त्वरितप्रस्थिताः सन्त एकैकमतिगता निकटवर्तित्वं गताः, यथा प्रहारे लालसाः सतृष्णाः सन्तः प्रहारणार्थमवकाशलाभाय स्तोकमपसृताः पश्चात्पदमीषद् दूरं गताः, अन्योन्यप्रहारे तथा सतृष्णा यथा निपातितं देहमुल्लङ्घ्य त्वरितं प्रस्थिता इत्यर्थः ॥२॥

**जह हिअएहि ववसिअं रअ-कलुसेहि णअणेहि जह 'सच्चविअं' ।**
**[2]रअणिअर-वाणरेहिं तह पडिवक्खम्मि पहरणं ओहरिअं ॥३॥**

**[यथा हृदयैः व्यवसितं रजः-कलुषैः नयनैः यथा सत्यापितम् ।**
**रजनीचर-वानरैः तथा प्रतिपक्षे प्रहरणं अवहृतम् ॥ ]**

यथा हृदयैर्व्यवसितं चिन्तितं रजःकलुषैर्नयनैर्यथा 'सच्चविअं' दृष्टं रजनीचरवानरैस्तथा प्रतिपक्षे प्रहरणमायुधमवहृतं व्यापारितमिति **कु**ः (कुलनाथः)। रजसा रोषेण कलुषैः क्रूरव्यवसायैर्हृदयैर्यथा व्यवसितमवधृतम्, एवं रजसा रेणुना कलुषैर्नयनैर्यथा सत्यापितं दृष्टं तथा प्रतिपक्षे प्रहरणं रजनीचरवानराभ्यामवधृतं व्यापारितमवहृतमर्पितं वेति **लो**ः (लोकनाथः) ॥३॥

**पअ-लम्भब्भहिअ-जवा मुट्ठि-परिट्ठविअ-णिप्पअम्प-क्खग्गा ।**
**सच्चविअ-लद्ध-लक्खा पढम-पहार-विसआ ण भज्जन्ति भडा[3] ॥४॥**

**[पद-लम्भाभ्यधिक-जवाः मुष्टि-परिस्थापित-निष्प्रकम्प-खड्गाः ।**
**सत्यापित-लब्ध-लक्ष्याः प्रथम-प्रहार-विशदाः न भज्यन्ते भटाः ॥]**

पूर्वं सैन्यानां निविडतया चरणविन्यासावकाशो न लब्धः, इदानीं विरले तस्मिन् चरणार्पणस्य लाभेनाभ्यधिकजवाः, अथवा पदस्य स्वगतेर्लाभायाभ्यधिकजवाः, अथवा पदं व्यवसायविषयः प्रहर्तव्य इति यावत् तस्य प्राप्तये अभ्यधिकजवाः, मुष्टिपरिस्थापितनिष्प्रकम्प-

---

1 This word is omitted in Ms.　2 ०रेहि रणमुहे GB.　3 भुआ Ms, which has noticed the reading भडा marginally.

खड्गाः, सत्यापितो दृष्टो लब्धश्च लक्ष्यः प्रहर्तव्यदेशो यैः, प्रथमप्रहारेणापि विशदा अजातखेदत्वात् पटवः, यद्वा प्रथमप्रहाराय विशदा व्यक्तपराक्रमा इति। यद्वा, प्रथमप्रहारोऽग्रे प्रहारदानं स एव विषय उद्देश्यो येषां ते, भटा न भज्यन्ते नावसीदन्ति न भङ्गमासादयन्तीति वा। **केचित्तु** पदलाभाय प्रहारस्थानप्राप्तये वेगेन प्रसृता इत्याहुः ॥४॥

**विहुणन्ति [1]विहुअ-विडवे मुह-मण्डल-घोलणुप्पिसिअ-सिन्दूरे।**
**पवअ-स-हत्थाइद्धे कुम्भ-अडुक्खित्त-पाअवे माअङ्गा ॥५॥**

**[विधुन्वन्ति विधुत-विटपान् मुख-मण्डल-घूर्णनोत्प्रोञ्छित-सिन्दूरान्।**
**प्लवग-स्व-हस्ताविद्धान् कुम्भ-तटोत्क्षिप्त-पादपान् मातङ्गाः॥]**

प्लवगैः स्वहस्तेनाविद्धान् क्षिप्तान् कुम्भतट-भग्नान्[2] पादपान्, शिरोविधूननेन चलितविटपान्, मुखमण्डलघूर्णनेनोत्प्रोञ्छितसिन्दूरान् मातङ्गा विधुन्वन्ति। अत्र दृढनिखातत्वख्यापनाय स्वहस्तपदं न तु क्षेपणवेगवशात् पतिता इति। दृढनिखातत्वादेव विधुन्वन्ति न पुनः पातयितुं शक्नुवन्तीति भावः। अत्राद्यविशेषणद्वयस्य क्रियाविशेषणत्वमेवेप्सितं कुम्भतटाक्षिप्तार्धप्रविष्टानिति **कुलनाथः** ॥५॥

**रोसस्स दासरहिणो मअणस्स अ दूसहस्स रक्खस-वइणो।**
**समअच्चिअ [3]आढत्तो दोण्ह वि अणुरूव[4]-दारुणो परिणामो ॥६॥**

**[रोषस्य दाशरथेः मदनस्य च दुःसहस्य राक्षसपतेः।**
**समकं एव आरब्धः द्वयोः अपि अनुरूप-दारुणः परिणामः॥]**

दाशरथेर्दुःसहस्य रोषस्य, राक्षसपतेश्च दुःसहस्य मदनस्य सीतागोचरकामस्य, द्वयोरप्येकदैवानुरूपो दारुणः परिणामः पर्यवसानमारब्धः प्रस्तुतो यथाक्रमं कपिराक्षसहेतुत्वादिति भाव इति **केचित्**। तन्न सुन्दरमनुरूपत्वाद्दारुणो रामस्य रोषेण रावणस्य मदनेन च राक्षसानामेवोच्छेदादित्यर्थः ॥६॥

---

1 चलिअ० GB. 2 ०मग्नान् Ms. 3 अड्ढत्तो GB. 4 ०रूअ० GB.

णिहणन्ति गएहि गए तुरएहि तुरङ्गमे रहेहि अ[1] रहिणो[2] ।
जाअं पवङ्गमाणं पडिवक्खो पहरणञ्च रक्खस-सेण्णं ॥७॥

[निघ्नन्ति गजैः गजान् तुरगैः तुरङ्गमान् रथैः च रथिनः ।
जातं प्लवङ्गमानां प्रतिपक्षः प्रहरणं च राक्षस-सैन्यम् ॥ ]

निघ्नन्ति गजैर्गजान् तुरगैस्तुरङ्गमान् रथैरपि रथिनः, पाठान्तरे रथान्, अतो राक्षससैन्यं प्लवङ्गमानां प्रतिपक्षः प्रहारविषयश्च प्रहरणञ्च आयुधश्च जातम्, अत्र रथैं रथस्थैं रथिन इति **श्रीनिवासः** ॥७॥

सर-णिब्भिण्ण-महिहरा-सर-विहडिअ-सेस[3]-मोग्गराहअ[4]-सेला ।
पहरण-मग्गाइञ्छिअ[5]-भुअ-चुण्णिअ-पव्वआ भमन्ति णिसि-
अरा ॥८॥

[शर-निर्भिन्न-महीधराः शर-विघटित-शेष-मुद्गराहत-शैलाः ।
प्रहरण-मार्गाकृष्ट-भुज-चूर्णित-पर्वताः भ्रमन्ति निशिचराः ॥ ]

शरैर्निर्भिन्ना महीधरा अर्थात् कपिप्रमुक्ता यैः, शरैर्विघटिता ये तच्छेषा मुद्गरैराहता शैला यैः, प्रहरणमार्गमतिक्रान्तास्तमतिक्रम्य निकटे आगता ये ते भुजाभ्यां चूर्णिताः पर्वता[6] यैस्ते निशिचरा भ्रमन्ति ॥८॥

भाअ-पडिओ वि वित्थअ-गिरि-परिणाह-विअडे पवङ्ग-क्खन्धे ।
अपहुप्पन्तावेढो उल्ललइ गअस्स थोर-कर-पब्भारो ॥९॥

---

1 अ omitted in Ms. 2 Ms marginally has रहेहि रहे, but this reading does not suit the metre. 3 The word ०सेस० is omitted in Ms. 4 ०मुग्गरा० GB. 5 ०च्छिअ० GB. 6 Ms reading appears to be सर्वतो in place of पर्वता.

[भाग-पतितः अपि विस्तृत-गिरि-परिणाह-विकटे प्लवङ्ग-स्कन्धे।
अप्रभवदावेष्टः उल्ललति गजस्य स्थूल-कर-प्राग्भारः॥ ]

विस्तृतस्य गिरेरिव परिणाहेन विकटे विशाले प्लवङ्गस्कन्धे गजस्य स्थूलः करप्राग्भारः, भागे विधारणयोग्ये देशे पतितोऽपि, अप्रभवदावेष्टोऽप्रभवन् परिमाणमप्राप्नुवन्नावेष्टो यस्य, [1]ईदृशत्वादुल्ललति स्खलति, भ्रमतीति **कुलनाथः** ॥९॥

रअणिअरोर-त्थल-चुण्णिअस्स कइ-रोस-पेसिअस्स सिहरिणो।
उद्धं उद्धाइ रओ ओसरइ अहोमुहो सिला-संघाओ ॥१०॥

[रजनिचरोरः-स्थल-चूर्णितस्य कपि-रोष-प्रेषितस्य शिखरिणः।
ऊर्ध्वं उद्धावति रजः अपसरति अधोमुखः शिला-संघातः॥ ]

कपिना रोषेण प्रेषितस्य रजनीचरोरःस्थले चूर्णितस्य शिखरिणो रज ऊर्ध्वं लघुत्वाद् धावति शिलासंघातो गुरुत्वादधोमुखोऽपसरति। आश्रयनाशादाश्रिताविव तौ त्रासादूर्ध्वमधश्च गताविति भावः। तत्राश्रितत्वसाम्येऽपि रजःशिलासमूहयोराश्रयनाशादेकस्योर्ध्वगमने लघुत्वमेव हेतुः, अपरस्य त्रोडितत्वादधोमुखत्वे गुरुत्वमेव हेतुरिति ध्येयमिति **लोकः** (लोकनाथः) ॥१०॥

[F88a]रिउ-बल-मज्झ-णिराआ णिहअ-णिरन्तर-णिसुद्ध-
णज्जन्त-भडा।
विक्कम-णीसामण्णा दट्ठुम्पि भडाण दुक्करा गइ-मग्गा ॥११॥

[रिपु-बल-मध्य-निरायताः निहत-निरन्तर-निपातित-ज्ञायमान-भटाः।
विक्रम-निःसामान्याः द्रष्टुं अपि भटानां दुष्कराः गति-मार्गाः॥ ]

[F88a] रिपुबलमध्ये निरायता दीर्घीभूता निहता निरन्तरं निपतिता ज्ञायमानाः सुप्रसिद्धाः परिचीयमाना भटा येषु ते तथा। विक्रमेण निःसामान्या असाधारणा भटानां

1 ०ईदृत्वा० Ms.

गतिमार्गा रणसञ्चरणपथा द्रष्टुमपि दुष्कराः, अन्यैर्भयहेतुत्वाद् द्रष्टुमपि न शक्यन्त इत्यर्थः, किं पुनरधिष्ठातुमिति भावः ॥११॥

**णिव्वुब्भइ सोडीरं अप्पडिहत्थ-लहुओ हसिज्जइ पहरो ।**
**वड्ढइ वेराबन्धो [1]अहिसन्धिज्जन्ति साहसेसु समत्था ॥१२॥**

**[निरुह्यते शौटीर्यं अप्रतिहस्त-लघुकः हस्यते प्रहारः ।**
**वर्धते वैराबन्धः अभिसंधीयन्ते साहसेषु समर्थाः ॥ ]**

शौटीर्यं निरुह्यते निःशेषमुह्यते सफलीक्रियते वा । निष्ठां प्राप्यते शौटीर्यं शौर्याभिमान इति **कुः** (कुलनाथः) । अप्रतिहस्तेन प्रतिप्रहारादानेन लघुकः प्राप्तलाघवः परिभवनीय इति **कुलनाथः** । प्रहारोऽर्थात् प्रतिपक्षेण दत्तो हस्यते उपालभ्यते प्रहारवान् पुरुष इति **कुलनाथः** । बन्धुवधाद्वैराबन्धो वर्धते । साहसेषु प्राणनिरपेक्षकर्मस्वभिसन्धीयन्त अर्धाकृष्टा वञ्चयन्त इति **कुलनाथः** । अन्विष्यन्त इत्य**परे** । जीयन्त इति **श्रीनिवासः** ॥१२॥

**ण पडइ पडिए वि सिरे सूल-[2]विभिण्णम्पि णेअ भिज्जइ हिअअं ।**
**दुप्परिइअं ण लग्गइ [3]लाइज्जन्तम्पि पडिभडाण रण-भअं ॥१३॥**

**[न पतति पतिते अपि शिरसि शूल-विभिन्नं अपि नैव भिद्यते हृदयम् ।**
**दुःपरिचितं न लगति लाग्यमानं अपि प्रतिभटानां रण-भयम् ॥ ]**

पतितेऽपि शिरसि न पतति, अर्थात भटः, बोधावष्टम्भात्तथैव स्थितत्वादिति भावः । शूलविभिन्नमपि शूलेन समन्ताद्भिन्नमपीति **कुः** (कुलनाथः) हृदयं नैव भिद्यते न परांमुखतां भजते, उन्नतमपरांमुखञ्च तिष्ठतीत्यर्थ इति **कुः** ( कुलनाथः ) । दुःपरिचितमननुभूतपूर्वं रणभयं भटानां लाग्यमानमप्यननुभूतश्चेदतः प्रतिभटानां रणभयं लाग्यमानमपि

---

1 अइ० GB and Ms ; the Ms having ०हि० marginally, and this accords with the commentary. 2 ०विहि० GB. 3 ०विज्जि० GB.

वैरिणा संयोज्यमानमपि न लगति। अत्र दुःपरिचितत्वमेव हेतुरिति **लो** (लोकनाथः), हृदयं वृक्षं चित्तञ्चेति **केचित्** ॥१३॥

हसइ[1] पहरेसु दप्पो [2]पर-पत्थाणेसु सहइ पुरिसासङ्घो।
ओसारेसु भडाणं णिद्दोसेसु वि ण ओसरइ रोस-रसो[3] ॥१४॥

**[हसति प्रहारेषु दर्पः पर-प्रस्थानेषु सहते पुरुषाशंसा।**
**अपसारेषु भटानां निर्दोषेषु अपि न अपसरति रोष-रसः ॥ ]**

प्रहारेषु दर्पो हसत्यवज्ञां करोति, प्रहारेषु विपक्षाघातेषु दर्पो हसत्यवधीरयति, अकिञ्चित्करत्वात्। यद्वा, हसति विकसति वर्धत इत्यर्थः। इति **केचित्**। सहइ इति पाठे प्रहारेषु दर्पः सहते कार्यक्षमतामेतीत्यर्थः। परप्रस्थानेषु प्रतिभटाभिमुखप्रयाणेषु पुरुषस्य पौरुषशालिन आशंसा शत्रुवधं प्रत्युत्साहः 'सुहइ' (?) शोभते सधर्मात् समरसाधनादुत्-कृष्यत इत्यर्थः। पराभिमुखगमनेषु पुरुषाकांक्षा सहतेऽभियोगं गच्छतीति **केचित्**। पहरट्ठाणेसु इति पाठे प्रहारस्थानेषु प्रतिपक्षप्रहारसंकटेष्वित्यर्थः। विनापि भङ्गेन विश्रामार्थं परकृताप्रतिवञ्चनार्थं वा कृतत्वात्, निर्दोषेष्वपि भटानामपसारेषु रोषरसो नापसरति, निर्दोषता च प्रहारार्तत्वात् कृतकार्यत्वाद्वेति **केचित्**। प्रतिपक्षाभिमुखा रोषाद्धाव-न्तीत्यर्थः ॥१४॥

रिउ-गअ-भिण्णुक्खित्ता रोस-विहुव्वन्त-चडुल-केसर-णिवहा।
दढ-दट्ठ-दन्त-मूला रसिऊण समच्छरं णिमिल्लन्ति कई ॥१५॥

**[रिपु-गज-भिन्नोत्क्षिप्ताः रोष-विधूयमान-चटुल-केसर-निवहाः।**
**दृढ-दष्ट-दन्तमूलाः रसित्वा समत्सरं निमीलन्ति कपयः ॥ ]**

1 सहइ GB, So has Ms. marginally. 2 दप्प-ट्ठाणेसु GB; Ms. has पहर-ट्ठाणेसु marginally. 3 In GB these two words interchange place. Ms appears to read ०वसो०

रिपुगजैर्दन्ताभ्यां भिन्नोत्क्षिप्ता रोषेण विधूयमानचटुलकेसरनिवहा दृढदष्टदन्तमूलाः क्रोधातिशयेन मूलपर्यन्तं दष्टदशना इत्यर्थः। ईदृशाः कपयो रसित्वा चीत्कारं कृत्वा समत्सरं निमीलन्ति निमील्य प्राणान् त्यजन्तीत्यर्थः, प्राणान्तेऽपि मत्सरं न त्यजन्तीति भावः। रसित्वा सिंहनादं कृत्वेति **कुलनाथः** ॥१५॥

**अवहारणा[1] ण भिज्जइ[2] चिन्तिज्जइ[3] संसए वि सामिअ-सुकअं।**
**ण गणिज्जइ विणिवाओ दिट्ठे वि भअम्मि [F88b] सम्भरिज्जइ लज्जा ॥१६॥**

**[अवधारणा न भिद्यते चिन्त्यते संशये अपि स्वामि-सुकृतम्।**
**न गण्यते विनिपातः दृष्टे अपि भये संस्मर्यते लज्जा ॥]**

संशयेऽपि जीवितसंकटेऽप्यवधारणा एवमवश्यं कर्तव्यमिति प्रतिज्ञा न भिद्यते नापैति स्वामिनः सुकृतमुपकारः स्मर्यते प्राणसंकटेऽपि सुकृतमुपकारं कृत्वा नापसरन्तीत्यर्थः, तत्स्मरणादेव विनिपातो न गण्यते, दृष्टेऽपि भये भयहेताविति **कुः** (कुलनाथः)। लज्जा सम्यक् स्मर्यते भटैरित्यर्थात्। महत्यपि भये लज्जां स्मृत्वा न पलायन्त इति भावः। ण गणिज्जइ इति आत्मनः शत्रुस्य वा विनिपात इति **केचित्** ॥१६॥

**पढमाणिआहि[4] सुइरं जे जीविअ-संसअम्मि वि परिच्छूढा[5]।**
**ते च्चिअ अहिमुह-णिहआ सुर-बन्दीहि अहिसारिआ रअणिअरा ॥१७॥**

**[प्रथमानीताभिः सुचिरं ये जीवित-संशये अपि परिक्षिप्ताः।**
**ते एव अभिमुख-निहताः सुर-बन्दीभिः अभिसारिताः रजनीचराः ॥]**

---

1 ०हीरणा GB. 2 किज्ज० GB. 3 सुमरिज्ज० GB.
4 पढु० G. 5 ०व्वूढा Ms.

प्रथमानीताभिः सुरसुन्दरीभि[1] र्ये रजनीचरा जीवितसंशयेऽपि सुचिरं परिक्षिप्ता-स्त्यक्ताः। परिहृता इति **कुः** (कुलनाथः)। तेऽभिमुखनिहता एव। त एव अभिमुखनिहता इति **कुः** (कुलनाथः)। सुरसुन्दरीभिरभिसृता अभिसारिता इति **केचित्**। एतस्मादेव लोभाद्युद्धं श्रद्धधत इति भावः ॥१७॥

**रअणिअर-बद्ध-लक्खो अबद्ध-रुहिर-परिपण्डर[2]-वण[3]-च्छेओ।**
**अगहिअ-वण-सन्तावो उण्ह-प्पहर-सरसो समल्लिअइ कई ॥१८॥**

**[रजनीचर-बद्ध-लक्ष्यः अबद्ध-रुधिर-परिपाण्डर-व्रण-च्छेदः।**
**अगृहीत-व्रण-सन्तापः उष्ण-प्रहार-सरसः समालीयते कपिः ॥]**

रजनीचरेषु बद्धलक्ष्यश्च प्रहारोद्यतो दत्तदृष्टिर्वा। अबद्धमसम्बद्धमस्खलितमिति याव-दीदृशं रुधिरं यत्र। अबद्धेन गलता रुधिरेण परिपाण्डरव्रणच्छेद इति **कुः** (कुलनाथः)। एवंरूपतया पाण्डरितश्छेदो निस्त्रिंशघातो यस्य। छेदनस्यातिप्रत्यग्रतयेषद्विलम्बेन रुधिर-स्खलनादिति भावः। दर्पादगलितव्रणसन्तापः। उष्णेन तात्कालिकतया अलब्ध-निर्वाणेन प्रहारेण सरसः समरानुरागवान् कपिः समालीयते प्रहर्तारं ढौकते। समालीयते सान्धिकत्वात् संगच्छत इति **कुः** (कुलनाथः)। छेदतो यावद्रुधिरं न स्खलति तावच्च व्रणसन्तापो न निर्वाणमेति तावदेव रजनीचरबद्धलक्ष्यं यथा स्यात्तथा लीयत इत्यर्थः ॥१८॥

**ण पडिक्खन्ति अवसरं ओच्छन्दन्ति जणिअं परेण पआवं।**
**बोलेन्ति जहा-भणिअं साहुक्कार[4]-पुरओ अइन्ति समत्था ॥१९॥**

**[न प्रतीक्षन्ते अवसरं अवस्कन्दन्ति जनितं परेण प्रतापम्।**
**व्यवक्रामन्ति यथा-भणितं साधुकार-पुरतः आयान्ति समर्थाः ॥]**

समर्था न प्रतीक्षन्ते न कालं क्षिपन्तीत्यर्थः। परेण जनितं शत्रुवधादर्जितं प्रतापमा-स्कन्दन्ति। शत्रुवधेनार्जितं प्रतापमवस्कन्दन्ति पिबन्तीति **कुः** ( कुलनाथः )। शत्रु-

---

1 This reading is noted in G ( Fn. 15 ) as read in C ( gloss ).
2 ०पण्ड GB. 3 ०रङ्ग० GB. 4 ०क्कारं पु० Ms.

वधादस्मत्प्रतापोऽर्जित इति कृत्वा तत्कालमेव तद्वधात् तं प्रतापमाच्छादयन्तीत्यर्थः। यथाभणितं व्यवक्रामन्त्यहमेनमवश्यं हन्मीति प्रतिज्ञां सफलयन्तीत्यर्थः। यद्वा, पदातिवधं प्रतिश्रुत्य सेनापतिवधं विधाय यथाभणितमतिक्रामन्ति। सुहृज्जनवादमपि लङ्घयन्तीति कुः (कुलनाथः)। साधुकारपुरतोऽतिगच्छन्ति साधुवादादर्थान्नादेन तदभिमुखाः समरसंकटमेव धावन्तीत्यर्थः। साधुकारपुरतो यस्यां दिशि साधुकारः श्रूयते तदभिमुखमतिगच्छन्तीति **कुलनाथः** ॥१६॥

**इअ ताण तं विअम्भइ सुरङ्गणा-सुरअ-लम्भ-सङ्केअ-हरं।**
**भग्ग-जम-लोअ-वअं[1] महिन्द[2]-[3]भवणुज्जआविअ[4]-वहं**
**जुज्झं ॥२०॥**

[इति तेषां तत् विजृम्भते सुराङ्गना-सुरत-लम्भ-संकेत-गृहम्।
भग्न-यम-लोक-पथं महेन्द्र-भवन-ऋजूकृत-पथं युद्धम्॥ ]

द्वादशभिः कुलकम्। इत्युक्तेन वक्ष्यमाणेन च, तेषां कपिराक्षसानां तत् युद्धं विजृम्भते, कीदृशं, सुराङ्गनासुरतलाभसंकेतगृहं, भग्नयमलोकपथं युद्धाभिमुखमरणजन्यपुण्यादिति भावः। तत् पुण्यादेव महेन्द्रभवनं प्रति ऋजूकृतपथं यमलोकपथं दूरीकृत्य निर्मितशक्रलोकमवाप्नोति तत्पुण्यादर्जितं शुभमिति शास्त्रम् ॥२०॥

**कइ-वच्छ-त्थल-परिणअ-णिअअ-मुहत्थमिअ-हत्थि[5]-दन्त-**
**प्फलिहं।**
**णिहअ[6]-भड-महिअ-णिवडिअ-सुर-वहु-[7]कर-चडुल-वलअ-**
**मुहल-गइ-वहं ॥२१॥**

---

1 ०वन्थं GB. 2 महेन्द० GB. 3 ०भुअणु० Ms, which has ०भवणु० marginally. 4 ०आइअ० GB. 5 ०दन्ति० GB. 6 णिअअ० Ms. 7 चल-वलअ-मुहल-पवअ० GB; ०कर-चडुल-वलअ-पवअ० Ms. which has not got the word मुहल without which the compound gives no good sense.

[कपि-वक्षःस्थल-परिणत-निजक-मुखास्तमित-हस्ति-दन्त-परिघम् ।
[निहत-भट-महित-निपतित-सुर-वधू-कर-चटुल-वलय-मुखर-गति-पथम् ॥]

कपिवक्षःस्थले परिणतानां दत्तदन्ताघातानां हस्तिनां मुखे अस्तमितः कुण्ठतां प्राप्तः प्रविष्टो वा निजदन्तपरिघो यत्र। एतेन कपिवक्षसोऽतिकाठिन्यमुक्तम्। महितोऽभिमतो निपतितो यो भटस्तदर्थं निपतितानामुपगतानां सुरवधूनां करस्थितैश्चटुलैर्वलयैर्मुखरो गतिपथो यत्र। **कुलनाथ**मते तु 'कर-चडुल'मिति पाठं न धृत्वा चतुर्थचरणे 'पवअगइ' इति पाठं संमन्यते ॥२१॥

[F89a]ओवअणोसुद्ध-रहं उप्पअणुच्छित्त-विहडमाण-गइन्दं ।
गहिअ-प्फिडिअ-तुरङ्गं अनुधाविअ-पवअ-महिअ[1]-रक्खस-
जोहम् ॥२२॥

[अवपतनावपतित-रथं उत्पतनोत्क्षिप्त-विघटमान-गजेन्द्रम् ।
गृहीत-स्फेटित-तुरङ्गं अनुधावित-प्लवग-मथित-राक्षस-योधम् ॥]

कपीनामवपतनेनावपतितरथं चूर्णितरथमिति **कुः** (कुलनाथः), निपतितरथमिति **केचित्**। तेषामेवोत्पतनेनोत्क्षिप्य विघटमानगजेन्द्रं पूर्वमारूढेषु कपिषु तद्भरात् पतिता ये गजेन्द्रास्त एव तेषामुत्पतनेन गात्रमुत्क्षिप्य यत्र पलायिता इत्यर्थः। चरण-केशादौ गृहीतास्त्रासेन भ्रष्टास्तुरङ्गा यत्र, अनुधावितेन प्लवगेन गृहीतो मथित इति वा रक्षोयोधा यत्र ॥२२॥[2]

रस-णिव्वाणो[3]रत्थल-सुह-विसज्जन्त-चन्दण-दुम-प्पहरं ।
कलअल-लोहुग्घाडिअ-मुह-बोलीण-सर-मग्ग-णिन्त-
णिणाअं ॥२३॥

---

1 ०णिहअ० GB; Ms. having ०गहिअ० marginally. 2 Ms. erroneously puts the number as 23 and continues the mistake throughout in numbering the verses of the canto. 3 ०णिव्वाअ० GB.

[ रस-निर्वाणोरःस्थल-सुख-विषह्यमान-चन्दन--द्रुम-प्रहारम् ।
कलकल-लोभोद्घाटित-मुख-व्यवलीन-शर-मार्ग-निर्यन्-निनादम् ॥ ]

रसेन संघट्टमिलितेन चन्दनद्रवेण निर्वाणे उरःस्थले सुखेन परितोषेण हेलया वा विषह्यमानाश्चन्दनद्रुमप्रहारा यत्र, रसेन स्वामिनोऽनुरागेण निर्वाणं सुखितमिति **केचित्**। कलकललोभादुद्घाटितेषु विकासितेषु मुखेषु व्यवलीनानां व्यतिक्रान्तानामिति **कुः** ( कुलनाथः ) । निर्भिद्यातिक्रान्तानां शराणां मार्गे निर्यान्तोऽर्थात् खण्डखण्डीभूय बहिर्भवन्तो निनादा यत्र तत् । कलकललोभेनोद्घाटितं विवृतं यन्मुखं तत्र व्यालीनस्य शरस्य मार्गे छिद्रे निर्गच्छन्निनादो यत्रेति **केचित्** ॥२३॥

भिण्ण-घडिज्जन्त-घडं[1] पडिरुद्धोसरिअ-चक्किअ-पाइक्कं ।
रुहिराउण्ण[2]-रह-वहं मुह-मुक्क[3]-प्फेण-णिहुअ-हेसिअ-तुरअं ॥२४॥

[ भिन्न-घट्यमान-घटं प्रतिरुद्धापसृत-चकित-पदातिकम् ।
रुधिरापूर्ण-रथ-पथं मुख-मुक्त-फेन-निभृत-ह्रेषित-तुरगम् ॥ ]

वानरैर्भिन्ना राक्षसैर्घट्यमाना घटा करिणां सन्निवेशो यत्र, प्रतिरुद्धाः सन्तोऽपसृतास्तश्चकिता मिलित्वा मण्डलीभूताः पदातिका यत्र, रुधिरैरापूर्णाः पाठान्तरे आबद्धा रथपथा यत्र, मुखमुक्तैः फेनैरर्थादपसरणवेगजनितैर्निभृतह्रेषितास्तुरगा यत्र । निभृतह्रेषिता अव्यक्तध्वनय इति **कुः** ( कुलनाथः ) । फेनैर्मुखस्यावृतत्वादिति भावः ॥२४॥

रिउ-पहरण-परिओसिअ-साहुक्कार-रव- गब्भिण-पडन्त-सिरं ।
णिब्भीअ[4]-पहर-मुच्छिअ-वअणब्भन्तर-विराअ-भड-
चुक्कारं ॥२५॥

[ रिपु-प्रहरण-परितोषित-साधुकार-रव-गर्भित-पतच्-छिरम् ।
निर्भीक-प्रहार-मूर्छित-वदनाभ्यन्तर-विलीन-भट-चुक्कारम् ॥ ]

---

1 पडिरुद्ध० Ms. 2 ०रोहिरण्ण GB. 3 ०मुक्ख० GB ; Ms. also giving this reading marginally. 4 णिब्भिरण्ण० GB.

रिपुप्रहारपरितोषितानां भटानां साधुकारगर्वितानि शिरांसि यत्र, साधुकारश्च तद्वीर्यश्लाघयेति भावः। निर्भीको भयशून्यः साहसिक इति यावत्, तत्कृतेन प्रहारेण मूर्छितानां भटानां वदनाभ्यन्तरे [1]विलीनश्चुक्कारः सिंहनादो यत्र। [2]बुक्कारः सिंहनादो यत्रेति कुः ( कुलनाथः )। प्राकृते परनिपातादन्वयः। बुक्कारः सिंहनादे देशीति **केचित्**, वस्तुतस्तु चुक्कारः सिंहनादे स्यादिति **हारावली** ॥२५॥

## सेल-पहरुव्विआविअ[3]-दुक्ख-ववट्ठविअ-हत्थि-पत्थिअ-जोहं।
## भग्ग-धअ-इण्ह[4]-विहडिअ[5]-पणट्ठ-णिअअ-भड-दुक्ख-णज्जन्त-रहं ॥२६॥

**[ शैल-प्रहारोद्वेजित-दुःख-व्यवस्थापित-हस्ति-प्रस्थित-योधम्।**
**भग्न-ध्वज-चिह्न-विघटित-प्रनष्ट-निजक-भट-दुःख-ज्ञायमान-रथम् ॥ ]**

शैलप्रहारेणोद्वेजितेषु त्रासाद्विमुखीभवत्सु, अनन्तरं दुःखेन व्यवस्थापितेषु स्थिरीभूतेषु हस्तिषु प्रस्थिता योधा यत्र, प्रस्थिताः शत्रुसम्बद्धाः शत्रुप्रार्थिता वा। "प्रार्थितं शत्रु-सम्बन्धे याचितेऽभिहितेऽपि चे"ति **विश्वः**। प्रस्थिता वेति **केचित्**। भग्नैर्ध्वजचिह्नै-र्विमुग्धत्वान् निश्चयशून्यत्वात् प्रनष्टै रपसृतैर्निजभटैर्दुःखेन ज्ञायमाना रथा यत्र। विमोहितै-रजातनिश्चयैः प्रनष्टनिजकभटनिहतस्वयोधा इति कुः ( कुलनाथः ) ॥२६॥

## गिरि-पेल्लिअ-रह-कड्ढण-विहल-पसारिअ[6]-मुह-त्थणन्त-तुरङ्गं।
## म [F89b] हि-अल-पलोट्ठ-महिहर-[7] रअ-पसरोमिलिअ-भिण्ण-पण्डर[8]-रुहिरम् ॥२७॥

---

1 विशीर्ण R, विसट्ट C, विलीन K. 2 Cf. ०वोक्कार-रवं C in place of ०भड-चुक्कारं 3 ०आइअ० GB ; Ms. having marginally ०पहरुव्वेइअ० as in C. 4 ०चिण्ह० GB. 5 ०विमुहिअ० GB. 6 ०विसा० GB. 7 This reading ०रअ-पसरो० ( without the last ओकार ) is noted marginally, but it has originally ०अद-रस ( not ०अअ-रसो० ) as in GB. 8 ०पण्डु० GB.

[ गिरिप्रेरित-रथ-कर्षण-विह्वल-प्रसारित-मुख-स्तनत्-तुरङ्गम् ।
महीतल-प्रलुठित-महीधर-रजः-प्रसरावमृदित-भिन्न-पाण्डर-रुधिरम् ॥ ]

गिरिप्रेरितस्य रथस्य कर्षणेन विह्वलतया प्रसारितमुखाः सन्तः स्तनन्त आर्तनादं कुर्वन्तस्तुरङ्गा यत्र, महीतले प्रलुठितस्य महीधरस्य रजःप्रसराणामवमृदितेनावमर्दनेन भिन्नमतएव पाण्डरं रुधिरं यत्र तत्। **कुलनाथस्तु** महीतले प्रलुठितेन महीधरस्य रजतरसेन रूप्यद्रवेण, अववलितं प्रेरितं भिन्नं मिश्रीभूतं पाण्डरं रुधिरं यत्र तदित्याह। महीतलविशीर्णस्य महीधरस्य रजतरसेन रूप्यद्रवेण रथसंघट्टोष्मणा द्रवत्वं। यद्वा, रजतेन रूप्येण रसेन पारदेन च मिलितमिति **केचित्** ॥२७॥

कइ-मुक्क-चुण्णिअ-ट्ठिअ-सेल-मुणिज्जन्त-सरस-सरिआ-मग्गं ।
ओहरिअ-वञ्चिआइञ्छिआसि[1]-मग्गावडन्त[2]-वाणर-जोहं ॥२८॥

[ कपि-मुक्त-चूर्णित-स्थित-शैल-ज्ञायमान-सरस-सरिन्-मार्गम् ।
अवहृत-वञ्चिताकृष्टासि-मार्गापतद्-वानर-योधम् ॥ ]

[F89b] कपिमुक्तेषु राक्षसचूर्णितस्थितेषु खण्डखण्डीभूतेषु [ शैलेषु ] ज्ञायमानाः परिचीयमानाः सरसाः सरिन्मार्गाः प्रवाहपथा यत्र, अवहृतानां व्यापारितानां वञ्चितानां परिहृताघातानां 'आइञ्छिआना'माकृष्टानामसीनां खड्गानां मार्गेष्वापतन्तोऽभिमुखधावन्तो वानरयोधा यत्र तत् ॥२८॥

अहिधावन्त-पवङ्गम-मुक्कंस-णिराअ-केसर-[3]सडुग्घाअं ।
मज्झन्त-भाअ-णिवडिअ-दण्डाउह-भिण्ण-महि-[4]अलोविद्ध-
भडं ॥२९॥

---

1 ०आइञ्चि० G; B omits this word erroneously. Cf. Hem. VIII. 4. 187 wherein we find आइञ्छ (=कृष्). 2 मग्गोव० GB.
3 ०सद्दु० Ms. 4 ०बद्ध० Ms.

[ अभिधावत्-प्लवङ्गम-मुक्तांस-निरायत-केसर-सटोद्घातम् ।
मध्यान्त-भाग-निपतित-दण्डायुध-भिन्न-महीतलोपविद्ध-भटम् ॥ ]

अभिधावतां प्लवङ्गमानां मुक्तेष्वसंघटितेष्वंसेषु निरायताः केसरसटासमूहा यत्र, मध्यान्तभागे शरीरमध्यभागे अन्तभागे च निपतितेन दण्डायुधेन तोमरादिना भिन्नाः सन्तो महीतल आविद्धा निष्पिष्टा भटा यत्र तत् ॥२९॥

गहिअ-सिर-दट्ठ-वाणर-णिसाअरोर-त्थलद्ध-रोविअ-दाढं ।
णह-धरिअ-पव्वओज्झर-सीभर-तण्णाअ-गरुइओसण्ण-रअं ॥३०॥

[ गृहीत-शिरो-दष्ट-वानर-निशाचरोरः-स्थलार्ध-रोपित-दंष्ट्रम् ।
नभो-धृत-पर्वत-निर्झर-शीकरार्द्रीकृत-गुरुकितावसन्न-रजः ॥ ]

गृहीतैरर्थाद्राक्षसेन शिरसि दष्टैर्वानरैर्निशाचरोरःस्थले अर्धरोपिता दंष्ट्रा यत्र, निशाचरोरःस्थलार्धेषु रोपिता दंष्ट्रा यत्रेति वा, नभसि धृतानां पर्वतानां निर्झरशीकरैरार्द्रीकृतानि, अतएव गुरुकतयावसन्नानि सञ्चरणासमर्थानि रजांसि यत्र ॥३०॥

सारहि-हत्थ-[1]अलाहअ-मुह-पडिउट्ठिअ-तुरङ्ग-णिव्वूढ-रहं ।
सर-घाअ-चुण्णिओवइअ[2]-पव्वआवीअ-रुहिर-सरिआ-
सोत्तं ॥३१॥

॥१२॥कु[3]

[सारथि-हस्त-तलाहत-मुख-पतितोत्थित-तुरङ्ग-निर्व्यूढ-रथम् ।
शर-घात-चूर्णितावपतित-पर्वतापीत-रुधिर-सरित्-स्रोतः ॥ ]

वेगाय सारथिहस्ततलाहततया मुखेन भूमौ पतितैः कृच्छ्रादुत्थितैस्तुरङ्गैर्निर्व्यूढा रथा यत्र । शरघातचूर्णितानामवपतितानां शैलानां रजोभिः पीतानि रुधिरसरित्स्रोतांसि यत्र तत् तथाभुतं युद्धं विजृम्भत इति योज्यम् । आपीतं नाशितमिति **केचित्** ॥३१॥

---

1 ०वला० Ms. 2 ०डिअ० B 3 आइकुलअं ॥१२॥ G ; ( आइकुलअम् ) B.

अट्टन्ति असहणाइं खण्डिज्जन्त-पडिसारिअद्धन्ताइं।
वोच्छिन्त-मुहाइं [1]झिज्झन्तोसरि[F90a]अ-पडिभडाइ
बलाइं ॥३२॥

[अट्यन्ते असहनानि खण्ड्यमान-प्रतिसारितार्धान्तानि।
व्यवच्छिद्यमान-मुखानि क्षीयमाणापसृत-प्रतिभटानि बलानि॥]

असहनान्यसोढपरोत्कर्षाणि खण्ड्यमानाः प्रतिसारिताः पुनर्घटिता अर्धान्ता एकदेशा येषां तानि, असोढपरगर्वाणि न पुनः क्षीणबलतया समरासक्तानीति भावः। खण्ड्यमानः प्रतिसारितो दूरं गतोऽर्धान्त एकदेशो येषां तानीति **लोकनाथः**। व्यवच्छेद्यमानं विरलीभवन् मुखमग्रस्कन्धो येषां, क्षीयमाणा हीनबलाः सन्तोऽपसृताः प्रतिभटा येषु तानि बलानि, अट्यन्ते हिंस्यन्त इति **कुलनाथः**। क्रमशः क्षीयन्त इति **केचित्**। घृतादीनामावर्त्यमानानां समानधर्माणि भवन्तीत्यर्थ इति **केचित्** ॥३२॥

वाणर-पहर-[2]क्खलिआ अणिरूविअ-लक्ख-पेसिआसि-पहरणा।
मुच्छा-णिमीलिअच्छा ओहीरन्ता वि अल्लिअन्ति णिसि-
अरा ॥३३॥

[वानर-प्रहार-स्खलिताः अनिरूपित-लक्ष्य-प्रेषितासि-प्रहरणाः।
मूर्छा-निमीलिताक्षाः अवह्रियमाणाः अपि आलीयन्ते निशिचराः॥]

[F90a] वानराणां प्रहारैः स्खलिता विह्वलगतयः, प्रहारजनितमूर्छया निमीलिताक्षा निशिचरा अवह्रियमाणाः प्रहारविह्वलत्वाद् बन्धुभिराकृष्यमाणा अपि निमीलिताक्षतया अनिरूपितेषु लक्ष्येषु प्रेषितासिप्रहरणाः क्षिप्तखड्गप्रहाराः सन्त आलीयन्ते ढौकन्ते। अवहीयमाना अवसीदन्त इति **श्रीनिवासः**। अवह्रियमाणा अपि मृत्युना शत्रुणा वा आकृष्यमाणा अपीति **कुलनाथः** ॥३३॥

---

1 झिज्ज० GB. 2 पहरु० Ms; ०क्खु डि आ G, ०क्खडिआ B.

चुण्णिअ-गरुअ-पडिभडो[1] फुरइ अणल्लीण-रक्खसाउह[2]-विहलो ।
खण्डिज्जन्त-पअत्तो[3] ओलि-च्छिण्ण-पडिओ पवङ्गम-जोहो ॥३४॥

**[चूर्णित-गुरुक-प्रतिभटः स्फुरति अनालीन-राक्षसायुध-विह्वलः ।
खण्ड्यमान-प्रयत्नः आवलि-च्छिन्न-पतितः प्लवङ्गम-योधः ॥ ]**

चूर्णितगुरुप्रतिभटोऽनालीनेन दूरस्थेन राक्षसायुधेनाहतः सन् विकलः। **केचित्**, न अलीनः अनलीनः पीन इति यावत्, यद्वा, अन-शब्दोऽभावे देशी, अलीनेनासमग्रप्रविष्टेन पार्श्वेऽप्राप्तभूमिस्पर्श इति यावदिति वदन्ति। आहतत्वादेव खण्ड्यमानप्रयत्नः, आवली-च्छिन्नः पंक्तिभ्रष्टः सन् पतितो विश्रामाय निषण्णः, प्लवङ्गमयोधः स्फुरति विश्रामानन्तरं पुनर्युद्धाय रोषेण कम्पत इत्यर्थः। स्फुरति तेजसा न हीयत इति **कुलनाथः** ॥३४॥

सोडीरेण पआवो छाआ पहरेहि विक्कमेहि[4] परिअणो ।
जीएण अ अहिमाणो रक्खिज्जइ अ गरुओ शरीरेण जसो ॥३५॥

**[शौटीर्येण प्रतापः छाया प्रहारैः विक्रमैः परिजनः ।
जीवेन च अभिमानः रक्ष्यते च गुरुकं शरीरेण यशः ॥ ]**

शौटीर्येणाकातरतया सत्त्वावष्टम्भेन वा प्रतापः। शौटीर्येण पुरुषकारेण प्रताप इति **कुः** (कुलनाथः)। प्रहारैश्छाया गोत्रपरम्परागतख्यातिः कान्तिर्वा। प्रहारैश्छाया संभावना इति **कुः** (कुलनाथः)। विक्रमैः शक्तिसम्पद्भिः परिजनः, जीवितेन चाभिमानो जिगीषुगर्वः। यशः शरीरेण रक्ष्यते। गुरुकमिति रक्ष्यत इति च क्रियाविशेषणं वा। शरीरेण गुरुकं यश इति वा। रक्ष्यत इति सर्वत्र योज्यम् ॥३५॥

---

1 ०भवो Ms, which corrects वो into डो marginally. 2 ०साहअ० GB. 3 ०ट्टो० GB. 4 विक्कमेण Ms.

भिज्जइ उरो ण हिअअं गिरिणा [1]भिज्जइ रहो ण उण उच्छाहो।
छिज्जन्ति[2] सिर-णिहाआ तुङ्गा ण उण रण-दोहला[3] सुभ-
डाणं ॥३६॥

[भिद्यते उरः न हृदयं गिरिणा भिद्यते रथः न पुनः उत्साहः।
छिद्यन्ते शिरो-निघाताः तुङ्गाः न पुनः रण-दोहदाः सुभटानाम्॥]

गिरिणा भटानामुरो वक्षःस्थलं भिद्यते न हृदयं चित्तं, भिद्यते रथो न पुनरुत्साहः, छिद्यन्ते शिरोनिवहा न पुनस्तुङ्गा रणदोहदा युद्धाभिलाषाः सुभटानां, "दोहदेषु ल" इत्यनेन दोहदशब्दान्तिम-दकारस्य लकारः ॥३६॥

सेलोज्झरेहि गअणे धुअ-लोहिअ-सीभरेहि धारा-मग्गे।
मअ-सलिलेण[4]घडासु अ वोच्छिज्जइ पसरिअं महि-रउट्ठाणं ॥३७॥

[शैल-निर्झरैः गगने धुत-लोहित-शीकरैः धारा-मार्गे।
मद-सलिलेन घटासु च व्यवच्छिद्यते प्रसृतं मही-रज-उत्थानम्॥]

प्रसृतं महीरजसामुत्थानमुद्गमनं शैलनिर्झरैर्गगनं व्यवच्छिद्यते, धुतैर्लोहितशीकरै रुधिर-कणैर्धारामार्गे खड्गादिप्रहारपथे। धारामार्गे खड्गादिसञ्चरणपथे इति **श्रीः** (श्रीनिवासः) रथगतिपथ इति **कुलनाथः**। "धारा सैन्याग्रिमस्कन्ध-सन्तत्यां पत्तनान्तरे। परद्रव्य-प्रपाते च तुरङ्गगतिपञ्चके। खड्गादीनाञ्च निशिते मुखे धारा प्रकीर्तिता" इति **विश्वः**। मदसलिलेन गजघटासु गजसन्निवेशेषु, तथा च लोचनावरकतया यज्जनितकौतुकाव-लोकनं कर्तुं यद्रजः प्रारभते तैरेव ईर्षया तत् दूरीक्रियते। आस्तां तावद्रजस्तदुत्थानमेव व्यवच्छिन्नमित्युक्तम् ॥३७॥

---

1 भ० GB. 2 भि० Ms. 3 ०लो Ms. 4 ०लेहि GB.

विसहिअ-खग्ग-प्पहरा गइन्द-दन्त-लिहिअग्गला-पडिरूवा[1] ।
सेला[F90b]इञ्छण-वलिआ विसअं[2] भज्जन्ति पवअ-बाहु-
प्फलिहा[3] ॥३८॥

[विषोढ-खड्ग-प्रहाराः गजेन्द्र-दन्त-लिखितार्गला-प्रतिरूपाः ।
शैलातिक्रमण-वलिताः विशदं भज्यन्ते प्लवग-बाहु-परिघाः ॥ ]

विषोढखड्गप्रहारा गजेन्द्रदन्तलिखितार्गलाप्रतिरूपाः प्लवगबाहुपरिघाः शैलस्योत्क्षेपणेन वलिताः पृष्ठतः परिवृत्तिं गता वसन्तो विशदं यथा स्यात्तथा भज्यन्ते । खड्गप्रहारच्छिन्नस्य बाहोर्भङ्गमप्यगणयित्वा रोषेण शैलास्तुलिता इत्यर्थः ॥३८॥[4]

[5]तण्हाइओ वि रुहिरं[6] सण्णाह-च्छेअ-गब्भिणम्मि वण-मुहे ।
णिव्वलिअ-लोह-विरसं ण पिअइ आमुअइ चक्खिऊण
विहङ्गो ॥३९॥

[तृष्णा-जितः अपि रुधिरं सन्नाह-च्छेद-गर्भिते व्रण-मुखे ।
निर्वलित-लोह-विरसं न पिबति आमुञ्चति आस्वाद्य (जक्षित्वा) विहङ्गः॥]

तृष्णाजितोऽपि तृष्णाभिभूतोऽपि विहङ्गः काकादी रुधिरं न पिबति, आमुञ्चति, रुधिरं कीदृशं सन्नाहस्य कवचस्य छेदेन खण्डेन गर्भिते व्रणमुखे निःशेषेण वलितैश्चिरं संभक्तैर्लोहैः कवचसम्बद्धिभिर्विरसं विरुद्धस्वादं 'चक्खिऊण' आस्वाद्य आमुञ्चतीत्यत्र आशब्द ईषदर्थे, इति **केचित्**। **कुलनाथस्तु** लौहस्य सन्नाहस्य छेदैर्गर्भिते व्याप्तमध्ये व्रणमुखे निर्वलितेन गृहीतसारेण लौहेन विरसमुद्वेजकं रुधिरं न पिबतीत्याह ॥३९॥

---

1 ०आ GB. 2 विसमं GB. 3 ०प्फडिहा GB ; ०आ Ms.
4 Ms has after the number the word श्रीहरिः, to fill up the space.
5 तेण्हाइ० GB ; तण्हाविओ Ms, which has marginally इ for वि.
6 सुइरं GB.

वेवइ पडिओ वि भुओ [1]ओसुद्धे वि वअणम्मि धरइ अमरिसो ।
लुअ-सीसम्पि[2] कमन्धं[3] धावइ[4] उक्खित्त-कण्ठ-लोहिअ-
धारं ॥४०॥

[वेपते पतितः अपि भुजः अवपतिते अपि वदने ध्रियते अमर्षः ।
लून-शीर्षं अपि कबन्धं धावति उत्क्षिप्त-कण्ठ-लोहित-धारम् ॥ ]

पतितोऽपि भुजो वेपते प्रहाराय रोषेण वा स्पन्दते । 'ओसुद्धे'ऽपि अवपतितेऽपि वदने अमर्षो ध्रियते तस्थैभ्रूकुट्यादिभिरिति भावः । छिन्नपतितेऽपि वदनेऽमर्षः क्रोधो भ्रुकुट्यादिरूपेण ध्रियते अवतिष्ठत इति **कुः** (कुलनाथः) । लूनशीर्षमपि कबन्धमपमूर्धं कलेवरं रयेण वेगेनोत्क्षिप्तकण्ठलोहितधारं धावति प्रतिपक्षाभिमुखं याति । पाठान्तरे तिष्ठति न पततीत्यर्थः । "कबन्धे म" इत्यनेन बकारस्य मकारः । कबन्ध इत्यनेनैव सिद्धौ लूनशीर्षपदं कबन्धान्तरगणविशेषव्यावृत्त्यर्थमिति भावः ॥४०॥

देइ रसं रिउ-पहारो वहइ धुरं विक्कमस्स वेराबन्धो ।
आअड्ढिअ-पर[5]-रहसो दप्पं वड्ढेइ आगओ[6]अइभारो ॥४१॥

[ददाति रसं रिपु-प्रहारः वहति धुरं विक्रमस्य वैराबन्धः ।
आकृष्ट-पर-रभसः दर्पं वर्धयति आगतः अतिभारः ॥ ]

रिपुकृतः प्रहारो रसं परितोषं ददाति । साधुसौष्ठवेनामुना प्रहारो दत्त इति कृत्वा परितोषमुत्साहं ददातीति **कुलनाथः** । वैराबन्धोऽर्थाद्बन्धुवधादिकृतो विक्रमस्य धुरं वहति प्रापयति । शक्त्यनुरूपं चेष्टत इति **कुलनाथः** । आकृष्टपररभसोऽपनीतपरोत्साहोऽतिभारः संग्राम आगतो दर्पं वर्धयति हर्षेण शक्त्यतिशयं जनयति । आकृष्टः परेषां

---

1 ओसुद्धम्मि GB. 2 ०म्मि Ms. 3 कबन्धं GB, (cf Hem. VIII. I. 239 "कबन्धे म-यौ" 4 धाइ रउक्खित्त० Ms, which has also ठाइ marginally. 5 ०रण० GB. 6 आअओ GB.

शत्रूणां परः श्रेष्ठो वा रभस आनन्दो येन तादृशः सन् दर्पं वर्धयति । रिपुप्रहारजनितोत्साहेन विक्रमं कुर्वन् बलवता सह संग्रामेण प्राप्तपरितोषः सन्नधिकदर्पशाली भवतीत्यर्थः ॥४१॥

साहेइ रिउं व जसं ण सहइ आआरिअं व काल-क्खेवं ।
लहइ सुहम्मिव णामं[1] जीअं मुअइ समुहं पहरणं व भडो ॥४२॥

**[साधयति रिपुं इव यशः न सहते आकारितं इव काल-क्षेपम् ।
लभते सुखं इव नाम जीवं मुञ्चति संमुखं प्रहरणं इव भटः ॥ ]**

रिपुमिव यशः साधयत्यायत्तीकरोति रिपोरायत्तीकरणादेव यश-आयत्तीकरणमिति भावः । एवमाकारितमागच्छागच्छेत्याह्वानमिव कालक्षेपं न सहते । आह्वानसमकालमेव समरोपसर्पणादिति भावः । सुखमिव नाम ख्यातिं लभते प्रख्यातिलाभकाल एव सुखस्य लाभादिति भावः । प्रहरणमिव संमुखं जीवं मुञ्चति भटः, यावज्जीवनं तावत् प्रहरणं न मुञ्चतीति भावः । प्रकृतोपमेयम् । सर्वत्र सहोपमेति **केचित्** । साधयति मारयति । पक्षे, उपार्जयति रिपुमिव यशः ॥४२॥

विसहिअ-खग्ग-प्पहारा विअलिअ-लोहिअ-किलन्त[2]णीसार-
भुआ ।
मच्छिजन्तोअल्ला अक्कन्ता णिअअ-महिहरेहि[3] पवङ्गा ॥४३॥

**[विषोढ-खड्ग-प्रहाराः विगलित-लोहित-क्लान्त-निःसार-भुजाः ।
मूर्छदवनताः आक्रान्ताः निजक-महीधरैः प्लवङ्गाः ॥ ]**

विषोढखड्गप्रहारा विगलितेन लोहितेन क्लान्ताः परिश्रान्ता निःसारा बलशून्या भुजा येषां, बलशून्यतया मूर्छन्त एवावनताः प्लवङ्गा निजकमहीधररेवाक्रान्ताः परार्थमुद्यतैः शैलैरेव व्यापादिता इत्यर्थः । ओअल्ल-शब्दोऽवनते देशी ॥४३॥

---

1 णासं GB. 2 ०किलिन्त० GB. 3 ०महो० Ms.

दअइ [1]कुसुमं व[F91a]माणं वड्ढन्तम्पि अणहं पत्तिआइ[2] जसं ।
ण करेइ लोअ-गरुए जीए[3] च्चिअ णवर आअरं भड-सत्थो ॥४४॥

[दयते कुसुमं इव मानं वर्धमानं अपि अनघं प्रत्येति यशः ।
न करोति लोक-गुरुके जीवे एव केवलं आदरं भट-सार्थः ॥ ]

[F91a] कुसुममिव मानं दयते पालयति मनागपि तस्य मालिन्यं न सहत इत्यर्थः । अनघं व्यसनशून्यं यथा स्यात्तथा वर्धमानमपि यशो न प्रत्येति वर्तमानेऽपि [4]यशसि न प्रत्ययं करोतीत्यर्थः । लोकगुरुके लोकबहुमते जीवित एव केवलं भटसार्थ आदरं न करोति । लोकबहुमतानां मानयशोजीवितानां मध्ये आद्यावेव जीवनव्ययेनाप्यादरणीयाविति भावः । **केचित्तु** कुसुममिव मानं दयते रक्षति न म्लापयति । परिवर्धमानमप्यनघमपापं यशो न प्रत्येति न श्रद्दधातीति **लोकनाथः**॥४४॥

णिहआलक्खिअ-जोहे जाए लहुअम्मि[5] णिअअ-धारा-मग्गे ।
परिवड्ढन्ताइ-भरं गरुअं पर-संकुलं अइन्ति समत्थाः ॥४५॥

[निहतालक्षित-योधे जाते लघुके निजक-धारा-मार्गे ।
पपिवर्धमानाति-भरं गुरुकं परसंकुलं आयान्ति समर्थाः ॥ ]

गतिलाघवादलक्षितनिहतयोधे परनिपातादन्वयः, अतएव धारामार्गे खड्गव्यापारपथे लघुके सम्मर्दशून्ये जाते सति, परिवर्धमानोऽतिभारो यत्र, अतएव गुरुकं दुष्प्रवेशं, परेषां संकुलं सम्मर्दं समर्था अभिगच्छन्ति । यथा यथा प्रतिपक्षः पराजीयते तथा तथा तज्जन्यानन्दानुभवस्य वर्धमानत्वादिति भावः । निहता आलक्षिता हन्तुं लक्ष्यीकृता योधा यत्रेति **कुः** (कुलनाथः) ॥४५॥

---

1 कुसुअं GB. 2 पत्त० Ms. 3 जीअ GB. 4 शयसि Ms, evidently a mistake. 5 ०अम्पि Ms.

धारेन्ति जसस्स धुरं एन्तं[1] ण सहन्ति विक्कमस्स परिहवं ।
रोसस्स करेन्ति[2] धिइं माणं वड्ढन्ति साहसस्स समत्था ॥४६॥

[धारयन्ति यशसः धुरं आयान्तं न सहन्ते विक्रमस्य परिभवम् ।
रोषस्य कुर्वन्ति धृतिं मानं वर्धयन्ति साहसस्य समर्थाः ॥ ]

धारयन्ति यशसो धुरं यशोहेतु कर्म न त्यजन्तीत्यर्थः । विक्रमस्यागच्छन्तं परिभव-मर्थाद्वैरिकृतं न सहन्ते, पराभवस्यागमनमेव न सहन्ते किं पुनस्तत्सम्बन्धमिति भावः । रोषस्य धृतिं धारणं कुर्वन्ति । यद्वा, शत्रुवधेन सरसीकरणात्तस्य प्रीतिमुत्पादयन्तीत्यर्थः । साहसस्य मानमुन्नतिं वर्धयन्ति । समर्था इति सर्वत्र सम्बध्यते । रोषस्य धैर्यं कुर्वन्तीति **केचित्** ॥४६॥

पहरासाइअ[3]-हरिसं खण-मुच्छा-घडिअ[4]-रण-मणोरह-सोक्खं ।
जीविअ-पत्त[5]च्छरसं सिर-परिअत्तिअ[6]-जसं विअम्भइ समरं ॥४७॥

[प्रहारासादित-हर्षं क्षण-मूर्छा-घटित-रण-मनोरथ-सौख्यम् ।
जीवित-प्राप्ताप्सरः शिरः-परिवर्तित-यशः विजृम्भते समरम् ॥ ]

ईदृशं समरं विजृम्भते, कीदृशं, प्रहारेणार्थायोग्येनासादितो हर्षो यत्र, क्षणं मूर्छया घटमानं घटितं वा । पाठान्तरे, रणमनोरथसौख्यं यत्र । रणमनोरथसौख्यं रणाभिलषित-सुखमिति **कुलनाथः** । जीवेनार्जिताः प्राप्ता अप्सरसो यत्र, शिरसा परिवर्तितं यशो यत्र । **केचित्तु** प्रहरणेन परयुक्तेनासादितः प्राप्तो हर्षः प्रीतिर्यत्र । क्षणं मूर्छया घटितं रणमनोरथसौख्यं रणकांक्षितं निर्वाणसुखं यत्र । पाठान्तरे तु मूर्छया हृतं रण-मनोरथसौख्यं यत्र तत् समरं विजृम्भते विकसतीति **केचित्** ॥४७॥

---

1 पत्तं a reading marginally noticed in Ms. 2 करेइ Ms.
3 ०हिअ० Ms, which has ०हरिअ० marginally. 4 ०गलिअ० GB.
5 जीअ-विढत्त० G ; जीअविढन्त० B. 6 ०वत्तिअ० GB.

सन्देहेसु हसिज्जइ रज्जिज्जइ साहसे रमिज्जइ वसणे ।
मुच्छासु वीसमिज्जइ णिव्बुढन्ति णवरं गणिज्जइ मरणे ॥४८॥

[सन्देहेषु हस्यते रज्यते साहसे रम्यते व्यसने ।
मूर्छासु विश्रम्यते निर्व्यूढं इति केवलं गण्यते मरणे[1] ॥ ]

सन्देहेषु प्राणसंशयविषयेषु हस्यते उत्साहः क्रियते। संदेहेषु संकटेषु हस्यते। यद्वा, सन्देहेषु शत्रुणा क्रियमाणेषु जीवनसंकटाध्यवसायेषु हस्यते उपालभ्यते अर्थाच्छत्रुः। साहसे जीवनिरपेक्षकर्मणि रज्यते, व्यसने बलवद्विपक्षाभियोगे रम्यते क्रीड्यते। मूर्छासु विश्रम्यते निर्व्यापारैः स्थीयते। मरणे केवलं निर्व्यूढमिति गण्यते, अर्थादेतत् कार्यमिति भटैरिति प्रकरणात् ॥४८॥

चलिओ अ चलण[2]-पहओ अउव्व-दिण्ण-रवि[3]-मण्डल[4]गहासङ्को ।
अत्थेक्क-कड्ढिअ[5]-णिसो अभाअ-भग्ग-दिअसो महि-रउग्घा
[F91b]ओ ॥४९॥

[चलितः च चरण-प्रहतः अपूर्व-दत्त-रवि-मण्डल-ग्रहाशङ्कः ।
अकस्मादाकृष्ट-निशः अभाग-भग्न-दिवसः मही-रज-उद्घातः ॥ ]

चरणैरर्थाद्रथतुरङ्गादीनां प्रहतः, अकालकृतत्वादपूर्वो दत्तो रविमण्डलाय ग्रहाशङ्का राहुत्रासो येन स तथा। अपर्व इति पाठे अपर्वणि अमावास्यातिरिक्ते तिथौ दत्तरविमण्डलग्रहाशङ्क इत्यर्थः। अकस्मादाकृष्टा उपनीता निशा तमस्विनी येन, अभागेऽनवसरे भग्नो दूरीकृतो दिवसो येन। ईदृशो महीरजसामुद्घातश्चलितः। चकारः पूर्वापेक्षया समुच्चये। कट्ठिअ इति पाठे आकृष्टा इत्यर्थः ॥४९॥

---

1 भ० Ms, marginally noted. 2 ०चर० GB. 3 ०रइ० GB.
4 ०ग्गहा० Ms. 5 ०वड्ढि० Ms, which has क० marginally.

मूले बहलुग्घाओ मज्झोआसे पसरिअत्तण-तलिणो[1] ।
णह-पुञ्जिअ-वित्थरिओ पडइ दिसासु गरुअत्तणेण महि-
रओ ॥५०॥

[मूले बहलोद्‌घातं मध्यावकाशे प्रसारितत्व-तलिनम् ।
नभः-पुञ्जित-विस्तृतं पतति दिक्षु गुरुकत्वेन मही-रजः ॥ ]

[F91b] मूले मूलावच्छेदे रणाङ्गणे बहलो निविड उद्घातो यस्य, उपक्रमो निवहो वा यस्य, सान्द्रतयोत्थानादिति भावः। मध्यावकाशे प्रसारितत्वेन वायुना विक्षिप्तत्वेन तलिनं विरलं, तलिनं कुट्टिममिति **कुलनाथः**। तुच्छमिति **केचित्**। नभसि पुञ्जित-विस्तृतं दूरे नभसि प्रसरणात् पुञ्जितं विचतुरैरेकीभूतं सद्विस्तृतं, परस्परसंश्लेषादेव गुरुत्वान्महीरजो दिक्षु पतति ॥५०॥

मुअइ भरेइ णु वसुहं णीइ दिसाहि[2] णु थएइ[3] णु दिसा-अक्कं ।
अदिट्ठ-णिग्गम-वहो पडइ णहाहि गअणं विलग्गइ णु
रओ ॥५१॥

[मुञ्चति बिभर्ति नु वसुधां निरैति दिग्भ्यः नु स्थगयति नु दिक्-चक्रम् ।
अदृष्ट-निर्गम-पथं पतति नभसः गगनं विलगति नु रजः ॥ ]

अदृष्टनिर्गमपथं रजो वसुधां मुञ्चति, नु वितर्के, बिभर्ति पूरयति, दिग्भ्यो निर्गच्छति नु, दिक्चक्रं स्थगयति नु, नभसः पतति नु। नभो विलगति। वितर्कान् प्रत्यदृष्टनिर्गमपथमेव हेतुः ॥५१॥

---

1 ०तडि० GB. 2 ०हिं GB, without the following णु. 3 त्थ० Ms.

दीसइ रअणिअर-बलं पवङ्ग-जोहेहि[1]मासल[2]-रअन्तरिअं ।
ओसाअ-हअस्स[3] ठिअं पुरओ मणि-पव्वअस्स[4]व हअ-
च्छाअं ॥५२॥

[दृश्यते रजनीचर-बलं प्लवङ्ग-योधैः मांसल-रजोऽन्तरितम् ।
अवश्याय-हतस्य स्थितं पुरतः मणि-पर्वतस्य इव हत-च्छायम् ॥ ]

प्लवङ्गमयोधैरर्थात् पिङ्गवर्णैरुपलक्षितं मांसलै रजोभिरन्तरितं रजनीचरबलं अवश्यायहतस्य मणिपर्वतस्य पुरः स्थितं हतच्छवि खण्डच्छायमिव दृश्यते अर्थाज्जनैः । पाठान्तरे विकटच्छायं, एतेन वानररजसोर्यथाक्रमं मणिपर्वतनीहारसाम्यं राक्षसबलस्य खण्डच्छायसादृश्यमुक्तं, हतच्छायं रजोऽन्तरितत्वाद्गलितप्रभं निशाचरबलमित्यर्थ इति **कुलनाथः** । प्लवङ्गमयोधैः सहितं रजनीचरबलं दृश्यते, कीदृशं, एवंभूतस्य मणिपर्वतस्य पुरतः स्थितमिव, दीप्रत्वाद्वानराणां मणिपर्वतसाम्यं मलिनत्वादवश्यायसाम्यं रजसः प्लवङ्गमयोधस्य कर्तृत्वपक्षेऽपि लगतीति **केचित्** ॥५२॥

ओधूसरिअ-धअ-वडो पसरइ मइलिअ-तुरङ्गम-मुह-प्फेणो ।
कसण-मिहिअ व्व तणुओ णहम्मि [5]सामलइआअवो रअ-
णिवहो ॥५३॥

[अवधूसरित-ध्वज-पटः प्रसरति मलिनित-तुरङ्गम-मुख-फेनः ।
कृष्ण-मेघिका इव तनुकः नभसि श्यामलितातपः रजो-निवहः ॥ ]

अवधूसरिता ध्वजपटा येन, मलिनितस्तुरङ्गाणां मुखस्य फेनो येन, श्यामलित आतपः सूर्यकिरणो येन, स रजोनिवहः कृष्णमेघिकेव तनुको नभसि प्रसरति । मेघिका स्वल्पमेघः । श्यामलितातपश्चेदतः कृष्णमेघिकेव वायुना विस्तारितत्वात् क्रमशः क्षीयमाणत्वात्तनुक इति **लोकनाथः** ॥५३॥

---

1 °हिं Ms. 2 °मंसल° B. 3 ओसाहअस्स व Ms.
4 विअड° Ms, which has, however, noticed हअ° marginally.
5 सामलिआ° Ms.

वाणर-रहस-विसज्जिअ-णहङ्गणोवइअ-सेल-मग्ग-णिराओ ।
रइणो[1] कलुस-च्छाओ पडइ पणालोज्झरो व्व किरणु-
ज्जोओ ॥५४॥

[वानर-रभस-विसर्जित-नभोङ्गणावपतित-शैल-मार्ग-निरायतः ।
रवेः कलुष-च्छायः पतति प्रणाल-निर्झरः इव किरणोद्योतः ॥ ]

वानरेण रभसेन विसर्जितस्य नभोङ्गनादवपतितस्य शैलस्य मार्गेण निरायतो दीर्घो रजसः सम्पर्कात् कलुषच्छायो रविकिरणानामुद्योतः प्रकाशः प्रणालेर्निर्झर इव पतति। द्वयोः प्रणाली पयसः पदव्यामित्यमरः ॥५४॥

कुविओहरिअ[2]-णिसाअर-पवअ-दढ-क्खन्ध-पूरिअद्धन्तासु ।
मासल-महु-कोस-णिहो बज्झइ[3] बद्ध[F92a] रुहिरासि-धारासु
रओ ॥५५॥

[कुपितावहृत-निशाचर-प्लवग-दृढ-स्कन्ध-पूरितार्धान्तासु ।
मांसल-मधु-कोष-निभं बध्यते बद्ध-रुधिरासि-धारासु रजः ॥ ]

प्राकृते पूर्वनिपातनियमात् कुपितैर्निशाचरैरवहृता व्यापारिता प्लवगानां दृढस्कन्धेषु विशीर्णा अर्धान्ता एकदेशा यासां[4] तासु, बद्धरुधिरासु असिधारासु मांसलमधुकोषनिभं घनमधुवाससदृशं रजो बध्यते संसक्तं भवति। **केचित्तु** प्लवगानां दृढे कर्कशे स्कन्धे पूरितैकदेशासु स्कन्धस्य दृढत्वाद् विशालत्वाच्च बद्धं संस्त्यानतां प्राप्तं रुधिरं यासु, एवंरूपास्वसिधारासु [5]मांसलस्य निविडस्य[5] मधुकोषस्य निभं सदृशं सत् सम्बध्यते संश्लेषमेतीत्याहुः ॥५५॥

---

1 रविणो Ms. 2 ०सरिअ० Ms. which has ०हरिअ० marginally, the reading of GB. 3 बज्झउ GB. 4 येषां Ms. 5 Ms. has these words written twice.

रण-परिसक्कण-विहला[1] [2]रवि-किरणाहअ-किलन्त[3]-मउलिअ-णअणा ।
णिव्वाअन्ति गइन्दा सीभर-संवलिअ-रेणु-कद्दमिअ-मुहा ॥५६॥

[रण-परिसर्पण-विह्वलाः रवि-किरणाहत-क्रान्त-मुकुलित-नयनाः ।
निर्वान्ति गजेन्द्राः शीकर-संवलित-रेणु-कर्दमित-मुखाः ॥ ]

[F 92a] रणे युद्धे परिसर्पणेन सर्वतो भ्रमणेन विकलाः । पाठान्तरे तु विह्वलाः, रवि-किरणैराहताश्चेदतः क्रान्तत्वान्मुकुलितनयना गजेन्द्राः समरपण्डिताः करिणः शीकरैः करेण निजमुखादाकृष्टैर्जलकणैः सम्वलितेन रेणुना कर्दमितमुखाः सन्तो निर्वान्ति गलित-परिश्रमा भवन्ति । परिश्रान्ता गजाः कराग्रेण निजमुखात् सलिलमाकृष्य देहोपरि क्षिपन्तीति तेषां स्वभावः । शीकरैर्मदजलकणैः निर्वाणमायान्ति निर्वृतिं गच्छन्तीति कुः (कुलनाथः) ॥५६॥

मूलाहोअ[4]-कराला सोणिअ-सोत्त-णिवहान्तराल-पसरिआ ।
एक्केक्कमेण[5]समअं सम्बज्झन्ति उअरिं महि-रउप्पीला[6] ॥५७॥

[मूलाभोग-करालाः शोणित-स्रोतो-निवहान्तराल-प्रसृताः ।
एकैकक्रमेण समकं सम्बध्यन्ते उपरि मही-रज-उत्पीडाः ॥ ]

मूलाभोगे उत्पत्तिदेशे करालाः शोणितेनाक्रान्ते क्वापि क्वापि देशे जातत्वाद्विच्छिन्ना इत्यर्थः, शोणितस्रोतोनिवहान्तरालैः प्रसृता उपरि धावन्तो महीरजसामुत्पीडाः समूहा उपरिदेशे सममेकदा परस्परं सम्बध्यन्ते । अत्र 'समअ'मिति पदेन बन्धूनामिव रजसां परस्परं संश्लेषे कालक्षेपासहिष्णुत्वं सूचितमिति **केचित्** । महीरजसामुत्पीडाः समूहा उपरि स्वयं सम्बध्यन्ते कर्मकर्तरि प्रयोग इति **केचित्** ॥५७॥

---

1 ०अ० (for ०ह०) Ms marginally. 2 रइ० GB. 3 ०लि० GB.
4 ०भो० Ms. 5 एक्कः GB. 6 मही० Ms.; महि-लउप्पीडा GB.

णिव्वालेऊण[1] णहे गअ-सुक्कारिअ-वलन्त-धअ-वड-तणुइं[2] ।
पवणो कड्ढइ विसमं छाआ-वह-पट्ठ-धूसरं रअ-लेहं[3] ॥५८॥

[निर्वाल्य नभसि गज-सूत्कारित-वलद्-ध्वज-पट-तन्वीम् ।
पवनः कर्षति विषमं छाया-पथ-पृष्ठ-धूसरां रजो-लेखाम् ॥ ]

गजानां सूत्कारितेन सशब्दनासापवनेन चलद्भिर्ध्वजपटैस्तन्वीं, यद्वा गजानां सशब्द-नासापवनेन वलता ध्वजपटेन च तन्वीम्, अतएव छायापथस्य दक्षिणोत्तरगमनप्रसृतस्य देवमार्गस्य पृष्ठमिव धूसरां रजोलेखां, विषममितस्ततो नभसि पृथक् कृत्वा पवनः कर्षति । इतस्ततः कर्षणं ध्वजपटचलनरीत्येति भावः। ध्वजपटैस्तनूकृतत्वात् पृथक् कृत्वा पवनेन चाल्यमानत्वाच्च छायापथस्य खण्डाभ्रच्छायामार्गस्य पृष्ठवद्धूसरां, सोऽपि तनुरातपाच्च पृथग्भूतः पवनेनापि कृष्यमाणो भवतीति **केचित्** ॥५८॥

संरुम्भइ दिट्ठि-वहं गआण अभिमुह-पहाविआण रण-मुहे ।
मारुअ-कम्पिज्जन्तो वअणब्भासम्मि मुह-वडो व्व महि-रओ ॥५९॥

[संरुणद्धि दृष्टि-पथं गजानां अभिमुख-प्रधावितानां रण-मुखे ।
मारुत-कम्प्यमानं वदनाभ्यासे मुखपटः इव मही-रजः ॥ ]

रणमुखे समराग्रे प्रतिहस्तिनां वानराणां वा अभिमुखप्रधावितानां गजानां वदनाभ्यासे मुखसमीपे मारुतेन कम्प्यमानं महीरजो मुखपट इव दृष्टिपथं संरुणद्धि ॥५९॥

---

1 ०हेऊण Ms. 2 ०अं Ms. which corrects it to इं marginally.
3 ०णिवहं Ms.

णवरि अ भड-वच्छ-त्थल-वण-विवर[1]-णिराअ-पत्थिउच्छलि-
आए ।
रुहिर-णईअ महि-रओ उम्मूलिअ-कूल[2]-पाअवो व्व
णिसुद्धो ॥६०॥

[अनन्तरं च भट-वक्षःस्थल-व्रण-विवर-निरायत-प्रस्थितोच्छलितया ।
रुधिर-नद्या मही-रजः उन्मूलित-कूल-पादपः इव पातितम् ॥ ]

अनन्तरञ्च भटवक्षःस्थलव्रणविवरेभ्यः, पाठान्तरे व्रणविवरेभ्यो[3] निरायतप्रस्थितोच्छलितया रुधिरनद्या उन्मूलितः कूलपादप इव महीरजः पातितं प्रशमितमित्यर्थः । रुधिरनद्यामेव विलीनमित्यर्थ इति **लोकनाथः** । 'निसुद्ध'-शब्दः पातितार्थे देशीयः ॥६०॥

पलहुअ-णीहार-णिहं संहारिअ[4]-कमल-णाल-तन्तु-च्छाअं ।
घोलइ दर-वोच्छिण्णं मारुअ-भिण्ण-तलिण-ट्ठिअं रअ[F92b]-
सेसं ॥६१॥

[प्रलघुक-नीहार-निभं संहारित-कमल-नाल-तन्तु-च्छायम् ।
घूर्णते दर-व्यवच्छिन्नं मारुत-भिन्न-तलिन-स्थितं रजः-शेषम् ॥ ]

मारुतभिन्नत्वात् तलिनस्थितं विरलतयावस्थितमतो रुधिरनद्यां रजोऽन्तरस्य निपातत्रासेन व्यवच्छिन्नं, "दरो स्त्रियां भये"इत्य**मरात्**, पृथग्भूतम्, अतएव प्रलघुकनीहारनिभं संघटितानां कमलनालानाम्, पाठान्तरे संहारितानां, पाठान्तरे उत्खण्डितानां कमलनालानां तन्तुच्छायं रजःशेषं घूर्णते परितो भ्रमति । दरव्यवच्छिन्नमीषद्व्यवच्छिन्नमिति **कुलनाथः श्रीनिवासश्च** । मारुतेन छिन्नमुत्सारितं सत् तलिनस्थितमिति **केचित्** । मारुतभिन्नतलिनस्थितस्यैव गमकत्वे अन्यविशेषणस्याकृष्टार्थकता विचार्येति लो (**लोकनाथः**) ॥६१॥

---

1 ॰मग्ग॰ GB ; this reading being noticed marginally in Ms.
2 ॰दूल॰ Ms, evidently wrongly. 3 Evidently the commentator meant ॰व्रणमार्गेभ्यो here. 4 Ms has marginally noticed two other readings संघाडिअ॰ and उक्खण्डिअ॰ ; संघाइअ GB.

रुम्भन्तुज्जुअ-मग्गं धराहरन्तर-वलन्त-णइ-सोत्त-णिहं ।
वलइ बलन्त-धअ-वडं पडिअ-गइन्द-णिवहन्तरालेसु बलं ॥६२॥

[रुध्यमान-ऋजुक-मार्गं धराधरान्तर-वलन्-नदी-स्रोतो-निभम् ।
वलते वलद्-ध्वज-पटं पतित-गजेन्द्र-निवहान्तरालेषु बलम् ॥ ]

[F 92b] पतितस्य गजेन्द्रनिवहस्यान्तरालेषु रुध्यमान-ऋजु-मार्गं वलद्ध्वजपटं बलं वलते वक्रतया गच्छति। अतएव धराधरान्तराले वलद् गच्छद्यन्नदीस्रोतस्तन्निभं वलते भ्रमित्वा प्रसरतीति कुः (कुलनाथः) ॥६२॥

दूसह-सहिअ-प्पहरा दुव्वोज्झ-विलग्ग-समर-णिव्वूढ-भरा ।
ओच्छुण्ण[1]-दुग्गम-पहा[2]कअ-दुक्कर-पेसणा पडन्ति पवङ्गा ॥६३॥

[दुःसह-सोढ-प्रहाराः दुर्वह-विलग्न-समर-निर्व्यूढ-भराः ।
अवक्षुण्ण-दुर्गम-पथाः कृत-दुष्कर-प्रेषणाः पतन्ति प्लवङ्गाः ॥ ]

विषोढो दुःसहः प्रहारो यैः, अन्यैर्दुर्वह आत्मना विलग्नः प्रतीष्टो निर्व्यूढश्च भरः कार्यभारो यैः, अवक्षुण्णो दुर्गमः प्रतिपक्षसम्मर्दाद् दुष्प्रवेशः पन्था यैः, कृतं निर्विहितमन्यैर्दुष्करं प्रभुकार्यं यैस्ते प्लवङ्गाः पतन्ति। राक्षसहता युद्धभूमौ शेरत इत्यर्थः। दुःसहः सोढः प्रहारो यैरिति **कुलनाथः**। पतन्ति म्रियन्त इति **केचित्** ॥६३॥

बन्धु-वह-बद्ध-वेरं सहस्स-पूरण-कमन्ध[3]-जणिआमोअं ।
वड्ढइ भड-दिण्ण-रसं भुअ[4]-पव्वअ[5]-लहुअ[6]-वीर-पडणं[7]
जुज्झं ॥६४॥

[बन्धु-वध-बद्ध-वैरं सहस्र-पूरण-कबन्ध-जनितामोदम् ।
वर्धते भट-दत्त-रसं भुज-पर्वत-लघुक-वीर-पतनं युद्धम् ॥ ]

---

1 ०च्छु० Ms. 2 Ms. has noticed 'व' (for 'प') marginally.
3 ०ब० GB. 4 ०ज० GB. 5 ०पब्बल० GB. 6 ०पहुअ० GB. 7 वीरपतनं Ms.

बन्धुवधेन बद्धं वैरं यत्र, सहस्रपूरणेन कबन्धेन जनित आमोदो यत्र। सहस्रे पतिते एकः कबन्धो नृत्यतीति वार्ता। भटेभ्यो दत्तो रसोऽनुरागो येन, भुजाभ्यां पर्वतैश्च विधूतानां वीराणां पतनं यत्र, ईदृशं युद्धं वर्धते। रिपोर्भुजपर्वताद् गृहीतोत्क्षिप्ताल्लघुकवीरस्य पतनं यत्र तत्तथाभूतं युद्धं प्रवर्तत इति **कुलनाथः**। पाठान्तरे तु भयप्रवणानां बहुलवीराणां पतनं यत्रेत्यर्थः। "कबन्धे म" इत्यनेन बकारस्य मकारः ॥६४॥

**मणिबन्धागअ-पुञ्जिअ-सण्णाह-च्छेअ-वलअ-दिण्णावेढं।**
**णेउं ण चएइ सिवा[1]मूल-च्छिण्ण-गरुअं णिसिअरस्स भुअं ॥६५॥**

**[मणिबन्धागत-पुञ्जित-सन्नाह-च्छेद-वलय-दत्तावेष्टम्।**
**नेतुं न शक्नोति शिवा मूल-च्छिन्न-गुरुकं निशिचरस्य भुजम्॥]**

मणिबन्धं हस्तपुच्छमागतेन सन्नाहस्य छेदेन वलयेनेव दत्तावेष्टं, मूले कक्षदेशे छिन्नत्वाद् गुरुकं निशिचरस्य भुजं शिवा शृगाली नेतुं चालयितुं न शक्नोति, कक्षमूलच्छिन्नतया स्वभावादेव गुरुकं विशेषतश्छिन्नसन्नाहवेष्टितमूलत्वाद् गुरुतममतश्चालयितुमपि न शक्नोतीत्यर्थः ॥६५॥

**आवत्तन्तर-भमिआ[2]रुहिर-णिहाएसु पास-बद्ध-प्फेणा।**
**ओल्लन्त-पम्ह-गरुआ अत्थाअन्ति भमिऊण[3]-चमरुप्पोला[4] ॥६६॥**

**[आवर्तान्तर-भ्रान्ताः रुधिर-निघातेषु पार्श्व-बद्ध-फेनाः।**
**आर्द्रीयमाण पक्ष्म-गुरुकाः अस्तायन्ते भ्रान्त्वा चमरोत्पीडाः॥]**

---

1 सिआ GB. 2 ०वलिआ GB, this reading being noticed marginally in Ms. 3 पडिऊण GB, Ms giving this reading marginally. 4 ०प्पीडा GB.

रुधिरनदीनामावर्तान्तरेषु भ्रान्ता भ्रमिता इति **केचित्**। रुधिरसमूहेषु पार्श्वयोर्बद्धफेना आर्द्रीभवता पद्मणा गुरुकाश्वामराणामुत्पीडाः समूहा भ्रान्त्वा अस्तायन्ते मज्जन्ति भ्रमणादेव मन्थनदण्डवत् पार्श्वबद्धफेना इति **केचित्** ॥६६॥

**उद्ध-मुह-मुक्क-णाआ पुव्वद्ध-भरोसिअन्त-पच्छिम-भाआ।**
**कुम्भे पवअ-सिलाहअ-खुप्पन्तद्धङ्कुसे[1]धुणन्ति गइ [F93a] न्दा ॥६७॥**

**[ऊर्ध्व-मुख-मुक्त-नादाः पूर्वार्ध-भरावसीदत्-पश्चिम-भागाः।**
**कुम्भान् प्लवग-शिलाहत-क्षेप्यमाणार्ध्वाङ्कुशान् धुन्वन्ति गजेन्द्राः ॥]**

ऊर्ध्वमुखमुक्तनादा ऊर्ध्वमुखत्वादेव पूर्वार्धस्य भारेणावसीदत्पश्चिमभागाः प्लवगशिलाहताः क्षेप्यमाणार्धा निमज्जदर्धा[2] अङ्कुशा येषु तान् कुम्भान् गजेन्द्रा धुन्वन्ति ॥६७॥

**अह[3] पवअ-दरुब्भन्ता[4] पहरुज्जअ[5]-तिअस-भङ्ग-दाण-समुइआ।**
**जाआ रक्खस-जोहा [6]पढमुग्गअ-दुक्करं पडिवहाहिमुहा ॥६८॥**

**[अथ प्लवग-दरोद्भ्रान्ताः प्रहारोद्यत-त्रिदश-भङ्ग-दान-समुचिताः।**
**जाताः राक्षस-योधाः प्रथमोद्गत-दुष्करं प्रतिपथाभिमुखाः ॥]**

[F93a] अथानन्तरं वानरदरेण प्लवगेभ्यो भयेनोद्भ्रान्ताः संत्रस्ता व्याकुला इति **कुलनाथः**। प्रहारोद्यतानां त्रिदशानां भङ्गदानाय[7] समर्थाः। भङ्गदानाय समुचिता योग्या इति **कुलनाथः**। राक्षसयोधाः प्रथमोद्गतत्वादिदं प्रथमतया दुष्करं यथा स्यात्तथा, प्रतिपथाभिमुखाः [8]पलायनपथाभिमुखा जाताः, पलायनोद्यता जाता इति **कुः** ( कुलनाथः ),

---

1 ०न्तुद्ध० GB. 2 ०दर्द्धाङ्कु० Ms. खुप्प=मस्ज cf. H.C. 8.4.101.
3 The commentator Kṛṣṇa treats verses 68-99 of this Conto as belonging to Canto XIV. 4 ०भरु० GB, the whole of the first half of this *Skandhaka* was inserted by the scribe at the top of the text in the space reserved for the commentary. 5 ०रुज्जुअ० GB and Ms.
6 ०मुह्लअ० Ms. 7 ०नादाय० Ms. 8 This compound is twice written.

न तु लज्जया अकृतपूर्वं पलायनं त्यक्तवन्त इति भावः। प्रहारोद्यतानां प्रहारैः······ इति **केचित्**। पढमुल्लग्रं प्रथमे देशी ॥६८॥

**भग्ग-विणिअत्तिअ[1]-गअं णिअअ-ट्ठाण[2]-परिवत्तिओ[3]भग्ग-रहं।**
**एक्क-पअ-वलिअ-जोहं मण्डलि-दिण्ण-तुरअं णिसाअर-सेण्णं ॥६९॥**

**[भग्न-विनिवर्तित-गजं निजक-स्थान-परिवर्तिताद्यभग्न-रथम्।**
**एक-पद-वलित-योधं मण्डली-दत्त-तुरगं निशाचर-सैन्यम्॥]**

भग्नाः प्राप्तभङ्गाः सन्तोऽपनिवर्तिता युद्धविमुखीकृता गजा यत्र, यद्वा भग्ना भङ्गं प्राप्य विमुखिताः पश्चान्निवर्तिता युद्धाभिमुखीकृता गजा यत्र, अवभग्नाः सन्तः स्थानात् परिवर्तिता विमुखीभूता अवभग्ना रथा यत्र, यद्वा भङ्गं प्राप्ताः स्थान एव परिवर्तिताः पुनर्युद्धे निवर्तिता रथा यत्र। एकस्मिन पदे वलिताः पुनर्निवृत्ता योधा यत्र। एकपदाद्वलिताः संसक्ताः पुञ्जिता इति यावत्, युद्धात् परावृत्ता योधा यत्रेति वार्थः। मण्डलीदत्ततुरगं परिवर्तनेन दत्तमण्डलीकास्तुरगा यत्र तत्तथाभूतं निशाचरसैन्यं जातमित्यर्थात्। 'निअअ'-इत्यत्र 'भमिअं'-पदेन सह व्याकुरुते **लोकनाथः**, तन्निशाचरसैन्यं भ्रमितमिति ॥६९॥

**अमरिस-वित्थक्कन्ता विवलाअन्ति भमिऊण गलिआमरिसा।**
**ईसि-विवत्त-[4]व्वूढासि-वञ्चिअल्लीण-वाणरा रअणिअरा ॥७०॥**

**[अमर्ष-वितिष्ठमानाः विपलायन्ते भ्रमित्वा गलितामर्षाः।**
**ईषद्-विवृत्त-व्यूढासि-वञ्चितालीन-वानराः रजनीचराः॥]**

अमर्षेण वितिष्ठमाना आत्मानं स्थिरीकृत्य स्थिताः पश्चाद्वानराभिभवत्रासेन गलितामर्षा रजनीचरा ईषद्विवृत्तैर्वलितकन्धरैः सद्भि र्व्यापारिता व्यूढा येऽसयः खड्गास्तैर्वञ्चिता

---

1 ०ग्गोणिअ० GB. 2 भमिअं ठाण० GB; Ms noticing the reading भमिअं marginally. 3 ०वड्ढिअ० Ms. 4 ०विअत्तच्छूढा णिब्भीअ० G; विअत्त-च्छूढा णिब्भीअ० B.

आलीनाः पृष्ठगता वानरा यैस्ते रजनीचरा भ्रमित्वा पलायन्ते। त्रासात् पार्श्वतः पृष्ठतश्च कपीनां निरूपणाय भ्रमित्वा पलायनमित्यर्थः, ईषद्विवर्तनेनो[1]त्क्षिप्ता वञ्चिता असयो यैरेवंभूताः सन्त आलीना वानरा येष्विति **केचित्**।

**रह-सन्दाणिअ-तुरअं[2]तुरओवरि-पत्थिअ-क्खलिअ-पाइक्कं।**
**पाइक्कावलिअ[3]-गअं गअ-भज्जन्त[4]-रह-संकुलं वलइ बलं ॥७१॥**

**[रथ-सन्दानित-तुरगं तुरगोपरि-प्रस्थित-स्खलित-पदातिकम्।**
**पदात्यावलित-गजं गज-भज्यमान-रथ-संकुलं वलति बलम्॥]**

रथैः सन्दानिता वेगात् प्रग्रहशैथिल्यभयेन दृढं बद्धास्तुरगा यत्र, तुरगोपरि प्रस्थिताः संभ्रमेण स्खलिताः पदातिका यत्र, पदातिकेष्वापतिता गजा यत्र। यद्वा, पदातिकानामापतितानि त्रासेन स्खलितानि चालितानि यत्र, एवं गजभज्यमानै रथैः संकुलं व्याप्तं दुःखगम्यं बलं वलति भङ्गमासाद्य पलायते गजैर्भज्यमानं रथसंकुलं यत्रेति **केचित्** ॥७१॥

**ससइ विसमुद्ध-अम्पं[5]गरुआअन्त-भुअ-लम्बिओभग्ग-दुमं।**
**विहलोसरिअ-पडिभडं सण्णोवाहिअ-णिसाअरं पवअ-बलं ॥७२॥**

**[श्वसिति विषमोर्ध्व-कम्पं गुरुकायमान-भुज-लम्बितावभग्न-द्रुमम्।**
**विह्वलापसृत-प्रतिभटं सन्नापवाहित-निशाचरं प्लवग-बलम्॥]**

श्रमेण विषमोर्ध्वकम्पं श्रमादेव गुरुकायमानेभ्यो भुजेभ्योऽवलम्बिता अवभग्ना द्रुमा यत्र, विह्वलाः[6] सन्तोऽपसृताः प्रतिभटा यस्मात् सन्नमवसन्नं सदपवाहितं निष्कामितं निशाचरबलं येन तत् प्लवगबलं श्वसिति ॥७२॥

---

1 A superfluous न is inserted after this word. 2 तुरङ्गमोरत्थल° GB; this reading being also noticed marginally in Ms. 3 °गहिअ° Ms. 4 °भिज्ज° Ms. 5 °कम्पं GB. 6 विकलाः Ms.

अक्खण्डिअ-सोडीरा पवआणिअ-पढम-माण-भङ्गावसरा ।
भग्गा वि भमन्ति पुणो णीसे[F93b]सं रक्खसा ण गेण्हन्ति[1] भअं ॥७३॥

[अखण्डित-शौटीर्याः प्लवगानीत-प्रथम-मान-भङ्गावसराः ।
भग्नाः अपि भ्रमन्ति पुनः निःशेषं राक्षसाः न गृह्णन्ति भयम् ॥]

अखण्डितशौटीर्याः प्लवगैरेव प्रथमानीतो मानभङ्गस्यावसरो येषां ते राक्षसा भग्ना अपि पुनर्भ्रमन्ति युद्धाभिमुखीभूय तत्रैव भ्रमन्ति, निःशेषमेकान्तं भयं न गृह्णन्ति परस्परागत-शौटीर्यस्मरणादिति भावः। अखण्डितं शौटीर्यं शौर्याभिमानो येषां, प्लवगैः प्रथमानीतो मानभङ्गस्यावसरः पराजयो येषां ते राक्षसा भग्ना अपि पुनर्भ्रमन्ति निवर्तन्ते ॥७३॥

तह वि अ दर-परिवत्तिअ-चक्कलइज्जन्त-गरुअ-[2]रह-चक्क-वहं ।
वित्थक्कन्त-पहाविअ-समत्थ-सण्ठावणा-विढत्त-रण-जसं ॥७४॥

[तथा अपि च दर-परिवर्तित-चक्रलीक्रियमाण-गुरुक-रथ-चक्र-पथम् ।
वितिष्ठमान-प्रधावित-समर्थ-संस्थापनार्जित-रण-यशः ॥ ]

[F93b] अतश्चतुर्भिः कुलकम्। यद्यपि निःशेषं भयं न गृह्णातीत्यध्याहृत्य तथापि निशाचरसैन्यं भग्नमिति शेषस्कन्धकेनान्वय इति **कुलनाथश्रीनिवासौ**। तयोर्मते दर-परिवर्तनेनेषद्भ्रमणेन चक्रलीक्रियमाणानां मण्डलीक्रियमाणानां गुरुकाणां रुधिरपङ्क-मग्नत्वान् मन्दीभूतानां रथचक्राणां पन्था यत्रेत्यर्थः। **केचित्** तु तथा तेन प्रकारेण प्रभु-प्रसादस्मरणादिना वीतदरेण विगतभयेनार्थात् सारथिना परिवर्तिताः सन्तश्चक्लीक्रियमाणा ये रथास्तदीयचक्राणां गुरुकः शोणिताक्रान्तत्वाद् वर्तुलः पन्था यत्रेति प्राकृते परनिपाताद-न्वयः। वीतदरेत्यत्र व्रीडितादिमध्यपाताद् यथा व्रीडिते 'विलिअं' अलीके, 'अलिअं' आनीते 'आणिअं' इत्यादि व्याचक्षते। सैन्यानां धैर्यमालम्ब्य युद्धे तिष्ठतां निजभटापसरणानि-वारणाय प्रधावितानां समर्थानां संस्थापनाभिः सम्यक्स्थिरीकरणेनार्जितं रणयशो यत्र। यद्वा, ईदृशैः समर्थैः संस्थापनया भग्नसैन्याश्वासनेनार्जितं यशो यत्र इति ॥७४॥

---

1 ०इ Ms. 2 ०चक्क-रह० GB.

वाणर-परंमुहोणामिअद्ध-मोडिअ-णडाल[1]-वट्ट-णिसिअरं ।
पर-सेण्ण-कलअलाहित्थ-पडिणिअत्तन्त-[2]हत्थि-विहलारोहं ॥७५॥

[वानर-परांमुखावनामितार्ध-मोटित-ललाट-पट्ट-निशिचरम् ।
पर-सैन्य-कलकलोद्विग्न-प्रतिनिवर्तमान-हस्ति-विह्वलारोहम् ॥

वानरैः परांमुखावनामिताः केशे धृत्वा पृष्ठतोऽवनामिताः केशाकर्षणादेव भ्रूकुट्याऽसमप्रतया अर्धामोटितमर्धाकुञ्चितं ललाटतटं येषां, यद्वा वानरैः पराङ्मुखावनमितः पूर्वार्धकायो येषां ते च ते मोटितललाटतटाश्चेति ईदृशा निशाचरा यत्र। परसैन्यकलकलै'राहित्थाः' सम्यग्व्याकुलाः सन्तः प्रतिनिवर्तमानाः प्रतिपथाभिमुखं धावन्तो ये हस्तिनस्तदर्थं विकला आरोहा यत्र तत्तथा ॥७५॥

चल-वाणराणुधाविअ-वाल-धरिज्जन्त-णिच्चल-ट्ठिअ-तुरअं ।
णिहअ-भड-पडिअ-सारहि-पवङ्ग-भेसिअ[3]-तुरङ्ग-हीरन्त-
रहं ॥७६॥

[चल-वानरानुधावित-वाल-ध्रियमाण-निश्चल-स्थित-तुरगम् ।
निहत-भट-पतित-सारथि-प्लवङ्ग-भीषित-तुरङ्ग-ह्रियमाण-रथम् ॥ ]

चलैश्चपलैर्वानरैरनुधावितैर्वाले पुच्छे ध्रियमाणा निश्चलस्थितास्तुरगा यत्र, निहतभटाः पतितसारथयः प्लवङ्गनिर्भरा वानराक्रान्तास्तुरङ्गै ह्रियमाणा रथा यत्र तत् ॥७६॥

धारा-मग्ग-णिवाइअ-बल-पडिहअ-विरल-वाणरण्णिअ[4]-मग्गं ।
भग्गं गलन्त-पहरण-सुण्णइओहअ-भुअं णिसाअर-सेण्णं[5] ॥७७॥

---

1 °णिलाड° G ; °लिलाड° B. 2 °गअ-विओलारोहं GB. 3 Ms. has °पेसिअ° noticed marginally. 4 °रुणिणअ° GB. 5 A figure (4) here in Ms indicates that the whole group forms a कुलक of four *skandhakas*. G has the word अन्तकुलअ' after the verse, showing that this is the last verse of the कुलक.

[धारा-मार्ग-निपातित-बल-प्रतिहत-विरल-वानरान्वित-मार्गम् ।
भग्नं गलत्-प्रहरण-शून्यीकृतोभय-भुजं निशाचर-सैन्यम् ॥ ]

धारामार्गनिपातितैर्बलेन गजतुरगादिसैन्येन प्रतिहतैरतएव विरलैर्वानरैरन्वितः पश्चादनुगतो मार्गो यत्र । श्रमेण त्रासेन वा गलद्भिः प्रहरणैः शून्यीकृतावुभयभुजौ यस्य तन्निशाचरबलं भग्नम् । धारामार्ग इति खड्गधारा अश्वगतिर्वा ॥७७॥

अह हिअ-मच्छर-लहुआ [1]एक्केक्कम-चक्खु-[2]रक्खणाहिअ-हिअआ ।
हिअआवडिअ-दहमुहा भमिआ[3] पडिमुक्क-रण-भ[F94a]आ रअणिअरा ॥७८॥

[अथ हृत-मत्सर-लघुकाः एकैकक्रम-चक्षू-रक्षणाहित-हृदयाः ।
हृदयापतित-दशमुखाः भ्रमिताः प्रतिमुक्त-रण-भयाः रजनीचराः ॥]

अथ भङ्गानन्तरं हृतेन दूरीकृतेन मत्सरेण मात्सर्येण लघुकाः, एकैकं चक्रस्य, **पाठान्तरे** पक्षस्य रक्षणे आहितहृदयाः । **केचित्तु** हृतमात्सर्यत्वेन लघुका अपि लज्जायामाहितं हृदयं यैरेवंभूताः सन्तो भ्रमिता निवृत्यागता इत्यर्थः । 'चक्खुरक्खणआ' लज्जा इति **देशीसार** इति प्राहुः । आहितहृदयाः कृतनिश्चया इति **कुलनाथः** । **पाठान्तरे** अवहितहृदयाः । हृदये आपतितः स्मृतिपथं गतो मरणात्मको दशमुखो येषां, रामाद् रावणादुभयादपि मर्तव्ये वरं तदस्तु रामान्न रावणादिति मत्वा रणमरणे स्वर्गलिप्सयेति **वयम्** । प्रतिमुक्तरणभया रजनीचरा भ्रान्ताः परिवृत्त्य स्थिताः ॥७८॥

---

1 एक्कक्क० GB. 2 Ms has both ०चक्क० and ०पक्ख० marginally.
3 वलिआ GB.

वोच्छिण्ण-सन्धिअ-जसा होन्ति[1] णिअन्त-सण्ठविअ-सोडीरा ।
कइ-बल-दुपरिअल्ला सिढिलिअ-पडिवण्ण-रण-धुरा रअणि-
अरा ॥७९॥

[व्यवच्छिन्न-संहित-यशसः भवन्ति निवर्तमान-संस्थापित-शौटीर्याः ।
कपि-बल-दुष्परिकलनीयाः शिथिलित-प्रतिपन्न-रण-धुराः रजनीचराः ॥]

[F94a] पलायनदशायां व्यवच्छिन्नं पश्चात् स्थिरीभूय संहितं यशो यैः । व्यवच्छिन्नमपसृतं संहितं पुनः समारोपितं यशो यैरिति **केचित्** । एवं निवर्तमानं पश्चात् संस्थापितं शौटीर्यं यैः, शिथिलीभूताः पश्चात् प्रतिपन्ना रणधुरा यैः, शिथिलितास्त्यक्ता इति **केचित्** । रजनीचराः कपिबलस्य दुष्परिकलनीया अलंघ्या भवन्ति । कपिबलस्य दुष्परिकलनीया जेतुमशक्या भवन्ति । दुप्परिअल्ल-शब्दोऽशक्यलंघने देशीति **कुलनाथः** । दुष्परिकल्पा दुरवसारणीया इत्यर्थ इति **श्रीनिवासः** ॥७६॥

तो [2]भग्ग-णिज्जिआणं परिवड्ढिअ-पसर-हरिसिआण अ गरुअं ।
रअणिअर-वाणराणं वरिआआरिअ-भडं पअत्तं[3] जुज्झं ॥८०॥

[ततः भग्न-निर्जितानां परिवर्धित-प्रसर-हर्षितानां च गुरुकम् ।
रजनीचिर-वानराणां वृताकारित-भटं प्रवृत्तं युद्धम् ॥ ]

ततो रणेऽवस्थित्यनन्तरं भग्ननिर्जितानां । **पाठान्तरे** भङ्गलज्जितानां राक्षसानां परिवर्धितप्रसरत्वेन हृष्टानाञ्च वानराणां, वृता योद्धुमङ्गीकृता आकारिता आहूता भटा यत्र तद्युद्धं प्रवृत्तं । युद्धं कीदृशं गुरुकं महादरद्वन्द्वयुद्धं जातमित्यर्थः, तदेव विशिष्याह ॥८०॥

---

1 णिअत्त-समुह-ट्ठविअ० GB. 2 भङ्ग-लज्जिआणं GB ; Ms also having noticed भङ्गलज्जिआण अ marginally. 3 पवट्टइ GB.

सुग्गीवेण पअङ्घो सत्तच्छअ-पाअवेण दिण्ण-रण-सुहो ।
वण-गअ-दाण-सुरहिणा वच्छुच्छलिअ-कुसुमट्टहासेण हओ ॥८१॥

[सुग्रीवेण प्रजङ्घः सप्तच्छद-पादपेन दत्त-रण-सुखः ।
वन-गज-दान-सुरभिणा वक्ष-उच्छलित-कुसुमाट्टहासेन हतः ॥ ]

वक्षस उच्छलितानि कुसुमान्येव अट्टहासो यस्य तेन, वनगजदानसुरभिणा सुगन्धिना सप्तच्छदपादपेन सुग्रीवेण प्रजङ्घनामा राक्षसो दत्तरणसुखो हतः । वनगजसुरभित्वेन राजप्रहार-योग्यता सूचिता । यस्तावत् सुरैरप्यनभिभवनीयः स एव प्रजङ्घो मया पादपमात्रेण निपातित इति कृत्वा सप्तच्छदस्याट्टहास इति केचित् ॥८१॥

दिविआहअस्स समरे महुरं[1] उर-पडिअ-सरस-चन्दण-गन्धं ।
असणिप्पहस्स जीअं अग्घाअन्त-[2]सुह-निमिल्लन्तस्स गअं ॥८२॥

[द्विविदाहतस्य समरे मधुरं उरः-पतित-सरस-चन्दन-गन्धः ।
अशनिप्रभस्य जीवः आजिघ्रत्-सुख-निमीलतः गतः ॥ ]

द्विविदनाम्ना कपियूथपतिना हतस्य समरे मधुरं मनोहरमुरसि निपतितस्य सरसचन्दन-द्रुमस्य गन्धमाघ्रायेव सुखेनावमीलितस्याशनिप्रभनाम्नो राक्षसस्य जीवितं गतम्, आजिघ्रत् सुखितमिव [इति*] । पाठान्तरे चन्दनगन्धमाजिघ्रत इव सुखितावनिमीलितस्य जीवो गतो जीवनगमनान्निमीलिताक्षत्वं चन्दनगन्धाघ्राणेनेव इति समाधीयते ॥८२॥

हन्तूण वज्जमुट्ठिं हसइ मइन्दो[3] वि मुट्ठि-घाअ-णिसुद्धं ।
आअत्थ[4]-दिट्ठि-णिग्गअ-जलण-[5]सिहा-मग्ग-पडिअ-
लोअण-जु [F94b] अलं ॥८३॥

[हत्वा वज्रमुष्टिं हसति मैन्दः अपि मुष्टि-घात-निपातितम् ।
आयस्त-दृष्टि-निर्गत-ज्वलन-शिखा-मार्ग पतित-लोचन-युगलम् ॥]

1 सुरहिं GB. 2 ०सुहिओणिम्मिल्लस्स GB ; ०सुह० omitted in Ms.
3 महिन्दो Ms. 4 आहित्थ० GB. 5 ०सिहाअम्ब-फुडिअ० GB.

मैन्दनामा यूथपतिः शिरसि मुष्टिघातेन पातितमायस्ताया क्रोधदीप्तायाः दृष्टेरायस्तायास्तिर्यक्कृताया वा दृष्टेर्निर्गतानां क्रोधज्वलनशिखानां मार्गेण पतितं लोचनयुगलं यस्य तं वज्रमुष्टिनामानं राक्षसं हत्वा हसति। मुष्टिघातेन पातितमाविद्धाया 'मइन्दं' प्रति क्षिप्ताया दृष्टेः सकाशान्निर्गताया ज्वलदनलशिखाया मार्गे पश्चात् पतितं लोचनयुगलं यस्य तमिति **लोकनाथः** ॥८३॥

**कुविएण विज्जुमाली चिर-जुज्झिअ-हरिसिओ सुसेणेण कओ।**
**चलण-जुअलावलम्बिअ-[1]कक्खुक्खित्त-खुडिओहअ-भुअ-**
**प्फलिहो[2] ॥८४॥**

**[कुपितेन विद्युन्माली चिर-युद्ध-हर्षितः सुषेणेण कृतः।**
**चरण-युगलावलम्बित-कक्षोत्क्षिप्त-खण्डितोभय-भुज-परिघः ॥ ]**

[ F94b ] सुषेणनाम्ना वानरसेनापतिना चिरयुद्धहर्षितो, चिरयोधितहर्षित इति **केचित्**। विद्युन्माली नाम राक्षसश्चरणयुगलावलम्बितः कक्षोत्क्षिप्तखण्डितोभयभुजपरिघः कृतः। चरणयुगलेनावलम्बित आक्रान्तः कक्षायाः सकाशादुत्क्षिप्य खण्डयित्वा ऊर्ध्वक्षिप्तौ भुजपरिघौ यस्येति **लोकनाथः** ॥८४॥

**सहिअ-पहरं णलेण वि तवणस्स तलाहिघाअ-मोडिअ-कण्ठं।**
**णिहिअं देहम्मि सिरं देहो अद्ध-[3]णिहिओ महिअलम्मि**
**ठिओ[4] ॥८५॥**

**[सोढ-प्रहारं नलेन अपि तपनस्य तलाभिघात-मोटित-कण्ठम्।**
**निहितं देहे शिरः देहः अर्ध-निहितः महीतले स्थितः ॥ ]**

---

1 ०णक्खु GB.  2 ०डिहो GB.  3 ०णिमिओ GB.
4 कओ GB ; Ms having किओ marginally.

सोढप्रहारं यथा स्यात्तथा नलेनापि तपनस्य तपननामराक्षसस्य तलाभिघातेन चपेटप्रहारेण मोटितकण्ठं, शिरो देहे निहितं प्रवेशितं, देहोर्धमग्नो महीतले स्थितः। अर्धनिहितः कृत इति **केचित्**। विषोढप्रहारमिति शिरोविशेषणं वा। शिरो देहे निहितमर्पितं शरीरमध्य एव प्रवेशितमित्यर्थ इति **केचित्** ॥८५॥

**हन्तूण-जम्बुमालिं झत्ति विहिण्णो अइच्छिओ पवण-सुओ।**
**सअल-तल-मन्द[1]-ताडण-[2]भिण्ण-सिरुच्छलिअ-मेअ-सित्त-**
**दस-दिसं ॥८६॥**

[ **हत्वा जम्बुमालिनं झटिति विभिन्नः अतिक्रान्तः पवन-सुतः।**
**सकल-तल-मन्द-ताडन-भिन्न-शिरः-उच्छलित-मेदः सिक्त-दश-दिक्कम्** ॥ ]

पूर्वं शङ्कया[3] विभिन्नः पवनसुतो हनूमान् जम्बुमालिनं सकलतलस्य समग्रचपेटस्य मन्दताडनेन लीलयाभिघातेन भिन्नाच्छिरसः मेदसा सिक्तदशदिक्कं यथा स्यात्तथा हत्वातिक्रान्तो मेदस्पर्शभयादिति भावः। **पाठान्तरे** तु भिन्नस्योच्छलता शिरसो मेदेनेत्यर्थः ॥८६॥

**अह गेण्हइ अइभूमिं इन्दइ-वालि-तणआण-रण-सोडीरं।**
**णिहएक्कमेक्क-परिअण-स-हत्थ-पडिवण्ण-संसअ-तुलारोहं ॥८७॥**

[ **अथ गृह्णाति अतिभूमिं इन्द्रजिद्-वालि-तनययोः रण-सौटीर्यम्।**
**निहतैकैक-परिजन-स्व-हस्त-प्रतिपन्न-संशय-तुलारोहम्** ॥ ]

अथामीषां द्वन्द्वयुद्धानन्तरमिन्द्रजिद्वालितनययो र्निहतेनान्योन्यपरिजनेन हेतुना स्वहस्तेन प्रतिपन्नः स्वीकृतः संशयरूपायां तुलायामारोहो यत्र तद् रणशौटीर्यमतिभूमिं परां काष्ठां गृह्णाति। संशयस्य जीवनसन्देहस्य तुलत्वनिरूपणं प्रतिमेयप्रतिमानयोरिव वीरवीरयोस्तुल्यत्वख्यापनाय ॥८७॥

---

1 ०गाढ० GB; Ms having noticed another reading ०कर-मग्ग० marginally. 2 ०भिण्णुच्छलिअ-सिर० GB, this reading also noticed in Ms marginally. 3 KS also have 'शक्ति' in place of 'झत्ति'.

बाणन्धआरिअ-दिसं धणु-मण्डल-परिगअं विसेसेइ परं ।
आलोइउक्खआणिअ-मुक्क-पडन्तेहि[1] गिरि-सहस्सेहि कई ॥८८॥

**[बाणान्धकारित-दिशं धनु-र्मण्डल-परिगतं विशेषयति परम् ।
आलोकितोत्खातानीत-मुक्त-पतद्भिः गिरि-सहस्रैः कपिः ॥ ]**

बाणैरन्धकारितदिशमाकर्णाकृष्टस्य धनुषो मण्डलेन परिगतं लघुहस्ततया कर्षणान्मण्डलाकारस्य धनुषो मध्यस्थितमित्यर्थः, परं शत्रुं कपिरङ्गद आलोकितोत्खातानीतमुक्तपतद्भि गिरिसहस्रैर्विशेषयति पतद्भिरेव गिरिभिस्तस्य बाणजालं विनाशयतीति **केचित्** । तस्य बाणास्तु कपेर्न समीपमायान्ति वर्त्मनि पर्वतैश्चूर्णितत्वात् पौलस्त्येर्बाणैः सहस्रखण्डीभूयापि गात्रे पतन्तीत्य**परे** । तस्मादतिशयितो भवतीति **कुलनाथः** ॥८८॥

[F95a] णिवडन्ति कुसुम-णिब्भर[2]-मिलिअ-वलन्त-विडवोवऊढ-महुअरा ।
विवइण्ण-प्फल-लहुआ धुअ-मज्झुक्खुडिअ[3]-पल्लवा दुम-णिवहा ॥८९॥

**[निपतन्ति कुसुम-निर्भर-मिलित-वलद्-विटपोपगूढ-मधुकराः ।
विप्रकीर्ण-फल-लघुकाः धुत-मध्योत्खण्डित-पल्लवाः द्रुम-निवहाः ॥ ]**

[F95a] कुसुमेषु निर्भरमिलिता वलद्भिर्विटपैरुपगूढा मधुकरा यत्र, विप्रकीर्णफलत्वाल्लघुका धुतमध्यतया खण्डिताः पल्लवा येषु, यद्वा धुता दूरीकृता मध्यखण्डिताः पल्लवा यैस्ते द्रुमनिवहाः पतन्ति । एतेन विपदि स्वकीयफलपल्लवपरित्यागेऽनाश्रितानामपि मधुकराणां त्यागः ॥८९॥

1 ०वलन्तेहि Ms noticing marginally. 2 Ms reading of the word looks like ०णिन्तर०. 3 ०मज्झ-क्खु० GB.

वालि-तणअं ण पावइ गअणे गुप्पइ दुमेसु[1] सर-संघाओ ।
छिज्जन्ति अद्ध-वन्थे[2] एन्ता [3]दहमुह-सुअं ण पावेन्ति[4]दुमा ॥९०॥

[वालि-तनयं न प्राप्नोति गगने गोप्यते द्रुमेषु शर-संघातः ।
छिद्यन्ते अर्ध-पथे आयान्तः दशमुख-सुतं न प्राप्नुवन्ति द्रुमाः ॥ ]

शरसंघातोऽर्थादिन्द्रजितो गगने द्रुमेषु गुप्यते तिरोधीयते, अतएव वालितनयं न प्राप्नोति । द्रुमा अर्थादङ्गदप्रमुक्ता अर्धपथ आगच्छन्तश्छिद्यन्ते, अतो दशमुखसुतं न प्राप्नुवन्ति[5] । **पाठान्तरे** न लङ्घयन्ति ॥९०॥

विक्खित्त-लोद्ध-कुसुमं सर-दलिउद्धाअमाण-चन्दण-गन्धं ।
उद्धुअ-मन्दार-रअं सरस-लवङ्ग-दल[6]-गब्भिणं होइ णहं ॥९१॥

[विक्षिप्त-लोध्र-कुसुमं शर-दलितोर्ध्वायमान-चन्दन-गन्धम् ।
उद्धूत-मन्दार-रजः सरस-लवङ्ग-दल-गर्भितं भवति नभः ॥ ]

विच्छिन्नानि लोध्रकुसुमानि यत्र, विक्षिप्तानीति **केचित्** । शरदलितानां चूर्ण्यमानानाञ्चन्दनानामूर्ध्वायमानो गन्धो यत्र, उद्धृतानि मन्दाररजांसि यत्र तत्तथा सरसलवङ्गलवैर्गर्भितं नभो भवति । **पाठान्तरे** लवङ्गदलैरित्यर्थः ॥९१॥

इअ[7] तं सम-पडिहत्थं वारं-वार-बल-दिण्ण-साहुक्कारं ।
इन्दइ-वालि-सुआणं परं पमाणं गअम्पि वड्ढइ जुज्झं ॥९२॥

[इति तत् सम-प्रतिहस्तं वारंवार-बल दत्त-साधुकारम् ।
इन्द्रजिद्-वालि-सुतयोः परं प्रमाणं गतं अपि वर्धते युद्धम् ॥ ]

---

1 दुमेहि GB. 2 ०त्थे B. 3 दस० Ms. 4 लङ्घन्ति GB ; Ms also having noticed this reading marginally. 5 प्राप्नोति Ms. 6 ०लव० Ms marginally. 7 इह Ms.

सप्तभिः कुलकम्। इत्येवं प्रकारेण समप्रतिहस्तं तुल्यप्रतिकृतं तुल्यप्रतीकारमिति **लोकनाथः**। वारंवारमनेकधा बलैर्दत्तः साधुकारो यत्र तदिन्द्रजिद्वालिसुतयोः परं प्रमाणं गतमपि वर्धते युद्धं, उत्तरोत्तरं वर्धत इति **केचित्** ॥६२॥

## दुम-कुसुम-मज्झ-णिग्गअ-सर[1]-पुङ्खालग्ग-णिज्जमाण[2]-महुअरं।
## णिव्वावारोसरिअ-ट्ठिओहआइग्ग[3]-सेण्ण-विम्हअ-दिट्ठं ॥६३॥

**[द्रुम-कुसुम-मध्य-निर्गत-शर-पुङ्खालग्न-ज्ञायमान-मधुकरम्।**
**निर्व्यापारापसृत-स्थितोभयाविग्न-सैन्य-विस्मय-दृष्टम्॥ ]**

द्रुमकुसुमानां मध्यान्निर्गत-शराणां पुंखेष्वालग्ना ज्ञायमानाः पक्षहुंकारशब्देन परिचीयमानाः। **पाठान्तरे** नीयमानाः, **पाठान्तरे** सज्जमाना मधुकरा यत्र, निर्व्यापाराभ्यामपसृतस्थिताभ्यामुभाभ्यामाविग्नाभ्यां सैन्याभ्यां विस्मयेन दृष्टं तत् ॥६३॥

## दहमुह-तणअ-विसज्जिअ-सर-भरिअ-णहङ्गणोत्थ [F65b] इअ[4]-वालि-सुअं।
## वालि-सुअ-रोस-पेसिअ-साल-सिला-सेल-रुद्ध-दहमुह[5]-तणअं ॥६४॥

**[दशमुख-तनय-विसर्जित-शर-भृत नभोऽङ्गणावस्थगित-वालि-सुतम्।**
**वालि-सुत-रोष-प्रेषित-शाल-शिला-शैल-रुद्ध-दशमुख-तनयम्॥ ]**

दशमुखतनयविसर्जितैः शरैर्भृतं पूरितं नभोऽङ्गनमवस्थगितश्च वालिसुतो यत्र, वालिसुतेन रोषप्रेरितैः प्रेषितैर्वा शालशिलाशैलै रुद्धो दशमुखतनयो यत्र तत् ॥६४॥

---

1 सरस॰ Ms. 2 सज्जमाण॰ Ms marginally. 3 ॰विग्ग॰ GB.
4 ॰णुप्पइअ॰ GB. 5 ॰दस॰ Ms.

णिसिअर-सर-णिद्दारिअ-वाणर-देह-रुहिरारुण-णहाभोअं[1] ।
वाणर-पहर-पअत्तिअ-रक्खस-[2]रुहिरोह-कद्दमिअ-भूमि-
अलं ॥९५॥

[निशिचर-शर-निर्दारित-वानर-देह-रुधिरारुण-नभ-आभोगम् ।
वानर-प्रहार-प्रवर्तित-राक्षस-[2]रुधिरौघ-कर्दमित-भूमि-तलम् ॥ ]

[F95b] निशिचरशरनिर्दारितस्य वानरदेहस्य रुधिरैररुणो नभ-आभोगो यस्माद्, वानरस्याङ्गदस्य प्रहारैः प्रवर्तितस्य निशिचरस्येन्द्रजितो रुधिरेण कर्दमितं भूमितलं यत्र तत्तथा ॥९४॥

रिउ-सूल-दूमिओहीरमाण-वालि-सुअ-[3]दिण्ण-वाणर-सोअं ।
सेलाहिघाअ-मुच्छिअ-दहमुह-तणअ-भअ-भिण्ण-[4]रअणिअर-
बलं ॥९६॥

[रिपु-शूल-दुःखितावह्रियमाण-वालि-सुत-दत्त-वानर-शोकम् ।
शैलाभिघात-मूर्छित-दशमुख-तनय-भय-भिन्न-रजनीचर-बलम् ॥ ]

रिपोरिन्द्रजितः शूलेन व्यथितोऽवह्रियमाणो मूर्छ्यमानो यो वालिसुतस्तेन दीनं निरुत्साहं वानरसैन्यं यत्र । पाठान्तरे तु दत्तो वानरशोको यत्र, शैलाघातमूर्छितेन दशमुखतनयेन भयभिन्नं रजनीचरबलं यत्र तत्तथा, पाठान्तरे तु भयभिन्नो राक्षसनिवहो यत्र ॥९६॥

1 ०दिसाभोअं GB. 2 ०रुहिर-दर० Ms. It has also ०रोह० marginally. 3 ०दीण-वाणर-सेण्णं Ms marginally 4 ०रक्खस-णिवहं Ms. marginally

तारा-तणअ-विसेसिअ-रअणिअर-पअत्त-पवअ[1]-सेण्ण-कलअलं ।
मन्दोअरि[2]-सुअ-दूमिअ-वाणर-परिओस-मुहल-रक्खस-
लोअं ॥९७॥

[तारा-तनय-विशेषित-रजनीचर-प्रवृत्त-प्लवग-सैन्य-कलकलम् ।
मन्दोदरी-सुत-दुःखित-वानर-परितोष-मुखर-राक्षस-लोकम् ॥ ]

तारातनयेनाङ्गदेन विशेषितेन न्यक्कृतेन रजनीचरेण मेघनादेन हेतुना प्रवृत्तः, अङ्गदेन विशेषिते न्यक्कृते रजनीचरे मेघनादे प्रवृत्त इति **कुलनाथः**। प्लवगसैन्यस्य कलकलो यत्र, मन्दोदरीसुतेनेन्द्रजिता व्यथिते वानरेऽङ्गदे परितोषमुखरो राक्षसलोको यत्र तत्तथा ॥६७॥

भुअ-पडिअ-णिप्फल-प्फलिह-भङ्ग-हेला-हसन्त-वाणर-जोहं ।
उर-भिण्ण-सिला-अल-मेघणाअ-मुक्कट्टहास-[3]पण्डरिअ-
णहं ॥९८॥

[भुज-पतित-निष्फल-परिघ-भङ्ग-हेला-हसद्-वानर-योधम् ।
उरो-भिन्न-शिला-तल-मेघनाद-मुक्ताट्टहास-पाण्डरित-नभः । ]

अङ्गदस्य भुजपतितस्य निष्फलस्य परिघस्य लौहदण्डस्य भङ्गे हेलया हसन्तो वानरयोधा यत्र। उरसि भिन्नं शिलातलं यस्य तेन मेघनादेन मुक्तो योऽट्टहासस्तेन पाण्डरितं नभो यत्र, उरसि भिन्नशिलातलेन हेतुनेति **लोकनाथः** ॥६८॥

अह इन्दइम्मि[F96a] वालि-तणएण समराणुराअ-भग्गुच्छाहे ।
णिहओ त्ति हसन्ति[4] कई माआइ ठिओ[5] त्ति हरिसिआ रअणि-
अरा ॥९९॥

---

1 ०पवअ० omitted in Ms. 2 ०दरि० GB. 3 ०पण्डु० GB
4 सहन्ति Ms. 5 माआइ ठिअ GB. माआ-ठिओ Ms.

**[अथ इन्द्रजिति वालि-तनयेन समरानुराग-भग्नोत्साहे ।
निहतः इति हसन्ति कपयः मायया स्थितः इति हर्षिताः रजनीचराः ॥]**

राअ-सिरि-पवरसेणस्स एत्थ रावणवहे महाकव्वम्मि ।
तुमुल-रण-वण्णणं तेरहओ आसासओ परिसमत्तो ॥

राज-श्री-प्रवरसेनस्य अत्र रावणवधे महाकाव्ये ।
तुमुल-रण-वर्णनं त्रयोदशकः आश्वासकः परिसमाप्तः ॥

अथ समकक्षतया युद्धानन्तरं वालितनयेन इन्द्रजिति समरानुरागाद्भग्नोत्साहे निश्चेष्टत्वा-न्निरुद्यमे सति कृतान्तर्धाने सतीति **कुलनाथः**। निहत इति हसन्ति घोषयन्ति कपयः। मायया स्थित इति हर्षिता जातहर्षा रजनिचराः ॥६६॥

इति रावणवधटीकायां त्रयोदश आश्वासः ॥

---

# चउद्दहो आसासओ

अह [1]गअ-णिप्फल-दिअसो[2]पडिक्खिआसंघडन्त-दहमुह-लम्भो ।
जूरइ लङ्काहिमुहो अलसाअन्त-हअ-रक्खसो रहुणाहो ॥१॥

[अथ गत-निष्फल-दिवसः प्रतीक्षितासंघटमान-दशमुख-लम्भः ।
खिद्यते लङ्काभिमुखः अलसायमान-हत-राक्षसः रघुनाथः ॥ ]

इन्द्रजितापसरणानन्तरं प्रतीक्षितोऽभिमतोऽसंघटमानोऽसंपद्यमानो दशमुखलाभो यस्य स तथा, अतएव गतो निष्फलो दिवसो यस्य, अलसायमानेन मन्दमन्दयुद्धेन हता राक्षसा येनेति **केचित्**। स रघुनाथ ईदृशः सन् लङ्काभिमुखो रावणं दिदृक्षुः क्रुध्यति खिद्यते वा ॥१॥

एएसु सुह-णिसण्णो ण णेइ समरं दसाणणो त्ति गणेन्तो ।
इच्छइ दिण्णाआसे रअणिअरेसु पडिमुञ्चिउं [3]सर-णिवहे ॥२॥

[एतेषु सुख-निषण्णः न निरैति समरं दशाननः इति गणयन् ।
इच्छति दत्तायासान् रजनीचरेषु प्रतिमोक्तुं शर-निवहान् ॥ ]

एतेषु राक्षसेषु दत्तभरः सुखनिषण्णः, यद्वा एतेषां नि···सुखनिषण्ण आरोपितसमरभार इति **केचित्**, सन् दशाननो न निर्गच्छति समरमिति गणयन् दत्तायासान् रावणं हित्वा असदृशेषु राक्षसेषु प्रतिमोक्तुमिच्छया दत्त आयासो यैः, अथवा दत्त आयासो येषु, रावणे मोक्तुं विधृतान् दत्तायासानिति **कुलनाथः**। शरनिवहान् रजनिचरेषु प्रतिमोक्तुमिच्छति राम इत्यर्थः। अत्र इच्छतीत्यनेन बहुधा विचार्य शरमोचनं, प्रतिमोक्तुमित्यत्रोपसर्गेण च

---

1 णिप्फल-गअ० GB. 2 जहिच्छिआ संप० GB ; Ms noticing जहिच्छिआ marginally. 3 णीसासे for सर-णिवहे Ms, which has also noticed the latter reading marginally.

रावणं प्रति रक्षितान् शरान् तदप्राप्तया राक्षसेषु तन्मोचनस्य कृच्छ्राभिलषितत्वं सूचितम् । अतएव दत्तायासान् स्वरनिवहान् निश्वाससमूहान् मुञ्चतीति **श्रीनिवासः** । अर्थान्तरं वदति, तथा च **विश्वः** "स्वरो…वादि…मध्यमादिषु च ध्वनौ, उदात्तादिष्वपि प्रोक्तः स्वरो नासा-समीरणे" इति । णोसासे इति **पाठे तु** निश्वासान् इति व्यक्त एवार्थः ॥२॥

**दिट्ठम्मि पत्थिअम्मि अ आवडिअम्मि अ परे सर-[1]णिसुब्भन्ते ।**
**समरम्मि विसूरन्ता मोहुक्करिसिअ-दुमा भमन्ति-पवङ्गा ॥३॥**

**[दृष्टे प्रस्थिते च आपतिते च परे शर-निपात्यमाने ।**
**समरे खिद्यमानाः मोघोत्कृष्ट-द्रुमाः भ्रमन्ति प्लवङ्गाः ॥ ]**

प्लवङ्गैर्दृष्टे प्रस्थिते प्रार्थिते अतिसंहिते आपतिते च परे शत्रौ शरैरर्थाद्रामस्य निपात्यमाने सति हन्तव्या[भावान्] मोघाकृष्टद्रुमा निष्फलोन्नामितवृक्षा इति **कुलनाथः** । अतएव खिद्यमानाः प्लवङ्गाः समरे भ्रमन्ति हन्तव्यानुसन्धानार्थमिति भावः ॥३॥

**भेत्तूण [2]तुलिअ-मुक्के अणुलोम-पहा[F96b]विए [3]धराहर-णिवहे ।**
**पढमं साहेन्ति परं विहडिअ-वाणर-मणोरहा राम-सरा ॥४॥**

**[भित्वा तुलित-मुक्तान् अनुलोम-प्रधावितान् धराधर-निवहान् ।**
**प्रथमं साधयन्ति परं विघटित-वानर-मनोरथाः राम-शराः ॥ ]**

रामो यावन्न शरं सन्धत्ते तावदेव राक्षसान् व्यापादयामीति तुलितमुक्तान् । **पाठान्तरे** तु तोलयित्वा परिकलय्य मुक्तान् । अनुलोमप्रधावितान् धराधरनिवहान् । **पाठान्तरे** शिलासंघातान् भित्वा विघटितवानरमनोरथाः सन्तो रामशराः प्रथमं परं शत्रुं साधयन्ति पश्चात् पर्वता इति भावः ॥४॥

---

1 ०सुम्भन्ते GB. 2 ०रि० ; Ms marginally has the same reading.
3 सिलासंघाए GB ; so has Ms marginally.

छिज्जइ [1]सरेहि समअं पवए णल्लिअइ रक्खसाण पहरणं।
पावइ तुरिअ-[2]विमुक्को अणहं ण अ रक्खसं [3]पवङ्गम-पहरो ॥५॥

[छिद्यते शरैः समं प्लवगे न आलीयते राक्षसानां प्रहरणम्।
प्राप्नोति त्वरित-विमुक्तः अनघं न च राक्षसं प्लवङ्गम-प्रहारः ॥ ]

राक्षसानां प्रहरणं रामस्य शरैः सममेकदा छिद्यते। अतएव प्लवगे नालीयते न लगति। त्वरितविमुक्तः प्लवङ्गमप्रहारोऽनघमक्षतशरीरं राक्षसं न प्राप्नोति। **लोकनाथस्तु** राक्षसानां प्रहरणं शरैः सममेकदा छिद्यते अर्थाद्रामस्य, अतः प्लवगे प्लवगान् वा नालीयते त्वरितविमुक्तं प्लवङ्गमप्रहरणमनघमप्राप्तव्यसनं राक्षसं न प्राप्नोति दुःखव्यसनेष्वधमिति **लोकनाथः** ॥५॥

भिण्णे वच्छम्मि सिला गिरि-सिहरं छिण्ण-[4]पाडिअ-सिर-ट्ठाणे।
णिवडइ सराहिसन्धिअ-परक्कमेहि पवएहि रोस-विमुक्कं ॥६॥

[भिन्ने वक्षसि शिला गिरि-शिखरं छिन्न-पातित-शिरः-स्थाने।
निपतति शराभिसंहित-पराक्रमैः प्लवगैः रोष-विमुक्तम् ॥]

शरैरभिसंहितो विफलीकृतः पराक्रमो येषां शरेणाभिसंहितो वञ्चित इति **केचित्**। तैः प्लवगैः रोषविमुक्तं गिरिशिखरं छिन्नपातितस्य शिरसः स्थाने निपतति। एवं भिन्ने वक्षसि शिला रोषबिमुक्ता निपतति। रोषविमुक्तमिति नपुंसकानपुंसकयोर्नपुंसकत्वमिति एतैः पद्यैः रामशराणां शीघ्रपतनत्वाघातत्वे[5] सूचिते ॥६॥

---

1 कारण GB; Ms has the same marginally. 2 ०क्कं GB.
3 पवङ्ग-पहरणं GB. 4 ०पा० Ms. 5 ०नत्वत्वा० Ms.

सइ सन्धिओ च्चिअ सरो रहुणाहस्स सइ चक्कलइअं धणुं ।
[1]ओत्थिज्जइ अ सराहअ-सइ-पल्हत्थन्त-रक्खस-सिरेहि मही ॥७॥

[सदा संहितः एव शरः रघुनाथस्य सदा चक्रीकृतं च धनुः ।
अवस्तीर्यते च शराहत-सदा-पर्यस्यद्-राक्षस-शिरोभिः मही ॥]

सदा संहित एव रघुनाथस्य शरः । धनुः सदा चक्रीकृतं लघुहस्ततया बहूनामपि शरसन्धानादीनां पृथक्त्वानुपलभ्यमानत्वादिति भावः । अवस्तीर्यते च शराहतैः सदा-पर्यस्यद्भिः राक्षसशिरोभिर्मही । अत्र चकारेण धनुर्मण्डलीकरण-शराभिसन्धानयोः समकालमेव राक्षसशिरःपतनं लक्ष्यत इति ध्वन्यते ॥७॥

विसमालग्ग-हुअवहा विसहर-रेअविअ-[2]बिल-मुह-पडिच्छन्दा ।
दीसन्ति बाण-मग्गा रक्खस-देहेसु से ण दीसन्ति सरा ॥८॥

[विषमालग्न-हुतवहाः विषधर-रेचित-बिल-मुख-प्रतिच्छन्दाः ।
दृश्यन्ते बाण-मार्गाः राक्षस-देहेषु अस्य न दृश्यन्ते शराः ॥]

विषमं क्वापि क्वापि आलग्नो हुतवहो यत्र । विषमः क्वापीति केचित् । शरशून्यत्वाद् विषधरेण रेचितस्य त्यक्तस्य बिलस्य गर्तस्य [3]मुखप्रतिच्छन्दा द्वारतुल्या बाणमार्गा राक्षस-देहेषु दृश्यन्ते । तस्य बाणा न दृश्यन्ते । पाठान्तरेषु विषधरेण रेचितानां दरीमुखानां कन्दराणां [3]प्रतिच्छन्दाः प्रतिरूपा अग्निबाणा निर्भिद्य गतत्वान्न दृश्यन्त इत्यर्थः ॥८॥

उक्करिसन्तस्स करे पत्थन्तस्स हिअए रसन्तस्स मु[F107a]हे ।
दीसन्ति णवर पडिआ णिबद्ध-सिर-पडण-सूइआ राम-सरा ॥९॥

[उत्कर्षतः करे प्रार्थयतः हृदये रसतः मुखे ।
दृश्यन्ते केवलं पतिताः निबद्ध-शिरः-पतन-सूचिताः राम-शराः ॥]

---

1 ०अच्छि० GB. 2 दरि० Ms ; but it has ०बिल० marginally.
3 ०न्ना ; न्नाः Ms.

उत्कर्षत आयुधमुत्तोलयतः करे। रामशरा दृश्यन्त इति सर्वत्रान्वेति। प्रार्थयतः प्रतिप्रहर्तु मभिलषतो हृदये। रसतः सिंहनादं कुर्वतो मुखे। पतिताः केवलं निबद्धानां शिक्षणाकौशलेन छिन्नलग्नानां शिरसां पतनेन सूचिताः। निबद्धानां मिलितानां शिरसां पतनेन सूचिता युगपत्पतितानां बहूनामित्यर्थ इति **केचित्**। तूणोद्धरणादावलक्षिताः केवलं निबद्धानां पञ्जिकालिखितानां भटानां शिरःपतनसूचिता इति **कुः** (कुलनाथः) ॥९॥

**जो जत्थो[1] च्चिअ दिट्ठो सुओ जहिं जस्स अ[2] विहलो अ[2] णिणाओ।**
**चलिओ अ जो जहिच्चिअ तस्स तहिच्चेअ णिवडिआ राम-सरा ॥१०॥**

**[यः यत्र एव दृष्टः श्रुतः यत्र यस्य च विह्वलः च निनादः।**
**चलितः च यः यत्र एव तत्र एव निपतिताः राम-शराः॥]**

[F107a] यो यत्रैव दृष्टः। श्रुतो यत्र यस्य [3]विह्वलश्च निनादः। यो यत्रैव चलितश्च तस्य तत्रैव निपतिता रामशराः। यत्र यस्याविकलः सावष्टम्भश्च निनादः श्रुतो यश्च यत्र चालित इति **लोकनाथः** ॥१०॥

**[4]हअ-हत्थि-भड-तुरङ्गा दीहा दीसन्ति तम्मि रक्खस-सेण्णे।**
**अग्ग-क्खन्ध-पअत्ता[5] कूलं भेत्तूण णिग्गआ राम-सरा ॥११॥**

**[हत-हस्ति-भट-तुरङ्गाः दीर्घाः दृश्यन्ते तस्मिन् राक्षस-सैन्ये।**
**अग्र-स्कन्ध-प्रवृत्ताः कूलं भित्त्वा निर्गताः राम-शराः॥]**

अथ तस्मिन् राक्षस-सैन्ये अग्रस्कन्धे प्रवृत्ता रामशरा हतहस्तिभटतुरङ्गा [स]न्तः कूलं पश्चाद्भागं भित्त्वा दीर्घा निर्गता दृश्यन्ते। दीर्घत्वञ्च प्रतिपुंखालग्नत[या] धारावाहिनिपातादिति भावः ॥११॥

---

1 जत्तो Ms. 2 विअलिओ वि GB. 3 ०लोश्च Ms.
4 अह० Ms. 5 वडन्ता Ms ; corrected marginally into ०प०

जं च्चिअ [1]उवलद्ध-भअं काहिइ समअं [2]पलाइअव्वारम्भं ।
तं राम-सराहिहअं दिट्ठं णवर पडिअं णिसाअर-सेण्णं ॥१२॥

[यत् एव उपलब्ध-भयं करिष्यति समं पलायितव्यारम्भम् ।
तत् राम-शराभिहतं दृष्टं केवलं पतितं निशाचर-सैन्यम् ॥]

यदेव निशाचरसैन्यमुपलब्धभयं सत् पलायितव्यस्य पलायनस्यारम्भं समं युगपत् करिष्यति। तत् केवलं पतितं दृष्टम्। यद्वा, रामशराभिहतं सत् युगपद् रामशरैः सह पतितं दृष्टमित्यर्थः। यत् सैन्यं पलायिष्यते तत् पतितमिति धातुसम्बन्धे प्रत्ययः ॥१२॥

इअ तं [3]बाणुक्कत्तं पडन्त-सम-काल-दिट्ठ-सिर-संघाअं ।
सुअ-सारणावसेसं खणेण रक्खस-बलं कअं रहुवइणा ॥१३॥

[इति तत् बाणोत्कृत्तं पतत्-सम-काल-दृष्ट-शिरः-संघातम् ।
शुक-सारणावशेषं क्षणेन राक्षसः-बलं कृतं रघुपतिना ॥]

इत्येवंप्रकारेण बाणेणोत्कृत्तं पतनसमकालदृष्टशिरःसंघातं तद् राक्षसबलं रघुपतिना क्षणेन शुक-सारणावशेषं कृतं रावणाय वार्ताकथनाय तयो रक्षणं ॥१३॥

ताव अ सलोहिआरुण-रक्खस-बल-णिव्विसेस-सञ्झा-तिमिरो ।
परमत्थओ चिरस्स व णिव्वाओ गलिअ-रक्खस-भओ
दिअ[F97b]सो ॥१४॥

[तावत् च सलोहितारुण-राक्षस-बल-निर्विशेष-सन्ध्या-तिमिरः ।
परमार्थः चिरस्य एव निर्वाणः गलित-राक्षस-भयः दिवसः ॥]

यावदेवं तावच्च सलोहितत्वादरुणं यद्राक्षसबलं तेन निर्विशेषं समानरूपं सन्ध्यातिमिरं यत्र। सन्ध्यातिमिरस्य पाटलश्यामत्वात् तादृशराक्षसबलेनोपमानं, तादृशो दिवसो गलितं

---

1 उग्ग॰ GB. 2 पड़ा॰ GB. 3 ॰क्कित्तं GB.

राक्षसानां भयमर्थाद्रामकृतं यस्मात् सन्ध्यया सह एकीभावतया परिचयाभावादिति भावः। यद्वा, भग्नत्वात्तादृशरथत्वापतितस्त्यक्ततादृशरथ इत्यर्थः। ईदृशः सन् परमार्थत इव निर्वाण इन्द्रजितो मायाप्रभावेणाप्रनष्टोऽपि दिवसः प्रनष्ट इव जात इत्यर्थः। सन्ध्यारक्ताभ्यां राक्षसतिमिराभ्यां च उपमानोपमेयता परमार्थत इव चिरेण प्रहराकृष्टः, येन निर्वाणः। वस्तुतस्तु न परमार्थतो मेघनादजनितत्वात्। **कुलनाथस्तु** न केवलमस्तं गतः परमार्थतो निर्वाण इव प्राप्तनिर्वृतिक इव निर्वाणपदे च श्लेषः ××× त्वं तत्राह गलितराक्षसभयश्चेदित्याह ॥१४॥

**अह उग्गाहिअ-[1]चावो एक्को वालि-[2]सुअ-मोडिअ-रहुप्पइओ।**
**सञ्चरइ मेहणाओ णिअअ-च्छवि-मेलिअन्धआरम्मि णहे ॥१५॥**

**[अथ उद्ग्राहित-चापः एकः वालि-सुत-मोटित-रथोत्पतितः।**
**सञ्चरति मेघनादः निजक-च्छवि-मेलितान्धकारे नभसि ॥]**

[F97b] अथ दिवसप्रणाशानन्तरमुद्गृहीतचापो वालिसुतमोटितेनैव रथेनोत्पतितो रथाद्वा उत्पतितस्त्वरया भग्नरथपरिवृत्तिरपि न कृतेति **केचित्**। एकोऽद्वितीयो मेघनादो निजच्छविमिलितान्धकारे नभसि सञ्चरति ॥१५॥

**तो णिट्ठविअ-णिसिअरा इन्दइणा गरुअ-वेर-मूलाहारा।**
**समअं च्चिअ सच्चविआ अदिट्ठेण विहिणेव्व [3]दसरह-तणआ ॥१६॥**

**[ततः निष्ठापित-निशिचरौ इन्द्रजिता गुरुक-वैर-मूलाधारौ।**
**समं एव सत्यापितौ अदृष्टेन विधिना इव दशरथ-तनयौ ॥]**

ततः सञ्चरणानन्तरमेव निष्ठापिता व्यापादिता निशिचरा याभ्यां, गुरुकवैरमूलाधारौ भ्रातृमातुलादिवधादिति भावः। तौ दशरथतनयावदृष्टेन विधिनेव इन्द्रजिता सममेकदा सत्यापितौ दृष्टौ ॥१६॥

---

1 ०चाओ GB. 2 ०सुआ० Ms. 3 दह० GB.

मुअइ अ सअम्भु-दिण्णे ताण भुअङ्ग-मुह-णिग्गआणल-जीहे ।
णीसेस-णिहअ-रक्खस-वीसत्थ-पलम्बिओहअ-भुआण सरे ॥१७॥

[मुञ्चति च स्वयम्भू-दत्तान् तयोः भुजङ्ग-मुख-निर्गतानल-जिह्वान् ।
निःशेष-निहत-राक्षस-विश्वस्त-प्रलम्बितोभय-भुजयोः शरान् ॥]

निःशेषनिहतराक्षसतया निःशेषविश्वस्तप्रलम्बितोभयभुजयोर्दशरथसुतयोः स्वयम्भुवा ब्रह्मणा दत्तान् भुजङ्गमुखनिर्गतानलजिह्वान् शरान् मुञ्चति च। अत्र चकारेण दर्शनसमकालं शरमोचनं व्यज्यते ॥१७॥

तो भिण्णङ्गअ-देसा णिद्दारिअ-[1]विइअ-[2]वास-पाअडिअ-मुहा ।
राहव-[3]देहे अ ठिआ तिअ-सन्दाणिअ-भुआ भुअङ्गम-बाणा ॥१८॥

[ततः भिन्नाङ्गद-देशाः निर्दारित-द्वितीय-पार्श्व-प्रकटित-मुखाः ।
राघव-देहे च स्थिताः त्रिक-संदानित-भुजाः भुजङ्गम-बाणाः ॥]

ततः शरमोचनानन्तरं भुजङ्गमबाणा एवंरूपतया राघवयोर्देहे स्थिताः। तदेव रूपमाह। भिन्नाङ्गददेशा निर्दारितयोः प्रकटितमुखाः। निर्दारितद्वितीयपार्श्वाश्च ते प्रकटितमुखाश्चेति वा। त्रिके सन्दानितभुजा बद्धबाहवो भुजङ्गमबाणाः ॥१८॥

णिद्धोआअस-णीला णिन्ति [4]विसाणल-फुलिङ्ग-पज्जलिअ-मुहा ।
धणु-सन्धाण-विमुक्का अउव्व-णाराअ-विब्भमा भुअइ [F98a]न्दा ॥१९॥

[निर्धौतायस-नीलाः निर्यान्ति विषानल-स्फुलिङ्ग-प्रज्वलित-मुखाः ।
धनुः-सन्धान-विमुक्ताः अपूर्व-नाराच-विभ्रमाः भुजगेन्द्राः ॥

1 ०वीअ० GB. 2 ०बाहु० GB, so has our Ms marginally.
3 ०देहम्मि for देहे अ GB. 4 ०प्फु० Ms ; our Ms has this reading marginally, but in the original text it has दसाणण-सुअस्स पज्जलिअ०, a reading which agrees with K's interpretation

निर्धौतायसवन्नीला विषानलस्फुलिङ्गप्रज्वलितमुखा धनुःसन्धानविमुक्ताः अपूर्वनाराचविभ्रमा धनुषो निर्गतानां नाराचानां विषानलज्वालितमुखस्य दर्शनादपूर्वत्वम्। यद्वा, पूर्वसन्धानसमये नाराचविभ्रमाः पातसमये सर्पाकारत्वात्। भुजगेन्द्रा निर्यान्ति। पाठान्तरे तु विषानलस्फुलिङ्गप्रज्वालितमुखा इत्यर्थः ॥१६॥

**णिवडन्ति विज्जु-मुहला [1]तार-समब्भहिअ-लोह-लट्ठि-च्छाआ।**
**कसण-जलओअराहि व रक्खस-माअन्धआरिअ-णहाहि**
**सरा ॥२०॥**

**[निपतन्ति विद्युन्-मुखराः तार-समभ्यधिक-लोह-यष्टि-च्छायाः।**
**कृष्ण-जलदोदरात् इव राक्षस-मायान्धकारित-नभसः शराः॥ ]**

[F98a] कृष्णजलदोदरादिव राक्षसमायान्धकारितान्नभसो विद्युन्मुखरास्तारेण मार्जनशुद्धया, पाठान्तरे तापेन समभ्यधिकाया अधिकोज्वलाया लौहयष्टेरिव च्छाया येषां ते। शराः पतन्ति। विद्युत इव मुखराः [2]सशब्दा इति **कुलनाथः**। यष्टौ ल इति प्राकृतसूत्रम् ॥२०॥

**पढमं रवि-बिम्ब-णिहा [3]उक्का-वण्णा णहद्ध-वन्थावडिआ।**
**भिन्दन्ता होन्ति सरा दर-णिब्भिण्ण-[4]भमिरा [5]भुएसु**
**भुअङ्गा ॥२१॥**

**[प्रथमं रवि-बिम्ब-निभाः उल्का-वर्णाः नभोऽर्ध-पथापतिताः।**
**भिन्दन्तः भवन्ति शराः दर-निभिन्न-भ्रमणशीलाः भुजयोः भुजङ्गाः॥]**

---

1 Ms has ताव० but it has तार० marginally. 2 सशब्द Ms evidently a mistake. 3 पलउक्का-संणिहा णहद्ध-पडन्ता GB ; Ms has the same marginally. 4 ०आ GB. 5 भुआ० GB.

प्रथमं सन्ध्याकाले रवि-बिम्बनिभा नभोऽर्धपथ आपतन्तः प्रलयोल्कादण्डसन्निभा दीर्घतया तथैव लक्ष्यमाणत्वादिति भावः। भिन्दन्तः शरा भवन्ति। दरनिर्भिन्नेष्ववयवेषु भ्रमणशीला भुजयोर्भुजङ्गा भवन्ति। यद्वा, भुजयोरीषन्निर्भेदेन भ्रमणशीला भुजङ्गा भवन्ति। निभिन्नेति भावे क्तः। पाठान्तरे तु प्रलयोल्कासन्निभा नभोऽर्धपथापतिता इत्यर्थः ॥२१॥

बज्झन्ति दसरह-सुआ दर-भग्ग-मणोरहा किलम्मन्ति सुरा।
अद्दिट्ठ-मेहणाआ उण्णमिअ-पव्वआ भमन्ति पवङ्गा ॥२२॥

[वध्येते दशरथ-सुतौ दर-भग्न-मनोरथाः क्लाम्यन्ति सुराः।
अदृष्ट-मेघनादाः उन्नामित-पर्वताः भ्रमन्ति प्लवङ्गाः ॥]

वध्येते दशरथसुतौ दरमीषद् दरेण भयेन वा भग्नमनोरथाः सुराः क्लाम्यन्ति। अदृष्टमेघनादा उन्नामितपर्वता भ्रमन्ति प्लवङ्गाः ॥२२॥

रसइ णहम्मि णिसिअरो [1]भिण्णं भिण्ण-हिअअं दिसासु कइ-बलं।
[2]भिज्झन्तो वि ण भिज्झइ रिउ-दंसण-दिण्ण-लोअणो दासरही ॥२३॥

[रसति नभसि निशिचरः भिन्नं भिन्न-हृदयं दिशासु कपि-बलम्।
भिद्यमानः अपि न भिद्यते रिपु-दर्शन-दत्त-लोचनः दाशरथिः ॥]

रसति सिंहनादं मुञ्चति नभसि निशिचरो मेघनादः। भिन्नहृदयं व्यथितमानसं कपिबलं भिन्नमितस्ततो गतम्। रिपुदर्शनदत्तलोचनो दाशरथिर्भिद्यमानोऽपि न भिद्यते

---

1 ०ण्णमभिण्ण० GB. Ms marginally puts अभिण्ण०, but for the sake of metre it should be ०मभिण्णं. 2 Ms ०न्ता.

रिपुदिदृक्षया शरभेदजन्यमपि दुःखं नानुभवतीत्यर्थः। अभिन्नहृदयमिति पाठे अभिन्न-हृदयमेकहृदयं सदित्यर्थः ॥२३॥

रोसाणल-पज्जलिअं जलन्त-[1]वलवा-मुहाणल-पडिच्छन्दं।
अङ्गेसु लद्ध-पसरा हिअअं से णवर परिहरन्ति भुअङ्गा ॥२४॥

[रोषानल-प्रज्वलितं ज्वलद्-वडवा-मुखानल-प्रतिच्छन्दम्।
अङ्गेषु लब्ध-प्रसराः हृदयं अस्य केवलं परिहरन्ति भुजङ्गाः ॥]

तस्य दाशरथेरङ्गेषु लब्धप्रसरा भुजङ्गाः केवलं वक्षो मुञ्चन्ति[2]। अत्र हेतुं हृदयविशेषण-माह—रोषानलेन प्रकर्षाद् ज्वलितमनलस्य बहिरदृश्यमानत्वाद् ज्वलद्वडवामुखानलप्रति-च्छन्दं, हृदये कोऽपि क्षोभो न कृत इत्यर्थः ॥२४॥

ताण भुअङ्ग-परिगआ दुक्ख-पहुप्पन्त-विअड-[3]भोआवेढा।
जाआ [4]थिर-णिक्कम्पा मलअ-[5]तडुप्पण्ण-चन्दण-दुम व्व
भुआ ॥२५॥

[तयोः भुजङ्ग-परिगताः दुःख-प्रभवद्-विकट-भोगावेष्टाः।
जाताः स्थिर-निष्कम्पाः मलय-तटोत्पन्न-चन्दन-द्रुमाः इव भुजाः ॥]

[F98b] तयोर्भुजङ्गैः [6]परिगता वेष्टिता दुःखेन प्रभवन्तः समाप्तिं यान्तो विकटभोगा-वेष्टा येषु ते मलयतटोत्पन्नचन्दनद्रुमा इव भुजाः स्थिरनिष्कम्पा जाता अतिनिष्कम्पा जाता इत्यर्थः। दृढनिष्कम्मा इति **श्रीनिवासः**। स्थिराः समुदायक्रियाशून्या निष्कम्पा अवयवक्रियाशून्या यथा तथा 'णिच्चलणिप्फन्दा' इति **केचित्** ॥२५॥

---

1 ०वडवा० GB. 2 ०ति Ms. 3 ०भोगा० GB. 4 चिर० Ms. 5 ०अड० GB. 6 ०वृता Ms.

तह पडिवण्ण-धणु-सरा सर-[1]सीविज्जन्त-णिच्चल-[2]भुअ-प्फलिहा।
दट्ठोट्ठ-मेत्त-लक्खिअ-णिप्फल-रोस-लहुआ कआ रहु-
तणआ ॥२६॥

[तथा प्रतिपन्न-धनुः-शरौ शर-सीव्यमान-निश्चल-भुज-परिघौ।
दष्टौष्ठ-मात्र-लक्षित-निष्फल-रोष-लघुकौ कृतौ रघु-तनयौ॥]

तथा प्रतिपन्न-धनुःशरौ रघुतनयावीदृशौ कृतौ। कीदृशावित्याह—शरसीव्यमान-निश्चलभुजपरिघौ। पाठान्तरे तु शरसीव्यमाननिश्चलस्थापितभुजौ। दष्टौष्ठमात्रे लक्षितेन निष्फलेन रोषेण लघुकावकिञ्चित्करौ ॥२६॥

सर-णिब्भिण्ण-सरीरा जाआ आलोअ-मग्गिअव्वावअवा।
दर-दिट्ठ-पत्तणन्तर-णिहित्त-संखाअ-लोहिआ रहु-तणआ ॥२७॥

[शर-निर्भिन्न-शरीरौ जातौ आलोक-मार्गितव्यावयवौ।
दर-दृष्ट-पत्रणान्तर-निहित-संस्त्यान-लोहितौ रघु-तनयौ॥]

शरैर्निर्भिन्नशरीरौ रघुतनयवीदृशौ जातौ। कीदृशावित्याह-अन्धकाराच्छन्नत्वादालोकेन दीपदृष्ट्यादिप्रकाशेन मृगयितव्यावयवौ। यद्वा, परनिपाताद् भुजङ्गावृततया मृगयितव्योऽभिलषणीय आलोको दर्शनं येषामेवंभूता अवयवा ययोः। शराणां दूरनिखाततया ईषद्दृष्टानां पत्रणानामन्तरेषु निहितानि संस्त्यानानि लोहितानि ययोरीदृशौ ॥२७॥

सर-सीविओरु-जुअलं संकीलिअ-विहल-णिच्चल-ट्ठिअ-चलणं।
णिअलिअ-देहावअवं सञ्चरिअव्वम्पि रहु-सुआण [3]उवरअं॥२८॥

[शर-स्यूतोरु-युगलं संकीलित-विह्वल-निश्चल-स्थित चरणम्।
निगडित-देहावयवं सञ्चारितव्यं अपि रघु-सुतयोः उपरतम्॥]

---

1 ०णिब्भिज्जन्त० GB. 2 ०ट्ठविअ-भुआ Ms, but it has marginally ०भुअ-प्फलिआ adopted by GB also. 3 अवहअं GB.

शरस्यूतमुरुयुगलं यत्र एव' यथा स्यादेव' संकोलितविह्वलनिश्चलस्थितचरण' यथा स्यात् निगडितदेहावयव' च यथा भवेत् तथा रघुसुतयोः सञ्चरयितव्य' स्पन्दशक्तिरप्युपरतम् । उपरतमवसितमिति **केचित्** ॥२८॥

तो सुर-हिअएहि समं पडिअं [1]विहडन्त-पढम-[2]सन्धिअ-बाणं ।
अद्दिट्ठ-रिउ-विसज्जिअ-सर-पहरङ्कुसिअ-वाम-हत्थाहि
धणु' ॥२९॥

[ततः सुर-हृदयैः समं पतित' विघटमान-प्रथम-संहित-बाणम् ।
अदृष्ट-रिपु-विसर्जित-शर-प्रहाराङ्कुशित-वाम-हस्तात् धनुः ॥ ]

ततः सञ्चरणाशक्त्यपगमानन्तर' विघटमानः प्रथमसंहितो बाणो यस्मात् । यद्वा, प्रथमं विघटमानः संहितो बाणो यस्मात् तद्धनुरदृष्टेन रिपुणा विसर्जितस्य शरस्य प्रहारेणाङ्कुशीकृताद् वामहस्तात् सुरहृदयैः समं पतितम् ॥२६॥

उद्धाइओ अ सहसा विवलाअ-विमाण-[3]तलिम-पच्छिम-देशे ।
[F99a] सुर-वहु-[4]मुक्कक्कन्दो एक्कमुहाहअ-रसन्त-तन्ति-
च्छाओ ॥३०॥

[उद्धावितः च सहसा विपलायित-विमान-तलिम-पश्चिम-देशे ।
सुर-वधू-मुक्ताक्रन्दः एक-मुखाहत-रसत्-तन्त्री-च्छायः ॥ ]

[F99a] सहसा तत्क्षणं विपलायितानां विमानानां तलिमस्य पश्चिमदेशे, रामावलोकनार्थं कुट्टिमपश्चिमदेश इति **लोकनाथः** । विमानपश्चिमभागोत्थिताभिः सुरवधूभिर्मुक्त आक्रन्दरव एकमुखाहतानां युगपत्ताडितानां रसन्तीनां तन्त्रीणां च्छाया ध्वनिसादृश्य' यस्य स ऊर्ध्वतश्चोत्थितः । **पाठान्तरे** सुरवधूनां विषमाक्रन्द इत्यर्थः ॥३०॥

---

1 विश्रलन्त० Ms, but it has noticed विहड० marginally.
2 संठिअ० GB. 3 ०तडिम० GB. 4 विसम० GB ; so Ms has the same marginally.

[1]अह पडिओ रहुणाहो भञ्जन्तो[2]तिहुअणस्स आसा-बन्धं ।
सीह-णहङ्कुस-पहओ तुङ्गं आसण्ण-पाअवं व वण-गओ ॥३१॥

[अथ पतितः रघुनाथः भञ्जन् त्रिभुवनस्य आशा-बन्धम् ।
सिंह-नखाङ्कुश-प्रहतः तुङ्गं आसन्न-पादपं इव वन-गजः ॥ ]

अथ धनुःपातानन्तरं रघुनाथस्त्रिभुवनस्याशाबन्धं भञ्जन् सिंहनखाङ्कुशेन प्रहतो वनगज इव तुङ्गमासन्नपादपमिव भञ्जन पतितः ॥३१॥

पडिअस्स अ रहुवइणो पडिओ [3]अणुमग्गओ सुमित्ता-तणओ ।
उद्ध-ट्ठिअस्स [4]पणओ पल्हत्थस्स व दुमस्स छाआ-णिवहो ॥३२॥

[पतितस्य च रघुपतेः पतितः अनुमार्गकः सुमित्रा-तनयः ।
ऊर्ध्व-स्थितस्य प्रणतः पर्यस्तस्य इव द्रुमस्य छाया-निवहः ॥ ]

पतितस्य रघुपतेरनुमार्गतः पश्चादनुमार्गगो वा सुमित्रातनयो लक्ष्मणः पतित ऊर्ध्वस्थितस्य द्रुमस्य प्रणतोऽनुगतश्छायानिवहः पतितस्य पश्चादिव 'उद्धट्ठिअस्स पवणो' इति पाठे प्रवण आयत्त इत्यर्थः ॥३२॥

धरणि-पडिएसु तेसु अ णिव्वण्णन्त-समुहोणअ-[5]भरक्कन्ता ।
उत्ताणिएक्क-चक्का सुराण तंस-[6]वलिआ चिरं आसि रहा ॥३३॥

[धरणि-पतितयोः तयोः च निर्वर्णयत्-संमुखावनत-भराक्रान्ताः ।
उत्तानितैक-चक्राः सुराणां तिर्यग्-वलिताः चिरं आसन् रथाः ॥ ]

धरणिपतितयोश्च तयो निर्वर्णयतां निरूपयतां संमुखावनतानामर्थात् सुराणां भरेणा-

---

1 तो GB. 2 ०वणस्स GB. 3 ०ग्गअ' GB.
4 Ms marginally has पवण in lieu of पणओ 5 ०भरुव्वत्ता GB.
6 ०तडिमा GB.

कान्ताः, अतएव उत्तानितैकचक्राः सुराणां रथाश्चिरं तिर्यग्वलिता आसन् संमुखावनतानां तेषां भरादित्यर्थः ॥३३॥

हिअअ-पडणे व्व मूढं [1]रवि-पडणे व्व सहसा तमम्मि णिवडिअं ।
राम-[2]पडणम्मि जाअं सिर-पडणे व्व गअ-जीविअं तेल्लोक्कं ॥३४॥

[हृदय-पतने इव मूढं रवि-पतने इव सहसा तमसि निपतितम् ।
राम-पतने जातं शिरः-पतने इव गत-जीवितं त्रैलोक्यम् ॥ ]

हृदयपतित इव मूढं विस्मृतकर्तव्यम् । रविपतन इव सहसा तमसि व्यामोहे निपतितम् । शिरःपतन इव गतजीवितं रामपतने त्रैलोक्यं जातम् । अत्र रामचन्द्राघाते त्रैलोक्य-हृदयस्यैव मर्मघात इति हृदयत्वेन, व्यामोहतिमिरापसारकतया सहजतेजस्तया वा रवित्वेन, जगदुत्तमत्वेन शिरसा निरूपणम् ॥३४॥

अह राम-परित्ताणं सुण्ण-दिसा-मुह-पलोअण-[3]णिरुच्छाहं ।
भअ-णिच्चल-पुञ्जइअं ण मुअइ पडिअम्पि राहवं कइ-सेण्णं ॥३५॥

[अथ राम-परित्राणं शून्य-दिशा-मुख-प्रलोकन-निरुत्साहम् ।
भय-निश्चल-पुञ्जीभूतं न मुञ्चति पतितं अपि राघवं कपि-सैन्यम् ॥]

अथ राघवपतनानन्तरं राम एव परित्राणं यस्य शून्यदिङ्मुखप्रलोकनान्निरुत्साहं भयान्निश्चलं पुञ्जीभूतं कपिसैन्यं पतितमपि राघवं न मुञ्चति तमेव शरणं गतमिति भावः । एतेन वानराणां प्रभुभक्तिमत्ता दर्शिता ॥३५॥

---

1 रइ॰ GB. 2 ॰म्पि Ms. 3 Ms ॰णिरुत्साहं, evidently a mistake.

पडिअस्स वि रहुवइणो दीसन्तो देइ [1]पवअ-बल-माभीइं ।
अविसाअ-महग्घविओ सासअ-धीर-धरिओ मुहस्स पसाओ ॥३६॥

[पतितस्य अपि रघुपतेः दृश्यमानः ददाति प्लवग-बल-माभीतिम् ।
अविषाद-महार्घितः शाश्वत-धैर्य-धृतः मुखस्य प्रसादः ॥ ]

[F99b] पतितस्यापि रघुपतेरविषादेन महार्घीकृतो बहुमानपात्रीकृतोऽविषादेन महार्घित इति **लोकनाथः**। शाश्वतेन धैर्येण धृतो मुखस्य दृश्यमानः प्लवगबलस्य माभीतिमभयं ददाति। **संलाव** इति पाठे संलापमित्यर्थः। मुखप्रसादोऽभयं ददात्येव वानराः पुनस्तं न गृह्णन्तीति भाव इति **कश्चित्** ॥३६॥

[2]दीणं भग्गुच्छाहं उव्विग्ग-मणं विसाअ-पेल्लिअ-हिअअम् ।
राहव-विइण्ण-णअणं आलेक्ख-गअं व संठिअं कइ-सेण्णम् ॥३६क॥

[दीनं भग्नोत्साहं उद्विग्न-मनः विषाद-प्रेरित-हृदयम् ।
राघव-वितीर्ण-नयनं आलेख्य-गतं इव संस्थितं कपि-सैन्यम् ]

पद्यमिदं केनापि टीकाकारेण न धृतमिति **कुलनाथः**। अतएव एतत् पुस्तकेऽपि नास्ति ॥३६क॥

णवरि अ विहीसण-जलाहअच्छिणा वाणराहिवेण [3]णिसिअरो ।
पासम्मि धणु-सहाओ दिट्ठो कअ-पेसणो दसाणण-तणओ ॥३७॥

---

1 पवअ-वइ-संलावं GB ; Ms has marginally ०संलावं, but it does not adopt the reading ०वइ० in either case. 2 Inserted from GB text as our Ms like CK does not mention this verse in its Text. But the commentary explains the omission. 3 णिइ० GB.

[अनन्तरं च विभीषण-जलाहताक्षेण वानराधिपेन निशिचरः।
पार्श्वे धनुः-सहायः दृष्टः कृत -प्रेषणः दशानन-तनयः ॥ ]

अनन्तरश्च विभीषणस्य जलेनार्थादभिमन्त्रितेनाहताक्षेण [1]वानराधिपेन सुग्रीवेण निशिचरो मायानिर्मितरात्रिविहारी [2]धनुःसहायः कृतप्रेषणो दशाननतनयः पार्श्वे दृष्टः ॥३७॥

तो रोस-तुलिअ- पव्वअ-सहसुद्धाइअ-पहाविओ सुग्गीवो ।
लङ्कं भअ-विवलाअं [3]अहिणेऊण णवर[4] ट्ठिओ रअणिअरं ॥३८॥

[ततः रोष-तुलित-पर्वत-सहसोद्धावित-प्रधावितः सुग्रीवः।
लङ्कां भय-विपलायितं अभिनीय केवलं स्थितः रजनीचरम् ॥ ]

ततो मेघनाददर्शनानन्तरं रोषतुलितेन पर्वतेन ऊर्ध्वायित उत्थितः प्रधावितश्च सुग्रीवो भयविपलायितं रजनिचरं मेघनादं लङ्कामभिनीय अनन्तरं स्थितः। ततो रोषेण तुलित-पर्वत इति **कुलनाथः**। लङ्कां प्रवेश्य स्थित इत्यर्थ इति **केचित्** ॥३८॥

इन्दइणा [5]वि णिवेइअ-राहव-णिहण-सुहिओ णिसाअर-णाहो ।
आसाइअ-जणअ-सुआ-समागमोवाअ-णिव्वुओ ऊससिओ ॥३९॥

[इन्द्रजिता अपि निवेदित-राघव-निधन-सुखितः निशाचर-नाथः।
आसादित-जनक-सुता-समागमोपाय-निर्वृतः उच्छ्वसितः ॥]

इन्द्रजितापि निवेदितेनराघवनिधनेन-सुखितो निशाचरनाथ आसादितेन जनकसुता-समागमोपायेन निर्वृत उच्छ्वसितः। पूर्वं परिजननिवेदितमित्यपेरर्थ इति **केचित्**। पूर्व-वाक्यापेक्षयेति परमार्थः ॥३९॥

---

1 ०क्षिणा Ms 2 सनुः० Ms. 3 अहिलेऊण GB ; अइणे० Ms.
4 ०रं ठि० GB. 5 GB. Take वि as a prefix to the next word.

अह णिसिअरीहि [1]दसमुह-वअणाणिअ-[2]सरस-दिट्ठ-खण-
वेहव्वा ।
मुक्कक्कन्द-[3]विसंठुल-दर-विलविअ-मुच्छिआ [ [4]कआ ] जणअ-
सुआ ॥४०॥

[अथ निशिचरीभिः दशमुख-वचनानीत-सरस-दृष्ट-क्षण-वैधव्या ।
मुक्ताक्रन्द-विसंष्ठुल-दर-विलपित-मूर्छिता कृता जनक-सुता ॥ ]

अथ निशाचरीभिर्दशवदनस्य वचनेनानीतया दृष्टं सरसमभिनवं दृष्टं क्षणं वैधव्यं यया सा । जनकसुता मुक्ताक्रन्दा विसंष्ठुला व्याकुला दरविलपिता मूर्छिता च कृता । सा जनकसुता मुक्ताक्रन्दविसंष्ठुलं यथा स्यात्तथा दरविलपितेन मूर्छिता कृतेति **लोकनाथः** ॥४०॥

तो गअ-मोहु [F100a] म्मिल्लो पेच्छन्तो राहवो सुमित्ता-तणअं ।
परिदेविउं [5]पउत्तो तक्खण-[6]पम्हट्ठ-सअल-सीआ-
दुक्खो ॥४१॥

[ततः गत-मोहोन्मीलः प्रेक्षमाणः राघवः सुमित्रा-तनयम् ।
परिदेवितुं प्रवृत्तः तत्क्षण-प्रमुषित-सकल-सीता-दुःखः ॥ ]

[F100a] ततो रामं दृष्ट्वा विलपनानन्तरं गतमोहत्वेन उन्मीलितः प्रबुद्धो राघवः सुमित्रातनयं पश्यन् तत्क्षणं संस्मृतसकलसीतादुःखः परिदेवितुं प्रवृत्तः । सीताविरह-दुःखादपि एतद्दुःखस्य गुरुत्वादिति भावः । वस्तुतस्तु एकस्मिन् दुःखेऽभिनवे वर्तमाने दुःखान्तरं स्मर्यते ॥४१॥

---

1 दह० GB. 2 ०दिट्ठ-सरस 3 ०न्त Ms. 4 Ms, omits this word. 5 Ms has ०अ० marginally 6 ०म्भ० GB.

जस्स सअलं तिहुअणं [1]धणुम्मि आरुहइ संसअं समारूढे ।
सो [2]वि गओ सोमित्ती णत्थि[3]मणे जं ण [4]एइ विहि-परि-
णामो ॥४२॥

[यस्य सकलं त्रिभुवनं धनुषि आरोहति संशयं समारूढे ।
सः अपि गतः सौमित्रिः नास्ति मन्ये यं न एति विधि-परिणामः ॥ ]

यस्य धनुषि आरूढे आरोपितमौर्वीके सति सकलं त्रिभुवनं संशयमारोहति सोऽ[पि] सौमित्रिर्गतः शोचनीयमरणं प्राप्तः । सोऽपि सौमित्रिर्गतोऽतीत इति **कुलनाथः** । हओ इति पाठे स्पष्ट एवार्थः । अतो मन्ये विधिपरिणामो दैवपरिपाको यं न एति स नास्ति । अत्र यत् पदस्य परस्थतया तत्पदासमभिव्याहारेऽपि न दोषः । अपि-शब्दोऽत्र विरोधे ॥४२॥

अहवा अं कअ-कज्जो मज्झ कए मुक्क-जीविओ सोमित्ती ।
णिप्फल-वूढ[5]-भुअ-भरो णवर मए च्चेअ लहुइओ
अप्पाणो ॥४३॥

[अथवा अयं कृत-कार्यः मम कृते मुक्त-जीवितः सौमित्रिः ।
निष्फल-व्यूढ-भुज-भरः केवलं मया एव लघूकृतः आत्मा ॥ ]

अथवा अयं सौमित्रि र्मम कार्ये मुक्तजीवितश्चेदतः कृतकार्यः, अतो [तस्य] मरणं न शोचनीयमिति भावः । निष्फलव्यूढ भुजभरः केवलमात्मा मयैव लघूकृत उपहस्यतया लाघवास्पदीकृत इति भावः । तथा च तन्मरणादपि रामजीवनमेव शोचनीयमिति भावः । अथवा-शब्दोऽनुशोचनाक्षेपे । लघूकृत उपहास्यतां प्रापित इति **केचित्** ॥४३॥

---

1 GB have the order आरुहइ धणुम्मि 2 Ms has पि हओ in the original Text, as in GB, but has वि गओ marginally. 3 वणे G ; B जए which occurs also as a marginal reading in Ms. 4 Ms देइ, evidently a mistake. 5 ०व्वूढ० GB.

अह जम्पइ सुग्गीवं महुरं उच्छाह-दाविअ-परिच्छेअं ।
वअणं [1]सहसोवत्थिअ-[2]मरणावत्था-ववट्ठविअ-गम्भीरं ॥४४॥

[अथ जल्पति सुग्रीवं मधुरं उत्साह-दर्शित-परिच्छेदम् ।
वचनं सहसोपस्थित-मरणावस्था-व्यवस्थापित-गाम्भीर्यम् ॥ ]

अथ परिदेवनानन्तरमुत्साहस्य दर्शितः परिच्छेदोऽवधिर्यत्र । अथवा, उत्साहेन दर्शितः परिच्छेदो रावणवधरूपनिष्पत्तिर्येन । एवं सहसोपस्थापितायामपि मरणावस्थायां व्यवस्थापितं गाम्भीर्यं यत्र तद्वचनं यथा स्यात्तथा सुग्रीवं जल्पति ॥४४॥

णिव्वूढं [3]धीर तुमे [4]रिउ-बल-उअहुत्त-भुअ-बलो कइ-लोओ ।
कम्मं इमेण वि कअं जअ-णिव्वडिअ-जस-दुक्करं मारुइणा ॥४५॥

[निर्व्यूढं धीर त्वया रिपु-बलोपभुक्त-भुज-बलः कपिलोकः ।
कर्म अनेन अपि कृतं जय-निर्वर्तित-यशः-दुष्करं मारुतिना ॥ ]

हे धीर त्वया निर्व्यूढं मित्रकर्म सम्पादितम् । यत् प्रतिज्ञातं तत् कृतमिति **कुलनाथः** । त्वां विना दुष्प्रवेशाया लङ्काया दर्शनमेव नाभविष्यत् । एषोऽपि कपिलोको रिपुबलोपभुक्तभुजबलः पर्वतोत्पाटनादिभिरिति भावः । परनिपाताद् दुष्करं चेदतो जगतः पृथग्भूतमनन्यसाधारणतया भुवनत्रयदुर्लभं यशो यत्र ईदृशं कर्म मारुतिनापि कृतम् । अयमप्युपयुक्तभुजबलः कपिलोकः कृतविक्रमोचितः समरव्यापार इति **कुलनाथः** । जगति जयेन पृथग्भूतं निर्वर्तितं यद्यशस्तेन दुष्करं यथा स्यादिति **केचित्** ॥४५॥

आबद्ध-बन्धु-वेरं जं मे ण णिआ [5]विहसणं राअ-सिरी ।
[F100b] दुक्खेण [6]तेण डज्झइ [6]अविहाविअ-बाण-[7]वेअणं मह[7]
हिअअं ॥४६॥

---

1 ०प० Ms. 2 ०त्थो Ms. 3 वो० Ms, but it has धी० marginally. 4 GB have, after तुमे, "इमो वि". 5 ०भी० GB. 6 For these two words, GB have एण अ महं. 7 For these two words GB have वेअण-रसं

**[आबद्ध-बन्धु-वैरं यत् मया न नीता विभीषणं राज-श्रीः ।**
**दुःखेन तेन दह्यते अविभावित-बाण-वेदनं मम हृदयम् ॥ ]**

आबद्धं सम्यक् स्थिरीकृतं बन्धुवैरं येन तं विभीषणं राजश्रीर्न नीता न प्रापिता । अविभावितबाणवेदनं मम हृदयं तेन दुःखेन दह्यते ॥४६॥

तं[1] वच्चसु मा मुज्झसु तुरिअं तेणेअ सेउ-बन्धेण तुमं ।
पेच्छसु बन्धव-वग्गं दुक्खं कालस्स जाणिउं परिणामं ॥४७॥

**[तत् व्रज मा मुह्य त्वरितं तेन एव सेतु-बन्धेन त्वम् ।**
**प्रेक्षस्व बान्धव-वर्गं दुःखं कालस्य ज्ञातुं परिणामम् ॥ ]**

तत्तस्मान्मा मुह्य कालोचितमूढो मा भूः । अथवा, मा मुह्य मोहं मा कुरु । तेनैव सेतुबन्धेन त्वरितं व्रज । बान्धववर्गं प्रेक्षस्व । कालस्य परिणामं विनाशं ज्ञातुं दुःखं भवति । कालस्य परिणतिर्दुर्बोधेत्यर्थः । शक्यं श्वमांसादिभिरिति जुत् प्रतिहन्तुमिति यत् नामाव्यो××न्वय इति **प्राञ्चः** । **नव्यास्तु** प्राकृते क्त्वा-तुम्-प्रत्यययोरेकरूपतया वैकल्पिकत्वात् कालस्य परिणामं विरसं ज्ञात्वा मा मुह्य, तस्मात्तेनैव सेतुबन्धेन त्वरितं व्रज, बान्धववर्गं प्रेक्षस्व दुःखं दुःखितमिति बन्धुवर्गविशेषणं वेत्याहुः ॥४७॥

[2]तो तिव्व-रोस-लङ्घिअ-विहुआणण-दुक्ख-धरिअ- [3]बाहुप्पीलो ।
रहुवइणो पडिवअणं भणइ अदाऊण वाणरे पवअ-वई ॥४८॥

**[ततः तीव्र-रोष-लङ्घित-विधुतानन-दुःख-धृत-बाष्पोत्पीडः ।**
**रघुपतेः प्रतिवचनं भणति अदत्वा वानरान् प्लवग-पतिः ॥ ]**

ततो रामवचनानन्तरम्, अह इति पाठेऽप्ययमेवार्थः । तीव्ररोषलङ्घितश्चासौ विधूतेन रोषकम्पितेनाननेन दुःखेन धृतो बाष्पोत्पीडो येन ईदृशो वानरपती[4] रघुपतेः प्रतिवचनमदत्वा वानरान् भणति ॥४८॥

---

1 ता GB. 2 अह Ms., but it has marginally तो 3 ०डो
4 ०तिं० Ms.

[1]वच्चह लक्खण-सहिअं णव-पल्लव-रइअ-वीर-सअणत्थरणं ।
[2]पावेह वाणर-उरिं अविहाविअ-बाण-वेअणं रहुणाहं ॥४९॥

[व्रजत लक्ष्मण-सहितं नव-पल्लव-रचित-वीर-शयनास्तरणम् ।
प्रापयत वानर-पुरीं अविभावित-बाण-वेदनं रघुनाथम् ॥ ]

व्रजत नवपल्लवरचितं वीरशयनास्तरणं यस्य तं लक्ष्मणसहितं रघुपतिं [3]वानरपुरीं किष्किन्धामविभावितबाणवेदनं प्रापयत। वीरशय्यापदेन युद्धाभिहतस्य वीरस्य निषदनाय या शय्या साभिधीयते। अविभावितबाणवेदनमज्ञातबाणवेदनमिति क्रियाविशेषणमिति **केचित्** ॥४६॥

अहअम्पि [4]वज्ज-वडणाइरिक्क-संपाअ-गहिअ-पव्विद्ध-धणुं ।
अद्धोहरिआसाइअ-वलिअ-भुअक्खित्त-मोडिअ-गआ-
विहलं ॥५०॥

[अहं अपि वज्र-पतनातिरिक्त-संपात-गृहीत-प्रविद्ध-धनुषम् ।
अर्धावहृतासादित-वलित-भुजाक्षिप्त-मोटित-गदा-विह्वलम् ॥ ]

चतुर्भिः कुलकम् । अहमपि दशमुखमेवं करोमीति शेषस्कन्धकेनान्वयः । भवन्तोऽपि रामं गृहीत्वा गच्छन्त्वित्यर्थोऽपिशब्देन समुच्चीयते । कीदृशं करोमीत्याह वज्रपतनात् **पाठान्तरे** विद्युत्पतना[द]तिरिक्तेन सम्पातेनाभिमुखपतनेन गृहीतं सत् प्रक्षिप्तं धनुर्यस्य । गृहीतं प्रविद्धं धनुर्यस्येति **कुः** (कुलनाथः) । अर्धावहृतासादितार्धव्यापारितैव गृहीता ततो वलितान्मोटिताद् हस्तादाकृष्टा मोटिता इक्षुयष्टिरिव भ्रामितभग्ना या गदा तया विकलम् । **कुलनाथस्तु**, अर्धावहृतासादितात् स्तोकव्यापारितप्राप्ताद् वलितादपवर्जिताद्भुजादाक्षिप्तया मोटितया गदया विह्वलं किंकर्तव्यमूढमित्याह ॥५०॥

---

1 ०च्छ० Ms. 2 ०इ Ms. 3 ०रिं Ms. 4 विज्जु-पडणाइ-रित्त० GB, but Ms has only विज्ज in the margin.

खन्धद्धन्तोवाहिअ-कर-[1]जुअलोलुग्ग-चन्दहास-क्खग्गं ।
अक्कन्त-चलण-ताडिअ-[F101a] दलिअ[2]-रहाहोमुहोसरन्त-
पहरणं ॥५१॥

[स्कन्धार्धान्तावावाहित-कर-युगलावल्गण-चन्द्रहास-खड्गम् ।
आक्रान्त-चरण-ताडित-दलित-रथाधोमुखापसरत्-प्रहरणम् ॥]

स्कन्धार्धान्ते अर्थान्मदोये स्कन्धैकदेशेऽववाहितो व्यापारित एव करयुगलेन अर्थान्मदीयेनावरुग्णश्चन्द्रहासनामा खङ्गो यस्य । आक्रान्तेन दत्तभरेण चरणेन ताडितः सन् दलितो यो रथस्तस्मादधोमुखान्यपसरन्ति प्रहरणानि यस्य तम् । स्क[न्धैक]देशे व्यक्तोऽववाहितो व्यापारित इति **केचित्** ॥५१॥

भग्ग-पुरिल्ल-विसंठुल-भुअ-जुअल-[3]क्खविअ-सेस-णिप्फल-
बाहुं ।
वज्ज-णिह-हत्थ-णिवडन्त-[4]गरुअ-दढ-मुट्ठि-भिण्ण-
वच्छद्धन्तं ॥५२॥

[भग्न-पुरोग-विसंष्ठुल-भुज-युगल-क्षयित-शेष-निष्फल-बाहुम् ।
वज्र-निभ-हस्त-निपतद्-गुरुक-दृढ-मुष्टि-भिन्न-वक्षोऽर्धान्तम् ]

[F101a] भग्नेन पूर्वप्रयुक्तेन । पुरिल्ल-शब्दः पूर्वप्रयुक्ते देशी । विसंष्ठुलेन स्वकार्याक्षमेण भुजयुगलेन हेतुना क्षयिता व्याहताः सन्तो निष्फलाः शेषा बाहवो यस्य । वज्रनिभं यथा स्यात्तथा हस्तान्निपतता गुरुकेण मुष्टिना भिन्नो वक्षोऽर्धान्तो यस्य । **केचित्** परनिपातानियमात् प्रथमभग्नं यद्भुजयुगलं ते[न वि]संष्ठुलपतितः शेषबाहुर्यस्य इत्याहुः ॥५२॥

---

1 जुअलाभग्ग° Ms. 2 °भग्ग° Ms ; but it has दलिअ marginally.
3 °लुक्खुडिअ° GB. 4 °दिण्ण° GB., but Ms also has it marginally.

भुअ-[1]णिव्वडिआ-अड्ढिअ-[2]खुडिएक्केक्क-विरसन्त-पव्विद्ध-सिरं ।
णिप्फल-सीआ-सङ्घिअ-[3]णक्खुक्खुडिअ-हिअअं करेमि
दहमुहं ॥५३॥

[भुज-निर्वेलिताकृष्ट-खण्डितैकैक-विरसत्-प्रविद्ध-शिरसम् ।
निष्फल-सीता-संहित-नखोत्खण्डित-हृदयं करोमि दशमुखम् ॥ ]

भुजाभ्यामर्थान्मदीयाभ्यां पृथक्कृतान्याकृष्टानि ततः खण्डितानि एकैकं रसन्ति प्रक्षिप्तानि[4] शिरांसि यस्य। एकैकं रसन्ति आर्तनादं कुर्वन्तीति केचित्। निष्फलं सीतायां संहितमभिनिविष्टमतो नखेनोत्खण्डितं हृदयं यस्य तम् ॥५३॥

इअ अज्जं[5]च्चेअ मए णिहअम्मि दसाणणे णिआ किक्किन्धं ।
अणुमरिहिइ व मरन्तं [6]दच्छिइ जीविअं व राहवं जणअ-
सुआ ॥५४॥

[इति अद्य एव मया निहते दशानने नीता किष्किन्धाम् ।
अनुमरिष्यति वा म्रियमाणं द्रक्ष्यति जीवितं वा राघवं जनक-सुता ॥ ]

इत्येवं प्रकारेणाद्यैव मया दशानने निहते सति किष्किन्धां नीता जनकसुता म्रियमाणं राघवं वा अनुमरिष्यति जीवितं वा द्रक्ष्यति ॥५४॥

विसहर-बाण त्ति इमे विहीसणेण [7]अ णिवारिए सुग्गीवे ।
आढत्तो चिन्तेउं [8]अत्थं हिअएण [9]गारुलं रहुणाहो ॥५५॥

---

1 णिव्वालिअ-कड्ढिअ० GB, 2 ०खुडि-अक्केक्क-विसरन्त GB ; Ms has मरसन्त० but it has marginally विरसन्त० 3 ०णकखुक्खु० GB 4 It appears the scholiast transliterates ०पक्खित्त० 5 चेअ GB. 6 दच्छिहि GB. 7 विणिवा० GB. 8 अस्तं Ms ; मन्तं GB.Ms has the same reading marginally. 9 ०डं GB.

[विषधर-बाणाः इति इमे विभीषणेन च निवारिते सुग्रीवे।
आरब्धः चिन्तयितुं अस्त्रं हृदयेन गारुडं रघुनाथः ॥ ]

इमे विषधरबाणा इति विभीषणेन च निवारिते सुग्रीवे रघुनाथो गारुडमस्त्रं हृदये चिन्तयितुमारब्धः प्रवृत्तः। गारुडमन्त्रं वा, तदा 'मन्त'मिति पाठः ॥५५॥

णवरि अ सहसुक्खिप्पन्त[1]-साअरद्धन्त-धुव्वमाण-सुवेलं।
जाअं खर-वाआहअ-[2]किरन्त-रक्खस-कलेवरं धरणि-अलं ॥५६॥

[अनन्तरं च सहसोत्क्षिप्यमाण-सागरार्धान्त-धाव्यमान-सुवेलम्।
जातं खर-वाताहत-कीर्यमाण-राक्षस-कलेवरं धरणी-तलम् ॥ ]

चिन्तानन्तरञ्च सहसा तत्क्षणमुत्क्षिप्यमाणेन सागरार्धान्तेन धाव्यमानः प्लाव्यमानः सुवेलो यत्र। खरेण तीव्रेण वातेनाहतानि कीर्यमाणानि [ राक्षसानां ] कलेवराणि यत्र ईदृशं धरणितलं जातं। आगच्छतो गरुडस्य पक्षवातादेवं वृत्तमित्यर्थः। खरवातेनाहतानि क्षिप्तानि प्रेरिताजीवितानि रक्षसां कलेवराणि यत्रेति कुः (कुलनाथः) ॥५६॥

पे [F101b]च्छइ अ कणअ-[3]पेच्छण-बहलुज्जोअ-[4]पडिसारिअ-[5]णिसा-तिमिरं।
कअ[6]-पिच्छ-पम्ह-पाअड[7]-त्थिर-[8]पुट्ठि-णिहित्त-महुमहासण-मग्गं ॥५७॥

[प्रेक्षते च कनक-पिच्छ-बहलोद्योत-प्रतिसारित-निशा-तिमिरम्।
कृत-पिच्छ-पक्ष्म-प्रकट-स्थिर-पृष्ठ-निहित-मधुमथासन-मार्गम् ॥ ]

रामो गरुडञ्च प्रेक्षते। कीदृशं कनकमयानां पेच्छनानां पक्षाणां बहुलेनोद्योतेन परि-

1 °च्छिप्प° GB. 2 परित्त Ms 3 पेहुण° GB. 4 °सामिअ Ms. 5 °महा° GB. 6 णव GB so also our Ms, but it has margiually कअ° 7 °मउअ GB. Ms पाडअ evidently a slip of the scribe. 8 °पिट्ठि° GB.

सारितं दूरीकृतं निशातिमिरं येन । पडिसामिअ इति पाठे प्रतिशमित इत्यर्थः । घर्षणात् कृतपिञ्छपक्ष्मत्वेन प्रकटः स्थिरपृष्ठनिहितो मधुमथनस्यासनमार्गो यस्मिन् तं गरुडमिति योज्यम् । पेच्छणः पक्षे देशी ॥५७॥

दुव्वार-वासवाउह-घाअ-विमुक्केक्क-[1]पिच्छ-पाअड-वच्छं ।
रामो पाआ[2]लञ्छिअ-कण्ठ-वलन्त-ट्ठिओरअ-धरं
[3]गरुलं ॥ कु ॥५८॥

[दुर्वार-वासवायुध-घात-विमुक्तैक-पिञ्छ-प्रकट-वक्षसम् ।
रामः पादालञ्छित-कण्ठ-वलत्-स्थितोरग-धरं गरुडम् ॥ ]

दुर्वारस्य वासवायुधस्य घातेन विमुक्तैकपिञ्छतया प्रकटवक्षसं, पादाकृष्टकण्ठं वलमानस्थितमुरगं धारयन्तम्, अथवा पादेनाक्रान्तः सन् कण्ठेऽवलम्बितो य उरगस्तं धारयन्तम् ॥५८॥

तो कअ-राम-पणामे [4]गरुले ओवइअ-समुह-संठिअ-दिट्ठे ।
दोण्ह वि मुक्क-सरीरा ण विणज्जइ ते कहिं गआ
सर-णिवहा ॥५९॥[5]

[ततः कृत-राम-प्रणामे गरुडे अवपतित-संमुख-संस्थित-दृष्टे ।
द्वयोरपि मुक्त-शरीराः न विज्ञायते ते कुत्र गताः शर-निवहाः ॥ ]

---

1 ०ञ्छ GB. 2 इ० Ms. 3 ०डं GB. 4 ०डे GB. As our Ms. has not got this verse, S also omits this.

5 Before our verse 60, there is the following verse in GB:—
अह etc. But this verse does not occur in our Ms (as is also omitted by S).

अह सर-बन्ध-विमुक्को विणआ-तणओवऊहण-क्खअ-रहिओ ।
अप्पाहिअत्थ-मन्तो जाओ गअ-गरुड-दारुणो रहुणाहो ॥

ततो दूराद्दर्शनानन्तरमेव कृतरामप्रणामे गरुडे सति। अवपतित-संस्थित-दृष्टे द्वयोरपि राम-लक्ष्मणयोर्मुक्तशरीरा न ज्ञायते ते क्व गता शरनिवहा इति वाक्यार्थस्य कर्मता ॥५६॥

अह सर-बन्ध-विमुक्के सोऊण णिसाअराहिवो [1]रहु-तणए।
[2]आगअ-गरुलासङ्को धुम्मक्खम्मि सअलं णिमेइ [3]रण-भरं ॥६०॥

[अथ शर-बन्ध-विमुक्तौ श्रुत्वा निशाचराधिपः रघु-तनयौ।
आगत-गरुडाशङ्कः धूम्राक्षे सकलं निदधाति रण-भरम्॥ ]

अथ गरुडागमनानन्तरं सर्प[4]-पाशामोचनानन्तरमेव वा। शरबन्धाद्विमुक्तौ रघुतनयौ श्रुत्वा निशाचरपतिरागतोपस्थिता गरुडाशङ्का यस्य सः। धूम्राक्षे सेनापतिविशेषे सकलं रणभरं निमिनोति। निदधाति निक्षिपतीति **केचित्** ॥६०॥

सो रोसेण रहेण व उच्छाहेण व णिसाअर-बलेण समं।
णीइ [5]धअं व पहरिसं वहमाणो [6]पहरणं व वेराबन्धं ॥६१॥

[सः रोषेण रथेन इव उत्साहेन इव निशाचर-बलेन समम्।
निरैति ध्वजं इव प्रहर्षं वहन् प्रहरणं इव वैराबन्धम्॥ ]

स धूम्राक्षः प्रहर्षं रणपरितोषं तुङ्गतया ध्वजमिव। वैराबन्धं दुर्निवारतया प्रहरणमिव वहन्। रथेनेव रोषेणोत्साहेनेव निशाचरबलेन समं निर्गच्छति। प्रेरकतया रोष-रथयोः कालक्षेपासहिष्णुतया उत्साह-राक्षसबलयोः साम्यम्। प्रकृतोपमेयम् ॥६१॥

तो सो रक्खस-णिवहो सह धुम्मक्खेण साअ-[F102a] रद्धन्त-णिहो।
[7]वलवा-मुहाणलस्स व सञ्चरण-वहम्मि[8] मारुअ-सुअस्स ठिओ ॥६२॥

1 ०णाहे GB. 2 आअअ-गरुडा० GB. 3 ०धुरं Ms. 4 ०र्वं Ms.
5 भुअं GB, so has Ms., but it has धअं marginally 6 विक्कमं GB, and this reading occurs marginally in Ms. 7 Ms has ०मुहस्स evidently an oversight of the scribe. 8 ०प० GB

[ततः सः राक्षस-निवहः सह धूम्राक्षेण सागरार्धान्त-निभः ।
वडवा-मुखानलस्य इव सञ्चरण-पथे मारुत-सुतस्य स्थितः ]

ततो निर्गमनानन्तरमेव सागरार्धान्तनिभः स राक्षसनिवहः सह धूम्राक्षेण वडवामुखस्येव मारुतसुतस्य सञ्चरणपथे [स्थितः]। इह राक्षस-निवहमभिधाय धूम्राक्षस्य [1]पुनरभिधानं प्राधान्यसूचनाय[2], यथा वसिष्ठेन सह ऋषयः समुपागता इति **श्रीनिवासः**। धूम्राक्षेण सहैव सागरैकदेशनिभस्तदुपष्टम्भेनैव दर्पजन्यत्वेन सह कोलाहलरुद्धत्वादिति **केचित्** ॥६२॥

अह दारुणावसाणे कइ-रक्खस-सेण्ण-वइकरम्मि पअत्ते ।
[3]सम्भारिअक्ख-णिहणो ओत्थरइ सरेहि मारुइं धुम्मक्खो ॥६३॥

[अथ दारुणावसाने कपि-राक्षस-सैन्य-व्यतिकरे प्रवृत्ते ।
संस्मृताक्ष-निधनः अवस्तृणाति शरैः मारुतिं धूम्राक्षः ॥ ]

[ F 102a ] अथानन्तरं दारुणस्य शरबन्धस्यावसाने इति **केचित्**। दारुणमवसानं परिणतिर्यत्र तस्मिन् कपिराक्षससैन्ययोर्व्यतिकरे सम्मर्दे प्रवृत्ते सति। व्यतिकरे परस्पराश्रसम्पातविमर्दे इति वा। [4]संस्मृतमक्षस्य रावणपुत्रस्य निधनं येन। स धूम्राक्षो मारुतिं शरैरवस्तृणात्याच्छादयति। [5]संस्मारितमक्षनि[धनं] येनेति मारुतिविशेषणं वा। हनूमन्तं दृष्ट्वा अक्षनिधनं स्मृत्वा अधिकामर्षेणैवं [कृत]वानित्यर्थः ॥६३॥

तो तस्स [6]सर-णिहाए रोमन्तर-लग्ग-णिप्फले [7]धुणमाणो ।
अक्कमण-मोडिअ-रहो हिअ-धुम्मक्ख-धणु-संठिओ हसइ
कई ॥६४॥

---

1 ०रन० Ms. 2 शू० Ms. 3 ०वि० Ms. 4 ०तस्य Ms.
5 ०ताक्ष 6 ०घा० GB. 7 धुश्र० GB.

[ततः तस्य शर-निघातान् रोमान्तर-लग्न-निष्फलान् धुन्वन् ।
आक्रमण-मोटित-रथः हत-धूम्राक्ष-धनुः-संस्थितः हसति कपिः ॥ ]

ततोऽनन्तरं तस्य धूम्राक्षस्य [1]शरनिघातान् बाणसमूहान् रोमान्तरलग्नतया निष्फलान् धुन्वन् आक्रमणेन मोटितरथो हतधूम्राक्षधनुः सन् सम्यक्स्थितः कपिर्हनूमान् हसति तस्य वीरदर्पमुपालभत इत्यर्थः ॥६४॥

भग्गो भुअम्मि फलिहो वच्छुच्छलिअ-दलिअं ण इ[2]ट्ठं मुसलं ।
धुम्मक्ख-रोस-मुक्कं पवअस्स जहिं तहिं विराइ पहरणं ॥६५[3]॥

[भग्नः भुजे परिघः वक्ष-उच्छलित-दलितं न दृष्टं मुसलम् ।
धूम्राक्ष-रोष-मुक्तं प्लवगस्य यत्र तत्र विशीर्यते प्रहरणम् ॥ ]

धूम्राक्षेण रोषान्मुक्तं प्लवगस्य हनूमतो यत्र तत्रैव विशीर्यते । तदेवाह, भग्नो भुजे परिघो वक्षस उच्छलितं दलितं न दृष्टं मुसलं व[क्षसो] दलितं समुच्छलितं न दृष्टं मूसलमिति **लोकनाथः** ॥६५॥

तो दीह-वाम-कर-अल-[4]पडिवण्णावेढणोणअ-गलुद्देशं ।
[5]झिज्जन्त-तलिण-णिग्गअ-वच्छब्भन्तर-भमन्त-सीह-
णिणाअं ॥६६॥

[ततः दीर्घ-वाम-कर-तल-प्रतिपन्नावेष्टनावनत-गलोद्देशम् ।
क्षीयमाण-तलिन-निर्गत-वक्ष-अभ्यन्तर-भ्रमत्-सिंह-निनादम् ॥ ]

तत एवंरूपयुद्धानन्तरं धूम्राक्षं प्रभञ्जनतनय एवं करोतीति आगामिद्वितीयस्कन्धकेना-

---

1 Ms has शरसमूहान् बाणनिघातान् 2 B द० 3 Ms. puts the number 66 and it thus commences a mistake in numbering, which continues upto the end of the canto 4 GB have this reading, so has our Ms marginally, but it has for its main reading ०णणोपीड० 5 रुम्भन्त-जीव-णिग्गम GB. Ms. marginally has रुन्भन्त-जीअ०

न्वयः । कीदृशं दीर्घेण वामकरतलेन प्रतिपन्नावेष्टनः सन्नवनतो गलोद्देशो यस्य । पाठान्तरे प्रतिपन्नावपीडनेनेत्यर्थः । गलनिष्पीडनादेव क्षीयमाणतया तनुरीषद्विनिर्गतो वक्षसोऽभ्यन्तरे भ्रमन् सिंहनादो यस्य तम् ॥६६॥

खण-[1]वावडिअ-विसंठुल-गलन्त-पहरण-पलम्बिओहअ-हत्थं ।
कुणइ पभञ्जण-तणओ उद्धट्ठिअ-मु[F102b]क्क-जीविअं
धुम्मक्खं ॥६७॥

[क्षण-व्यापृत-विसंष्ठुल-गलत्-प्रहरण-प्रलम्बितोभय-हस्तम् ।
करोति प्रभञ्जन-तनयः ऊर्ध्वास्थित-मुक्त-जीवितं धूम्राक्षं ॥ ]

क्षणं व्यापृतौ विसंष्ठुलौ गलत्प्रहरणौ प्रलम्बितावुभौ हस्तौ यस्य । क्षणं व्यापारितावेव विसंष्ठुलौ [2]गलनिष्पीडनाद्बलशून्यौ गलत्प्रहरणौ प्रलम्बितावुभयहस्ताविति **केचित्** । तं धूम्राक्षमूर्धास्थितमुक्तजीवितं करोति प्रभञ्जनतनयः ॥६७॥

अह णिहए[3] धुम्मक्खे हअ-सेसम्मि[अ][4]गए णिसाअर-सेण्णे ।
दहमुह-समुहाणत्तं णिन्तं पेच्छइ अकम्पणं पवण-सुओ ॥६८॥

[अथ निहते धूम्राक्षे हत-शेषे च गते निशाचर-सैन्ये ।
दशमुख-संमुखाज्ञप्तं निर्यन्तं प्रेक्षते अकम्पनं पवन-सुतः ॥ ]

[F102b] अथ धूम्राक्षनिधनान्तरम्, 'अह' असौ वा पवनसुतो निहते धूम्राक्षे हतशेषे च निशाचरसैन्ये गते सति दशमुखेन संमुखाज्ञप्तं निर्गच्छन्तमकम्पननामानं राक्षसं पश्यति ॥६८॥

[5]तम्पि विइण्णोरत्थल-वीसत्थोहरिअ-णिट्ठिआउह-णिवहं ।
ओसुम्भइ हणुमन्तो एक्कं

---

1 °वावारि° GB. 2 °ष्नि° Ms. 3 पडिए, so has Ms. this reading marginally. 4 Ms omits this word. 5 Ms marginally has °णिट्ठवि°, which reading, if accepted, mars the metre.

[तं अपि वितीर्णोरःस्थल-विश्वस्तावहृत-निष्ठितायुध-निवहम् ।
अवपातयति हनूमान् एकैक-खण्डित-विप्रकीर्णावयवम् ॥

तमपि अकम्पनमपि विकीर्णे प्रसारिते उरःस्थले विश्वस्तमवहृता व्यापारिता निष्ठिता विनाशं गता आयुधनिवहा अर्थादकम्पनमुक्ता यत्र एवं यथा स्यादेकैकं खण्डितानि वि [ प्र ] कीर्णावयवानि यत्र एवं यथा भवति तथा हनूमान् पातयति ॥६९॥

अह दहमुह-संदिट्ठो हणुमन्ताघाअ-सम-तुलग्ग-प्फिडिओ ।
पडिओ णीलस्स मुहे अलद्ध-समर-सुह-दूमिअस्स पहत्थो ॥७०॥

[अथ दशमुख-सन्दिष्टः हनूमदाघात-सम-तुलाग्र-स्फिटितः ।
पतितः नीलस्य मुखे अलब्ध-समर-सुख-दुःखितस्य प्रहस्तः ॥

अथ अकम्पनपातानन्तरं दशमुखेन संदिष्टं हनुमत आघात एव समतुलाग्रं परीक्षार्थं समीकृततुलाग्रसदृशम्, अत्रारूढस्य संशयास्पदत्वात् तस्मात् स्फिटितो भ्रष्टस्तस्मै भ्रष्ट आगत इति **केचित्** । हनूमदाघातसमात् तुलाग्रात् दैवात् भ्रष्टो यथा हनूमत्कृताघातात् तथा दैवान्निजभागधेयादपि स्खलित इत्यर्थ इति **श्रीनिवासः** । ईदृशः प्रहस्तनामा राक्षसोऽलब्धसमरसुखत्वाद् दुःखितस्य नीलनामवानरस्य मुखे निपतितः ॥७०॥

णवरि अ पत्थाण-समं[1] बाणो कालाअसो पहत्थ-विमुक्को ।
पडिओ णीलस्स उरे वण-पडिभिण्ण-रुहिरुग्गमेण पिसुणिओ ॥७१॥

[अनन्तरं च प्रस्थान-समं बाणः कालायसः प्रहस्त-विमुक्तः ।
पतितः नीलस्य उरसि व्रण-प्रतिभिन्न-रुधिरोद्गमेन पिशुनितः ॥

अनन्तरञ्च प्रस्थानसमं गमनकालं प्रहस्तेन मुक्तः कालायसो बाणः, कालायास अयस्तीक्ष्ण इति **केचित्** । कृष्णलौहघटित इति **कुलनाथः** । समानवर्णतया सुलक्षणः । व्रणात् प्रतिभिन्नेन गलितेन रुधिरोद्गमेन पिशुनित [:] सूचितः "पिशुनौ खलसूचकौ" ॥७१॥

---

1 पत्थाणे चिअ GB.

वेओवत्तिअ-विडवं मुअइ कई वि सुर-हत्थि-परिमल-सुरहिं ।
गइ-मग्ग-लग्ग-[1]भमरं पडिसोत्त-पसा[F103a]रिअंसुअं कप्प-
दुमं ॥७२॥

[वेगाववर्तित-विटपं मुञ्चति कपिः अपि सुर-हस्ते-परिमल-सुरभिम् ।
गति-मार्ग-लग्न-भ्रमरं प्रतिस्रोतः-प्रसारितांशुकं कल्पद्रुमम् ॥

वेगवशादववर्तिताः पश्चादभिमुखीभूता विटपा यस्य । वेगादेव प्रतिस्रोतोगतानि विपरीतप्रसारितान्यंशुकानि यस्य । सुरहस्तिपरिमलेनार्थात् सुरगजमदवहलकटकण्डूयनेन सुरभिमत एव गतिमार्गलग्नभ्रमरं कल्पद्रुमं कपिरपि मुञ्चति । कल्पद्रुमप्राप्तिश्च रावणेन सुवेले आरोपितत्वादमरावतीपर्यन्तं वा अतिवेगेन तत्क्षणप्रसरणादिति भावः ॥७२॥

[2]बोलेन्त-जलहरस्स व तो से आसार-जल-लव-च्छेअ[3]-णिहो ।
आगम-मग्गम्मि ठिओ धुअ-विडव-[4]क्खुडिअ[5]-मोत्तिअ-प्फल-
पअरो[6] ॥७३॥

[व्यतिक्रामद्-जलधरस्य इव ततः अस्य आसार-जल-लव-च्छेद-निभः ।
आगम-मार्गे स्थितः धुत-विटप-खण्डित-मौक्तिक-फल-प्रकरः ॥]

ततस्तस्य कल्पपादपस्यागमनमार्गे आगमनपथे व्यतिक्रामतो जलधरस्येव आसार-जललवानां च्छेदनिभो बिन्दुसदृशो धुतेभ्यो विटपेभ्यश्च्युतो मौक्तिकफलप्रकरः स्थितः ॥७३॥

तो तस्स भुअ-विमुक्को भग्गो वण-भरिअ-मोत्तिअ[7]-प्फल-पअरो ।
भज्जन्त-विडव-विअलिअ-सिअंसुआवीअ-पहर-रुहिरम्मि
उरे ॥७४॥

1 ॰भमलं B ; ॰भसलं G. 2 बोल॰ GB, 3 ॰त्थवअ॰ GB. 4 ॰क्खलिअ॰ GB. 5 ॰आ-फ॰ GB. 6 ॰णिवहो॰ GB. 7 Ms omits this word.

[ततः तस्य भुज-विमुक्तः भग्नः व्रण-भृत-मौक्तिक-फल-प्रकरः ।
भज्यमान-विटप-विगलित-सितांशुकापीत-प्रहार-रुधिरे उरसि ॥ ]

ततः पातानन्तरं [1]से तस्य प्रहस्तस्य भयविमुक्ते भयरहिते[2] । भज्यमानेभ्यो विटपेभ्यो विगलितै [र्भ्रं] ष्टैः सितांशुकैरापीतप्रहाररुधिरेषु व्रणेषु भृतो मौक्तिकफलप्रकरो यत्र तस्मिन्नुरसि भग्नः ॥७४॥

समअं वञ्चेइ सरे थएइ समअं कई दुमेहि णह-अलं ।
समअं तेण विमुक्को चउद्दिसं पाअडो सिला-संघाओ ॥७५॥

[समं वञ्चयति शरान् स्थगयति समं कपिः द्रुमैः नभस्तलम् ।
समं तेन विमुक्तः चतुर्दिशं प्रकटः शिला-संघातः ॥ ]

सममेकदा वञ्चयति शरान् । कपिर्नीलः समं द्रुमैर्नभस्तलं स्थगयति आच्छादयति । समं तेन विमुक्तश्चतुर्दिशं प्रकटः शिलासंघातः ॥७५॥

विअलन्त-दुम-च्छेआ सर-घाअ-दलन्त-[3]विहडिअ-सिला-णिवहा ।
दीसन्ति दलिअ-पव्वअ-वोच्छिज्जन्तोज्झरा णह-अलुद्देसा ॥७६॥

[विगलद्-द्रुम-च्छेदाः शर-घात-दलद्-विघटित-शिला-निवहाः ।
दृश्यन्ते दलित-पर्वत-व्यवच्छिद्यमान-निर्झराः नभस्तलोद्देशाः ॥ ]

नभस्तलोद्देशा ईदृशा भवन्ति । कीदृशा इत्याह, विगलन्तो द्रुमाणां छेदाः खण्डा येषु शरघातैर्दल[न्तो] विशीर्यन्तो विघटिताः शिलानिवहा येषु । दलितेभ्यः पर्वतेभ्यो व्यवच्छिद्यमाना निर्झरा येषु ॥७६॥

---

1 से does not ocur in the text. 2 Our commentary apparently adopts readings in the seventh case-ending in ०क्के and ०रे so as to treat them as adjectives to उरे. It also reads भअ-विमुक्के for भुअ-विमुक्को ।
3 ०विअलिअ० GB.

गिरि-धाउ-रअ-क्खउरो अंस-विवल्हत्थ[1]-बहलकेसर-णिवहो ।
संझाअव-विच्छुरिओ सजलो व्व घणो णहम्मि दीसइ णी[F103b]
लो ॥७७॥

[गिरि-धातु-रजः-कलुषः अंस-विपर्यस्त-बहल-केसर-निवहः ।
सन्ध्यातप-विच्छुरितः सजलः इव घनः नभसि दृश्यते नीलः ॥ ]

गिरिधातुरजसो मिश्रकलुषोऽंसे स्कन्ध विपर्यस्तो[2] बहलकेशरनिवहो यस्य, अत एव सन्ध्यातपेन च्छुरितः सजलो घन इव दृश्यते नभसि नीलः ॥७७॥

णवरि अ गअणद्धन्ते [3]ओवअण-क्खित्त-धणु-णिअत्त-त्थिमिओ ।
तह [4]वरिओ विअ दीसइ पढम-विमुक्केहि सर-समूहेहि कई ॥७८॥

[अनन्तरं च गगनार्धान्ते अवपतनाक्षिप्त-धनुर्निवृत्त-स्तिमितः ।
तथा वृतः इव दृश्यते प्रथम-विमुक्तैः शर-समूहैः कपिः ॥ ]

[F103b] अवपतनेनाक्षिप्तमाकृष्टं धनुरर्थात् प्रहस्तस्य येन एवंभूतः सन् निवृत्तो निश्चलः कपिः । अवपतनात् प्रथमविमुक्तैः शरसमूहैर्वृत इव कपिर्नीलो दृश्यते । एतावच्छीघ्रमुपेत्य धनुराक्षिप्य निवृत्य स्वस्थाने स्थितो यावदुत्पतनात् प्रथमविमुक्ता अपि शरास्तस्य न प्राप्ता इति शरादपि-शीघ्रगामित्वं तस्य सूचितम् ॥७८॥

अह णिसिअरेण मुसलं णीलस्य [5]णडाल-मुक्क-वेढ-प्फलिअं ।
[6]भज्जन्त-धरन्त-रवं समुहागअ-तुरिअ-वञ्चिअं पडिवण्णं ॥७९॥

---

1 ०विपल्लत्थ० Ms. 2 ०स्त० Ms, 3 ओवडण० GB.
4 ध० Ms ; but it has marginally. व० । 5 ललाट-वट्ट-पच्चुप्फलिअं GB. ; Ms has marginally ०ह्रं 6 मज्झम्मि धरेन्त० GB.

**[अथ निशिचरेण मुसलं नीलस्य ललाट-मुक्त-वेग्र-फलितम् ।**
**भज्यमान-धरान्त-रवं संमुखागत-त्वरित-वञ्चितं प्रतिपन्नम् ।। ]**

अथ निशिचरेण प्रहस्तेन नीलस्य ललाटे मुक्तं सत् प्रत्युत्फलितं[1] प्रतीपीभूयोत्पतितं भज्यमानस्य धरान्तरस्य पर्वतैकदेशस्येव रवो यस्य तत्तथाभूतं संमुखगतं, संमुखगतं अङ्गीकृत्य शीघ्रपरिहृतं प्रतिपन्नं गृहीतमिति **कुलनाथः** । **श्रीनिवासस्तु** वज्रेण अन्तो नाशो यस्य एवंभूतस्य धरस्य अन्तः स्वरूपं समरवमित्याह ॥७६॥

गेण्हइ अ जलण-तणओ सुवेल-सिहरद्ध-लग्ग-मेह-च्छाअं ।
विअड-पहत्थोरत्थल-सम-वित्थार-कढिणत्तणं कसण-सिलं ॥८०॥

**[गृह्णाति च ज्वलन-तनयः सुवेल-शिखरार्ध-लग्न-मेघ-च्छायम् ।**
**विकट-प्रहस्तोरःस्थल-सम-विस्तार-कठिनत्वां कृष्ण-शिलाम् ॥ ]**

सुवेलस्य शिखरार्धे लग्नस्य मेघस्येव छाया यस्याः । विकटस्य विशालस्य प्रहस्तोरःस्थलस्य समो विस्तारः कठिनत्वञ्च यस्यास्तां कृष्णशिलां ज्वलनतनयो नीलो गृह्णाति च । गिरिशिखराकारेण हस्तेनोत्क्षिप्य धृतत्वात् सुवेलशिखरार्धलग्नमेघच्छायात्वेनोपमा इति **लोकनाथः** ॥८०॥

दूर-समुप्पइएण अ णीलेण सिला-अलोत्थअम्मि दिणअरे ।
जाओ णहम्मि दिअसो तक्खण-बद्ध-तिमिरा महिअलम्मि
णिसा ॥८१॥

**[दूर-समुत्पतितेन च नीलेन शिला-तलावस्तृते दिनकरे ।**
**जातः नभसि दिवसः तत्क्षण-बद्ध-तिमिरा महीतले निशा ॥ ]**

दूरसमुत्पतितेन च नीलेन शिलातलावस्थगिते दिनकरे सति नभसि अर्थाच्छिला-

1 Evidently the com. reads पच्चुं०

तलोपरि गगने दिवसो जातः । तत्रैव सूर्यातपस्य दृश्यमानत्वादित्यभिप्रायः । आलोकाभावात् तत्क्षणबद्धतिमिरा निशा महीतले जाता ॥८१॥

**अह णीलस्स पहत्थो रणाणुराएण सहिअ-गाढ-प्पहरो ।**
**घाअब्भन्तर-[1]संखोह-भिण्ण-गलिअ-हिअओ गओ धरणि-**
**अलं ॥८२॥**

[**अथ नीलस्य प्रहस्तः रणानुरागेण सोढ-गाढ-प्रहारः ।**
**घाताभ्यन्तर-संक्षोभ-भिन्न-गलित-हृदयः गतः धरणी-तलम् ॥** ]

राअ-सिरि-पवरसेनस्स एत्थ रावण [F104a] वहे महाकव्वम्मि ।
दन्द-रण-वण्णणं चोद्दहअ आसासओ परिसमत्तो ॥

राज-श्रीप्रवरसेनस्य अत्र रावणवधे महाकाव्ये ।
द्वन्द्वरणवर्णनं चतुर्दश आश्वासकः परिसमाप्तः ॥

अथ शिलाप्रहारान्तरं नीलस्य प्रहस्तो रणानुरागेण सोढगाढप्रहारो घातस्याभ्यन्तरे संक्षोभेन पीडाभरेण भिन्नं विदीर्णं गलितं व्यपगलितं हृदयं वक्षो मनश्च यस्य स तथाभूतो धरणितलं गतः ॥८२॥

इति रावणवध-टीकायां चतुर्दश आश्वासः ॥

---

[1] ०भिण्णो गलन्त-जीअ-रुहिरो GB .

# पञ्चरहो आसासओ

अह णिहअम्मि पहत्थे बन्धु-वहामरिस-णिन्त-[1]बाहुप्पीलो ।
चलिओ सिहि-पच्चुग्गअ[2]-हुंकार-भरन्त[3]-दस-दिसो [4]दहव-
अणो ॥१॥

[अथ निहते प्रहस्ते बन्धु-वधामर्ष-निर्यद्-बाष्पोत्पीडः ।
चलितः शिखि-प्रत्युद्गत-हुंकार-भ्रियमाण-दश-दिक् दशवदनः ॥ ]

[F104a] अथानन्तरं निहते प्रहस्ते प्रहस्तनिधनान्तरमेव दशवदनश्चलितो योद्धुं गन्तुमारब्धः क्रोधेन कम्पितो वा । अह असाविति वा दशवदन इति शेषः। कीदृशः, बन्धुवधामर्षेण निर्यद्बाष्पोत्पीडः, शिखिना वह्निना अर्थात् क्रोधजन्येन सह प्रत्युद्गतेन हुंकारेण भ्रियमाणा दश दि[ शो येन ]······त्वात् । चलितो योद्धुं प्रस्थित इति **कुलनाथः** ॥१॥

तह कुविएण पहसिअं कराल-मुह-कन्दरा-भरन्त-दस-दिसं ।
जह से भअ-तुण्हिक्को भवण-क्खम्भेसु परिअणो वि णिलुक्को ॥२॥

[तथा कुपितेन प्रहसितं कराल-मुख-कन्दरा-भ्रियमाण-दश-दिशम् ।
यथा अस्य भय-तूष्णीकः भवन-स्तम्भेषु परिजनः अपि निलुकितः ॥ ]

करालासु मध्ये विपुलावकाशासु मुखकन्दरासु भ्रियमाणाः पूर्यमाणा दश दिशो यत्र एवं यथा स्यात्तथा, कुपितेन प्रहसितं, यथा तस्य भये [ न ] तूष्णीकः परिजनो भवनस्तम्भेषु आलीनोऽन्तरितः, दशानामपि व्यात्तानां मुखानां मध्ये दशानामेव दिशामुपलम्भाद् विस्तीर्णत्वं कथितमत [ एव तेषां ] कन्दरासाम्यं, परिजन आलीनोऽन्तर्हित इति **कुलनाथः** ॥२॥

०ड्डो GB.  2 ०पच्चुु० Ms.  3 भरे० GB.  4 दस० Ms.

तो रक्खस-परिवारं [1]णिअ-पाअ-भरोणमन्त-पच्छिम-[2]तलिमं।
सारहि-संरुम्भन्तं चडुल-तुरङ्गम-धअं रहं आरूढो ॥३॥

[ततः राक्षस-परिवारं निज-पद-भरावनमत्-पश्चिम-तलिमम्।
सारथि-संरुध्यमानं चटुल-तुरङ्गम-ध्वजं रथं आरूढः ॥ ]

ततः प्रस्थानानन्तरं रथमारूढः। कीदृशं रथं राक्षसाः परिवारा यत्र, भरेणातिक्रान्तं सत् नमत् पश्चिमतलिमं कुट्टिमं यस्य, सारथिना निरुध्यमानं, गमनत्वरयास्थिरास्तुरङ्गा ध्वजाश्च यत्र। विशेषणत्रयमारोहणक्रियाया इति **केचित्** ॥३॥

हुंकारेण सहाए खुहिअ-महा[3]-हलहलेण लङ्का-मज्झे।
[4]पुरि-सेण्ण-[5]कलअलेण अ णाओ चलिओ त्ति वाणरेहि दह-
मुहो ॥४॥

[हुंकारेण सभायां क्षुभित-महा-हलहलेन लङ्का-मध्ये।
पुरी-सैन्य-कलकलेन च ज्ञातः चलितः इति वानरैः दशमुखः ॥

हुंकारेणार्थात् क्रोधजन्मना सभायां दशमुखो वानरैर्ज्ञातः सभागृहस्थितः सरोषहुंकारेण ज्ञात इत्यर्थः। क्षुभितानां जनानां महता हलहलेन लङ्कामध्ये ज्ञातः। क्षुभितायाः प्रचलिताया हलहलेन तारतम्येन लङ्कामध्ये इति **कुलनाथः**। पुरीस्थितानां सैन्यानां कलकलेन चलित इति ज्ञातः। क्षुभितायाः सभाया इति **श्रीनिवासः**। तदा मकारस्थाने सकारपाठः ॥४॥

---

1 भर-णिअ-परिअणमन्त० Ms, which has noticed the reading णिअ-पाअ-भरो० as in GB, 2 ०डिनं GB; Ms originally having ०भाअं in lieu of ०तलिनं put marginally. 3 ०हलहलए Ms; ०कलअलेण GB; so has Ms marginally. 4 पुर० GB. 5 ०कलेण Ms.

णवरि अ मुह-णि [F104b] वहोवरि दुक्ख-पहुत्त-[1]धवलादवत्त-च्छाओ ।
णिग्गन्तूण पुरीओ [2]भग्गइ भग्ग-रण-मच्छरं कइ-सेण्णं ॥५॥

[अनन्तरं च मुख-निवहोपरि दुःख-प्रभवद्-धवलातपत्र-च्छायः ।
निर्गत्य पुरीतः भनक्ति भग्न-रण-मत्सरं कपि-सैन्यम् ॥ ]

रथ[ मारुह्य ] प्रस्थानानन्तरञ्च मुखनिवहोपरि दुःखेन प्रभवन्ती धवलातपत्रच्छाया यस्य स रावणः पुरीतो निर्गत्य भग्नरणमत्सरं यथा स्यात्तथा। कपिसैन्यं भनक्ति आमर्दयति। मत्सरः शत्रुजिगीषा। यद्वा कपिसैन्यविशेषणं, तेन भग्नरणमत्सरं कपिसैन्यं भनक्ति। प्रथमं तस्य रणमत्सरं दूरीकृत्य पश्चात्तदपि भनक्तीत्यर्थः ॥५॥

तो मुह-मेत्त-वलन्ता पच्छिम-केसर-सडाहअग्ग-क्खन्धा ।
भग्गाणुमग्ग-[3]लग्गं पेच्छन्ति दसाणणं पवङ्गम-णिवहा ॥६॥

[ततः मुख-मात्र-वलन्तः पश्चिम-केसर-सटाहताग्र-स्कन्धाः ।
भग्नानुमार्ग-लग्नं प्रेक्षन्ते दशाननं प्लवङ्गम-निवहाः । ]

ततः [ कपिसैन्य ]मर्दनानन्तरं मुखमात्रेण वलन्तः परिवृत्तमुखीभवन्तः। परिवर्तनार्थं ग्रीवाभङ्गादेव पश्चिमाभिः पृष्ठनिकटवर्तिनीभिः केशरसटाभिराहतोऽग्रस्कन्धः स्कन्धाग्रं येषां ग्रीवाभङ्गातिशयात् पश्चात्-स्कन्धेन मिलिताग्रस्कन्धा इत्यर्थः। ते प्लवङ्गमनिवहा भग्नानां पलायमानानामनुमार्गे पश्चाल्लग्नं दशाननं प्रेक्षन्ते ॥६॥

तो ते भिण्ण-पअत्ते[4]दसवअणक्कन्त-दिण्ण-विद्दविअ-पए ।
पम्हट्ठ-जहा-भणिए भणइ समुप्पण्ण-रण-भए [5]जलण-सुओ ॥७॥

---

1 ०सकला० Ms. 2 भञ्जइ GB. 3 ०ग्गा GB. 4 ०पअट्टे GB. 5 पवण० Ms ; but it has marginally noted the reading. जलण० ।

[ततः तान् भिन्न-प्रवृत्तान् दशवदनाक्रान्त-दत्त-विद्रवित-पदान् ।
प्रभ्रष्ट-यथा-भणितान् भणति समुत्पन्न-रण-भयान् ज्वलन-सुतः ॥]

ततो भङ्गानन्तरं भिन्नतया विच्छिन्नतया प्रवृत्तान् प्रस्थितान् शिथिलितप्रयत्नान् वा । दशवदनाक्रान्ततया दत्तं विद्रुतं स्खलितं पदं यैः । प्रस्मृतं यथाभणितं प्रतिज्ञातव्यवसितं यैस्तान् । अत्र हेतुमाह समुत्पन्न-रण-भयान् ज्वलनसुतो नीलो भणति । भिन्नप्रवृत्तान् इतस्ततो विद्रुतानिति **कुलनाथः** । भिन्नान् पलायितान् प्रवृत्तांश्च अर्थात् पलाय[ने] इति **केचित्** ॥७॥

मा मुञ्चह समर-धुरं एस समुक्खित्त-मलअ-सिहरद्धन्तो ।
जस्स कएण[1]पलाअह तच्चिअ वो हरइ जीविअं पवअ-वई ॥८॥

[मा मुञ्चत समर-धुरां एषः समुत्क्षिप्त-मलय-शिखरार्धान्तः ।
यस्य कृतेन पलायध्वं तत् एव वः हरति जीवितं प्लवग-पतिः ]

यस्य कृते पलायध्वं तदेव वो जीवितं समुत्क्षिप्तमलयशिखरार्धान्तः प्लवगपतिरेष हरति । अतः समरधुरां मा मुञ्चत । यतो जीवनान्मरणादपि कीर्तिमिदानीं स्वर्गं परित्यज्य अपमृत्युदुर्यशसोर्निदानं पलायनं मा स्वीक्रियतामिति भावः ॥८॥

अह राम-सराहिहओ पवएहि[2] परंमुहोहसिज्जन्त-रहो ।
छिण्ण-पडिआअवत्तो लङ्काहिमुहो गओ णिसाअर-[F105a]
णाहो ॥९॥

[अथ राम-शराभिहतः प्लवगैः परांमुखावहस्यमान-रथः ।
छिन्न-पतितातपत्रः लङ्काभिमुखः गतः निशाचर-नाथः ॥ ]

अथ नीलाश्वासना[न्तरं] रामस्य शरेणाभिहतः परांमुखत्वात् प्लवगैरवहस्यमानो रथो यस्य । रथस्योपहासेन रावणस्योपहासः । मञ्चाः क्रोशन्तीतिवत् । रथो रथस्थो

1 पड्डा० GB. [GB put as the next verse the one which is the 61st in our Ms.] 2 ०हिं Ms.

वा। सङ्गराभिभूतो रावणसदृशो वा रथोपहासः। छिन्नपतितमातपत्रं यस्य तादृशः सन्निशाचरनाथो लङ्काभिमुखो गतः। प्लवगैरवहन्यमानरथ इति **लोकनाथः** ॥९॥

**तो तेण लहुइअ-जसं पत्त-विणासेण मुक्क-सोडीर-धुरं[1]।**
**पडिवोहणं अआले सुहोवसुत्तस्स कुम्भअण्णस्स कअं ॥१०॥**

**[ततः तेन लघूकृत-यशः प्राप्त-विनाशेन मुक्त-शौटीर्य-धुरम्।**
**प्रतिबोधनं अकाले सुखोपसुप्तस्य कुम्भकर्णस्य कृतम्॥]**

[F105a] ततस्तेन लङ्कां गत्वा प्राप्तविनाशेन लब्धपराभवेन रावणेन लघूकृतयशो मुक्तशौटीर्यञ्च[2] यथा स्यात्तथा सुखोपसुप्तस्य कुम्भकर्णस्याकाले प्रतिबोधनं कृतम्। यशसो लघुत्वञ्च स्वयमशक्तेनान्यस्य नियोगात् ॥१०॥

**सो वि अ जम्भाअन्तो अआल-पडिवोह-गरुइअ-सिरद्धन्तो।**
**णीइ हसिऊण सुइरं लहुअं सोऊण राम-वह-संदेसं ॥११॥**

**[सः अपि च जृम्भायमाणः अकाल-प्रतिबोध-गुरूकृत-शिरोऽर्धान्तः।**
**निरैति हसित्वा सुचिरं लघुकं श्रुत्वा राम-वध-संदेशम्॥]**

तत्कालनिद्राभङ्गेन जृम्भायमाणोऽकाले प्रतिबोधेन गुरूकृतशिरो[र्धान्तः] सोऽपि कुम्भकर्णोऽपि च लघुकं रामवधसन्देशं श्रुत्वा सुचिरं हसित्वा निर्याति। निद्राशेषघूर्ण-[न]या इतस्ततो मस्तककम्पनप्रतिपादनायार्धान्त-पदमिति **हर्षपालः**। निद्राया ईशदवशिष्टत्वान्मस्तकस्याल्पगौरवकथनाय अर्धान्तपदमिति **केचित्** ॥११॥

**ओच्छुण्ण-[3]रइ-रह-वहो जाओ देहस्स से कणअ-पाआरो।**
**[4]ऊरु-प्पएस-लग्गो दर-गलिओ[5]व्व तवणिज्ज-[6]वास-परि-**
**अरो ॥१२॥**

---

1 ०पञ्च' GB. 2 The commentary does not explain ०धुरं।
3 ०रवि० Ms. 4 उरु० Ms; ०पएसालग्गो GB. 5 ०पलिओ; Ms; ०खलिओ GB. 6 ०राअ० GB.

[अवक्षुण्ण-रवि-रथ-पथः जातः देहस्य तस्य कनक-प्राकारः ।
ऊरु-प्रदेश-लग्नः दर-गलितः इव तपनीय-वासः-परिकरः ॥ ]

अवक्षुण्णोऽतिक्रान्तो रविरथस्य पन्था येन स कनकप्राकारस्तस्य देहस्य ऊरुप्रदेशलग्नो दरमीष[ द्विगलि ]तस्तपनीयवाससः परिकरो वेष्टनमिव जातः ॥१२॥

लङ्घिअ-पाआरस्स अ तो से विवलाअ-मअर-पङ्कग्गाहा ।
जाणु-प्पमाण-सलिला जाआ फलिहा-गआ समुद्दद्धन्ता ॥१३॥

[लङ्घित-प्राकारस्य च ततः तस्य विपलायमान-मकर-पङ्कग्राहाः ।
जानु-प्रमाण-सलिलाः जाताः परिखा-गताः समुद्रार्धान्ताः ॥ ]

तदन्तरं लङ्घितप्राकारस्य तस्य परिखागताः समुद्रार्धान्ता जानुप्रमाणसलिला जाताः । कीदृशाः, आन्दोलनेन विपलायमाना मकराः पङ्कग्राहाश्च येभ्यः । पङ्क-शब्दः समर्थे देशीयः ॥१३॥

तो तं पेच्छन्त च्चिअ [1]मग्गअहुत्ता [2]विमुक्क-रण-वावारा ।
हत्थ-पडन्त-धराहर-विसमक्कन्ता [3]पहाविआ कइ-णिवहा ॥१४॥

[ततः तं प्रेक्षमाणाः एव मार्गकाभिमुखाः विमुक्त-रण-व्यापाराः ।
हस्त-पतद्-धराधर-विषमाक्रान्ताः प्रधाविताः कपि-निवहाः ॥

ततस्तं कुम्भकर्णं प्रेक्षमाणा एव मार्गकेषु अन्वेषकेषु अभिमुखा रोष-ग्राहिषु दत्तपृष्ठाय विमुक्तरणव्यापारा हस्तात् पतता धराधरेण विषमं तिर्यगाक्रान्ताः प्रधाविताः पलायिताः कपिनिवहाः ॥१४॥

---

1 Ms. also has मग्गाहुत्ता marginally ; पच्छाहुत्ता GB, 2 णिग्गत्त° GB. this reading Ms, noticed marginally. 3 पडाइआ GB.

अह [1]सेलेहि तरूहि अ फलिएहि [2]मुग्गरेहि हन्तूण दढं ।
[3]दण्डा[F105b]उह-मग्गण-मण्डलग्ग-मुसलेहि वाणर-बलं
सअलं ॥१५॥

[अथ शैलैः तरुभिः च परिघैः मुद्गरैः हत्वा दृढम् ।
दण्डायुध-मार्गण-मण्डलाग्र-मुषलैः वानर-बलं सकलम् ॥ ]

अथानन्तरं शैलैस्तरुभिश्च परिघैर्मुद्गरैर्हत्वा दृढं दण्डायुधः कुन्तादिस्तस्य मार्गणेन मण्डलाग्रेण मुषलैश्च वानरबलं सकलं खादितुं प्रवृत्त इत्युरस्कन्धकेनान्वयः । एतत् पद्यन्तु केनापि टिप्पनीकारेण न धृतमिति ॥१५॥

तो पवआइ गआइ [4]अ तुरआइ अ रक्खसाइ लोहिअ-मत्तो ।
राम-सराघाअ-धुओ णिअअ-बले पर-बले पअत्तो खत्तुं ॥१६॥

[ततः प्लवगान् गजान् च तुरगान् च राक्षसान् लोहित-मत्तः ।
राम-शराघात-धुतः निजक-बले पर-बले प्रवृत्तः खादितुम् ॥

[F105b] ततः प्लवगान् गजांश्च तुरगांश्च राक्षसांश्च लोहितमत्तो रामशराघातकम्पितो निजबले परबले प्रवृत्तः खादितुम् । एतत् पद्यद्वयं केनापि टीकाकारेण न धृतमिति ॥१६॥

चिर-जुज्झिअस्स तो से दोण्ह वि राम-धणु-णिग्गअ-सराहि-
हआ ।
पढमं धरणीअ भुआ पच्छा छेअ-रुहिरोज्झरा पल्हत्था ॥१७॥

[चिर-योधितस्य ततः तस्य द्वौ अपि राम-धनु-निर्गत-शराभिहतौ ।
प्रथमं धरण्यां भुजौ पश्चात् छेद-रुधिर-निर्झराः पर्यस्ताः ॥ ]

---

1 ०हिं Ms. 2 मो० GB. 3 दढ-दण्डाउह-मग्गण-मुसलेहि खणेण 4 GB. omit अ and reads गआइं ।

ततस्तस्य कुम्भकर्णस्य चिरं युद्धं कृतवतो द्वावपि भुजौ रामधनुर्निर्गताभ्यां शराभ्यामभिहतौ छिन्नौ प्रथमं धरण्यां पतितौ पश्चाद्[1]रुधिरनिर्झरौ भूमौ निपतितौ ॥१७॥

एक्को रुद्ध-णइ-मुहो अणुवेलण्णिवडिओ सुवेलो व्व भुओ ।
साअर-लद्ध-[2]थोहो [3]बिइओ से [4]बिइअ-सेउ-बन्धो व्व ठिओ ॥१८॥

[एकः रुद्ध-नदी-मुखः अनुवेलं निपतितः सुवेलः इव भुजः ।
सागर-लब्ध-स्तोभः द्वितीयः तस्य द्वितीय-सेतु-बन्धः इव स्थितः ॥ ]

एकस्तस्य कुम्भकर्णस्यानुवेलं समुद्रकूले निपतितो रुद्धनदीमुखो भुजः सुवेल इव स्थितः । [5]सागरलब्धस्तोभो द्वितीयो भुजो द्वितीयसेतुबन्ध इव स्थितः ॥१८॥

आअण्ण-कड्ढिएण अ तो से चक्कलिअ-सिहि-[6]सिहेण रण-मुहे ।
रहुवइ-सरेण तुङ्गं चक्केण व राहुणो सिरं उक्खुडिअं ॥१९॥

[आकर्ण-कृष्टेन च ततः तस्य चक्कलित-शिखि-शिखेन रण-मुखे ।
रघुपति-शरेण तुङ्गं चक्रेण इव राहोः शिरः उत्खण्डितम् ॥ ]

ततस्तस्य कुम्भकर्णस्याकर्णाकृष्टेन चक्रित[ शिखि ]शिखेन मण्डलीभूताग्नि-ज्वालेन रघुपतिशरेण रणमुखे तुङ्गं शिर उत्खण्डितं चक्रेणेव राहोः ॥१९॥

गअणुण्णएण तेण अ पवण-[7]भरन्त-मुह-कन्दरा-मुहलेण[8] ।
छिण्ण-पडिएण वि कओ [9]चउट्ठ-तुङ्ग-[10]सिहरुग्ग[F106a]मो व्व तिऊडो ॥२०॥

---

1 The text however (in GB and Ms) has छेअ॰ 2 ॰त्थामो GB.
3 वीओ GB. 4 बीअ-सेउ-बन्ध GB. Ms misreads it as विदिअ॰.
5 स्थाघो Ms. Will it be स्थामा ? 6 ॰सुहेण Ms, apparently a mistake.
7 ॰भरेन्त॰ GB. 8 ॰णं G. 9 चउत्थ॰ GB. 10 ॰रोग्गमो Ms.

[गगनोन्नतेन तेन च पवन-भ्रियमाण-मुख-कन्दरा-मुखरेण ।
छिन्न-पतितेन अपि कृतः चतुर्थ-तुङ्ग-शिखरोद्गमः इव त्रिकूटः ॥ ]

तेन च कुम्भकर्णशिरसा गगनोन्नतेन आकाशाश्रितेन प[ वनभ्रि ]यमाणमुखेन कन्दरयेव मुखरेण सशब्देन छिन्नपतितेन च कृतश्चतुर्थतुङ्गशिखरोद्गम इव त्रिकूटः सुवेलः ॥२०॥

पडिए अ कुम्भअण्णे [1]दूर-पलाइअ-लिण्णक्क-पक्कग्गाहो ।
देह-भरन्तुच्छङ्गो पव्वालेइ [2]वलआ-मुहं मअर-हरो ॥२१॥

[पतिते च कुम्भकर्णे दूर-पलायितालीनैक-पङ्कग्राहः ।
देह-भ्रियमाणोत्सङ्गः प्लावयति वडवा-मुखं मकरगृहः ॥ ]

[F106a] पतिते च कुम्भकर्णे दूरपलायिता भयभग्नाः, दूरं पलायिता विलीना इति **कुलनाथः** । 'पङ्कग्राहा' जलसिंहाः समर्था जलचरा यत्र । देहेन भ्रियमाण उत्सङ्गो यस्य स मकरगृहः समुद्रो वडवामुखं प्लावयति । वडवानलेन शोषणात्तद्दूरतोऽपि समुद्रसलिलावस्थितिर्नास्ति अधुना कुम्भकर्णस्य देहपातेन सागरस्तथा[3] ×× तो ×× वडवानलमपि प्लावयामासेत्यर्थः । दूरं पलायिता विलीना विवरेषु प्रविष्टा इति **केचित्** ॥२१॥

तो कुम्भअण्ण-णिहणं सोऊण दसाणणो पहत्थब्भहिअं ।
रोसाअव-रज्जन्तं पुणो वि[4]धुणइ हसिऊण मुह-[5]संहाअं ॥२२॥

[ततः कुम्भकर्ण-निधनं श्रुत्वा दशाननः प्रहस्ताभ्यधिकम् ।
रोषातप-रज्यमानं पुनः अपि धुनोति हसित्वा मुख-संघातम् ॥ ]

ततः कुम्भकर्णपातानन्तरं प्रहस्ताभ्यधिकं तद्वधादभ्यधिकमिति मध्यपदलोपी समासः । कुम्भकर्णनिधनं श्रुत्वा दशानन रोष एवातपस्तेन रज्यमानं मुखसंघातं पुनरपि हसित्वा

---

1 दूरपलाअ-दर-भग्ग० GB. C has ०भअ० 2 वडवा० GB.
3 A few letters are warm-eaten here. 4 हसिऊण धुणइ GB.
5 ०संघाअं GB.

धुनोति । अल्पसत्त्वेषु प्रेषितेषु शत्रोरीदृशी विकत्थना तस्मात् स्वयमेव निर्गच्छामी[ति मु-]खकम्पने हेतुः ॥२२॥

णिन्तस्स अ तं वेलं अमरिस-परिवड्ढिअस्स [1]भवणुच्छङ्गे ।
खम्भन्तर-वित्थारा ते च्चिअ वच्छत्थलस्स से ण पहुत्ता ॥२३॥

[निर्यतः च तां वेलां अमर्ष-परिवर्धितस्य भवनोत्सङ्गे ।
स्तम्भान्तर-विस्ताराः ते एव वक्षःस्थलस्य तस्य न प्रभूताः ॥ ]

तां वेलां तस्मिन् क्षणे । भवनोत्सङ्गे गृहमध्ये अमर्षेण परिवर्धितस्य उपचित-शरीरस्य क्रोधाध्मातस्य इति **कुलनाथः** । निर्गतस्य रावणस्य त एव पूर्वं निर्गमाय निर्मिता एव स्तम्भयोरन्तरे मध्ये विस्तारा अवकाशा स्तम्भानामन्तरविस्तारा महान्तोऽन्तरालदेशाः वक्षःस्थलस्य न प्रभूता न निर्गमोचिता अभूवन्नित्यर्थः । न वक्षःस्थलस्य परिमाणं प्राप्तवन्त [:] रोषेण वक्षसो विस्तारादित्याशय इति **लो** ( लोकनाथः ) ॥२३॥

दर-णिग्गअस्स णवरि अ [2]उज्जागअ-वच्छ-भरिअ-भवणुच्छङ्गो ।
जाणु-[3]पडिअ-ट्ठिओ से जम्पइ हसिऊण मेहणाओ त्ति सुओ ॥२४॥

[दर-निर्गतस्य अनन्तरं च ऊर्जागत-वक्षो-भृत-भवनोत्सङ्गः ।
जानु-पतित-स्थितः तस्य जल्पति हसित्वा मेघनादः इति सुतः ॥ ]

अनन्तरञ्च दरनिर्गतस्य ऊर्जागतेन बलपूर्णेन वक्षसा भृतः पूरितो भवनोत्सङ्गो येन । ऋजुकागतेनेति **केचित्** । स मेघनादः सुतो जानुना पतितस्थितो मेघनाद इति ख्यात इति **केचित्** । हसित्वा जल्पति सगर्वहासं वदतीति **कुलनाथः** । स्थित इति पदेन यावदेवात्मनिवेदने आज्ञा लभ्यते तावदेव नोत्तिष्ठतीति व्यज्यते, अल्पीयसि कार्ये त्रिभुवनजयिनो रावणस्य स्वयं निर्गमनं हासहेतुरिति **केचित्** ॥२४॥

---

1 ०णुत्सङ्गे Ms ; apparently a mistake. 2 उग्घाडिअ० GB.
3 ०उट्ठिओ GB.

णिम्मविअम्मि कज्जे साहस-गरुअम्मि[1] अप्पण च्चिअ गुरुणा।
[5]पुत्तेण पुत्त-सरिसं [6]पुत्त-प्फरिसं ण पाविओ होइ [F106b]
पिआ ॥२५॥

[निर्मापिते कार्ये साहस-गुरुके आत्मना एव गुरुणा।
पुत्रेण पुत्र-सदृशं पुत्र-स्पर्शं न प्रापितः भवति पिता ॥ ]

गुरुणा पिता आत्मनैव साहसगुरुके कार्ये निर्मापिते सति पुत्रेण पुत्रसदृशं पुत्रस्योचितं पुत्रस्पर्शं पिता प्रापितो न भवति। कृतकार्यागतस्य पुत्रस्यालिङ्गनेन स्पर्शजन्य-सुखं पुत्रेण पिता प्रापितो भवतीत्यर्थः। निर्मापिते निर्वर्तित इति **कुलनाथः** ॥२५॥

कीस ममम्मि[1]धरन्ते माणुस-मेत्तस्स दसरह-[5]सुअस्स कए।
इअ णीसि अप्पण च्चिअ [6]लहुअन्तो अम्ह रक्खस-उलस्स
जसं ॥२६॥

[किं मयि ध्रियमाणे मानुष-मात्रस्य दशरथ-सुतस्य कृते।
इति निर्यासि आत्मना एव लघूकुर्वन् अस्माकं राक्षस-कुलस्य यशः ॥]

[F106b] किं मयि ध्रियमाणेऽवतिष्ठमाने, ध्रियमाणे जीवति सति इति **लो** (**लोकनाथः**)। दशरथसुतस्य कृतेऽस्माकं राक्षसकुलस्य यशो लघूकुर्वन् लघयन्निति **लो** (**लोकनाथः**)। इत्येवमात्मनैव किं निर्यासि, अतः कुलकलङ्काधायके कर्मणि प्रवर्तसे इत्यभिप्रायः ॥२६॥

---

1 ०गरुए वि GB. 2 पुत्तेहिं Ms 3 Ms has marginally put a new reading for the fourth foot—कज्जारंभेण पाविअं होइ फलं। 4 ०रे० GB. 5 दह० GB. 6 ०ए० Ms; but it has marginally. ०अ०

उक्खअ-भुअङ्ग[1]-रअणं [2]णिसुद्ध-[3]णन्दण-वणं पलोट्टिअ-सेलं ।
अप्पाणं व ण आणसि समं समत्थस्स तिहुअणस्स भर-
सहं ॥२७॥

[उत्खात-भुजङ्ग-रत्नं निपातित-नन्दन-वनं प्रलोटित-शैलम् ।
आत्मानं वा न जानासि समं समस्तस्य त्रिभुवनस्य भर-सहम् ॥ ]

उत्खातं भुजङ्गानां शिरोरत्नं शिरमणयो येन । **पाठान्तरे** उत्खातं तुरङ्गरत्नं उच्चैःश्रवा येन । निपातितनन्दनवनं । प्रलोटितः पर्यासितः शैलः कैलासो येन । इत्थं भुवनस्य समस्तस्य समं युगपद् भरसहं विमर्दक्षममात्मानं वा न जानासि विस्मृतवानसि । येनास्मिन् लाघवास्पदे प्रवर्तसे इति भावः । त्रिभुवनस्य भरसहं समरधुरन्धरमिति **कुलनाथः** । आद्येन विशेषणत्रयेण यथाक्रमं पाताल-स्वर्ग-पृथिवीनां विमर्दक्षमत्वं सूचितम् ॥२७॥

किं[4] णिहणामि रण-मुहे सरेक्क-सोसविअ-साअरं रहुणाहं ।
ओ सत्त वि अज्जं चिअ [5]वलन्त-वलवा-मुहे मलेमि समुद्दे ॥२८॥

[किं निहन्मि रण-मुखे शरैक-शोषित-सागरं रघुनाथम् ।
उत सप्त अपि अद्य एव वलद्-वडवा-मुखान् मृद्गामि समुद्रान् ॥ ]

शरैकेण शोषितः सागरो येन तं रघुनाथं किं रणमुखे रणोपक्रमे निहन्मि । अथवा तदधिकमाश्चर्यं दर्शयन्नद्यैव सप्तापि समुद्रान् वलद्वडवामुखान् भ्रमद्वडवाग्नीन् मृद्गामि । अद्यैव नतु दिनान्तरे । तेन तावदेकः समुद्रः शोषित इति भावः ॥२८॥

---

1 ०तुर० Ms ; but it has marginally. ०भुअ० 2 णिसुढिअ० GB.
3 ०न० Ms 4 ०णिण Ms. 5 Ms has ज० marginally ; ०वउवा० GB.

इअ विण्णविअ-[1]दसमुहो [2]पच्छिम-सारहि-कर-ट्ठविअ-सीसक्को ।
आवद्ध-कवअ-मन्थर-[3]पअ-विक्कम-भर-[4]समत्थ-वित्थअ-
[5]तलिमं ॥२९॥

धअ-सिहर-ट्ठिअ-जलहर-मुच्चन्तासणि-[6]परिप्फलिअ-सूर-करं ।
समर-तुरि[F107a]ओ [7]विलग्गइ रहं [8]सुआसण्ण-राम-धणु-
णिग्घोसो ॥३०॥

[इति विज्ञापित-दशमुखः पश्चिम-सारथि-कर-स्थापित-शीर्षकः ।
आबद्ध-कवच-मन्थर-पद-विक्रम-भर-समर्थ-विस्तृत-तलिमम् ॥
ध्वज-शिखर-स्थित-जलधर-मुच्यमानाशनि-प्रतिफलित-सूर्य-करम् ।
समर-त्वरितः विलगति रथं श्रुतासन्न-राम-धनु-निर्घोषः ॥ ]

स्कन्धकद्वयेन युग्मकम् । इति विज्ञापितदशमुखः श्रुतासन्नरामधनुर्निर्घोषः समरत्वरितः पश्चि[मस्य] पश्चाद्वर्तिनः सारथेः कराभ्यां स्थापितं शिरसि निहितं शिरस्त्रं [यस्य] त्वरया स्वयमदत्तशिर[स्त्रः] इति भावः । पश्चिमसारथेः करे स्थापितं शिरस्त्रं येनेति **प्राञ्चः** । स मेघनादो रथमारोहतीति योद्धुं, किंभूतं रथं, आबद्धकवचत्वेन मन्थरस्य पदविक्रमस्य पदन्यासस्य भरसमर्थं विस्तृतं पदविन्यासस्य भरेण नमद् विस्तृतं तलिमं कुट्टिमं यस्य । सामन्त स्थाने समत्थेति पाठे अर्थ उक्तः ॥२९॥

ध्वजशिखरस्थितेन जलधरेण मुच्यमानासु अशनिषु विद्युत्सु प्रतिफलिताः सूरकरा यस्य । अशनिषु वज्रेष्विति **लोकनाथः** । शेषार्धं गतार्थम् ॥३०॥

इअ वारिअ-दहवअणो [9]दहवअणाणत्ति-विलइउक्खित्त-
धुरो[10] ।
णोइ रहं आरूढो रक्खस-परिवारिओ दसाणण-तणओ ॥३१॥

---

1 ०दह० GB. 2 ०चि Ms. 3 ०द० Ms. 4 Ms has marginally सामन्त० 5 ०डि० GB. 6 ०डि० GB. ०प्फुरि० Ms. 7 Ms व० 8 सुहा० Ms. 9 दस० Ms. 10 ०भरो GB.

**[इति वारित-दशवदनः दशवदनाज्ञप्ति-विलगितोत्क्षिप्त-धुरः ।
निरैति रथं आरूढः राक्षस-परिवारितः दशानन-तनयः ॥ ]**

[ इत्यु ] क्तप्रकारेण वारितो निर्वर्तितो दशवदनो येन । दशवदनाज्ञप्त्या विलगिता उत्क्षिप्ता वोढुमुद्धृता धूः समरभारो येन । विलगिता गृहीता स्वीकृतेत्यर्थः, उत्क्षिप्ता उपरिनिहिता समरभारो येनेति **लोकनाथः** । स दशाननतनयो रथमारूढः सन् राक्षसपरिवारितो निर्याति ॥३१॥

**अह समर[1]-बद्ध-लक्खो पढमुद्दाइअ-पवङ्गम-क्खविअ-बलो ।
वाणर-[2]जोहेहि समं जलण-सुएण धरिओ[3] दसाणण तणओ ॥३२॥**

**[अथ समर-बद्ध-लक्ष्यः प्रथमोद्धावित-प्लवङ्गम-क्षपित-बलः ।
वानर-योधैः समं ज्वलन-सुतेन धृतः दशानन-तनयः ॥ ]**

अथ [ नि ] र्गमनान्तरम् । समरे बद्धं लक्ष्यं येन । प्रथममुद्धावितानां प्लवङ्गमानां क्षपितं सैन्यं येन । क्षपितं बलं सामर्थ्यं सैन्यं वा येनेति **लोकनाथः** । प्रथमोद्धावितैः वानरसमूहैः क्षपितं बलं यस्येति **केचित्** । [ दशाननतनयो ] [ वानर ]-योधैः समं एकीभूय ज्वलनसुतेन नीलेन धृतः प्रतीष्टः । वरिओ इति पाठे वृत इत्यर्थः ॥३२[4] ॥

**णीलेण गण्ड-सेलं दिविएण[5]दुमं सिला-अलं मारुइणा ।
वारेइ[6] सरेहि[7] समं णलेण मुक्कञ्च मलअ-सिहर[8]-क्खण्डं ॥३३॥**

---

1 राम-बद्ध-लक्खो GB. Ms noticing this reading marginally. 2 ०जोहेहिं Ms. 3 वरिओ GB. Ms has the same marginally. 4 After this verse (32), GB have another verse :—"जो दहमुहग्ग-दारे तुरिअ-पहरिअ-रहस्स जो णअरि-मुहे । खोहेन्तस्स कइ-बलं सो च्चिअ वेओ अ से पअत्त-हलहलो ॥" but this verse is omitted in our Ms (as in S). 5 विदिएण Ms. 6 वारेहिं Ms, which has marginally noticed the reading दारेहिं which should be दारेइ । 7 सारेहिं Ms. 8 ०सिहरु० Ms.

[नीलेन गण्ड-शैलं द्विविदेन द्रुमं शिला-तलं मारुतिना ।
वारयति शरैः समं नलेन मुक्तं च मलय-शिखर-खण्डम् ॥ ]

नीलेन मुक्तं गण्डशैलं द्विविदेन [मुक्तं] द्रुमं, मारुतिना मुक्तं शिलातलं, नलेन मुक्तं मलयशिखरखण्डं सममेकदा वारयति अर्थान्मेघनादः। दारेइ इति पाठे दारयतीत्यर्थः ॥३३॥

तो भग्ग-पवअ-सेण्णं णिउम्भिला-हुत्त-सच्चविअ-पत्थाणं ।
वारेइ मेहणाअं विहीसणेण भणिओ सुमित्ता-तणओ ॥३४॥

[ततः भग्न-प्लवग-सैन्यं निकुम्भिलाभिमुख-सत्यापित-प्रस्थानम् ।
वारयति मेघनादं विभीषणेन भणितः सुमित्रा-तनयः ॥ ]

तत एतैः सह युद्धानन्तरम् । भग्नं प्लवगसैन्यं येन । निकुम्भिलाभिमुखं सत्यापितं स्वीकृतं प्रस्थानं येन । निकुम्भिला विजयशाला तदभिमुखं 'सच्चविअं' कृतं 'पत्थाणं' प्रस्थानं वा यस्य । 'सच्चविअं' लक्ष्यीकृतं प्रस्थानं यस्येति **केचित्** । तं मेघनादं विभीषणेन भणितः कथितवृत्तान्तो वारयति सुमित्रातनयः । निकुम्भिलायां यावदनेन यज्ञो न समाप्यते तावदेव वध्यतामिति कथितसंदर्भ इति **लोकनाथः** । सुमित्रातनयो वारयति गमनान्निवर्तयति प्रतिहन्तीति वेति **केचित्** ॥३४॥

तो माआहि[1] सरेहि अ सेलेहि अ जुज्झिअस्स रक्खस-सरिसं [F107b]
सोमित्तिणा णिसुड्ढं पिआमहत्थेण मेहणाअस्स सिरं ॥३५॥

[ततः मायाभिः शरैः च शैलैः च युद्धस्य राक्षस-सदृशम् ।
सौमित्रिणा निपातितं पितामहास्त्रेण मेघनादस्य शिरः ॥ ]

1 ०हिं Ms.

ततो निवारणानन्तरमेव। मायाभिः शरैश्च शैलैश्च चिरं युद्धं कृतवतो मेघनादस्य शिरः सौमित्रिणा पितामहास्त्रेण पातितम्। शिरः कीदृशं राक्षस-सदृशं, राक्षससदृशमित्यत्र राक्षसपदेन अर्थान्तरसंक्रमितवाक्येन अङ्गस्य विश्वासकारित्वं व्यज्यत इति **केचित्** ॥३५॥

**सोऊण इन्दइ-वहं मुअइ सरोसं दसाणणो बाह-जलं।**
**अब्भुत्तिअ-दीवाणं वलइ[1] सिणेह व्व तक्खणं सहुआसं ॥३६॥**

**[श्रुत्वा इन्द्रजिद्-वधं मुञ्चति सरोषं दशाननः वाष्प-जलम्।**
**अभ्युत्तेजित-दीपानां वलति स्नेहः इव तत्क्षणं सहुताशः ॥]**

[F107b] इन्द्रजिद्वधं श्रुत्वा दशाननः सरोषं वाष्पजलं मुञ्चति। दृष्टान्तमाह-अभ्युत्तेजितानां वर्धितदशानां [दीपानां] तत्क्षणमभ्युत्तेजनकाल एव सहुताशनं पतितं तैलमिव। अभ्युत्तेजितानामुत्कर्षदशानामिति **कुलनाथः**। वलइ इति पाठे सहुताशः स्नेह इव वलति पततीत्यर्थः। पडिअं इति पाठे उक्त एवार्थः ॥३६॥

**णिहए अ मेहणाए परिअत्तन्तेण तक्खणं च्चिअ विहिणा।**
**[2]सोअ-विसाएहि[3] समं हत्तेहि व दोहि आहओ दसवआणो ॥३७॥**

**[निहते च मेघनादे परिवर्तमानेन तत्क्षणं एव विधिना।**
**शोक-विषादाभ्यां समं हस्ताभ्यां इव द्वाभ्यां आहतः दशवदनः ॥]**

निहते च मेघनादे तत्क्षणमेव परिवर्तमानेन विधिना। परिवर्तमानेन पराङ्मुखीभवता विधिनेति **कुलनाथः**। शोकविषादाभ्यां द्वाभ्यां हस्ताभ्यामिव दशाननः समं आहतः। शोकः पुत्रादिविनाशनिबन्धनः, विषादः परिजनोपताप[ः] कृत इति **केचित्** ॥३७॥

**णीसेस-णिहअ-बन्धू तो सो[4] एक्को वि बहु भुआ-दुप्पेच्छो।**
**भीसण-मुह-संघाओ रक्खस-लोओ व्व णिग्गओ दसवअणो[5] ॥३८॥**

---

1 णिवडइ तुप्पं GB. 2 रोस० GB. 3 ०हिं Ms. 4 से Ms. 5 दह० GB.

[निःशेष-निहत-बन्धुः ततः स एकः अपि बहु-भुजा-दुष्प्रेक्ष्यः ।
भीषण-मुख-संघातः राक्षस-लोकः इव निर्गतः दशवदनः ॥ ]

ततः शक्रजिद्वधश्रवणानन्तरं शोक-विषादाहतानन्तरं वा निःशेष-निहतबन्धुः । बहुभिर्भुजैर्दुष्प्रेक्ष्यो भीषणो मुखसंघातः [ यस्य ] स दशवदन एकोऽपि राक्षसलोक इव निर्गतः प्रासादाद्बहिर्गतः ॥३८[1]॥

णवरि अ पवण-पणोल्लिअ-कसण-पडाआ-दरन्धआरिअ-सूरं ।
परिणअ-मत्तेरावण-मअ-पव्वालिअ-तुरङ्ग-केसर-भारं ॥३९॥

[अनन्तरं च पवन-प्रणोदित-कृष्ण-पताका-दरान्धकारित-सूरम् ।
परिणत-मत्तैरावण-मद-प्लावित-तुरङ्ग-केसर-भारम् ॥ ]

अनन्तरञ्च रथमारूढ इति स्कन्धकद्वयेन युग्मकम् । रथं कीदृशं, पवनप्रेरिताभिः कृष्णपताकाभिरीषदन्धकारितसूर[2]ं परिणतस्य दत्तदन्ताघातस्य मत्तस्यैरावणस्य मदैः प्लावित-तुरङ्गकेशरभारम् । पताकाया ड इति प्राकृतसूत्रम् । "कृत-दन्तसमाघातो गजः परिणतः स्मृत" इति **धरणिः** ॥३९॥

चक्क-मल-मइलिओअर-धअ-वड-पुसिअ-ससि-बिम्ब-पच्छिम-
भाअं ।
धणअ-गआ-भङ्गुग्गअ-सिहि-जाला-लङ्घिअं[3] रहं आरूढो ॥४०॥

[चक्र-मल-मलिनितोदर-ध्वज-पट-प्रोञ्छित-शशि-बिम्ब-पश्चिम-भागम् ।
धनद-गदा-भङ्गोद्गत-शिखि-ज्वाला-लङ्घितं रथं आरूढः ॥ ]

चक्रमलैश्चक्रभ्रमणादुत्थितै रजोभिः । यद्वा, चिरमलिनतया पुनरुपश्रियमाणस्य चक्रस्य घर्षणो[4]द्घातैर्मलिनितोदरो यो ध्वजपटस्तेन प्रोञ्छितः शशिबिम्बस्य पश्चिमभाग उपरिदेशो

1 37 Ms, thus commences a mistake of counting the number of verses. 2 ०शूरं Ms. 3 ०लुङ्घिअं GB. 4 ०द्घतै० Ms.

येन, यूद्धा प्रलम्बत्वाद् घर्षणलग्ने च'क्रमलेन मलिनीकृतोदरो यो ध्वजपटस्तेनेति × × धन [ दस्य ] गदाभङ्गादुद्गतस्य शिखिनो ज्वालया स्पृष्टम् ॥४०॥

दट्ठूण अ तं णिन्तं पीआ मङ्गल-मणाहि रअणिअरीहिं ।
जत्तो च्चिअ उप्पण्णा [1]तेहिँच्चिअ [2]लोअणेहि बाह-त्थेवा[3] ४१॥

[दृष्ट्वा च तं निर्यान्तं पीताः मङ्गल-मनोभिः रजनीचरीभिः ।
यतः एव उत्पन्नाः तैः एव लोचनैः बाष्प-स्तवकाः ॥

तं निर्गच्छन्तं दृष्ट्वा मङ्गलमनस्काभी रजनीचरीभिर्यत एव उत्पन्नास्तैरेव लोचनैर्बाष्पबिन्दवः पीताः । मङ्गलमनस्काभिर्मङ्गलशंसिनीभिरिति **कुलनाथः** । थेव-शब्दो बिन्दुवचनो देशीयः ॥४१॥

तो तेण कर-अल-ट्ठिअ-सेलोज्झर-सलिल-[4]णिव्वुविअ-वच्छ-अलं ।
दिट्ठीहि[5] अ बाणेहि अ तुलिअं [6]जाइ-लहुअं पवङ्गम-सेण्णं ॥४२॥

[ततः तेन कर-तल-स्थित-शैल-निर्झर-सलिल-निर्वापित-वक्षस्तलम् ।
दृष्टिभिः च बाणैः च तुलितं जाति-लघुकं प्लवङ्गम-सैन्यम् ॥ ]

ततो निर्गमनानन्तरं करतलस्थितस्य शैलस्य निर्झरसलिलैर्निर्वापितं वक्षस्तलमर्थाद्रावणस्य येन, आस्तां तावद्दशमुखस्य शैलैः प्रहारः, प्रत्युत तन्निर्झरैस्तद्वक्ष[सो] निर्वाणमेव जातमिति भावः । अथवा, वानरसैन्य-विशेषणम् । जात्या कुलेन स्वभावेन वा लघुकं सारशून्यं, संकटदर्शनादेव विस्मृतपराक्रमं वा प्लवङ्गसैन्यं । तेन दृष्टिभिश्च बाणैश्च तुलितं परिकलितं विद्रावि तथा दृष्टिपातेन बाणेन च पलायितत्वात् । दृष्टिपातैश्च बाणैश्च तुलितं परिकल्पितमिति **कुलनाथः** ॥४२॥

---

1 चंक० Ms.1 तहिँ Ms. 2 ०हिँ Ms. 3 ०त्थवआ GB. 4 ०णिव्वरिअ-वच्छअडं GB. 5 ०हिँ Ms. 6 जाइ लहुअं GB. (separately read ), but our text here is based on the new commentary.

